## तत्वोद्योतप्रकरणम्

।।श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

**तत्वोद्योतप्रकरणम्**

श्रीमज्जयतीर्थपूज्यचरणप्रणीतटीकया **नवभिष्टिप्पणीभिश्च** समलङ्कृतम्

### श्रीमज्जयतीर्थ टीका

**मङ्गलाचरणम्**

विश्वोत्पत्तिस्थितिध्वंसकारणं रमणं श्रियः ।

अभिवन्द्य यथाबोधं तत्वोद्योतं विवृण्महे ।।

### श्रीविजयीन्द्रभिक्षु

अथ तत्वोद्योतटिप्पणी श्रीविजयीन्द्रभिक्षुविरचिता प्रारभ्यते

सर्वज्ञं सर्वकर्तारं सर्वजीवजडात्मकात् ।

प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्नं श्रीनृहरिं भजे ।।१ ।।

१तं पाणिपल्लवं बाहुशाखं सद्द्विजसेवितम् ।

विद्याहासलतापुष्पं मध्वकल्पतरुं भजे ।।२ ।।

ब्रह्मविन्मुखरङ्गस्थां मध्व ते वाङ्नटीं परान् ।

विचित्रपदविन्यासैर्मोहयन्तीं भजेऽन्वहम् ।।३ ।।

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।

सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा२ ।।४ ।।

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।

ददाह कुमतारण्यं प्रकाशाय तमाश्रये ।।५ ।।

श्रीसुरेन्द्रमुनेः पादपद्मे रागस्य पीडनात् ।

रक्ते नखदलोपेते सेवे शिष्यालिसेविते३ ।। ६ ।।

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।

तत्वोद्योतस्य विवृतेर्गूढो भावः प्रकाश्यते ।। ७ ।।

श्रीमज्जयतीर्थमुनिः प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं शिष्यार्थदानाविच्छेदरूपप्रचय-गमनार्थं च १कृतमविगीतालौकिकशिष्टाचारानुमितवेदबोधितकर्तव्यताकं श्रीरमणाभिवन्दनरूपं मङ्गलं शिष्यशिक्षायै निबध्नन् तन्मनःसमाधानाय चिकीर्षितं प्रतिजानीते- विश्वोत्पत्तिस्थिति-ध्वंसकारणमिति ।। अत्र विवृण्मह इत्युत्तमपुरुषबहुवचनघटनाय 'अस्मद्युत्तमः'२ इति शास्त्रार्थ-सम्पत्तये वयमित्यध्याहर्तव्यम् । तत्वोद्योतविवरणकर्तुरेकत्वेऽपि 'अस्मदो द्वयोश्च'३ इति सूत्राद् वयमिति बहुवचनोपपत्तिः । तथा च वयं विश्वोत्पत्तिस्थितिध्वंसकारणं श्रियो रमणमभिवन्द्य यथाबोधं तत्वोद्योतं विवृण्मह इति सम्बन्धः । विवरणरूपक्रियायाः करिष्यमाणत्वेऽपि 'वर्तमान-सामीप्ये वर्तमानवद्वा'४ इति शास्त्रप्रवृत्तिसम्भवात् 'स्वरितञितः कर्त्रभिप्राये क्रियाफले'५ इति तत्फलस्य कर्तृगामित्वाच्च विवृण्मह इति ६लडात्मनेपदोपपत्तिः । विश्वोत्पत्तिस्थितिध्वंसकारणमिति विशेषणेन श्रियो रमणस्य 'यतो वा इमानि भूतानि जायन्ते' इत्यादिकारणवाक्यगतब्रह्मादिशब्द-मुख्यार्थत्वमस्तीति विभावितम् । एतच्चोपलक्षणम् । तन्नियतिज्ञानाज्ञानबन्धमोक्षकारणमित्यपि द्रष्टव्यम् । एतच्च कारणत्वं विश्वशब्दार्थे यथासम्भवं द्रष्टव्यम् । तदाहुः-

उत्पत्तिस्थितिसंहृतिप्रभृतयो भावा भवन्त्याज्ञया ।

पद्मापद्मभवादिसर्वजगतो व्यस्ताः समस्तास्सदा ।। इति ।

यद्यपि विश्वोत्पत्तिकारणमित्येवोक्तेऽपि७ स्थित्यादीनामपि विश्वशब्दार्थत्वेन तत्कारणत्वसिद्धेः स्थित्यादिशब्देन विशिष्योपादानं व्यर्थमेव । तथापि -

'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति ।'८

'त्वं मुक्तिदो बन्धदोऽतो ९मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो ।'

'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।

बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ।।'१०

इत्यादिश्रुतिस्मृतिविवक्षानुसारेण उत्पत्त्यादीन् तेन तेन रूपेण सङ्कीर्त्य तत्कारणत्वप्रतिपादनमत्रेति ध्येयम् । ध्वंसपदोपादानेन ध्वंसासाधारणकारणत्वप्रतिपादनेन तस्य निमित्तत्वमेव न तूपादानत्व-मिति विभावितव्यमित्यप्याहुः । अत एव विश्वोत्पत्तिकारणत्वादेरव्याप्त्यतिव्याप्त्यादिलक्षण-दोषाभावात् प्रत्येकमेव लक्षणत्वमिति समुदिततत्कारणत्वप्रतिपादनं क्वोपयुक्तमिति निरस्तम् । तथा प्रतिपादनस्य श्रुतिविवक्षामूलत्वेन पुरुषार्थोपयोगित्वात् । अन्यथा तथा तथा भगवत्स्वरूप-प्रतिपादिकाः श्रुतिस्मृतय उन्मत्तप्रलापाः स्युः ।

यद्वा, उत्पत्त्याद्येकैककारणत्वं ब्रह्मविष्णुशिवेषु प्रत्येकं विश्रान्तमिति मतनिरासाय श्रीरमण-निष्ठतया तत्त्रितयोक्तिरत्रेति ध्येयम् । यद्यप्यत्र पूर्णिमामावास्यातिथ्योरिव विश्वोत्पत्तिस्थिति-ध्वंसानां प्रवाहतोऽनादित्वस्याविशिष्टतया एवं क्रमेणोपादाने

न किमपि नियामकमस्ति तथाऽपि विश्वशब्दार्थभूतवियदादिप्रत्येकव्यक्तिषु उत्पत्तिं विना स्थित्यभावात् लब्धस्थितिकस्यैव ध्वंसाच्च तत्तद्व्यक्त्यपेक्षयोत्पत्त्यादीनां क्रमे नियामकसत्त्वात् तथैवेहोपादानमिति न किञ्चिदनुपपन्नम् । यद्यप्येवमप्युत्पत्तिस्थितिध्वंसपदेषु 'द्वन्द्वे घि'१ इति सामान्यशास्त्राद्बलवता 'अल्पाच्तरम्'२ इति विशेषशास्त्रेण स्थितिशब्दस्यैव प्राथम्यमुचितम्३ । अत एव विश्वस्थितिप्रलयसर्गमहाविभूतीति भगवत्पादीयप्रयोगः । तथाऽप्युक्तरीत्योत्पत्तेः स्थितिं प्रत्युपजीव्यत्वेनाभ्यर्हितत्वात् 'अभ्यर्हितं पूर्वम्' इति ततोऽपि विशेषशास्त्रेणोत्पत्तिशब्दस्यैव प्राक्प्रयोगोऽयमुपपद्यत इति ध्येयम् । यद्यपि च विश्वोत्पत्तिस्थितिध्वंसकारणमित्येवोक्तेऽपि तेन पदेन श्रीरमणस्यैव लाभो भविष्यति ।

'एको वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी'४

'नारायणाद् ब्रह्मा जायते नारायणाद्रुद्रो जायते ।'५

इत्यादिश्रुत्या सर्गाद्यसमये नारायणान्यसत्त्वं प्रतिषिध्य तस्यैव सत्त्वप्रतिपादनपूर्वकं देवप्रमुख-चतुर्मुखेशानादिसहितजगत्कारणत्वोपपादनात् । तथापि श्रियो रमणमित्युक्तिः तस्यैवाभि-वन्दनीयताप्रयोजकेष्टत्वरूपसम्पत्तिरस्तीति ज्ञापनाय । तथा हि, श्रयन्त्येतां स्वेष्टार्थलिप्सया ब्रह्मेशानादिसर्वे जना इति श्रीर्लक्ष्मीः । 'क्विप् च'१ इत्यादिसूत्रेण श्रीञ्धातोः कर्मणि क्विप् । तस्या रमणं तस्या अपि सुखप्रदमित्यर्थः । तथा च श्रुतिः-

'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणम्'२ ।

इत्यादिका । अनेन अभिवन्दनीयताप्रयोजकं विशिष्टत्वाख्यं रूपान्तरमप्यस्तीति विभावितम् । तथा च स्मृतिः-

'एतावताऽलं ननु सूचितेन गुणैरसाम्येऽनतिशायितेऽस्य ।

हित्वेतरान् प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ।।'३

इत्यादिका । अधिकृतत्वरूपं प्रयोजकान्तरमपि व्याख्येयतत्वोद्योतनामकग्रन्थप्रतिपाद्यत्वादेव सिद्ध्यति । अभिवन्द्येत्यभिशब्दो भक्तिश्रद्धातिशयकथनाय । त्त्वाप्रत्ययस्तु तादृशमेवाभिवन्दनं प्रारिप्सिताविघ्नपरिसमाप्त्यादिकारणमिति कारणताशरीरप्रविष्टाव्यवहितपूर्वकालत्वप्रतिपादनमुखेन तत्कारणत्वस्फोरणायेति मन्तव्यम् ।

केचित्तु विश्वोत्पत्तिस्थितिध्वंसकारणमित्यनेनैव तादृशत्वस्यान्यत्रासम्भवाद् वस्तुगत्या श्रीरमण एवाभिवन्द्यत्वेन लभ्यत इति श्रियो रमणं वायुं चेति चशब्दाध्याहारमङ्गीकृत्य-

'शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्त्यते ।'

इत्यादेः श्रीशब्देनात्र भारतीं विवक्षित्वा तद्वाक्यार्थं वर्णयन्ति ।

यथाबोधं विवृण्मह इति प्रतिज्ञया स्वव्याख्येयतत्वोद्योतग्रन्थस्य शब्दतोऽर्थतश्च गभीरत्वं स्वस्य तद्व्याख्यानसामर्थ्यरूपगौरवं च विभावितम्४ । अन्यथा बहुवचनवैयर्थ्याद् यथाबोधमित्युक्ति-वैयर्थ्याच्च । तत्वोद्योतं विवृण्मह इति विशिष्टविवरणप्रतिज्ञया विषयप्रयोजनाभावप्रयुक्तं तस्य प्रेक्षावदनुपादेयत्वरूपानारम्भणीयत्वं निरस्यति । व्याख्येयग्रन्थस्य

तत्वम् उद्योत्यते उत्कर्षेण प्रकाश्यते ज्ञाप्यते अनेनेति अन्वर्थसञ्ज्ञयैव विषयप्रयोजनादिसद्भावज्ञापनेन तद्विषयप्रयोजनाभ्यामेव तद्व्याख्यानरूपस्यास्यापि तद्वत्त्वस्य सूचितत्वादिति सर्वमवदातम् ।

## श्रीवेदेशतीर्थ

अथ तत्वोद्योतटीकाटिप्पणी श्रीवेदेशतीर्थकृता प्रारभ्यते

जयति जगति जन्मस्थेमसंहारकर्ता चिदचिदखिलयन्ता यः स्वतन्त्रोऽखिलज्ञः ।

विततविमलशक्तिः पूर्णबोधेष्टरूपः श्रुतिततिमतमुक्तामुक्तभेदो रमेशः ।।

व्यासं नत्वा तथा मध्वं जयार्यं च गुरूनपि ।

व्याख्यास्ये मन्दबोधाय तत्वोद्योतस्य पञ्चिकाम् ।।

स्वेष्टदेवतानमनपूर्वकं चिकीर्षितं निर्दिशति- विश्वोत्पत्तीति ।। ननु १अल्पाच्तरं पूर्वमिति शास्त्रानुसारेण स्थितिशब्दस्यैव प्राक् प्रयोग उचितः । अत एव विश्वस्थितिप्रलयसर्गेति भगवत्पादीयप्रयोगः इति चेत् । न । उत्पत्तेः स्थितिं प्रत्युपजीव्यत्वेनाभ्यर्हिततत्वात् २'अभ्यर्हितं पूर्वम्' इति विशेषशास्त्रेणोत्पत्तिशब्दस्यैव प्राक्प्रयोगात् । अत्र मुक्तेश्वरयोर्भेदः साध्यते । भेदप्रतीतिश्च व्यावर्तकधर्मप्रतीतिसाध्येति तत्प्रदर्शनार्थमिदमुक्तम् । मुक्तानां तु 'जगद्व्यापारवर्जम्'३ इत्यादिना सूत्रकृतैव विश्वोत्पत्त्यादिकारणत्वाभाव उक्तः । श्रीपतित्वं तु विष्णोरेवासाधारणो धर्म इति मुक्तानां तदभावः प्रसिद्ध एव । श्रियो रमणमित्यनेन श्रियोऽपि नमस्कारः कृतो भवति ।

तत्वस्य परमपुरुषाख्यस्य उद्योतः यथार्थज्ञानं भवत्यस्मादिति व्यधिकरणबहुव्रीहिः । अथ वा तत्वमुद्योत्यते उत्कर्षेण ज्ञाप्यतेऽनेनेत्यन्वर्थसञ्ज्ञेत्याहुः ।

## श्रीराघवेन्द्रतीर्थ

अथ तत्वोद्योतटीकाटिप्पणी श्रीराघवेन्द्रतीर्थकृता प्रारभ्यते

जगज्जन्मस्थेमलयनियमा यदपाङ्गतः ।

तं वन्दे परमानन्दमिन्दिरामन्दिरोरसम् ।।

प्रणम्य श्रीमदानन्दतीर्थादिगुरुशेखरान् ।

व्याख्यास्यामि यथाबोधं तत्वोद्योतस्य पञ्चिकाम् ।।

ग्रन्थादौ मङ्गलाचरणपूर्वकं चिकीर्षितं प्रतिजानीते- विश्वेति ।। मूले चिच्चेत्यपदेन न यत्किञ्चिच्चेतनाचेतनग्रहः । अपि तु कृत्स्नस्येति भावेन भगवतोऽपि चिद्रूपत्वाद् बाधनिरासाय तदन्यचिच्चेत्यग्रहणप्रदर्शनाय वा विश्व इत्युक्तिः । यन्तेति नियमनमुपलक्षणमिति भावेनोक्तम्-उत्पत्तीत्यादि ।। तेनान्यजातस्याप्यन्येन नियमनसम्भवात् जन्मादिहेतुत्वमेकनिष्ठं नेति शङ्का परास्ता । अत एव मूलोपात्तमेव विशेष्यं श्रियो रमणमित्युक्तम् । जन्मादिचतुष्टयस्यैव कृत्स्न-जगद्विषयत्वादुत्पत्त्यादेरेव ग्रहणम् । न ज्ञानाज्ञानबन्धादेः । तेन भगवति जन्महेतुत्वादयश्चत्वारो हेतव उक्ता भवन्ति । उत्पत्तिः पराधीनविशेषावाप्तिः

। स्थितिः परिपालनम् । जातस्यैव स्थित्यादीत्यतोऽभ्यर्हितत्वाद्वा बहुष्वनियमाद्वा अनेकाचोऽप्युत्पत्तेः पूर्वं निर्देशः । श्रिय इत्युक्त्या तस्या अपि भगवदुपसर्जनतया अभिवन्दनसिद्धिः । भक्त्याद्यङ्गवत्त्वद्योतनाय अभि इत्युक्तिः । यथाबोधं अस्मद्बुद्धिमनतिक्रम्य, अस्मद्बुद्ध्यनुसारेणेति वा शिष्यबुद्धिमनतिक्रम्य तस्य बोधो यथा भवति तदनुसारेणेति वा मूलकर्तृबोधमनतिक्रम्य तदभिप्रायानुसारेणेति वाऽर्थः । तत्वस्य परापर-रूपतत्वस्य । उद्योतः 'द्युत- दीप्तौ' भावे घञन्तम् । उत्कृष्टदीप्तिः सम्यग्ज्ञानम् । यद्वा तत्वस्य परमपुरुषस्य उत्कृष्टत्वेन द्योतो ज्ञानं येन भवति तत्प्रकरणं तत्वोद्योतसञ्ज्ञं प्रकरणं विवृण्महे । 'वर्तमानसामीप्ये वर्तमानवद्वा'१ इति लडुक्तिः । विश्व इत्यादिना किञ्चिद् विवरणाद्वा२ । बहुवचनं गौरवात् । ग्रन्थकर्तुः प्रतिपाद्यस्य च प्रीतेरात्मगामित्वद्योतनायाऽत्मनेपदम् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले'३ इत्युक्तेः ।

अथ श्रीपाण्डुरङ्गिकेशवाचार्यकृता तत्वोद्योतटीकाटिप्पणी (गुरुराजीया) प्रारभ्यते

### गुरुराजीया

यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते तस्मात् ।

अस्त्वेषा ४भक्तियुता श्रीविद्याधीशपादयोः सेवा ।। १ ।।

तत्वोद्योतस्य विवृतेर्विद्याधीशोक्तमार्गतः ।

विवृतिर्भावगूढायाः क्रियते भावशुद्धये ।। २ ।।

यत्स्पष्टार्थं पदं वाक्यं तन्न व्याक्रियते मया ।

ग्रन्थगौरवभीरुत्वान्न चोद्ग्रन्थं बहूच्यते ।। ३ ।।

ग्रन्थादौ मङ्गलमाचरन्नेव शिष्यावधानार्थं चिकीर्षितं निर्दिशति- विश्वेति ।। ननु 'इन्द्राग्नी' इत्यत्र १तत्र तत्र सावकाशघ्यन्ताजाद्यदन्तशास्त्रयोरुभयोरपि प्रसङ्गेऽपि 'विप्रतिषेधे परम्'२ इति न्यायेन परत्वादजाद्यदन्तशास्त्रस्यैव प्रवृत्त्येन्द्रशब्दस्यैव पूर्वनिपातवद् अजाद्यदन्तमित्यस्य ईशकृष्णावित्यत्र 'अल्पाच्तरम्'३ इत्यस्य च प्लक्षन्यग्रोधावित्यत्र सावकाशत्वेन उत्पत्तिस्थितीत्यत्र वागिन्द्रावित्यादाविव उत्पत्तिशब्दस्यादन्तत्वाभावेन तदुभयाप्रसङ्गेऽपि अल्पाच्तरशास्त्रस्यैव प्रवृत्त्या स्थितिशब्दस्यैव पूर्वनिपातः स्यादिति चेदत्र स्वामिनः । 'लक्षणहेत्वोः क्रियायाः'४, 'समुद्राभ्राद्घः'५, 'समानाधिकरणजातीययोः'६ इत्यादिषु यथायथं व्यभिचारं कुर्वता सूत्रकृता एतत्प्रकरणस्यानित्यताया ज्ञापितत्वेन तस्यानित्यत्वसिद्ध्या अत्राप्रवृत्त्युपपत्तेः । अभिप्रेतं चानित्यत्वमल्पाच्तरशास्त्रस्य टीकाकाराणाम् । 'अल्पाच्तरमित्यस्यानित्यत्वात् शकुनिसूत्रयोरिति साधु' इति अन्यत्रापि टीकाकारैरुक्तत्वादिति ध्येयम् ।

रमणमिति ।। रमत इति रमणः । कर्तरि ल्युट् । ७'ल्युड् भावे करणाधिकरणयोश्च' इति भावकरणाधिकरणेषु ८ल्युड्विधानानन्तरं 'कृत्यल्युटो बहुलम्'९ इति सूत्रारम्भसामर्थ्यादेव कर्त्रादावपि तत्सिद्धेरिति ध्येयम् । यत्तु बाहुलकात्कर्तरि ल्युडिति तन्न । सूत्रारम्भसामर्थ्यादेव कर्तरि तत्सिद्धिसम्भवे १०बाहुलकपर्यन्तानुधावनाऽनर्था स्यात् । तस्य प्रयोजनान्तरार्थताया एवाऽकरे स्थितत्वेन बाहुलकेन कर्तरि ल्युड्व्युत्पादनस्य परेषामसम्मतत्वाच्चेति ।

### गोविन्दीया

अथ गोविन्दीया तत्वोद्योतटीकाटिप्पणी प्रारभ्यते

प्रणम्य परमात्मानं पूर्णबोधान् गुरूनपि ।

तत्त्वोद्योतस्य वाक्यार्थाः प्रकाश्यन्ते यथामति ।।

तत्त्वोद्योताख्यप्रकरणस्य वाक्यार्था लिख्यन्ते- तत्त्वोद्योतमिति ।। तत्त्वस्य= परमात्मतत्त्वस्य उद्योतः= उत्कृष्टतया ज्ञानं यस्मात् । तत्त्वम् उद्योत्यते येन इति वा तत् तत्त्वोद्योतं तत्तथेत्यर्थः ।

## जनार्दनभट्टीया

अथ जनार्दनभट्टीया तत्वोद्योतटीकाटिप्पणी प्रारभ्यते

दूरापास्तपराहतिप्रविलयाद्यावद्यशक्त्याकृतिः

स्वेच्छाधीनकृतिः समस्तविषयानन्तोरुबोधाम्बुधिः ।

यन्ता यो जडचेतने सुमनसामिष्टस्तदन्येष्टकृत्

तं नारायणमन्तरायहतये नौमि श्रियो वल्लभम् ।। १ ।।

पद्मनाभादिपरमहंसा यदुपसत्तितः ।

तापं जहुस्तमानन्दतीर्थं सेवेऽतिनिर्मलम् ।। २ ।।

संसारापारकान्तारपरिखिन्नकृपाकराः ।

गुरवोऽगाधबोधीयमतस्थाः सन्तु मद्धिये ।। ३ ।।

जयतीर्थार्यतरणेर्गावो विष्णुपदस्पृशः ।

सन्दर्शयन्तु सच्छास्त्रमार्गं मन्ददृशो मम ।। ४ ।।

श्रीमन्नृसिंहार्यगुरूपदेशनिर्णीतमध्वागमतत्त्वसाराः ।

ये दक्षिणस्यां मधुरापुरश्रीनिवासभट्टाभिधया प्रसिद्धाः ।। ५ ।।

अमी व्याख्यन् भारतस्य तथा भागवतस्य च ।

तात्पर्यनिर्णयौ गूढौ सदाचारस्मृतिं तथा ।। ६ ।।

तत्तनूजः श्रीनिवासभट्टोपाध्यायनामिनाम् ।

शिष्यो व्यातनुते तत्त्वोद्योतटीकां जनार्दनः ।। ७ ।।

स्पष्टार्थमिह यद्वाक्यं न व्यक्तीक्रियते मया ।

ग्रन्थबाहुल्यभीरुत्वात् न चोद्ग्रन्थं बहूच्यते ।। ८ ।।

तत्त्वोद्योतोदयादुत्थतट्टीकाशिशिरद्युतेः ।

उद्यन् प्रभामण्डलोऽयं भूयात् सत्पद्मसौख्यदः ।। ९ ।।

भगवान् जयतीर्थमुनिर्ग्रन्थादौ मङ्गलाचरणपूर्वकं चिकीर्षितं प्रतिजानीते[१]– विश्वेति ।। उत्पत्तिश्च स्थितिश्चेत्यादि[२] द्वन्द्वसमासः । 'आङ्गहतः समानाधिकरणजातीययोः'[३] इति सूत्रेण अनल्पाच्कस्य[४] अनभ्यर्हितस्यापि समानाधिकरणादस्य द्वन्द्वे पूर्वप्रयोगज्ञापकाद्[५] 'अल्पाच्तरं पूर्वम्'[६] इति विधेरनित्यत्वावगमेन प्रकृतद्वन्द्वेऽपि अनल्पाच्कस्योत्पत्तिपदस्य[७] पूर्वं प्रयोगो युक्त इति ज्ञातव्यम् । 'अल्पाच्तरम्' इत्यस्यानित्यत्वाच्छकुनिसूत्रयोरिति साध्विति । एवम् 'उत्पत्तिस्थितिभङ्गं' 'प्रीत्यै माधवमध्वयोः' इत्यादयः टीकाकारीयाः प्रयोगाः समाधेयाः । प्राञ्चस्तु 'लब्धजन्मन एव स्थित्यादिः' इति[८] भाष्यटीकारीत्या स्थित्याद्यपेक्षयोत्पत्तेरभ्यर्हितत्वात् 'अभ्यर्हितं पूर्वम्' इत्युत्पत्तिपदस्य पूर्वं प्रयोग इति समादधते । वन्दनस्य भक्त्याद्यतिशयपूर्वकत्वसूचनाय, स्वातन्त्र्येण तद्वन्दनस्य 'परिवारतया ग्राह्या अपि हेया प्रधानतः' इति निषिद्धत्वात् परिवारदेवतात्वेनैव वन्दनमिति सूचयितुं च अभि इत्युपसर्गः । ग्रन्थारम्भसमये सकलवाङ्गनसदेवतायाः श्रियोऽपि वन्दनीयत्वाद् रमणं श्रियः इत्युक्तम् । स्वस्य निरहङ्कारत्वख्यापनाय – यथाबोधमिति ।। विवृण्महे इत्युत्तमपुरुषप्रयोगादेव 'वयम्' इति लभ्यते ।

### नारोपन्तीया

अथ नारोपन्तीया तत्वोद्योतटीकाटिप्पणी प्रारभ्यते

श्रिया समाराधितमादिदेवं नारायणं तं सततं नमामि ।

चरीकरीतीह बरीभरीति य एतदेकोऽथ जरीहरीति ।। १ ।।

विश्वेषामुदितः सुखाय सुधियां संसारकान्तारतो

निःसर्तुं सरणीमनाकलयतां तत्रत्यदुस्तस्करान् ।

सर्वस्वापहतौ निबद्धहृदयानुद्वेजयंस्तेजसा

तत्त्वोद्योतकरः सदैव भगवानाचार्यसूर्योऽस्तु नः ।। २ ।।

उन्मार्गेण यियासतो निपतितानालोक्य दुर्गागमे

गूढं ब्रह्मदिदृक्षतां करुणया निर्माय निर्मायकृत् ।

द्वारं मध्वयतिः सुभाष्यमदधाद् द्वास्थं जयं दिग्ज्ञयं

कण्ठोद्घाटनकुञ्चिकाङ्कितकरं वन्दामहे तं गुरुम् ।। ३ ।।

तत्त्वोद्योतस्य विवृतिं जयतीर्थार्यनिर्मिताम् ।

तदनुग्रहमाश्रित्य व्याख्यास्यामि क्वचित्क्वचित् ।। ४ ।।

जयतीर्थमुनिः श्रीमान् पदवाक्यप्रमाणवित् ।

श्रीमदाचार्यरचिततत्त्वोद्योतप्रपञ्चिकाम् ।

विधित्सुः सर्वदुरितनिवर्तनपटीयसः ।

प्रसत्त्यै कमलाभर्तुरभिवन्दनमाचरन् ।

शिष्यशिष्ट्यै निबध्नाति प्रतिजानाति चेप्सितम् ।।

विश्वोत्पत्तीत्यादिना ।।

### द्वैतद्युमणिटिप्पणिसारोद्धारः

हुलिगियदुपत्याचार्यविरचितः द्वैतद्युमणिटिप्पणिसारोद्धारः

श्रीमन्तं जगदुदयस्थितिप्रणाशान् कुर्वन्तं गुणगणपूर्णमीशितारम् ।

मुक्तानामपि सकलैरवद्यगन्धैरस्पृष्टं हरिमनिशं नमामि भक्त्या ।। १ ।।

श्रीमदानन्दतीर्थार्यान् जयराजमुनीनपि ।

तद्गुरून् मद्गुरूंश्चापि प्रणमाम्यहमञ्जसा ।। २ ।।

तत्त्वस्य मुख्यस्वतन्त्रतत्त्वात्मकनारायणस्य उत्कृष्टद्योतः मुक्तामु‌क्तसकलनियन्तृत्वादिना ज्ञानं यस्मादिति व्युत्पत्त्या ग्रन्थस्य तत्साधनत्वलाभः ।

### सर्वत्राखिलसच्छक्तिः..

आगमस्येश्वरे प्रामाण्यसमर्थनम्

### श्रीमज्जयतीर्थटीका

नन्वीश्वर एव किं प्रमाणम् । आगमं तावद् ब्रूमः । श्रूयते हि 'द्यावाभूमी जनयन् देव एकः' इत्यादि । केवलसिद्धार्थबोधकस्य प्रवृत्त्याद्यनङ्गतया वैयर्थ्यप्रसङ्गादागमस्येश्वरे न प्रामाण्य-मिति चेत् तत्राऽऽह- इष्ट इति ।। यद्धि यस्येष्टं तत्तं प्रति बोधनीयं नान्यत् । तथा सत्यनु-पादेयताप्रसङ्गात् । इष्टश्च रमापतिरिति युक्तमेव तद्बोधनम् । न च प्रवृत्त्याद्यनुपपत्तिदोषः । इष्टानुभवस्यैव पुरुषार्थत्वेन ततः प्रयोजनानपेक्षणात् । न हि सुखानुभवस्य प्रयोजनमन्विष्यते ।

तस्यैव स्वरससुन्दरत्वात् । स्वाश्रिते सुखे दुःखनिवृत्तौ वा लोकानामिष्टव्यवहारः । न चानयोरन्यतरो रमापतिस्तत्कथमसाविष्ट इत्यत आह- नः ।। अस्माकमिति । यथा खलु केषाञ्चिदिष्टसाधनतामनासादयन्तोऽपि भावाः परेषां तथाभूता दृश्यन्ते तथा लौकिकानामिष्टता-मभजन्नपि भगवानुत्तमाधिकारिणामिष्टो भवतीति किमनुपपन्नम् । सन्ति खलु तेऽपि पुरुषाः येषामपवर्गोऽपि परमपुरुषावबोधनार्थमेवार्थनीयः । यथोक्तम् -

......... एकान्तानां न कस्यचित् ।

अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम् ।। इति ।

इतरान् प्रत्यपीश्वरस्येष्टसाधनत्वान्न तत्परत्वमागमस्यानुपपन्नम् । इष्टवदिष्टसाधनस्यापि बुभुत्सितत्वात् ।

### श्रीविजयीन्द्रभिक्षु

सर्वत्रेत्यादिविशेषणोपादानेन आचार्यस्येश्वरे प्राधान्येनाऽगम एव प्रमाणत्वेनाभिमतः । तत्प्रामाण्यसमर्थनं च इष्ट इति विशेषणेनाभिप्रेतमिति वक्तुं तदनुगुणां शङ्कां दर्शयति- नन्विति ।। अयमाशयः । न तावदीश्वरे प्रत्यक्षं मानम् । तस्यायोग्यत्वात् । नाप्यनुमानम् । स्वतन्त्रप्रमाणावष्टम्भं विना तस्य स्वार्थासाधकत्वात् । नाप्युपमानम् । तस्य नियतविषयत्वात् । नाप्यर्थापत्तिः । ईश्वरं विना अनुपपद्यमानस्यार्थस्याभावात् । क्षित्यादिकार्यस्याप्यदृष्टद्वारा अस्मदादित एवोपपत्तेः । नाप्यागमः । कर्मकाण्डस्य कर्मपरत्वात् । वेदान्तानामपि केषाञ्चिदुपासनापरत्वात् । केषाञ्चित्तु केवलसिद्धार्थत्वेन प्रवृत्त्याद्यनङ्गतया वैयर्थ्येन प्रामाण्यासम्भवात् । हुं फट् इत्यादिशब्दवत् जपमात्रोपयोगित्वेनाध्ययनविध्यापादितपुरुषार्थपर्यवसायित्वोपपत्तेश्चेति ।

वक्ष्यमाणरीत्या आगमप्रामाण्यध्रौव्यं मन्वानः सिद्धान्ती सामान्यत उत्तरयति- आगमं तावदिति ।। तावच्छब्दः क्रमार्थः । अनुमानानामप्यग्रे दर्शयिष्यमाणत्वात् । प्रथमं तेषामनुपन्यासस्तु-

'पृष्टेनाऽगम एवाऽदौ वक्तव्यः साध्यसिद्धये ।'१

इत्यनुसारात् । तदागमस्याप्रत्यक्षत्वशङ्कां वारयति- श्रूयते हीति ।। इत्यादीति नपुंसकनिर्देशः प्रमाणापेक्षया । आदिशब्देन 'पराऽस्य शक्तिः' इत्याद्यस्मदुदाहृतश्रुतिपरिग्रहः । न चैवं श्लोकोपात्तविशेषमूलतया पराऽस्येत्यादिश्रुतीनामेव टीकायामुदाहर्तव्यत्वे कथं तत्र 'द्यावापृथिवी जनयन् देव एकः' इत्याद्युदाहरणमिति वाच्यम् । तदुदाहरणस्य पराऽस्येत्यादिसर्वागमार्थाक्षेपकत्वेन लाघवेन तस्यैव तत्रोदाहरणोपपत्तेरित्यवधेयम् । आचार्याशयमविद्वान् शङ्कस्तदभिप्रेतोदा-हृतागमप्रामाण्यं दूषयति- केवलेति ।। साध्यतोपरागरहितस्य प्रवृत्तिनिवृत्त्यजनकतया विगीत-प्रयोजनत्वापत्त्या अप्रामाण्यमेव तस्य दुर्वारमिति भावः । आचार्याशयमाविष्कर्तुमाह- तत्राऽहेति ।। उक्ताशङ्कायां समाधानमाहेत्यर्थः ।

यद्यपि 'यथार्थं प्रमाणम्' इति केवलानुप्रमाणसाधारणलक्षणानुसारात् 'यथार्थज्ञानं केवलम्' इति तद्विशेषकेवलप्रमाणलक्षणानुसाराच्च हानोपादानोपेक्षारूपयथार्थज्ञानतत्करणानां सर्वेषामप्य-विशेषेण प्रामाण्यं सिद्ध्यति । न तु पुरुषार्थपर्यवसायिनामेवेति नोदाहृतागमानां वैयर्थ्येऽपि प्रामाण्याभावः शङ्कार्हः । अबोधकत्वाप्रमाजनकत्वरूपाप्रामाण्ये तु तेषामाकांक्षादिमच्छब्दत्वा-पौरुषेयत्वप्रयुक्तनिर्दोषशब्दत्वाभ्यामेव निरस्ते इति न प्रामाण्याभावे किमपि कारणमस्ति । न हि प्रामाण्यं प्रयोजननियतम् । येन तदभावे तन्न स्यात् । किं तु विषयाबाधनियतम् । न हि 'द्यावापृथिवी जनयन् देव एकः' इत्याद्यागमार्थेषु किमपि बाधकमस्तीति न किञ्चिदनुपपन्नम् । तथाऽपि 'निर्दोषः

शब्द आगमः’ इत्यागमलक्षणानुसारात् प्रयोजनं विना नाऽगमाप्रमाण्यसिद्धिरिति शङ्कासमाधाने तदनुसारेणैवात्र कृते इति ध्येयम् । अत एव पद्धतौ ‘निर्दोषः शब्द आगमः’ इत्यागमलक्षणमभिधाय ‘शब्ददोषाश्च निरभिधेयत्वेन अन्वयाभावेन वा अबोधकत्वं विपरीतबोधकत्वं ज्ञातज्ञापकत्व-मप्रयोजनत्वमनभिमतप्रयोजनत्वमशक्यसाधनप्रतिपादनं ‘लघूपाये सति गुरूपायोपदेशनं च’ इति शब्ददोषेष्वप्रयोजनत्वमपि तदप्रामाण्यप्रयोजकतया दोषत्वेन सङ्कीर्तितम् ।

इष्ट इत्यस्योदाहृतागमप्रामाण्योपपादकत्वमुपपादयितुमाह- यद्धीति ।। यद्धीष्टं बुभुत्सितं तं प्रति तदेव बोधनीयं नान्यदित्यर्थः । यद्यपि यद्धि यस्यानिष्टं तदपि तं प्रत्युपदिश्यते ततो निवर्ततामिति तथाऽपि यस्य यद् बुभुत्सितं तदेव तं प्रत्युपदिश्यते नान्यदिति सामान्यव्याप्तिरभिप्रेता । विशिष्य तत्प्रदर्शनं तु प्रकृताभिप्रायेणेति द्रष्टव्यम् । तथा सतीति ।। अबुभुत्सितस्याप्युपदेश इत्यर्थः । न चेति ।। न च प्रवृत्त्याद्यनङ्गत्वप्रयुक्तवैयर्थ्यापादितप्रामाण्याभावरूपदोष इत्यर्थः ।

इष्टानुभवस्येति१ ।। नन्वत्रानुभवशब्देन स्मृत्यन्यज्ञानमात्रमुच्यते, किं वा साक्षात्कारः । न प्रथमः । यन्न दुःखेन सम्भिन्नमित्यादिवाक्यजन्यज्ञानस्यापि पुरुषार्थत्वापत्त्या ततः प्रयोजनान्तरा-पेक्षाऽभावप्रसङ्गात् । न द्वितीयः । ‘द्यावापृथिवी२ जनयन् देव एकः’ इत्याद्यागमेन रमापतेर्निरु-पाधिकेष्टत्वेऽपि तत्साक्षात्काराजननात् । तथा च तद्वैयर्थ्यप्रसङ्गतादवस्थ्यम् । तत्प्रयुक्ता-प्रामाण्यतादवस्थ्यञ्चेति । उच्यते । अत्रेष्टानुभवपदेन स्वसम्बन्धिवर्तमानेष्टज्ञानमात्रं विवक्षितम् । न चातिप्रसङ्गः । इष्टरूपेश्वरस्य व्यापकतया सर्वसम्बन्धित्वेन सर्वदा वर्तमानत्वादिति वाच्यम् । ईश्वरस्य परमैकान्तिनः प्रतीष्टत्वेन तदितरान् प्रतीष्टसाधनत्वेनैव पुरुषार्थत्वेन निरुपाधीष्टत्वेन पुरुषार्थत्वाभावात् । शत्रुसुखस्य सुखत्वेन पुरुषार्थत्वेऽपि स्वीयत्वप्रयोजकसम्बन्धविशेषाभावेना-पुरुषार्थत्ववदीश्वरस्यापि तत्त्वेन पुरुषार्थत्वेऽपि परमैकान्तिषु तस्य यादृशसम्बन्धविशेषेण तदीयत्वं तदितरेषु तदभावेन तान् प्रत्यपुरुषार्थत्वोपपत्तेः । वक्ष्यत्येतत्सप्रमाणकमनुपदमेवेति । स्वाश्रित इति ।। यद्रूपावच्छिन्नं ३ज्ञातं सत् स्ववृत्तितयेष्यते तद्धि लोकानां निरुपाधीष्टव्यवहारगोचरः । तद्रूपं च सुखत्वं दुःखविरहत्वं वा नान्यत् । न चेश्वरत्वं तथेत्यत्र मानमस्ति । न च रमापतिरूपेश्वरस्तयो-रन्यतरः । येन स्वतः पुरुषार्थः स्यात् । तथा च कथं तदनु-भावकत्वेऽप्युक्तागमप्रामाण्यनिर्वाह इति शङ्काभिप्रायः। यद्यपि ‘४विज्ञानमानन्दं ब्रह्म’५ ‘यो वै भूमा तत्सुखम्’६ इत्यादिश्रुत्या रमापतेः सुखरूपत्वावेदनेनास्त्येव सुखदुःखाभावयोरन्यतरत्वम् । तथा

‘य आत्मनि तिष्ठन्’७, ‘एक एव तु भूतात्मा भूते भूते व्यवस्थितः’८

इति तस्य स्वाश्रितत्वञ्च श्रुतम् । तथाऽपि सुखदुःखाभावयोरिव भगवतः सम्बन्ध-विशेषेणैकान्ताश्रितत्वे प्रमाणाभावेन तस्य तान् प्रति न तेन रूपेणेष्टत्वमिति ध्येयम् ।

ननु इष्टो नो रमापतिरित्यस्माद्रमापतिरिष्टो नेति प्रतीतेः कथं तद्बोधकत्वेऽप्यागमस्येष्टबोधकत्वेन प्रामाण्यसिद्धिरिति भ्रान्तिं निवारयितुं नायमोदन्तो निपातः प्रतिषेधार्थः । किं तु षष्ठी-स्थास्मच्छब्दस्य ‘बहुवचनस्य वस्नसौ’१ इति नसादेशोऽयमिति ज्ञापनायाऽह- नोऽस्माकमिति ।। द्वितीयास्थास्मच्छब्दबहुवचनरूपत्वेऽनन्वयः । रक्षत्वित्यध्याहारे च स एव दोष इति भावः । ‘न केवलं ममैव रमापतिरिष्टः । किं तु मत्समानशीलानां सर्वेषामिति स्वाशयज्ञापनाय नः इत्याचार्येण षष्ठीबहुवचनान्तनिर्देशः कृतः’ इति अनेन व्याख्यानेन भावितम् ।

नन्वीश्वरस्य सुखादेः सुखत्वादिनेव रमापतित्वादिना स्वरससुन्दरत्वे २तदेव प्राणभृन्मात्रं प्रत्यपीष्टत्वप्रसङ्गः । उत्तमाधिकारिणः प्रत्येवेत्यस्यासम्भावितत्वादित्यशङ्क्य ३अगस्त्यस्य समुद्र-पानवत् कामधेनोः ४प्रासादाद्युद्गिरणवच्च असम्भावितमपि प्रमाणसिद्धत्वात् स्वीकार्यमेव । किमुत सम्भावितं प्रामाणिकञ्चेत्यभिप्रेत्य पदार्थेषु वैचित्र्यदर्शनात् पुरुषविशेषान् प्रत्येवेश्वरस्येष्टत्वं सम्भावितमिति वक्तुं तदनुरूपदृष्टान्तं तावदाह- यथा खल्विति ।। भवन्तीति भावाः पदार्थाः । तथाभूता इष्टसाधनतामासादयन्तः । लौकिकानामनुत्तमाधिकारित्वेन लोकविदितानाम् । इष्टतां निरुपाधीष्टताम् ।

ननु रमापतिर्निरुपाधीष्टश्चेत् सुखादिवत्सर्वान् प्रत्यपि तथा स्यात् । न चेद्घटादिवत् कांश्चित् प्रत्यपि न स्यात् । विशेषनियामकाभावादित्युक्ताशङ्कानिवारणायात्र भगवान् इत्युक्तम् । अनेन-

‘ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ।।’

इति भगवच्छब्दप्रवृत्तिनिमित्ततयोक्तं समग्रैश्वर्यमेव तत्र विशेषनियामकमिति विभावितम् । मनुष्यान् प्रतीष्टविशेषसाधनत्वस्वरूपायोग्या अपि तृणादिपदार्थाः पश्वादीन् प्रत्येव यथा इष्टविशेषसाधनत्व-स्वरूपयोग्या दृश्यन्ते एवमनुत्तमाधिकारिणां निरुपाधीष्टतामभजन्नपि भगवानैश्वर्यविशेषवशाद् उत्तमाधिकारिणां निरुपाधीष्टो भवतीति किमनुपपन्नमिति यथा खल्विति वाक्यस्य निर्गलितोऽर्थः ।

नन्वेवं पुरुषवैचित्र्यदर्शनात् कांश्चित्प्रत्येवेश्वरस्य निरुपाधीष्टत्वे तर्ह्यपवर्गादिकमपि तान् प्रति निरुपाधीष्टं न स्यादित्याशङ्क्येष्टापत्त्या परिहरति- सन्ति खल्विति ।। अपवर्ग इति ।। अनाद्यविद्याकाम्यकर्मादि१रूपोपप्लवहेतूच्छेदरूप इत्यर्थः । परमेति ।। पुरुषस्य परमत्वमुत्तमत्वम् । तच्च कल्याणगुणपूर्णत्वेनेति २कल्याणगुणविशिष्टतया परमपुरुषार्थावबोधार्थमित्यर्थः । सुख-दुःखाभावयोरन्यतरत्वाभावेऽपि रमापतिः कांश्चित्प्रत्येव निरुपाधीष्ट इत्यत्रैव किं मानमित्यतस्तत्र प्रमाणं वक्तुमाह- यथोक्तमिति ।। एकस्मिन् ईश्वरे अन्तो निरुपाधीष्टत्वनिश्चयो येषाम् । कस्यचिदर्थे कस्मैचित्प्रयोजनाय । नारायणो दोषविरुद्धः सकलकल्याणगुणाश्रयः । देवो न उपास्यो न । दीव्यते गम्यते ज्ञायते स्तूयत इति वा देवः । सर्वमन्यत् श्रवणमनननिदिध्यासनसाक्षात्कार-तत्साध्यमोक्षकालीनकर्मानुष्ठानादिकमन्यत्सर्वं भगवद्गुणानुभवैकप्रयोजनमिति तद्वचनार्थः ।

ननु ‘द्यावापृथिवी जनयन्’ इत्यादेः निरुपाधीष्टेश्वरबोधकत्वेन पुरुषविशेषान् प्रत्युपादेयत्वेऽपि नास्मदादीन् प्रति तस्योपादेयत्वं स्यादित्यत आह- इतरान् प्रत्यपीति ।। तत्परत्वमिति ।। तत्प्रतीतिप्रयोजनकत्वमित्यर्थः । नन्वीश्वरस्येतरान् प्रति निरुपाधीष्टत्वाभावे बुभुत्सितत्वायोगात् तत्प्रतिपादकागमस्य वैयर्थ्यं तदवस्थमित्यत आह- इष्टवदिति ।। अन्यथा ‘स्वर्गकामो यजेत’ इत्याद्यागमानामपि वैयर्थ्यं स्यात् । एतावांस्तु विशेषः । यागादिरूपेष्टसाधनं स्वरूपेण कृति-साध्यम् । भगवत्स्वरूपं तत्प्रसादविशिष्टतयेति । ईश्वरस्यापवर्गादिरूपेष्टसाधनत्वम्-

‘संसारमोक्षस्थितिबन्धहेतुः’ ‘त्वं मुक्तिदो बन्धदोऽतो मतो मे’

इत्यादिश्रुतिसिद्धमिति न तत्र विवदितव्यमिति भावः । यद्यप्यत्रेश्वरस्य संसाराद्यनिष्टहेतुत्वमपि श्रूयते तथापीश्वरस्य पित्रादिवत् परमहितैषितयोपादेयत्वमेव । अन्यथा कष्टं कर्मेति न्यायेन ज्योतिष्टोमादीनामप्यनुपादेयत्वमेव स्यादिति ध्येयम् ।

### श्रीवेदेशतीर्थ

किमपि प्रयोजनमभिधीयत इत्युक्तम् । तद्वक्तुमाक्षिपति- नन्विति ।। ग्रन्थो हि वादप्रक्रियया प्रवर्तते । वादे च -

‘पृष्टेनाऽऽगम एवाऽऽदौ वक्तव्यः साध्यसिद्धये ।’३

इत्यागमस्याऽदौ वक्तव्यत्वोक्तेरागममेवादावाह- आगममिति ।। मङ्गलस्य समाप्तिहेतुतावबोधक-श्रुतिवन्नायमनुमेय इत्याह- श्रूयते हीति ।। केवलसिद्धार्थेति ।। स्वप्रधानतया कार्यत्वाति-रिक्तार्थबोधकस्येत्यर्थः । कार्यान्वितसिद्धार्थबोधकत्वं त्वनुमतमिति भावः । प्रवृत्त्याद्यनङ्गतयेति ।। यद्यपि बोधकत्वेन प्रामाण्यं तथापि वाक्यप्रयोगस्य परार्थत्वात् परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्योऽङ्गीकार्यः । कार्यमेव तथाविधम् । कार्यवाचिपदोपेतवाक्यात् प्रवृत्त्यादेर्दर्शनात् । तच्छून्यवाक्याच्चादर्शनादिति भावः । सिद्धार्थबोधकवाक्यस्य वैयर्थ्यं वदतो मते कार्यताबोधकत्वेन प्रामाण्यमभिमतम् । कार्यताबोधस्य प्रवृत्त्याद्यङ्गत्वात् । कार्यता १चेष्टसाधनतातिरिक्ता न काचिदित्यन्यत्रोक्तम् । तथा चेष्टरूपपरमात्मबोधकस्यागमस्य कार्यताबोधकत्वेनैव प्रामाण्यमुप-पन्नमित्यभिप्रेत्याऽह- यद्धि यस्येष्टमित्यादिना ।। प्रवृत्त्याद्यनङ्गतयेत्युक्तं दोषं परिहरति- न चेति ।। प्रवृत्त्याद्यनुपपत्तिदोषश्च नेति सम्बन्धः । इष्टानुभवस्यैवेति ।। अत्रेष्टानुभवपदेन स्वसम्बन्धिवर्तमानेष्ट-ज्ञानमात्रं विवक्षितम् । तेनात्रानुभवपदेन स्मृत्यन्यज्ञानमात्रमुच्यते साक्षात्कारो वा । नाऽद्यः । ‘यन्न दुःखेन सम्भिन्नम्’ इत्यागमजन्यज्ञानस्यापि पुरुषार्थत्वापत्त्या ततः प्रयोजनान्तरापेक्षाभाव-प्रसङ्गात् । न द्वितीयः । प्रकृतेऽपि ‘द्यावाभूमी’ इत्याद्यागमेन रमापतिरूपेष्टसाक्षात्काराजननात् तद्वैयर्थ्यप्रसङ्गस्तदवस्थ इति निरस्तमित्याहुः । ततः प्रयोजनानपेक्षणादिति ।। अयं भावः । परप्रयोजनोपयुक्तमेव वाक्यं प्रमाणमिति सत्यम् । परप्रयोजनं च परस्यापेक्षितमेव भवति । परश्च मुख्यतयेष्टमनिष्टनिवृत्तिं वा अमुख्यतया तत्साधनं वा अपेक्षते । न प्रवृत्तिनिवृत्ती । क्लेशरूपत्वात् । प्रवृत्त्याद्यर्थवाक्यानामपीष्टसाधनज्ञानार्थत्वेनैव सार्थकत्वाच्च । यथोक्तम् अनुव्याख्याने-

‘इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते ।

अपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनम् ।।

क्वापि चेष्टा तदर्था स्यात्...... ।’२ इति ।

अतः परमेष्टेश्वरानुभवस्यैव परैरर्थ्यत्वान्मुख्यप्रयोजनत्वेन ततः प्रयोजनान्तरानपेक्षणान्न तत्परागमवैयर्थ्यमिति । केषाञ्चित् ज्वराद्युपेतानाम् । भावाः क्षीरादयः पदार्थाः । परेषां ज्वरादिरहितानाम् । नन्वेकान्तभक्तानामागमस्येष्टबोधकत्वेनोपादेयत्वेऽपि मध्यमभक्ता-द्यनुपादेयत्वं स्यात् । तान् प्रतीश्वरस्येष्टत्वाभावादित्यत आह- इतरान् प्रत्यपीति ।।

नारायणस्तु मोक्षार्थो मोक्षो नान्यार्थ इष्यते ।

इति मध्यमभक्तानां........................ ।। इत्युक्तेरित्यर्थः ।

### द्वैतद्युमणि

यद्धि यस्येष्टमिति ।। इष्टं स्नेहविशेषविषयीभूतम् । अनुपादेयत्वं तत्पुरुषवृत्तीच्छा-विषयत्वाभाववत्स्वतात्पर्यविषयीभूतबोधकत्वम् । तत्प्रसङ्गात् तत्पूर्वकमप्रामाण्यप्रसङ्गादित्यर्थः । इष्टश्चेति ।। इष्टत्वं तु जिज्ञासाजननद्वारा वाक्यस्योपादेयत्वे नियामकम् ।

तस्यैवेति ।। सुखस्यैवेत्यर्थः । एवकारेण घटादिव्यवच्छेदः । स्वस्य सुखस्य यो रसः असाधारण-धर्मः सुखत्वम् । तेन सुन्दरत्वात् । तत्प्रयोज्यनिरुपाधिकेष्टत्ववत्त्वात् ।

### श्रीराघवेन्द्रतीर्थ

किमपि प्रयोजनमभिधीयत इत्युक्तं तद्वक्तुमाक्षिपति- नन्विति ।। वक्ष्यमाणानुमानस्यानु-ग्राहकमाह- आगमं तावदिति ।। २मङ्गलस्य समाप्तिहेतुतावबोधकश्रुतिवन्नानुमेय इत्याह- श्रूयते हीति ।। इत्यादीति ।। 'एको दाधार भुवनानि विश्वा' 'उक्षा स द्यावापृथिवी बिभर्ति' 'यत्प्रयन्ति' 'आत्मानमन्तरो यमयति' इत्यादिरादिपदार्थः । केवलेति ।। कार्यानन्वितकृत्यसाध्यरूपार्थ इत्यर्थः । तथा सतीति ।। इष्टादन्यस्य बोधन इत्यर्थः । शङ्कते- स्वाश्रित इति ।। स्वीयमनोगत इति वा धनीतिवन्मनोगतं प्रति स्वामितासम्बन्धेन स्वाश्रित इति वा पररीत्या वा स्वाश्रित इत्युक्तिः । केषाञ्चिदिति ।। उष्ट्रादीनामिष्टसाधनताविधुराः कदलीफलादयोऽन्येषामिष्टसाधनभूता दृश्यन्त इत्यर्थः । यथोक्तमिति ।। गीताभाष्ये सप्तमान्ते । ग्रन्थकर्ता च एकान्तीति भावः ।३

### गुरुराजीया

किमपि प्रयोजनमभिधीयत इत्युक्तम् । तद्वक्तुं गूढाभिसन्धिराक्षिपति- नन्विति ।। किं प्रमाणं न किमपीत्यर्थः । तद्धि न तावत्प्रत्यक्षम् । तस्याऽपाततस्तदभावावेदकत्वात् । नाप्यनु-मानम् । तत्प्रतिबद्धलिङ्गाभावात् । नाप्यागमः । तस्य प्राभाकररीत्या कार्यनिष्ठत्वेन सिद्धरूपेश्वरपरत्वासम्भवात् । नाप्यर्थापत्तिः । तस्या अनुमानानतिरेकेण तत्पक्षोक्तदोषात् । नाप्युपमानाभावौ । तयोर्नियतविषयत्वादित्याशयः । गूढाभिसन्धिरेव परिहरति- आगममिति ।। अनुमानस्याप्युत्तरत्र कथनात् तावदित्युक्तम् ।

ननु आगमः किं प्रत्यक्ष उताऽनुमानिकः । नाऽद्यः । तदनाकलनात् । नान्त्यः । तदनुमापकलिङ्गाभावादित्यतः प्रथमं कल्पमङ्गीकृत्य तत्पक्षोक्तदोषमसिद्ध्या परिहरति- श्रूयते हीति ।। पूर्ववादी स्वाशयमुद्घाटयति- केवलसिद्धार्थेति ।।

ननु कार्यान्विततया यूपाहवनीयादाविव उपासनाकार्यशेषतया सिद्धरूपेऽपीश्वरे 'द्यावाभूमी जनयन् देव एकः' इत्यागमप्रामाण्यसम्भवात् कथं कार्य एव प्रामाण्यमित्यवधारणमित्यतो न सर्वथाऽऽगमस्य तत्र प्रामाण्यं निराकुर्मः । किं तु सिद्धान्त्यभिमतमकार्यशेषतया स्वप्रधाने ईश्वरे तत्प्रामाण्यमेवेति युक्तमवधारणमिति भावेन केवलत्वेन सिद्धविशेषणम् । केवलत्वं च सिद्धस्य कार्यान्वयरहितत्वम् । स्वप्रधानत्वमिति यावत् ।

अयमाशयः । यद्यपि बोधकत्वेनैव प्रमाणानां प्रामाण्यम् । ज्ञापनमेव साक्षाद्वाक्यस्य प्रयो-जनम् । तथापि स एवार्थो वाक्येन ज्ञापनीयो यज्ज्ञानं परस्य क्वचित् प्रवृत्तिं क्वचिन्निवृत्तिं कुर्यात् । परप्रवृत्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगात् । प्रवृत्त्यादिकारणं च कार्यज्ञानमेव । 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिकार्यपरवाक्यश्रवणात् प्रवृत्त्यादिदर्शनात् । न केवलसिद्धज्ञानम् । 'काकस्याष्टौ दन्ताः' इति सिद्धपरवाक्यश्रवणात् प्रवृत्त्याद्यदर्शनात् । अतः प्रवृत्त्यादिकारणं कार्यमेव वाक्यबोध्यमिति तत्रैवाऽगमस्य प्रामाण्यं नेश्वर इति ।

कथमिष्टत्वोक्तिमात्रेणोक्तशङ्कापरिहार इत्यतो नायमस्ति नियमः कार्यमेव वाक्यबोध्यं नान्यदिति । किं तु यद्धि यस्य बुभुत्सितं तदेव वाक्येन तं प्रति बोधनीयं नान्यदिति । अन्यथा अपिपासुं प्रति जलाशयोपदेशस्यापि प्रामाण्यप्रसङ्गात् । ईश्वरश्चेष्टत्वाद्बुभुत्सित इति युक्तं तत्प्रतिपादकत्वमागमस्येति बुभुत्सितत्वनियामकेष्टत्वकथकत्वाद् युक्तोऽनेनोक्तशङ्कापरिहार इत्यभिप्रेत्येश्वरबोधकतामुपपादयति- यद्धीति ।। इष्टं बुभुत्सितमित्यर्थः ।

ननु 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादौ वाक्यजन्यज्ञानस्य प्रवृत्त्यादिजनकतया प्रयोजनवत्त्वदर्शनादीश्वरज्ञानस्य च तदजनकत्वात् कथं प्रयोजनवत्त्वमित्याशङ्क्य तद्वाक्यार्थस्य निरुपाध्यनुकूलत्वाभावेन तज्ज्ञानस्य स्वतः प्रयोजनत्वासम्भवेन प्रयोजनान्तरसाधनतयैव प्रयोजन-विषयत्वेन तदर्थतया प्रवृत्त्यादिजनकत्वावश्यम्भावेऽपि प्रकृते बोध्यस्येश्वरस्य

निरुपाध्यनुकूलतया तज्ज्ञानस्य स्वतःपुरुषार्थत्वेन प्रयोजनान्तरानपेक्षणान्न प्रवृत्त्याद्यजनकत्वेऽपि प्रयोजनत्वव्याघात इत्याशयेनाऽह- न चेत्यादिना ।। तत इति ।। तस्येत्यर्थः । ज्ञानमात्रस्य प्रयोजनान्तरसाधनतया प्रयोजनत्वनियमादिष्टानुभवस्यापीश्वरज्ञानस्य प्रयोजनान्तरापेक्षा स्यादेव । अन्यथा प्रयोजनत्वा-निर्वाहादित्यतो व्यभिचारान्नोक्तनियमो युक्त इत्याह- न हीति ।। बुभुत्सितत्वप्रयोजकस्येष्टत्व-स्यैवेश्वरेऽसिद्धेः न तस्य बुभुत्सितत्वमिति कथं वाक्यबोध्यतेत्यभिप्रेत्य तस्येष्टत्वाभावमाशङ्कते- स्वाश्रित इति ।। उत्तमाधिकारिणामिति ।। पुरुषार्थान्तराभिलाषशून्यानामित्यर्थः । कुतः प्रमाणात् तन्निश्चय इत्यतः उत्तमाधिकारिस्वरूपविवरणपूर्वकं तत्र प्रमाणमप्याह- सन्तीति ।। एकान्तानां नियतानामुत्तमभक्तानाम् । न कस्यचिदर्थे । स एव परमपुरुषार्थ इत्यर्थः । एक एवान्तोऽन्तं गतः अस्मादसावुच्च इति तारतम्यक्रमस्यान्तगतो हरिर्वेद्यतया येषां ते एकान्ता इति वा अर्थः ।

'अस्मादसावुच्च इति क्रमस्यान्तगतं हरिम् ।

एकमेव तु ये विद्युस्ते ह्येकान्तिन ईरिताः ।।'

इति छान्दोग्यभाष्यानुसारादिति ध्येयम् । अस्त्वेवमुत्तमाधिकारिणः प्रतीष्टत्वेन भगवतो बुभुत्सित-त्वाद्वाक्यबोध्यत्वं तथापि तदितरान् प्रति न तद्बोधकत्वमागमस्य सम्भवति । तत्प्रयोजकीभूत-बुभत्सितत्वप्रयोजकाभावादित्यतो न निरुपाध्यनुकूलत्वमात्रं बुभुत्सिततायां प्रयोजकम् । किं तु तत्साधनत्वमपि । ततश्चेतराधिकारिणः प्रति भगवत इष्टत्वाभावेऽपि इष्टसाधनत्वेन बुभुत्सितत्वोपपत्तेर्युक्तमेव तान् प्रत्यपि ईश्वरबोधकत्वमागमस्येत्याह- इतरान् प्रतीति ।।

## गोविन्दीया

नन्विति ।। मास्तु धर्मसद्भावे प्रमाणचिन्ता तावत्, ईश्वर एव धर्मिणि किं प्रमाणमि-त्यर्थः । प्रवृत्तीति ।। प्रवृत्तिनिवृत्त्यनङ्गतयेत्यर्थः । तथा सतीति ।। अनिष्टबोधनेनेत्यर्थः । इष्टेति ।। इष्टानुभवस्यैव पुरुषापेक्षितत्वेन मुख्यप्रयोजनत्वात्, ततः तस्माद् उद्भाव्यमानप्रयोजनान्तरानपेक्ष-णादित्यर्थः । स्वरसेति ।। प्रयोजनान्तरमनपेक्ष्य स्वरससुन्दरत्वात् स्वतो दक्षत्वादित्यर्थः । तथाभूता इति ।। इष्टसाधनताम् अनासादयन्त इत्यर्थः । इतरानिति ।। तत्परत्वम् इष्टसाधनत्वपरत्वम् आगमस्यानुपपन्नम् इष्टपरत्वेनाङ्गीकारादिति न वाच्यमित्यर्थः ।

## जनार्दनभट्टीया

इष्टविशेषणस्य प्रयोजनं वक्तुं तद्व्यावर्त्यां शङ्कामुत्थापयति – नन्विति ।। 'सर्वत्र' इत्यादिविशेषणविशिष्टे तु दूरोत्सारितमित्येवकारार्थः । आगमं तावदिति ।। क्रमेण अनुमानमपि ब्रूम इति 'तावत्'शब्दः क्रमार्थः । श्रूयते हीति ।। 'अस्ति हि' इति वाच्ये 'श्रूयते हि' इति वदता नेयं श्रुतिरध्येतृणामभावादुच्छिन्ना नापि मङ्गलस्य समाप्तिकारणताबोधकश्रुतिवदनुमेयेति सूचितम् । अत्र यद्यपि 'यतो वा इमानि भूतानि' इति श्रुतिरुदाहर्तुं शक्या । तथापि प्रकृते तदुदाहरणे तात्पर्य-चन्द्रिकारीत्या रुद्रादेरपि कल्पभेदेन जगत्कारणत्वमस्तु । अतो नेयं श्रुतिर्नित्याताद्दशचिच्चेत्य-यन्तृत्वविशिष्टे प्रमाणमिति शङ्कोदयात् तामनुदाहृत्यापतच्छङ्कानिवर्तक'एक'पदघटितेयमेव श्रुतिरुदाहृतेति ज्ञातव्यम् । 'आदि' इत्यनेन 'य उ त्रिधा तु पृथिवीमुत द्यामेको दाधार' इत्यादेर्ग्रह-णम् । केवलसिद्धार्थेति ।। १कार्यपरस्य 'गामानय' इत्यादेर्गवादिरूपसिद्धार्थबोधकस्यापि प्रवृत्त्यङ्गत्वदर्शनादाह – केवलेति ।। ततश्च सिद्धसमभिव्याहृतानयनादिकार्यबोधकत्वात् प्रवर्तकत्वमुपपद्यत इति भावः । स्वरससुन्दरत्वादिति ।। निरुपाधिकेच्छाविषयत्वादित्यर्थः । न इति पदव्यावृत्त्या शङ्कामुत्थापयति – स्वाश्रित इति ।। दुःखनिवृत्तौ इत्यत्र 'स्वाश्रितायाम् इति शेषः ।

उत्तमाधिकारिणामिति ।। एकान्तभक्तानामित्यर्थः । अत एव तथैव गीताभाष्योदाहृतप्रमाणमाह– एकान्तानामिति ।। नन्वितरकार्यापेक्षया रमापतेरिष्टत्वाभावेन तान् प्रति तस्य बोधनीयत्वं स्यादित्यत आह– इतरानिति ।। बुभुत्सितत्वादिति ।। तथा चेष्टसाधनसाधारणं बोधनीयतावच्छेदकं बुभुत्सितत्व-मेव । अतो नाननुगम इति भावः ।

### नारोपन्तीया

सिद्धार्थबोधकस्येति । अयमत्र कार्यतावादिनः प्राभाकरस्य पूर्वपक्षिणोऽभिप्रायः । वाक्यं तावद् द्विविधम्- कार्यपरं सिद्धार्थबोधकं च । तत्राऽद्यं लिङ्लोट्तव्यपञ्चमलकारान्यतमवत् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि वैदिकम् । 'गामानय' इत्यादि लौकिकं च तदुभयमपि कार्यबोधकम् । प्रयोजकवृद्धोदीरितप्रयोज्यवृद्धव्यापारदर्शनेन तटस्थस्य व्युत्पित्सोर्बालस्य कार्यतायामेव लिङादेः शक्तेर्गृहीतत्वात् । कार्यत्वं च कृतिसाध्यत्वम् । ततश्च 'स्वर्गकामस्य यागः मम कृतिसाध्यः' इति ज्ञात्वा पुरुषः प्रवर्तत इति तादृशं वाक्यं प्रवृत्त्यङ्गत्वाद्भवति प्रमाणम् । द्वितीयं तु 'द्यावाभूमी जनयन् देव एकः' इत्यादि वैदिकम् । 'सुरसमाम्रफलम्' इत्यादि लौकिकम् । तदुभयमपि प्रवृत्त्याद्यनङ्गत्वादप्रमाणम् । तदर्थस्येश्वरादेः सिद्धरूपत्वेन कृतिसाध्यत्वाभावात् । तथा चात्र तर्कः- यदीदं वाक्यं ईश्वरे प्रमाणं स्यात् तर्हि अनुपादेयतया व्यर्थं स्यात् । तदेव हि वाक्यमुपादीयते यत्प्रवृत्त्याद्यङ्गम् । तत्रैव च पुरुषः प्रवर्तते । यत्पुरुषस्य कृतिसाध्यम् । न च तदर्थत्वेनाभिमत ईश्वरस्तथा । तस्य सिद्धार्थत्वादिति । तस्मान्नेदं वाक्यं अत्रार्थे प्रमाणमिति ।

सिद्धान्ताभिप्रायस्तु- न तावदत्र भवता याथार्थ्यलक्षणस्य सर्वजनसम्प्रतिपन्नस्य प्रामाण्यस्य प्रतिषेधः कर्तुं शक्यः । 'द्यावाभूमी जनयन् देव एकः' 'सुरसमाम्रफलम्' इत्याद्युदाहृतवाक्ये, यथाव-स्थितार्थविषयीकारिज्ञानसाधनत्वरूपयाथार्थ्यस्य सत्त्वात् । किं तु यथार्थमपि वाक्यं द्विविधम् । उपादेयमनुपादेयं च । तत्र विषयप्रयोजनादिमदुपादेयम् । अत एव सर्वेष्वपि शास्त्रेषु प्रेक्षावदुपादित्साप्रयोजकं विषयप्रयोजनादि वर्णयन्ति । अतथाविधं त्वनुपादेयम् । यथा रासभ-लोमविचारादिशास्त्रम् । तत्रापि तान्त्रिकाणां अप्रामाण्यव्यवहारात्, उपादेयत्वाख्यमपि तान्त्रिकाणां पारिभाषिकम् । द्वितीयं प्रामाण्यमभ्युपगतमस्ति तत्सिद्धार्थबोधके प्रकृतवाक्ये नास्तीति वक्तव्यम् । तदप्ययुक्तम् । तथा हि- निष्प्रयोजनमनुपादेयप्रयोजनवदुपादेयमिति तावत् तवापि सम्मतम् । प्रयोजनवत्ता चास्य वाक्यस्य 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविध्यध्यापितस्य सर्वस्याप्याम्नायस्य पुरुषार्थपर्यवसायित्वावगाहनादेव सिद्धा । प्रयोजनं तदुच्यते यत्पुरुषस्येष्टं तदेव । पुरुषेणार्थ्यमानत्वात् पुरुषार्थ इत्युच्यते । तच्चाधिकारिवैचित्र्यान्नानाविधम् । न त्वनुगतं किञ्चिदस्ति । अत एव मुमुक्षुं प्रति अन्यदप्रमाणमिति व्यवस्थिते एव प्रामाण्याप्रामाण्ये । अत एव मुमुक्षुं प्रति वात्स्यायनशास्त्रं, स्वर्गकामादिवाक्यं, विरक्तं प्रति वाणिज्योपदेशवाक्यं च सत्यपि याथार्थ्ये अप्रमाणमेव । अविरागावस्थायां च तदेव तं प्रति प्रमाणमेव । तस्मिन् काले तदिष्टसम्पादकत्वात् । अत एव व्रीहिनिर्वापकाले 'व्रीहिभिर्यजेत' इति व्रीहिशास्त्रमेव प्रमाणम् । 'यवैर्यजेत' इति यवशास्त्रमप्रमाणमेवेति एकैकस्मिन् शास्त्रे क्लृप्ताप्रामाण्यपरित्यागो क्लृप्तप्रामाण्यकल्पनम् । क्लृप्तप्रामाण्यपरित्यागोऽ-क्लृप्ताप्रामाण्यकल्पनमिति चत्वारश्चत्वारो दोषा इत्यष्टदोषदुष्टो विकल्प इति मीमांसकानां घण्टा-घोषः ।

एवं च द्यावाभूमीवाक्यार्थस्यापि पुरुषविशेषं प्रतीष्टत्वात्तद्बोधकं एतत्कथनं प्रामाण्यमश्नुवीत । सन्ति हि लोकेऽपि 'पुत्रस्ते जातः' इत्यादीनि वाक्यानि, केवलसिद्धार्थबोधकान्यपि इष्टार्थबोधकत्व-मात्रेणाऽनन्दहेतुत्वादुपादेयतालक्षणप्रामाण्यभाञ्जि । प्रवृत्तिजनकत्वेन उपादेयतां वदताऽपि न तन्मात्रजनकत्वादुपादेयता वक्तुं शक्या । किं नाम ? वाक्यार्थबोधानन्तरं प्रवृत्तौ सत्यां तदनन्तर-कालीनाभीष्टावाप्तिमादाय तथात्वं वाच्यम् । सा चेद्विनाऽपि प्रवृत्तिं वाक्यार्थश्रवणाद्भवेत् । किमिति प्रवृत्तिं प्रतीक्षामहे । तदिदमाहुः- 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति । अभ्युपेत्य चेदमुदि-तम् । वस्तुतस्तु त्वदुक्तन्यायेनैव 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिवाक्यबलादेव सिद्धे द्यावाभूमीवाक्यार्थभूते ब्रह्मण्येव सर्ववेदानां महातात्पर्यं सिध्यति ।। तथा हि- अध्ययनविधिना तावत्पुरुषार्थपर्यवसायिता स्वाध्यायस्यावगता । तत्र पुरुषार्थो द्विविधः

। ऐहिकः, आमुष्मिकश्च । आमुष्मिको स्वर्गोऽपवर्गश्चेति द्विविधः । तत्र 'मुख्यामुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायेनापवर्गरूपमुख्यपुरुषार्थपर्यवसायित्वं वाच्यम् । स चापवर्गः 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते'१ इति श्रुतेः ब्रह्मज्ञानैकसाध्य इत्यगत्या सर्वस्यापि स्वाध्यायस्य ब्रह्मज्ञापकत्वमनिच्छताऽपि वक्तव्यमेव । अन्यथाऽध्ययनविधिप्रामाण्यस्य जलाञ्जलिप्रदानापत्तेः । एतदेवाभिप्रेत्य श्रुतिः सहेतुकं भगवत्परत्वमुपपादयति-

'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।

अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोऽतः ।।'२ इति ।

सौपर्णश्रुतिरप्यमुमेवार्थमाह–

'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।

तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव ।।' इति ।

तथा स्मृतयोऽपि-

'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृत्'३, 'वेदे रामायणे चैव पुराणे' इत्यादिकाः । तस्मादिष्टरूपभगवत्स्वरूपबोधकत्वात् सर्वोऽपि वेदान्त एकान्तानाम् उपादेयत्वात् प्रमाणमेव । वृद्धव्यवहारेण शक्तिग्रहकालेऽपि इष्टसाधनताज्ञानस्यैव प्रवर्तकत्वात् । लिङर्थोऽपि मनादौ निषिद्धेऽपि कलञ्जभक्षणादौ प्रवृत्त्यापत्तेः ।।

स्यादेतत् । यद्यथाकथञ्चित्कार्यताज्ञानं प्रवर्तकं ब्रूमः । किं त्विष्टसाधनताप्रतिसन्धानजन्यं तथा । न च सन्ध्यावन्दनादौ नित्यकर्मणि पण्डापूर्ववादिनो मम इष्टसाधनत्वाभावादप्रवृत्तिः स्यादिति वाच्यम् । तत्र शुचितत्कालजीवित्वप्रतिसन्धानजन्यस्यैव कार्यताज्ञानस्य तथात्वात् । न चैवमननु-गमः । स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानत्वेनानुगमात् । अस्यार्थः- स्वस्य प्रवर्तमानपुरुषस्य यद्विशेषणं काम्यस्थले कामना । नित्यशुचिस्थले शुचितत्कालजीवनं तद्वत्त्वं तद्वर्तमानता । तत्प्रतिसन्धानजन्यं यत्कार्यताज्ञानं तत्त्वेनानुगमादिति । तथा च निषिद्धे कार्यताज्ञाने सत्यपि उक्तविधिविशेषसामग्रीविरहादप्रवृत्तिरिति ।

अत्र ब्रूमः । इष्टसाधनताप्रतिसन्धानजन्यं कार्यताज्ञानं प्रवर्तकमिति वदता ज्योतिष्टोमादि-विधयस्तावदप्रमाणीकृताः । तत्र हि लिङर्थः कृतिसाध्यत्वम् । तद्ज्ञानं च विधिवाक्यजन्यम् । न च विधिवाक्यमिष्टसाधनत्वं वा तत्प्रतिसन्धानं वा । तस्य शब्दात्मकत्वेनोभयरूपत्वाभावात् । किं चैवं वदतो भ्रान्तस्य मते अन्वयव्यतिरेकाद्यविषयेऽत्यन्तालौकिके यागस्वर्गयोः कार्यकारणभावे किं मानम्? 'स्वर्गकामो यजेत' इति विधेः यागः कृतिसाध्य इति वा, यागविषयं कार्यमिति वा, अर्थ इति त्वयाऽभ्युपगतत्वात् । कार्यताज्ञानजनकत्वेनाभिमतस्य तत्कालजीवप्रतिसन्धानादेः लौकिक-प्रमाणसिद्धत्वेऽपि इष्टसाधनताप्रतिसन्धानस्य कथं लाभः ? न हि यागस्य साधनत्वं प्रत्यक्षेणानुमान-सहस्रेण ज्ञातुं शक्यम् । ननु वाक्येन स्वर्गकामस्य यागविषयं कार्यमित्यवगते, कामी कामानुमायां कार्यतया नावगच्छति । किन्तु तदुपायमेवेति स्वर्गकामनावतः कर्तव्यतया उपदिश्यमानो यागोऽगत्या तत्साधनत्वेन पर्यवस्यति । तदुक्तम्-

'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ।

कार्ये सङ्कटिताकारे करणत्वेन सम्मते ।।'

इति चेत्, अत्र प्रष्टव्यम् । किमियं मानसो बोध उपन्यस्तः, आनुमानिको अर्थापत्तिजो वा । नाऽद्यः । मनसो बहिरस्वातन्त्र्यात् । यागस्वर्गयोः सङ्कल्पसुखात्मकत्वात् कथं वाऽऽत्मत्वमिति चेत् । सत्यम् । विधिवाक्यार्थज्ञानकाले तयोरसन्निकर्षेण मानसत्वायोगात् । ज्ञात्वा खलु यागे प्रवृत्तिः । तदनन्तरं तत्स्वरूपसिद्धिः । मरणानन्तरं स्वर्गानुभव इति कथं तयोरिदानीं मानसत्वम् ? कारणतायाश्च शक्तिरूपत्वेनातीन्द्रियत्वमेवेति । विधिवाक्यस्य तु साधनत्वानावेदकत्वेन उपनायकत्वाभावात् । भावे वा किं मनःपर्यन्तधावनेन ? न च शब्देन स्वर्गादिकतिपयपदार्थोपस्थितौ प्रत्यक्षाद्युपस्थितिं घटादिनिष्ठं साधनत्वमात्रमादाय मानसः संसर्गबोधः उपपत्स्यत इति वाच्यम् । प्रत्यक्षोपस्थितमभावमादाय यागाभावः स्वर्गसाधनम् । 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादावपि प्रत्यक्षोपस्थितचण्डालादेरपि अधिकारान्वयापत्तौ, बहुविप्लवापत्तेः । न द्वितीयः । अनुमानं हि - यागः स्वर्गसाधनम् । स्वर्गकामवतः कर्तव्यतयाऽऽम्नानात्, इत्येवं प्रकारं वाच्यम् । प्रकारान्तरासम्भ-वात् । तस्य दृष्टान्ताभावेनानुत्थानात् । विधिवाक्यमात्रस्य पक्षप्रविष्टत्वात् । यद्यत्कामनावन्तं प्रति कार्यतयोपदिश्यते तत्तत्साधनम् । यथा तृप्तिकामं प्रति भुङ्क्ष्वेत्यादिपित्रादिवाक्येन, तृप्तिसाधनत्वेनोप-दिश्यमानं भोजनं तत्साधनमिति सामान्यव्याप्तिरस्तीति चेन्न । तत्रापीष्टसाधनत्वं लिङर्थ इति वदतो विप्रतिपत्तेर्दृष्टान्तस्य साधनविकलत्वात् । न च तत्कामस्य तत्कृतिसाध्यमिति साक्षात्कृतिसाध्यत्व-रूपार्थप्रतिपादकतया सम्प्रतिपन्नशब्दस्थले अधिकारिविशेषणीभूतकामनाविषयतृप्त्यादिकं प्रति विधेयस्य भोजनादेः साधनत्वावगमाद् अस्ति व्याप्तिरिति वाच्यम् । व्यधिकरणत्वात् । न हि वयं कृतिसाध्यताबोधकः शब्द एव नास्तीति ब्रूमः । किन्नाम ? लिङः तदर्थत्वे विप्रतिपद्यामहे । तत्र तावद्व्याप्त्युपन्यासस्याप्रयोजकत्वात् । वस्तुतस्तु सापि नास्ति । बुभुक्षोर्भोजनं कृतिसाध्यमित्युक्ते अधिकारिविशेेषणतया प्रतीयमानकामनायां विषयतयोपस्थिते भोजने भुक्तिसाधनत्वावगमात् । परस्त्रीकामः प्रायश्चित्तं कृत्या साधयेदित्युक्तौ चातथात्वेन व्यभिचारात् । एतेनैव तृतीयोऽप्यपास्तः । अर्थापत्तेरनुमानानतिभिन्नत्वात् । तस्माद्यागस्य स्वर्गं प्रति पूर्ववृत्तित्वसाधनतायां मानाभावेन कृतितत्साध्यमध्यस्थतैव दुर्ज्ञानेति तद्बलेन करणत्वबोध इति बिडालाशामात्रमेवेति । यदपि नित्यस्थले शुचितत्कालजीवित्वप्रतिसन्धानेत्युक्तं तदप्यतितुच्छमेव । विशेषणव्यावर्त्याभावात् । न हि मृतस्याशुचेर्वा काम्ये, लौकिके वा कर्तव्यताप्रसक्तिरस्ति । यदि च सम्भवमात्रेण तद्विशेषणं तर्हि प्रमेयत्वाभि-धेयत्वादिप्रतिसन्धानेत्यादिविशेषणमपि किमिति न प्रवेशयेः ? काम्येऽप्यशुचेर्मृतस्याप्यनधि-कारात् । शुचितत्कालजीवनप्रतिसन्धानमेव तत्राप्यस्तु ।।

माऽस्त्विष्टसाधनताप्रतिसन्धानरूपमधिकारिविशेषणम् । तत्र तस्याप्रवर्तकत्वे नित्येऽपि प्रवर्तकं न स्यात् । स्वर्गकामस्य शुचित्वादिविशिष्टस्य यागः कृतिसाध्य इति बोधेऽपि, 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादौ ब्राह्मणत्वमिव, सामवत्त्वादौ गृहदाहादिकमिव, स्वर्गकामनाऽपि निमित्तभूतं विशेषणमस्तु । ततश्च ब्राह्मणत्वादेरिव स्वर्गकामनाविषयस्वर्गादेर्धात्वर्थासाधकत्वेऽपि पण्डापूर्वमादायैव तत्र प्रवृत्तिरस्तु । न च तत्र फलाज्ञाने प्रेक्षावन्तो न प्रवर्तन्ते । तत्किं नित्ये तदज्ञाने प्रवर्तन्ते ? 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति वचनात् । प्रत्युत फलाज्ञाने निवृत्तेरन् । केवलं कष्टरूपत्वात् कर्मणः । अत एवाऽहुः -

'विफलानि दुरन्तानि तुल्यायव्ययकान्यपि ।

विरुद्धान्यपि कार्याणि नारभेत विचक्षणः ।।' इति ।

तस्मात् प्रेक्षावत्सु पापक्षयं ईश्वरप्रीतिं वा फलमपेक्ष्य प्रवर्तमानेषु तत्र पण्डापूर्वमेव । नित्यकर्माणि वस्तुतो निष्फलान्येवेति त्वत्प्रलापमात्रमवशिष्यते । एवमत्रापि काम्यस्थले लोकाः फलाभिसन्ध्यैव प्रवर्तन्ताम् । फलं नास्तीति च भवान् रारटीतु त्वदीयरटनस्य उन्मत्तप्रलापतया महाजनप्रवृत्त्य-प्रतिबन्धकत्वादिति दिक् ।।

एतेन स्वविशेषणवत्तेत्यादिनाऽनुगमोऽपि परास्तः । किञ्च सर्वत्र लडाद्याख्याते कृतिमात्रवाच्यं वाच्यम् । तदेव लिङादेरपि वाच्यमस्तु । न चैवं यजेतेत्यादिश्रवणवद् यजतीत्यादिश्रवणादपि प्रवृत्तिः स्यादिति वाच्यम् । त्वदुक्तविशेषणवत्तेत्याद्यावश्यकसामग्रीसत्त्वे इष्टापत्तेः । असत्त्वे तु तदभावादेव तदभावोपपत्तेः । एतच्चाभ्युपेत्योक्तम् । वस्तुतस्तु 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययमात्रम्' इति वचनात् निरर्थक एव लिङ् साधुत्वार्थोऽस्तु । यजेतेत्यनेन प्रवृत्त्यर्थयागस्वरूपमात्रावगतौ त्वदुक्तसामग्रीमहिम्नैव प्रवृत्त्युपपत्तेः । किञ्च प्रकृत्यसाध्ये कामनाया अनुदयात् कृतिसाध्यत्वज्ञानं कामनां प्रति हेतुरिति कथञ्चिद्वक्तुं युक्तमिति कथं तस्यास्तद्धेतुत्वं कथन्तरां च तदुत्तरभाविनः तृतीयकक्ष्यापन्नस्य कामनाप्रतिसन्धानस्य कार्यताज्ञानहेतुत्वम् । न हि सम्भवति नप्ता पितामहस्य जनक इति ।।

ननु कामना द्विविधा । फलविषया साधनानुष्ठानविषया चेति । तत्र चिकीर्षारूपायाः द्वितीयायाः कार्यताज्ञानजन्यत्वेऽपि आद्यायाः फलकामनायाः तत्पूर्वभावित्वोपपत्त्या युक्तमुक्तमिति चेन्न । तस्याः स्वरूपसत्याः कथञ्चित्प्रवर्तकत्वेऽपि तत्प्रतिसन्धानस्य कार्यताज्ञानं प्रत्यजनकत्वात् । फलेच्छाप्रतिसन्धानेऽपि चन्द्रमण्डलादौ तक्षकचूडामणिहरणादौ च कार्यताज्ञानानुदयात् । फलकामनाविरहेऽपि विरक्तस्य वाणिज्यादौ कृतिसाध्यताज्ञानोदयाच्चान्वयव्यतिरेकव्यभिचारात् । तस्मादगत्यावैदिकं मन्ये । न च यागस्वर्गयोः साध्यसाधनभावनिर्वाहाय साधनत्वमेव लिङर्थोऽवश्यं वाच्यः । तदुक्तम् अनुव्याख्याने– 'कार्यता च न काचित् स्यादिष्टसाधनतां विना'१ इत्यादिना । तस्य कृतिसाध्यत्वं तु तदङ्गकलापस्य तदनुरूपद्रव्यादिसामर्थ्यस्य च पर्यालोचनया लोकत एवावगन्तुं शक्य इति । तदर्थकत्वे विधेर्वैयर्थ्यं स्यात् । 'अपूर्वे शास्त्रमर्थवत्' इति न्यायात् । किञ्च विधिवाक्यादेव कृतिसाध्यतावगमे अङ्गकलापपर्यालोचना, ज्योतिष्टोमः कर्तव्य इत्युपदिष्टे च श्रोतुः पुरुषस्य सः मत्कृतिसाध्यो न वेति सन्देहः सः कथं कियता द्रव्येण सिध्यतीत्यादिप्रश्नोऽपि न स्यात् । तस्मात्–

'शास्त्रार्थो यद्यशास्त्रार्थः शास्त्रार्थश्च ह्यशास्त्रिकः ।

अहो मीमांसकम्मन्याः वेदविप्लवकारिणः ।।' इति परिनिष्ठितम् ।।

एतेन 'इष्टसाधनत्वविशिष्टं कृतिसाध्यत्वं लिङर्थः' इति वदन्तः तार्किका अपि परास्ता वेदि-तव्याः । अनन्यलभ्यस्यैव शास्त्रार्थत्वमित्युपपादितत्वात् । नन्विष्टसाधनत्वज्ञानमात्रं न प्रवर्तकम् । निषिद्धे मधुविषसम्पृक्तान्नभोजनादावपि तत्सत्त्वेन प्रवृत्त्यापत्तेः । तथा कृत्यसाध्ये इष्टसाधने तक्षकचूडामण्याहरणादौ च प्रवृत्त्यापत्त्या बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वज्ञानं प्रवर्तकमिति वाच्यम् । यागादिकर्मणोऽपि श्रमादिसाधनत्वादनिष्टरूपदुःखसाधनत्वेन तत्राप्यप्रवृत्त्यापातादनिष्टे बलवत्त्वं विशेषणम् । न च तस्यापि किञ्चिद्दुःखापेक्षया बलवत्त्वमस्त्येवेति कथं तद्व्युदास इति वाच्यम् । बलवदनिष्टाननुबन्धित्वशब्देनेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःख-जनकत्वस्याभिप्रेतत्वात् । यागादेश्चेष्टोत्पत्तिनान्तरीयकं यद्दुःखं यागस्वरूपनिर्माणार्थं क्लेशः तदधिकं यद्दुःखं तदजनकत्वात्तथात्वम् । अगम्यागमनादौ तु तन्निष्पत्त्यर्थं दुःखाधिकस्य नरकयातनादिजन्यस्य दुःखस्य सत्त्वान्न तथात्वमिति चेत् । अकाण्डताण्डवमेतत् । प्रवर्तकज्ञानस्यैवंरूपत्वे लिङर्थस्य किमायातम् ? न हि यावत्प्रवृत्तिं जनयति तावत्सर्वं ज्ञानं लिङर्थविषयकमेवेत्यत्र किञ्चिन्मानं पश्यामः ।

अर्थवादादिवाक्यस्यापि तदर्थत्वापत्त्या तद्वैयर्थ्यापत्तेः । दृश्यते हि- इयं गौः क्रय्येति वाक्यश्रवणानन्तरमपि अजाता प्रवृत्तिः । इयं गौर्बहुक्षीरा स्त्र्यपत्याऽनवद्यप्रजेत्यादिवाक्यश्रवणे सत्युपपद्यत इति । अहिकण्टकादिज्ञानस्यापि प्रवृत्तिप्रतिबन्धकत्वेन तदभावोऽपि लिङर्थः स्यात् । काशीं गच्छेदिति विधिश्रवणेनैव प्रतिबन्धकाभावस्याप्यवगमे सार्थान्वेषणं पदातिसङ्ग्रहादिकं च न क्रियेत । किञ्च बलवदनिष्टाननुबन्धित्वस्यापि विध्यर्थत्वे 'श्येनेनाभिचरन् यजेत' इत्यादिविधिनाऽपि

तद्बोधनाच्छ्येनादेरपि ज्योतिष्टोमादिसाम्यापत्तिः स्यात् । न च निन्दार्थवादप्रायश्चित्तविधिविरोधात् सा नेति वाच्यम् । षोडशीग्रहणादिवद्विकल्पस्यापि सम्भवात् । मन्मते त्विष्टसाधनत्वमात्रं लिङर्थः । श्येनादौ तु प्रायश्चित्तविधिबलाद्बलवदनिष्टाननुबन्धित्वम् । ज्योतिष्टोमादीनां तु प्रायश्चित्ताद्यश्रवणान्न तथात्वमिति न कश्चित् क्षुद्रोपद्रवः ।

नैय्यायिकाभिमतविशिष्टज्ञानस्य प्रवर्तकत्वमभ्युपेत्येदमुक्तम् । वस्तुतस्तु बलवदनिष्टाननुबन्धित्वज्ञानं कृत्यसाध्यताज्ञानं चिकीर्षाप्रतिबन्धकमिति । तत्सत्त्वे तदनुदयात् । न तक्षकचूडामण्यादौ प्रवृत्तिरिति तदभावज्ञानस्य प्रवर्तकत्वे मानाभावः । एवं चागम्यागमनादौ प्रायश्चित्तादिविधिबलादेव बलवदनिष्टानुबन्धित्वेऽवगते तत्र तद्भीरोः चिकीर्षैव नोदेति । यः पुनः

'भवत्कृते खण्डने मञ्जुलाक्षि शिरो मदीयं यदि याति, यातु ।

नीतानि नाशं जनकात्मजाकृते दशाननेनापि दशाननानि ।।'

इत्यादि प्रलपन् वर्तते । तस्य तदानीन्तनरागौत्कण्ठ्येन तज्जन्ये नरकादौ बलवद्द्वेषाभावेन तज्जन्यनरकदुःखापेक्षया तात्कालिकमिदं सुखमधिकमित्यभिमानेनोक्तविधस्य प्रतिबन्धकीभूतस्य विशिष्टज्ञानस्य विशेषणाभावप्रयुक्तासत्त्वेन चिकीर्षोदयाद्भवति प्रवृत्तिः ।

नन्वेवं सति इष्टसाधनत्वज्ञानमपि न प्रवर्तकं स्यात् । किं त्विष्टसाधनत्वज्ञानं प्रतिबन्धकम् । तदभावादेव प्रवृत्तिरस्तु । एवं सतीष्टसाधनत्वमपि लिङर्थो न स्याद् इति चेन्न । साधनत्वस्य लिङर्थत्वाभावे मानान्तरस्य तत्राप्रवृत्त्या यागस्वर्गयोः कार्यकारणभावो निष्प्रमाणः स्यादित्यनुपदमेवोपपादितत्वात् । तस्माद्वाक्यस्योपादेयताप्रयोजकरूपमिष्टसाधनत्वबोधकं, 'पुत्रस्ते जातः' इत्यादौ इष्टमिष्टबोधकं चेत्येवं त्वयाऽपि वक्तव्यमिति तावन्मात्रेणैव निराकाङ्क्षतया वाक्यार्थस्य पर्यवसानात् । अम्बतातादिशब्दानां व्युत्पत्तिः सिद्धार्थेष्वपि मात्रादिष्वङ्गुल्यादिना प्रदर्शितेषु 'इयं ते माता, अयं ते पिता' इत्याद्युपदेशेनापि बालानां भवतीत्यन्यत्र सविस्तरमुपपादितत्वात् । शक्तिः कार्यान्वित एवेत्यप्ययुक्तम् । तदुक्तम्- 'व्युत्पत्तिः प्रथमा यस्माद्वर्तमाने गते ततः'१ इत्यादि । तस्माद् द्यावाभूमीवाक्यस्य, 'पुत्रस्ते जातः' इत्यादिवद् इष्टार्थबोधकत्वाद्युक्तमुक्तं प्रामाण्यम् । तस्येष्टत्वं च 'तदेतत्पुत्रात् प्रेयो वित्तात्प्रेयः सर्वस्मादन्यस्मादन्तरं यदयमात्मा' इति श्रुतेः । न इष्टो रमापतिरिति सकलमकलङ्कमिति ।

एकान्तानां न कस्यचिदिति । एकान्तभक्तानां न कस्यचिदपि पुरुषस्य, अर्थे मोक्षादिपुरुषार्थनिमित्तं, नारायणः दीव्यते स्तूयतेऽसौ देवः किञ्चित्प्रयोजनमुद्दिश्योत्तमाधिकारिणा स्तुत्यो न भवतीत्यर्थः । किन्तु सर्वमन्यत् मोक्षादिकमपि तदर्थकं सः नारायणः अर्थः प्रयोजनं यस्येति तदर्थकम् । तदुक्तम्- 'मोक्षं सारूप्यसालोक्यं प्रार्थये न धराधर' इत्यादि । यद्यपि नारायणस्य स्वरूपेण सिद्धत्वान्न साध्यत्वरूपप्रयोजनत्वं सम्भवति ।। तथाऽप्येतत्प्रमाणबलादेव गम्यमानं साध्यत्वं, विशिष्टसाक्षात्कारविषयतया वा प्रसादविशिष्टतया वा पर्यवस्यति । यथा 'व्रीहीन् प्रोक्षति' 'स्रुवः सम्मार्ष्टि' इत्यादौ व्रीह्यादिस्वरूपस्य सिद्धत्वेऽपि द्वितीयाश्रवणेन गम्यमानं साध्यत्वम् अलौकिकातिशयविशिष्टत्वेन पर्यवस्यति । तथैवात्रापीति भावः । चिच्चेत्ययन्तेत्यत्र चिच्चेत्ये यन्तेति द्वितीयान्तस्य तृन्नन्तेन समासः । न षष्ठ्यन्तस्य । 'न लोकाव्यय'१ इति षष्ठीनिषेधात् ।

सर्वत्राखिलसच्छक्तिः..

**अनुमानस्येश्वरे प्रामाण्यसमर्थनम्**

तत्तत्समानाधिकरणतयेत्यर्थः । एतच्च व्याख्यानं 'संसर्गारोपः संशयः' इति पक्षे । 'तादात्म्यारोपः संशयः' इति पक्षे तु स्थाणुपुरुषादिरूपा ये विशेषास्तत्संसृष्टतयेति ज्ञेयम् । एवञ्च प्रागनुभूतस्थाण्वादीत्यत्रापि संशयस्य संसर्गारोपरूपत्वे स्थाण्वादिशब्दो भावप्रधानः, तादात्म्यारोपरूपत्वे तु भवितृप्रधान इति ज्ञेयम् । प्रयोजनानुसन्धान इत्यादि क्वाचित्काभिप्रायम् । तदलाभे अन्यतरकोटिनिश्चायकप्रमाणालाभे सति । ननु विकल्पशब्दस्य संशयार्थत्वे साध्याविशिष्टतेत्याशङ्क्य तं तद्धेतुभूतभेदविशेषपरतया व्याचष्टे- इति विकल्पप्रभेद इति ।। विशेषेण अनिर्वचनीयत्वादिधर्मवत्तया कल्प्यते बुद्ध्यते इति विकल्पो भेदविशेषः । स एव प्रभेद इत्यर्थः । विकल्पः प्रभेद इति पाठे तु विकल्पशब्दस्यैव व्याख्या प्रभेद इति । प्रभेदो भेदविशेषः अनिर्वचनीयत्वाद्यालिङ्गित इत्यर्थः । येनेति ।। भेदत्वस्या-निर्वचनीयत्वाद्यनेककोटिसहचरितत्वेनाननुभूतत्वादिति भावः । विकल्पनभेदायोगरूपहेतुसाधनाय तत्साधकहेतूक्त्यनुगुणां शङ्कां दर्शयति- अथ कथमिति ।।

### श्रीवेदेशतीर्थ

एवं प्रकृतेऽपि पारमार्थिकानिर्वचनीयभेदरूपविशेषसम्बन्धितयाऽनुभूतेन भेदत्वरूप-साधारणधर्मेणालिङ्गितस्य भेदस्य विमतो भिन्न इत्युक्त्या अवभासेऽनिर्वचनीयादिकोटिस्मरणे सति संशयो वाच्यः । स चायुक्त इत्याह- न च भेद इति ।।

### द्वैतद्युमणि

संशयो हीति ।। पूर्वं वक्ष्यमाणरीत्या संशयसामग्रीत्वेन क्लृप्तस्य सङ्ख्याविशेषस्मृत्यादेः कारणकलापस्य सत्त्वात् संशयो 'देवदत्त कियन्तः' इति प्रश्नपूर्वं युक्तिसिद्ध इति प्रतिपादितम् । अधुना प्रकृते संशयसामग््रया भ्रमाघटिताया अयोगकथनाय सार्वत्रिकसंशयसामग्री निरूप्यतेऽतो न पौनरुक्त्यम् । प्रभेदः भेदत्वन्यूनवृत्तिधर्मः ।

### श्रीराघवेन्द्रतीर्थ

सप्तम्यर्थमाह-भेदविषय इति ।। कारणेति । सन्देहरूपकारणाभावे प्रश्नरूपकार्यमित्यर्थः । संशयो हीत्यस्य जायत १इत्यग्रेतनेनान्वयः । मूलवाक्यार्थमाह- न च भेद इत्यादि ।।

### गोविन्दीया

अतिप्रसङ्गादिति ।। सर्वत्राप्यकारणकार्योत्पत्तिः स्यादित्यर्थः । प्रभेद इति ।। कोटिद्वयस्य प्रसिद्धत्वे भेद इत्यर्थः । कोटिद्वयसिद्धौ संशयः । तत्सत्त्वे प्रश्न इति भावः ।

### जनार्दनभट्टीया

कुतो न युज्यत इति ।। सन्देह इति शेषः । सन्देहखण्डनपरतया द्वितीययोजनायाः प्रकृतासङ्गतत्वं परिहरति- प्रश्नो हीति ।। शिष्यकृत इत्यर्थः । अधिकरणे सप्तमीत्वप्रतीतिं निरस्यति– भेदविषय इति ।। एवंविध इति ।। अनिर्वचनीयत्वादिप्रकारक इत्यर्थः । अनुसरत इति ।। गवेषयत इत्यर्थः ।

## अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेव ..

**भेदे सर्वत्र चानिर्वचनीयत्वादिप्रभेदाभावेन पूर्वोक्तसंशयायोगसमर्थनम्**

श्रीमज्जयतीर्थटीका

अथ कथमनिर्वचनीयत्वपारमार्थिकत्वप्रभेदो भेदे न युज्यत इत्यत आह-

मूल

***अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेव ।***

अनिर्वचनीयस्य भेदस्येति शेषः । एवकारोऽनिर्वचनीयस्येत्यनेन सम्बध्यते । उपलक्षणं चैतत् । पारमार्थिकोऽपि भेदो न परस्य सिद्ध इत्यपि द्रष्टव्यम् । ननु नायमस्ति नियमः २यत्सन्देह-विषयजातीयमेवाऽरोप्यमाणकोटिसम्बन्धितया प्रतिपत्तव्यमिति । आरोप्यमाणकोटिप्रतिपत्ति-मात्रेणापि सन्देहदर्शनादिति चेत् सत्यम् । तथापि नायं सन्देहो युज्यते । आरोप्य-माणानिर्वचनीयस्य कुत्राप्यप्रतीतत्वात् । एतदप्युक्तं अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेवेति ।

शशविषाणं गोविषाणं वोच्यत इतिवत् ..

**पूर्वोक्तप्रश्नायोगे दृष्टान्तकथनम्**

श्रीमज्जयतीर्थटीका

अत्र दृष्टान्तमाह-

मूल

***शशविषाणं गोविषाणं वोच्यत इतिवत् ।***

यथा केनापि ‘तत्र विषाणमस्ति’ इत्युक्ते किं भवता विषाणपदेन शशविषाणमुच्यते किं वा गोविषाणमिति न युज्यते प्रश्नः । शशविषाणस्यैवाप्रसिद्धत्वेन विषाणत्वस्य तत्सम्बन्धितया अनुपलब्धस्य विषाणपदात् प्रतिभासे सत्यपि तदनुस्मरणहेतुत्वानुपपत्त्या जिज्ञासोदयाभावेनैवं-विधसंशयायोगात् । तथा प्रकृतेऽपि ।

श्रीविजयीन्द्रभिक्षु

ननु भेदान्यानिर्वचनीयस्याप्रसिद्धत्वं भेदानिर्वचनीयत्वपारमार्थिकत्वप्रभेदायोगे न हेतुर्भवितुमर्हति । वैयधिकरण्यादित्यत आह- भेदस्येति शेष इति ।। आरोप्यकोटिसम्बन्धितया संशयधर्मिजातीयनिष्ठस्यैव धर्मस्य तत्कोट्युपस्थितिजननद्वारा संशयहेतुत्वादिति भावः । अनिर्वचनीयभेदस्याप्रसिद्धिर्वादिरीत्येति ज्ञेयम् । अप्रसिद्धत्वादेवेत्येवकारस्य हेतुशरीरप्रवेशे आधिक्यात् तत्सार्थक्याय भिन्नक्रमेण योजयति- एवकार इति ।। ननु भेदः किमनिर्वचनीय उत पारमार्थिक इति विकल्पप्रभेदायोगे अनिर्वचनीयभेदमात्राप्रसिद्धेः हेतुत्वोक्तिरयुक्तेत्यत आह- उपलक्षणं चेति१ ।। यद्यप्युक्तप्रभेदायोगोऽनिर्वचनीयभेदरूपैककोटिमात्राप्रसिद्ध्याऽपि साधयितुं शक्य इत्युपलक्षणमित्यधिकं तथाऽपि वादिरीत्या अनिर्वचनीयभेदवत् प्रतिवादिरीत्या पारमार्थिक-भेदोऽप्यप्रसिद्धः सम्भवतीत्युभयथा अप्रसिद्ध्या विकल्पप्रभेदायोगसाधनं सुशकमिति ज्ञापनायोप-लक्षणपरतया व्याख्यानमिदमिति द्रष्टव्यम् ।

ननु कोटिज्ञानं कोटिज्ञानत्वेनैव हेतुः । लाघवात् । न तु संशयधर्मितावच्छेदकधर्मसदृश-धर्मावच्छिन्नधर्म्यन्तरसम्बद्धकोटिज्ञानत्वेन । गौरवात् । तादृशधर्मावच्छिन्नधर्म्यन्तरसम्बद्धतया कोटिज्ञानेऽपि

संशयादर्शनाच्च । तथा चानिर्वचनीयत्वपारमार्थिकत्वकोट्योरपि भेदरूपधर्मिणा सह धर्म्यन्तरसम्बन्धितया प्रसिद्ध्यभावेऽपि क्वचित्प्रसिद्धिमात्रेण संशयो युज्यत इत्यभिप्रेत्य शङ्कते- ननु नायमस्ति नियम इति ।। आरोप्यमाणकोटिसम्बन्धितयेति ।। आरोप्यमाणकोटिसदृश-धर्मसहचारितया२ इत्यर्थः । उक्तरीत्या कोटिज्ञानमात्रं संशयहेतुरङ्गीक्रियत एव । तथाऽपि प्रकृतसंशयायोगतादवस्थ्यमिति परिहरति- सत्यमिति ।। मूलोक्तमेवेदं दूषणमित्याह- एतदप्युक्तमिति ।। अनिर्वचनीयत्वकोटिप्रसिद्धिरूपसामग्रीबाधप्रयुक्ततत्कोटिसंशयायोगरूप-दूषणमित्यर्थः । ननु शशविषाणं गोविषाणं वोच्यते इत्येतद्दृष्टान्तवचनस्य सर्वत्राप्रसिद्धत्वा-देवेत्यव्यवहितहेतुवाक्येनान्वयायोगेन वैयर्थ्यमित्याशङ्क्याऽह- अत्रेति ।। प्रकृतप्रश्नायोग इत्यर्थः । शशविषाणं गोविषाणं वोच्यते इत्यस्य प्रकृतप्रश्नायोगरूपार्थे दृष्टान्तत्वघटनाय तत्प्रतिपादकं वाक्यमध्याहारपूर्वकं व्याचष्टे- यथा केनापीति ।। दृष्टान्तप्रश्नायोगे हेतुमाह- शशविषाणस्यैवेति ।। तत्सम्बन्धितयेति ।। शशविषाणसम्बन्धितयेत्यर्थः । कोटिसहचरिततया अनुभूतस्यैव साधारण-धर्मतया कोट्यनुस्मृतिहेतुत्वादिति भावः । एवंविधेति ।। 'शशविषाणं गोविषाणं वोच्यते' इत्येवमाकारकसंशयस्येत्यर्थः ।

### श्रीवेदेशतीर्थ

ननु भेदेऽनिर्वचनीयत्वादिप्रभेदाभावोपपादनायानिर्वचनीयवस्तुमात्रस्याप्रसिद्धत्वकथन-मसङ्गतमित्यत आह- अनिर्वचनीयस्य भेदस्येति शेष इति ।। ननु पारमार्थिकस्यानिर्वचनीयस्य च भेदस्याप्रसिद्धत्वेन भेदे पारमार्थिकत्वादिप्रभेदायोगात् सन्देहविषयभेदजातीयाप्रसिद्धौ तस्याऽरोप्य-माणानिर्वचनीयत्वादिकोट्यधिकरणतयाऽनुभवाभावे कोटिस्मरणाभावेन संशयासम्भवेऽपि प्रकारान्तरेण संशयो युज्यत एव । इन्द्रियाणि भौतिकान्युताभौतिकानीति संशयवत् कोटिद्वय-प्रतिपत्तिमात्रेण संशयोपपत्तेः । न चैवं साधारणधर्मासम्भवः । इन्द्रियत्वस्य साधारणधर्मत्वाभावेऽपि भौतिकत्वेनाभौतिकत्वेन वा प्रतिपन्नत्वस्य साधारणधर्मत्ववदत्रापि तादृशस्य फलबलेन कल्पनादित्यभिप्रेत्य शङ्कते- ननु नायमिति ।। यद्वा, नन्वेवं भेदेऽनिर्वचनीयपारमार्थिकत्व-प्रभेदाभावोपपादनेन विमतः सन्देहो न युज्यते सन्देहविषयजातीयाधिकरणतया अनुपलभ्य-मानारोप्यमाणकोटित्वात् शशविषाणं नरविषाणं वेति कोटिद्वयावलम्बिसंशयवदित्यनुमान-मभिप्रेतम् । तदनुपपन्नम् । व्यतिरेकव्याप्तौ व्यभिचारात् । इन्द्रियाणि भौतिकान्यभौतिकानि वेति सन्देहस्याऽरोप्यमाणकोटिप्रतिपत्तिमात्रेणोपपत्तौ सन्देहविषयजातीयाधिकरणतया तज्ज्ञानान-पेक्षणादित्यभिप्रेत्य शङ्कते- ननु नायमिति ।। प्रतिपत्तव्यमिति यद् अयमित्यन्वयः ।। सन्देहविषयेति ।। सन्देहविशेष्येत्यर्थः । कोटिसम्बन्धितया कोट्यधिकरणतयेत्यर्थः । नियमो नास्तीत्युक्त्या स्थाणुपुरुषसन्देहविशेष्यजातीयस्थाण्वादेरारोप्यमाणस्थाणुत्वादिकोट्यधिकरण-तया प्रतिपत्तव्यतामभ्युपैति- आरोप्यमाणानिर्वचनीयस्येति ।। तथा च स्यादेवेन्द्रियेषु भौतिकत्वाभौतिकत्वसन्देहः । भौतिकत्वाभौतिकत्वकोटिप्रतिपत्तेः सद्भावात् । प्रकृतः संशयो न युज्यते । ब्रह्मणः पारमार्थिकत्वेन पारमार्थिकत्वरूपकोटिप्रतिपत्तिसम्भवेऽपि अनिर्वचनीयत्व-कोटिप्रतिपत्तेरभावादित्यर्थः । एतदप्युक्तमिति ।। अस्मिन् पक्षे भेदस्येति शेषः । उपलक्षणत्वं च नास्तीति ज्ञातव्यम् । अनिर्वचनीयस्य वस्तुन इत्यर्थः । अप्यर्थकस्यैवशब्दस्य सर्वत्रेत्यनेन सम्बन्धः । अत एव कुत्रापीत्युक्तमिति ज्ञातव्यम् । अत्र दृष्टान्तमाहेति ।। पूर्वयोजनायां नायं दृष्टान्तः । उभयोरप्यनिवर्चनीयपारमार्थिकभेदयोरप्रसिद्धेरुपपादितत्वात् । तत्र च शशविषाणं नरविषाणं वोच्यत इतिवदिति निदर्शनीयमिति भावः ।

### द्वैतद्युमणि

नन्विति ।। सजातीयमिति ।। सन्देहविशेष्यतावच्छेदकघटकधर्मवत्त्वेन सजातीयमित्यर्थः । प्रकृते 'अयं भेदः पारमार्थिको न वा' इति संशये इदन्त्वविशिष्टभेदत्वरूपप्रकृतसंशय-विशेष्यतावच्छेदकघटकभेदत्वस्य साधारणधर्मताखण्डनार्थं सिद्धान्तिनः प्रवृत्ततया तदुपयुक्त-शङ्कासङ्गतिः । आरोप्यमाणकोटिप्रतिपत्तिमात्रेणेति ।। वस्तुत्वादिसाधारणधर्मान्तरेण विप्रतिपत्त्या चेत्यर्थः । तथा च वस्तुत्वादिसाधारणधर्मेण विप्रतिपत्त्या वा प्रकृतसन्देहो भ्रान्तिं विना भवतीति भावः ।

नायं सन्देह इति ।। ऊर्ध्वत्वादिसाधारणधर्माधीनस्थाणुत्वादिसंशयात् विप्रतिपत्त्यधीनात् इन्द्रियाणि भौतिकानि न वेति संशयाच्चास्य वैलक्षण्यं सूचितम् ।

### श्रीराघवेन्द्रतीर्थ

यथाश्रुते योजनान्तरं वक्तुमाह- एवकार इत्यादि ।। तथा च लब्धमर्थमनुवदन्नेव शङ्कते- नन्विति ।। अयमित्युक्तं व्यनक्ति- यदित्यादि ।। सन्देहविषयो भेदः । तज्जातीयो भेदान्तरम् । आरोप्यमाणकोटिरनिर्वचनीयत्वादिः । तत्सम्बन्धितयाऽनिर्वचनीयो भेदः पारमार्थिको भेद इति प्रतिपत्तव्यमिति यद् अयं नियमो नास्ति । किं तु अनिर्वचनीयत्वपारमार्थिकत्वप्रतीतिमात्रेण भेदे तदुभयकोटिकसन्देहो युज्यते । न तु भेदसम्बन्धितयाऽन्यत्र प्रतिपत्तव्यमिति शङ्कार्थः । अत्रेति ।। प्रश्नो न युज्यत इत्यत्रेत्यर्थः । सन्देहविषयेति । भेदः किमनिर्वचनीयो वा पारमार्थिको वेति सन्देहे विषयो साध्यभेदधर्मी भेदः तज्जातीयं तत्सदृशं भेदान्तरमेव आरोप्यमाणा या कोटिः अनिर्वचनीयत्वपारमार्थिकत्वरूपा तत्सम्बन्धितया प्रतिपत्तव्यम् । अनिर्वचनीयपारमार्थिकभेदयोरेव प्रसिद्ध्या भाव्यमिति नियमो नास्तीति यावत् । किन्तु आरोप्यमाणानिर्वचनीयत्वपारमार्थिकत्वरूपकोटिप्रसिद्धिमात्रेणैव संशयः सम्भवति । तत्रानिर्वचनीयत्वकोटिः शुक्तिरजते प्रसिद्धा । पारमार्थिकत्वकोटिर्ब्रह्मणि प्रसिद्धेति संशयो युक्त इत्यर्थः । यथा शब्दो नित्योऽनित्यो वेत्यत्र नित्यत्वानित्यत्वकोटिप्रसिद्धिमात्रेणैव संशयो दृष्टः । न तु नित्यानित्यशब्दप्रसिद्धिरपेक्षिता तद्वत् ।

### गोविन्दीया

नन्विति ।। सन्देहविषयस्थाणुत्वपुरुषत्वजातिमत्स्थाण्वादि यद्वस्तु तदेवाऽरोप्यमाण-स्थाणुत्वादिकोट्यधिकरणतया प्रतिपत्तव्यमित्ययं नियमो नास्ति । सर्वत्राधिकरणज्ञानाभावेऽ-पीन्द्रियेषु आरोप्यमाणभौतिकत्वाभौतिकत्वकोटिप्रतिपत्तिमात्रेणापि इन्द्रियाणि भौतिकान्युता-भौतिकानीति सन्देहदर्शनादिति चेदित्यर्थः । अधिकरणस्य सत्त्वादिति भावः । सत्यमिति ।। नियमाभावपक्षाङ्गीकारः । अधिकरणाभावोऽपि आरोप्यमाणकोटिप्रतिपत्तिमात्रेण सन्देह इत्ययं पक्षानङ्गीकार इत्यर्थः । तथापि= इन्द्रिये आरोप्यमाणकोटिप्रतिपत्तिमात्रेण सन्देहसम्भवेऽपि, अयं प्रकृतः सन्देहो न युज्यत इत्यर्थः । आरोप्यमाणेति ।। भेदे आरोप्यमाणानिर्वचनीयत्वस्य कुत्रापि अप्रतीतत्वात् तादृशाधिकरणस्यैव असत्त्वादित्यर्थः । एतदपीति ।। एतच्छङ्कापरिहारोऽपीत्यर्थः । तदनुस्मरणेति ।। तस्य विषाणत्वप्रतिभासस्य शशविषाणस्मरणहेतुत्वानुपपत्त्या पुरोवर्तिवस्तु-जिज्ञासोत्पत्त्यभावेन शशविषाणं वा गोविषाणं वेति संशयायोगादित्यर्थः ।

### नारोपन्तीया

सन्देहविषयजातीयमेवेति । तथा च पारमार्थिकस्यानिर्वचनीयस्य भेदस्याप्रसिद्धत्वेऽपि पारमार्थिकत्वानिर्वचनीयत्वकोटिप्रतीतिमात्रेण संशयो भविष्यतीति भावः ।

### जनार्दनभट्टीया

अभेदे अनिर्वचनीयत्वरूपकोट्यप्रसिद्धिः कथम्? इति शङ्किते तदुत्तरत्वेन प्रवृत्तमूलवाक्ये अनिर्वचनीयत्वरूपधर्म्यप्रसिद्धौ प्रतीतायां (असङ्गतेः) आह – भेदस्येति शेष इति ।। तथा च अनिर्वचनीयस्य भेदस्य अप्रसिद्धेरिति योजिते भेदमात्रस्य उभयमतसिद्धत्वेन अप्रसिद्धविशेषणीभूत- अनिर्वचनीयत्वांशे पर्यवस्यतीति भावः ।

सन्देहविषयजातीयमिति ।। स्थाणुपुरुषसंशये सन्देहविषयः ऊर्ध्वताविशिष्टः पुरोवर्तीति तज्जातीयं पुरुषान्तरम् । आरोप्यमाणकोटिः पुरुषत्वं तत्सम्बन्धितया प्रतिपन्नम् । प्रकृते तु नैतत्सम्भवति । सन्देहविषयो जीवपरमात्मभेदः । तज्जातीये भेदान्तरे अनिर्वचनीयकोटिसम्बन्धितया ज्ञानाभावादिति भावः । अत्र दृष्टान्तमिति ।। 'प्रश्नो न युज्यते', 'संशयो न युज्यते' इत्युभयत्रेत्यर्थः ।

शशविषाणं गोविषाणं वोच्यत इतिवत् ..

**पूर्वोक्तप्रश्नसंशयायोगे अनुमानप्रमाणकथनम्**

***शशविषाणं गोविषाणं वोच्यत इतिवत् ।***

श्रीमज्जयतीर्थटीका

इदमुक्तं भवति । विमतः प्रश्नो न युज्यते । असन्दिग्धविषयत्वात् । शशविषाणं गोविषाणं वोच्यत इति प्रश्नवत् । विमतः संशयो न युज्यते । अनुपलब्धारोप्यमाणकोटित्वात् । उक्त-संशयवदिति ।

शशविषाणं गोविषाणं वोच्यत इतिवत्..

**पूर्वोक्तानुमाने साध्यपरिष्कारः**

***शशविषाणं गोविषाणं वोच्यत इतिवत्***

श्रीमज्जयतीर्थटीका

ननु प्रश्नः संशयो वा न युज्यत इति कोऽर्थः । यदि नोत्पन्न इति तदा प्रत्यक्षबाधः । अथोत्पन्नोऽपि कारणशून्य इति । तदाऽनुमानबाधः । कार्यत्वादेव कारणानुमानात् । अथातत्कारणोत्पन्न इति । तदा व्याघातः । तदुत्पादकस्यैव तत्कारणत्वात् । मैवम् । शशविषाणादिप्रश्नाद्यनुपपत्तेरप्येवं प्रत्याख्यानप्रसङ्गात् । कारणादिविमर्शवतो न शश-विषाणादिप्रश्नाद्युत्पत्तुमर्हतीति तत्रार्थ इति चेत् । तर्ह्यत्रापि कारणविपर्यासादुत्पद्यतां नाम । न पुनः प्रेक्षावतामुत्पद्यत इति प्रतिज्ञार्थोपपत्तेः । ज्ञानजन्येषु कार्येषु कारणविपर्यासादपि भयादाविव जन्मोपपत्तेरिति ।

**न चानिर्वचनीये किञ्चिन्मानम् ..**

**अनिर्वचनीये प्रमाणाभावोक्तिः**

**श्रीमज्जयतीर्थटीका**

कथमनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वमित्यत आह-

**मूल**

***न चानिर्वचनीये किञ्चिन्मानम् ।***

**श्रीविजयीन्द्रभिक्षु**

एतावता प्रबन्धेन प्रकृतप्रश्नतन्मूलसंशययोरयोगे किं प्रमाणमुपन्यस्तमिति शिष्य-जिज्ञासायामाचार्यविवक्षागोचरं तद्दर्शयितुमाह- इदमुक्तं भवतीति ।। विमत इति ।। युक्तत्वा-युक्तत्वकोटिकविमतिविषयीभूत इत्यर्थः । न चात्रानुमानद्वयेऽपि पक्षीकृतप्रश्नसंशययोरसिद्धा-वाश्रयासिद्धिः । सिद्धौ वा अयुक्तत्वव्याघात इति वाच्यम् । वन्ध्यासुतो न वक्ता चेतनत्वादित्यादाविव निषेधसाधने आश्रयासिद्धेरदोषत्वादिति भावः । 'भुजो अनवने' इत्यादि-ज्ञापकाद्धातूनामनेकार्थत्वनिश्चयात्प्रकृते सम्भावितं धात्वर्थमाश्रित्य प्रकृतप्रतिज्ञाहेतू दूषयितुकामः पर आक्षिपति- ननु प्रश्नः संशयो वेति ।। कारणादिविमर्शवत इति ।। इदमेव तस्य कारणं नेदमिति तत्कारणाकारणे व्यावर्तकधर्मवत्तया अन्योन्यभिन्ने इति निश्चयवत इत्यर्थः । तत्रार्थ इति ।। शशविषाणं गोविषाणं बोध्यते१ इति प्रश्नः संशयो वा न युज्यत इत्यत्रेत्यर्थः । कारणविपर्यासा-दिति ।। अकारणे कारणत्वभ्रमादित्यर्थः । प्रेक्षावतामिति ।। तत्तदुपाय एव तत्तदुपायतावच्छेदक-रूपवत्तया निश्चयवतामित्यर्थः । प्रतिज्ञातार्थोपपत्तेरिति ।। विमतः प्रश्नः संशयो वा न युज्यत इति प्रतिज्ञार्थोपपत्तेरित्यर्थः । नन्वतत्कारणे तत्कारणत्वविभ्रममात्रान्न तत्कार्योपपत्तिः । अन्यथा गुञ्जापुञ्जादौ वह्नित्वादिभ्रमात्तदुपादाने प्रवृत्तस्य दाहादिकार्यप्रसङ्ग इत्यत आह - ज्ञानकार्ये-ष्विति ।। दाहादिलक्षणकार्येषु तथात्वादर्शनेऽपि ज्ञानरूपासाधारणकारणमात्रजन्येषु प्रश्नसंशय-लक्षणकार्येषु नोत्पत्त्यनुपपत्तिः । रज्ज्वादौ सर्पज्ञानाद् भयकम्पादिकार्योत्पत्तिदर्शनात् । अन्यथा तत्रापि तन्न स्यादिति भावः । ननु विमतः प्रश्नः संशयो वा न युज्यत इति प्रतिज्ञातार्थे हेतुदृष्टान्त-योरुक्तत्वेनानुमानशरीरनिष्पत्तेः न चानिर्वचनीये किञ्चिन्मानम् इत्यग्रिमवाक्यवैयर्थ्यमित्याशङ्क्य तस्यानुपलब्धारोप्यकोटित्वरूपहेत्वसिद्ध्युद्धारार्थत्वेन सार्थक्यं वक्तुं तन्निवर्त्याशङ्कां दर्शयति- कथमिति ।।

### श्रीवेदेशतीर्थ

न च भेदे विकल्पो युज्यत इत्यादिवाक्यत्रयस्य लब्धार्थमाह- इदमुक्तं भवतीति ।। स्वरूपासिद्धिपरिहारायाऽऽह- विमतः संशयो न युज्यत इति ।। कारणविपर्यासादिति । कारणीभूतो विपर्यासः कारणविपर्यासः । विपर्यासरूपात् कारणादित्यर्थः । यथा शश-विषाणमस्तीति भ्रमवतः विषाणमस्तीत्युक्ते किं शशविषाणं गोविषाणं वेति संशयस्तथा अनिर्वचनीयभ्रमवतस्तद्रूपात्कारणादुत्पद्यतां नामेत्यर्थः । ननु ज्ञानजन्ये कार्ये प्रमाया एव जनकत्वात् कथमारोप्यमाणकोटिभ्रमात्संशयोत्पत्तिरित्यत आह- ज्ञानजन्येष्विति ।। न ज्ञानजन्यकार्येषु प्रमाया एव जनकत्वमिति नियमः । तथात्वे सर्पज्ञानजन्यभयादेः सर्प-प्रमामात्रसाध्यत्वापत्त्या तद्भ्रमात्तदुत्पत्तिरनुभवसिद्धा न स्यादिति भावः ।

केचित्तु- कारणविपर्यासादिति ।। अकारणे कारणत्वभ्रमादित्यर्थः । प्रेक्षावतामिति ।। तत्तदुपाय एव तत्तदुपायतावच्छेदकरूपवत्तया निश्चयवतामित्यर्थः । नन्वतत्कारणे तत्कारणत्वभ्रमान्न तत्कार्योत्पत्तिः। अन्यथा गुञ्जापुञ्जादौ वह्नित्वादिभ्रमात्तदुपादाने प्रवृत्तस्य दाहादिप्रसङ्ग इत्यत आह- ज्ञानजन्येष्विति ।। दाहादिलक्षणकार्येषु तथात्वादर्शनेऽपि ज्ञानरूपासाधारणकारण-मात्रजन्येषु प्रश्नसंशयलक्षणकार्येषु नोत्पत्त्यनुपपत्तिः । रज्ज्वादौ सर्पज्ञानाद्भयकम्पादि-कार्योत्पत्तिदर्शनात् । अन्यथा तत्रापि तन्न स्यादित्याहुः ।

तच्चिन्त्यम् । भयादौ न स्वरूपतः सर्पस्य कारणत्वं व्यभिचारात् । किं तु सर्पज्ञानस्यैव । एवं च कारणविपर्यासात्कार्योदय इत्यत्र रज्ज्वादौ सर्पभ्रमस्योदाहरणत्वेनोपादानमयुक्तम् । सर्पस्याकारणत्वेनास्य भ्रमस्याकारणे कारणत्वभ्रमत्वाभावादिति ।

### द्वैतद्युमणि

कारणविपर्यासात् कारणीभूतात् भ्रमादित्यर्थः । यद्वा कारणे साधारणधर्मज्ञाने कोट्यनुभवादौ । विपर्यासात् प्रामाण्यभ्रमादित्यर्थः । निश्चितप्रामाण्यकसाधारणधर्मादि-ज्ञानस्यैवानाहार्यसंशयकारणत्वात् साधारणधर्मदर्शनादौ प्रामाण्यनिश्चयस्यापि संशयप्रयोजकत्व-मिति भावः । ननु कथं भ्रमात् कार्याङ्गीकारः । तथात्वे रजतभ्रमोत्तरप्रवृत्त्यादिना

रजतनिष्पत्तिपूर्वकं कटकादिसिद्धिः स्यादित्यत आह- ज्ञानजन्येष्विति ।। प्रमात्वघटितरूपानवच्छिन्न-ज्ञाननिष्ठकारणताकेष्वित्यर्थः । कारणविपर्यासादिति ।। पूर्ववदर्थद्वयमपि द्रष्टव्यम् ।

### श्रीराघवेन्द्रतीर्थ

दृष्टान्तोक्त्या सूचितमर्थमाह - इदमुक्तं भवतीति ।। हेतोरसिद्धिं निराह - विमतः संशय इति ।। परमुखेन समाधिं वाचयित्वा समं प्रकृत इत्याह- कारणादीति ।। आदिपदेन बाधकग्रहः । प्रेक्षावतां कारणादिविमर्शवताम् । ज्ञानेति ।। ज्ञानजन्येषु१ कारणविपर्यासात् कारण-भ्रमाज्जन्मोपपत्तिः । यथा सर्पभ्रमाद्भयकम्पादिः । तथा कारणभ्रमात्संशयादिरस्त्वित्यर्थः । कारणादिविमर्शवत इति । शशविषाणस्यैवाप्रसिद्धत्वादित्यादिनोक्तरीत्येत्यर्थः ।

### गुरुराजीया

कारणादिविमर्शवत इति ।। प्रेक्षावत इत्यर्थः । अयं भावः । विकल्पः प्रश्नो हि सन्देह-मूलक इत्युपपादितमधस्तात् । सन्देहश्च समानधर्मदर्शनादिना निर्णायकाभावसहकृतेन भवतीति तावदविवादम् । ततश्च समानधर्माद्यभावे निर्णायकसद्भावे वा यः सन्दिग्धे, विकल्पांश्च पृच्छति स नूनमविद्यमानमेव समानधर्मादिकं प्रतिपन्नो न प्रतिपन्नश्च निर्णायकसद्भावमित्यनुमीयत इति । न हि कार्यमकारणं भवितुमर्हति । ननु समानधर्मादिकार्यस्य संशयस्य कथं तदभावेऽपि भ्रमरूपज्ञानमात्रेणोत्पादः स्यादिति चेन्न । सत्यपि समानधर्मादौ तदज्ञानात् संशयानुदयादसत्यपि तस्मिंस्तज्ज्ञानमात्रेण संशयोदयादन्वयव्यतिरेकाभ्यां समानधर्मज्ञानस्यैव तत्कारणत्वावधारणेन समानधर्मादेः संशयकारणत्वाभावात्तस्य च भ्रमप्रमासाधारणत्वात् साधारणधर्मादिप्रमयेव तद्भ्रमेणापि संशयोत्पादस्याविरुद्धत्वादित्याशयेनाऽह - ज्ञानजन्येष्विति ।। ज्ञानत्वावच्छिन्न-कारणताकेष्वित्यर्थः । 'दृश्यते हि सर्पभ्रमादिना भयकम्पादिकार्योत्पादः' इति सुधाया अप्ययमेवाभिप्रायः ।

यत्तु कारणविपर्यासादित्यस्याकारणे कारणत्वभ्रमादित्यर्थमभिधाय 'ननु ज्ञानजन्यकार्ये प्रमाया एव जनकत्वात् कथमारोप्यमाणकोटिभ्रमात् संशयोत्पत्तिः' इत्याशङ्कापरिहारकतया ज्ञानजन्येष्विति वाक्यमवतार्य 'न ज्ञानजन्ये कार्ये प्रमाया एव जनकत्वमिति नियमः । तथात्वे सर्पज्ञानजन्यभयादेः प्रमासाध्यत्वापत्त्या तद्भ्रमात् तदुत्पत्तिरनुभवसिद्धा न स्यात्' इति तात्पर्यमाचक्षते । तत्तु स्वपरदर्शनापरिशीलनमूलकमेवेति स्पष्टमेवेत्ययुक्तत्वादुपेक्ष्यम् ।

### गोविन्दीया

तदेति ।। साक्षिप्रत्यक्षबाध इत्यर्थः । कार्यत्वादिति ।। कार्यत्वादिति हेतुना कारणस्य साधनादित्यर्थः । अथेति ।। उत्पन्नोऽप्यतत्कारणोत्पन्न इत्युक्ते उत्पन्न इत्यनेन तत्कारणत्वोत्पन्न इत्युच्यते । पुनः तत्कारणत्वोत्पन्नो न भवतीत्युच्यमाने स्ववचनव्याघात इत्यर्थः । कारण-विपर्यासादिति ।। कारणीभूतविपर्यासाद् भ्रमज्ञानरूपकारणादित्यर्थः । ज्ञानजन्येष्विति ।। ज्ञानजन्येषु कार्येषु प्रमाया इव भ्रमज्ञानादपि जन्मोपपत्तिः । सर्पप्रमाया इव सर्पभ्रमादपि भयादिजन्मोत्पत्तिदर्शनादित्यर्थः । नतु अर्थजन्यकार्येष्वयं नियमः । तथात्वे अग्नेर्दाहोत्पत्तिरिव अग्निभ्रमविषयगुञ्जापुञ्जादपि दाहः स्यादिति भावः ।

कारणादिविमर्शवत इति । आदिशब्दात् प्रमाणम् । कारणप्रमाणविषयकविचारनिपुणस्य प्रश्नो न सम्भवतीत्यर्थः । अयमाशयः- प्रश्नस्तावत्सन्देहमूलकः । सन्देहश्च कोट्युपस्थितिजन्यः । कोटी चात्र गोश्रृङ्गत्वशशश्रृङ्गत्वे । तत्र द्वितीयकोट्युपस्थित्यर्थं तदनुभवोऽवश्यं वाच्यः । स च तावत्प्रत्यक्षेण न सम्भवति । असन्निकृष्टत्वात् । नापि शुक्तिरजतज्ञानवत्प्रत्यक्षाभासेन तस्यापि रजतज्ञानसापेक्षत्वात् । रजतस्य च देशान्तरे सत्त्वात् । अत एव च

नानुमानावतारोऽपि । तत्प्रतिबद्धलिङ्गाभावात् । अनुमानाभासस्तूक्तन्यायेनैव निरस्तः । अत एव व्युत्पत्त्यधीन-त्वाच्छब्दोऽपि न सम्भवति । तस्माच्छृङ्गित्वं गवादिनिष्ठकारणतानिरूपितकार्यताया एवावच्छेद-कम् । श्रृङ्गशशयोः कार्यकारणभाव एव नास्ति । न च तन्नित्यमेव श्रृङ्गमस्त्विति वाच्यम् । तस्य तत्त्वे प्रमाणाभावात् । श्रृङ्गत्वेन पशुत्वेन कार्यकारणभावं कल्पयित्वाऽतीन्द्रियस्य श्रृङ्गादेरभ्युप-गमेऽतिप्रसङ्गेन बहुविप्लवः प्रसज्येत । इत्यादिविमर्शशून्यस्य शशकर्णादौ दूरस्थत्वादिदोषवशात् प्रत्यक्षाभासेन वा, शशः श्रृङ्गी पशुत्वाद् इत्याद्यनुमानाभासेन वा विप्रलम्भकवाक्येन वा, शशश्रृङ्गमस्तीति ज्ञानवतः कोट्युपस्थितौ संशयप्रश्नादि युज्यत इति भावः ।

तर्ह्यत्रापि कारणविपर्यासादिति । कारणं कोट्युपस्थितिरूपा या प्रमा तस्या विपर्यासः व्यत्यासः अन्यथाभावः । प्रमाणाभास इत्यर्थः । यद्वा संशयकारणकोटिप्रमा, तद्विपर्यासः कोटिभ्रम इत्यर्थः । ननु यदि प्रमाणकार्यं प्रमाणाभासादुत्पद्येत तर्हि वह्न्यादिकार्यदाहाद्यपि वह्न्याभासादुत्पद्येतेत्यत आह - ज्ञानजन्येष्विति । यथा सर्पादिज्ञानत्वेन भयत्वेन कार्यकारणभावो न तु सर्पादिप्रमात्वेन । भ्रमादपि तद्दर्शनात् । एवं संशयत्वेन कोटिज्ञानत्वेनैव कार्यकारणभावो न तु कोटिप्रमात्वेनेति भावः । नन्वेवं खण्डनस्य शब्दो नित्योऽनित्यो वेत्यादिप्रश्नेऽपि सत्त्वात् प्रश्नमात्रोच्छेदः स्यात् । न हि शब्दे नित्यत्वमेव वाऽनित्यत्वमेव वेत्यादिविमर्शवानीदृशं प्रष्टुमर्हति । प्रश्नमात्रस्य विमर्श-विकलकर्तृकत्वात् । अन्यथा प्रश्नोत्थानायोगादिति चेत् । भ्रान्तोऽसि । न हि वयं पक्षविमर्शवतः प्रश्नो न सम्भवतीति वदामः । प्रश्नविषयीभूते धर्मिणि अन्यतरकोट्यनिर्णयस्य प्रश्नहेतुत्वात् । किन्तु यो हि– शब्दो नित्योऽनित्यो वेति पृच्छति स केवलं शब्द एव नित्यत्वानित्यत्वयोः सन्दिग्धे । अन्यत्र गगनघटादौ तु नित्यत्वानित्यत्वप्रमितिमानेव । त्वं तु सर्वत्र भ्रान्त इति परस्यात्यन्त-हृदयशून्यतावेदने प्रघट्टतात्पर्यात् । तदिदमाह- न पुनः प्रेक्षावतामुत्पद्यत इति प्रतिज्ञार्थोपपत्तेरिति ।। विमर्शविकलं त्वां प्रति विमतः प्रश्न न युज्यते । विमतः संशयो न युज्यत इति प्रतिज्ञार्थ उपपन्न इत्यर्थः ।

### जनार्दनभट्टीया

ननु 'अनिर्वचनीयत्वादिविषयः प्रश्नः संशयो वा न युज्यते अनिर्वचनीयत्वस्य अप्रसिद्धत्वात्, शशविषाणं गोविषाणं वोच्यत इतिवत्' इति दृष्टान्तो न युक्तः । प्रकृतसाध्यहेत्वोः तत्र व्याप्त्यग्रहादित्यत आह – इदमुक्तमिति ।। असन्दिग्धेति ।। तथा च 'यत्र असन्दिग्धविषयप्रश्नत्वं तत्र अयुक्तत्वम्' इति सामान्यव्याप्तावेव शशविषाणमित्यस्य दृष्टान्तत्वमतो नासङ्गतिरिति भावः । कारणविपर्यासा-दिति ।। वस्तुविषययथार्थज्ञानं हि कारणम् । तथैवोत्सर्गतो दर्शनात् । तद्विपर्यासात्= तद्विपरीतरूपकारणादित्यर्थः ।

ननु कारणविपर्यासात् कथं कार्यस्य जन्म? तथा सति शुक्तौ रजतारोपात् कटकनूपुराद्यापत्तेरित्यत आह–ज्ञानजन्येष्विति ।। कटकनूपुरादिकं तु रजतादिकार्यमेव न ज्ञानकार्यमिति भावः । भयादाविति ।। रज्जौ सर्पज्ञानात् असर्पविषयादपि भयदर्शनादित्यर्थः । दृष्टानुसारित्वात् कल्पनायाः सर्वत्र कारणविपर्यासात् कार्योत्पत्त्यभावेऽपि ज्ञानजन्यकार्येषु तथास्तु । भयादौ ज्ञानजन्यकार्ये तथा दर्शनादिति भावः ।

### न चानिर्वचनीये किञ्चिन्मानम्..

**प्रमाणाभावे अनिर्वचनीयज्ञानसामान्याभावसमर्थनम्**

***न चानिर्वचनीये किञ्चिन्मानम्..***

### श्रीमज्जयतीर्थटीका

चशब्दो यस्मादित्यर्थे ।

ननु प्रमितिः प्रमाणमपेक्षते न प्रसिद्धिमात्रम् । न च संशयस्य प्रमितिसापेक्षता । १प्रतीति-मात्रेणापि स्मरणोपपत्त्या संशयोपपत्तेः । यथा खलु विप्रलम्भकवाक्याच्छशविषाणसद्भावं मन्यमानस्य विषाणमित्युक्ते भवति सन्देहः । अतोऽनिर्वचनीयप्रसिद्ध्यभावोपपादनाय तत्कारणाभावे वक्तव्ये कथं प्रमितिकारणाभावाभिधानमिति । सत्यम् । प्रतीतिरेव सन्देहोपयोगिनीति वस्तुगतिः । तथापि प्रमाणविषयतयोपक्षिप्ते भेदेऽनिर्वचनीयो वेत्यादि-सन्दिहानेन प्रतिवादिनाऽऽत्मनोऽनिर्वचनीयादिविषया प्रमितिरेव सन्देहकारणतया वक्तव्या । तत्प्रतीतेरप्रमात्वाङ्गीकारे स्वयमेव विलीनं संशयेन । अतः प्रमाणाभावेन प्रमाभावे साधितेऽप्रमायाश्च स्वयमेवानङ्गीकारे प्रतीत्यभाव एव साधितो भवतीति न कश्चिद्दोषः ।

### श्रीविजयीन्द्रभिक्षु

नन्वनिर्वचनीयत्वस्य सर्वत्राप्रसिद्धत्वं कथमिति शङ्कायां मानाभावादिति वक्तव्ये न चानिर्वचनीये किञ्चिन्मानम् इत्युक्तिर्न घटत इत्याशङ्क्य तद्घटनाय चशब्दं हेत्वर्थत्वेन व्याचष्टे- चशब्द इति ।। ननु भेदः किमनिर्वचनीयः पारमार्थिको वेति संशयायोगे अनिर्वचनीय-रूपकोटिप्रसिद्धेरभाव एव हेतुत्वेनोपपादनीयः । न तु तस्याः प्रमाणजन्यत्वाभावः । प्रमितेः प्रमाण-सापेक्षत्वनियमेऽपि संशयस्याप्रमितिरूपस्य भ्रमप्रमासाधारणकोटिप्रतीतिमात्रसाध्यत्वात् । विप्रलम्भकवाक्याच्छशविषाणसद्भावं मन्यमानस्य विशेषादर्शिनो विषाणमस्तीति वाक्यश्रवण-समनन्तरं तत्किं शशविषाणं गोविषाणं वेति संशयदर्शनादिति शङ्कते- ननु प्रमितिरिति ।। प्रतीति-मात्रेणापीति ।। लाघवेन संशयस्य स्मृत्यन्यज्ञानमात्रेणापि संस्कारोद्बोधद्वारा कोटि-स्मरणोपपत्तेरित्यर्थः । तत्कारणेति ।। अनिर्वचनीयप्रसिद्धिकारणाभाव एवोपपादनीय इत्यर्थः । सर्वत्र भ्रमप्रमासाधारणकोटिप्रसिद्धिमात्रेण संशय इत्यस्तु । तथाऽपि प्रमारूपाया अनिर्वचनीय-कोटिप्रसिद्धेः 'भेदः किमनिर्वचनीयः' इत्यादिसन्दिहानेनाङ्गीकार्यत्वात् । अन्यथा तत्र भ्रमत्व-निश्चयस्य तदप्रामाणिकत्वनिश्चयपर्यवसन्नतया विमतो भिन्नो मुक्तत्वादिति प्रमाणविषय-तयोपक्षिप्तभेदधर्मिकानिर्वचनीयत्वादिकोटिकसंशयस्यैवायोगात् प्रमारूपैव कोटिप्रसिद्धिर्वाच्या । सा च प्रमाणाभावेनासाधितैवेति कोटिप्रतीतिमात्राभावान्नोक्तसंशयो युज्यत इत्यभिप्रेत्य परिहरति- सत्यमिति ।। आत्मनः स्वस्य ।

### श्रीवेदेशतीर्थ

यस्मादित्यर्थ इति ।। यस्मान्मानाभावस्तस्मान्नानिर्वचनीयं प्रसिद्धमिति पूर्वेणान्वयः । ननु न प्रमाणाभावेन प्रतीत्यभावः साधयितुं शक्यते । प्रमाणाभावेऽपि प्रतीतिदर्शनेन व्यभिचारादि-त्यभिप्रेत्य शङ्कते- नन्विति ।। ननु प्रमाणभावेनानिर्वचनीयप्रमित्यभाव एव साध्यत इति नोक्तदोष इत्यत आह- न च संशयस्येति ।। संशयाभावोपपादनार्थं ह्यनिर्वचनीयप्रमित्यभावः साध्यः । स चायुक्तः । संशयस्य कोटिप्रतीतिमात्रसापेक्षत्वेन तत्प्रमितिसापेक्षत्वाभावात् । तथा चार्थान्तर-मिति भावः । प्रतीतिमात्रेण कोटिप्रतीतिमात्रेणेत्यर्थः । स्मरणेति ।। कोटिस्मरणेत्यर्थः । मध्यस्थस्य यस्य कस्यचिदनिर्वचनीयादिविषयकज्ञानमात्रेण शशविषाणादिसंशयवत्संशयोपपत्तावपि प्रति-वादिनस्तावत् तज्ज्ञानस्य प्रमात्वनिश्चयो वक्तव्य इति भावेनोक्तम् । प्रतिवादिनाऽऽत्मन इति ।। तत्प्रतीतेरिति ।। अप्रमात्वनिश्चयाङ्गीकार इत्यर्थः । अनिर्वचनीयादिविषयकप्रतीतेरप्रमात्व-निश्चयाङ्गीकारेऽनिर्वचनीयरूपार्थाभावनिश्चयेन तस्य संशय एव न स्यात् । न हि शशविषाण-मस्तीति ज्ञानं भ्रम इति निश्चयवतोऽपि विषाणमस्तीत्युक्ते भवति सन्देह इत्यर्थः ।

### द्वैतद्युमणि

स्वयमेव विलीनं संशयकारणीभूतं ज्ञानजातमिति शेषः । प्रतीतिपदस्यैव विभक्ति-विपरिणामेन सम्बन्धे नपुंसकलिङ्गानुपपत्तेः । संशयमनुत्पाद्य नष्टं स्यादित्यर्थः । न संशयेन स्वफलीभूतसंशयेन नष्टं न स्यादित्यर्थः । स्वयमेव

विलीनं संशयेन इति नञघटितपाठे तु स्वोत्पत्तिप्रतिबन्धकासमवधानेऽपि स्वकारणाभावादेवानुत्पन्नः सन्देह इत्यर्थः । इत्थं च पाठद्वयेऽपि अप्रमात्वग्रहानास्कन्दितस्य वा प्रमात्वेन गृह्यमाणस्य वा कोटिप्रतिपत्त्यादेः संशयकारणत्वेन तदभावात् संशयो न स्यादिति भावः ।

### श्रीराघवेन्द्रतीर्थ

उपक्षिप्त इति ।। प्रतिज्ञात इत्यर्थः । स्वयमेवेति । अन्यापेक्षां विनैव संशयेन विलीनं विलयः प्राप्तः, संशयो गत इति यावत् । कथमित्यत उपसंहारव्याजेन व्यनक्ति - अत इति ।। प्रतीत्यभाव एवेति ।। अनिर्वचनीयस्येति योज्यम् ।

### गुरुराजीया

कोटिप्रतीततामात्रेणेति ।। आरोप्यमाणकोटिप्रतीततामात्रेणेत्यर्थः ।

### गोविन्दीया

न प्रसिद्धिमात्रमिति ।। ज्ञानमात्रमित्यर्थः । अत इति ।। अनिर्वचनीयज्ञानमात्राभावोप-पादनायेत्यर्थः । सत्यमिति ।। अनिर्वचनीयसिद्ध्युत्पादककारणाभावो वक्तव्य इत्यङ्गीकारपक्षे प्रमितकारणाभावाभिधानं कथमित्याक्षेपानङ्गीकार इत्यर्थः । प्रतिवादिनेति ।। यस्य कस्यापि अनिर्वचनीयादिविषयप्रतीतिमात्रस्य सन्देहकारणत्वेऽपि प्रतिवादिना स्वस्य तत्प्रमितिरेव सन्देहकारणतया वक्तव्येत्यर्थः । तत्प्रतीतेरिति ।। अनिर्वचनीयप्रतीतेः भ्रमत्वाङ्गीकारे तदभावनिश्चयेन कोटित्वानुपपत्त्या संशयेन स्वयमेव विलीनम्, संशय एव न स्यादित्यर्थः । अत एव भ्रमत्वं नाङ्गीकार्यमिति भावः । अप्रमायाश्चेति ।। संशयनाशप्रसङ्गात् । अप्रमायाश्च स्वयमेवानङ्गीकारे प्रमाऽप्रमाविषयत्वाभावाद् अनिर्वचनीयप्रतीत्यभाव एव साधितो भवतीति न कश्चिद्दोष इत्यर्थः ।

### जनार्दनभट्टीया

चशब्दो यस्मादित्यर्थ इति ।। 'यस्मादनिर्वचनीये न किञ्चिन्मानं तस्मात् न च भेदे विकल्पो युज्यते' इति योजना सूचिता भवति । कोटिप्रतीतिमात्रस्यैव संशयकारणत्वात् तस्याश्च प्रमाणेन विनाप्युपपत्तेः 'न चानिर्वचनीयम्' इति मूले प्रमितकारणाभावाभिधानमसङ्गतमित्याशयेन शङ्कते – नन्विति ।। न प्रसिद्धिमात्रमिति ।। न प्रतीतिमात्रमित्यर्थः । प्रमाणमपेक्षत इति भ्राम्यतः शङ्कां निराकरोति – न चेत्यादिना ।। प्रमितिसापेक्षता ।। स्वहेतुभूतकोटिस्मरणकारण-संस्कारोत्पादनार्थमिति शेषः । प्रतीतिमात्रेणापीति ।। अयथार्थकोटिस्मरणेनापीति भावः । विप्रलम्भकवाक्यादिति ।। 'शशविषाणमस्तीत्येवंरूपात्' इति शेषः । भवति सन्देह इति ।। 'शशविषाणं गोविषाणं वा' इति शेषः । उपसंहारव्याजेन प्रमितिकारणाभावाभिधानस्य असङ्गतिं दृढयति – अत इति ।। कोटिप्रमितेरेव संशयहेतुत्वमिति नियमाभावादित्यर्थः । तत्कारणाभाव इति ।। अनिर्वचनीयप्रतीतिकारणाभाव इत्यर्थः । अनिर्वचनीयप्रतीतिकारणाभावाभिधानं च न सम्भवति । शुक्तिरजतादि अनिर्वचनीयम् इति मायावादिसमयश्रवणस्यैव तद्धेतुत्वादिति भावः । प्रमितिकारणाभावाभिधानमिति ।। 'किञ्चिन्मानम्' इति मूले, 'मीयते अनेन' इति करणव्युत्पत्या मानशब्दस्य कारणसाधनत्वादिति भावः । प्रतिवादिनेति ।। प्रतिवादिनां मायिनां मतमवलम्ब्य वादे प्रवर्तमानेन शिष्येणेत्यर्थः । 'ग्रन्थोऽयं वादप्रक्रियया प्रवर्तते । शिष्यानुकम्पया प्रवर्तमानात्' इति प्रागुक्तेः । प्रमितिरेवेति ।। प्रमितित्वेन निश्चितैवेत्यर्थः । विपक्षे बाधकमाह– तत्प्रतीतेरिति ।। अनिर्वचनीयत्वरूपकोटिप्रतीतेरित्यर्थः । अप्रमात्वाङ्गीकारे= अप्रमात्वेन निश्चयाङ्गीकार इत्यर्थः । अप्रमितित्वेन निश्चितायाः कोटिस्मृतेः प्रमितिविषयतयोपक्षिप्ते भेदे अनिर्वचनीयत्वकोटि-संशयजनकत्वानुपपत्तेरिति भावः । शशविषाणमस्तीति विप्रलम्भकवाक्यात् शशविषाणसद्भावं मन्यमानस्य पुंसः पुरुषान्तरेण विषाणमस्तीत्युक्ते तच्छ्रवणानन्तरं पूर्वोत्पन्नयथार्थशश-विषाणत्वरूपकोटिस्मृत्या शशविषाणं गोविषाणं वेति संशयदर्शनात् इत्थं व्याख्यात-

मस्माभिरित्यवगन्तव्यम् । तत्र धर्मिणः प्रमाणविषयतया उपक्षिप्तत्वाभावात् । स्वयमेवेति ।। अनिर्वचनीयत्वरूपकोटिस्मृतेर्भेदरूपधर्मिग्राहकप्रमाणेन कुण्ठितशक्तित्वेन संशयजनने विमुखत्वादिति भावः । मूले प्रमितिकारणाभावाभिधानस्य असङ्गतिं परिहरति – अत इति ।। अनिर्वचनीयादि-विषयप्रमितेरेव संशयकारणतया वक्तव्यत्वादित्यर्थः । प्रतीत्यभाव एवेति ।। भ्रमप्रमातिरिक्त-प्रतीतेरभावादित्यर्थः । कश्चिदिति ।। असङ्गत्यादिरूप इत्यर्थः ।

## न चानिर्वचनीये किञ्चिन्मानम्..

**अनिर्वचनीयस्य प्रत्यक्षसिद्धत्वशङ्का, मिथ्याशब्दवाच्यत्वशङ्का च**

*न चानिर्वचनीये किञ्चिन्मानम्..*

### श्रीमज्जयतीर्थटीका

कथमनिर्वचनीयार्थे प्रमाणाभावः । यावता प्रत्यक्षं शुक्तिरजतादेरनिर्वचनीयता-मावेदयदस्ति । बाधकज्ञानसमनन्तरं मिथ्यैव रजतं प्रत्यभादित्यनुवादात् । यावदुक्तं भवत्य-निर्वचनीयमिति तावदुक्तं मिथ्येति । न चाप्रतीतमाप्तेनानूद्यते । न च बाधकप्रत्ययो भ्रान्तिः । नापि लिङ्गादिजन्य इति ।

## मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च ..

**पूर्वोक्तशङ्काद्वयनिरासः**

### श्रीमज्जयतीर्थटीका

अत्रेदं वक्तव्यम् । किं मिथ्याशब्दोऽनिर्वचनीयस्य वाचक इति कृत्वा भ्रान्त्युत्थितस्य तत्प्रयोगदर्शनादनिर्वचनीयविषयः प्रत्ययोऽनुमीयते । उतावाचकेनापि तेन भ्रान्त्युत्थितोऽ-निर्वचनीयं व्यवहरतीति कृत्वा । आद्यं निराकरोति-

## मूल

***मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च ।***

न किञ्चिन्मानमित्यस्यानुकर्षणार्थश्चकारः ।

## मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च..

**मिथ्याशब्दस्यासद्वाचित्वसमर्थनम्**

*मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च..*

### श्रीमज्जयतीर्थटीका

ननु व्याकरणाभिधानादिप्रमाणाभावाद्वादिसमयमात्रस्यातिप्रसङ्गेनानिश्चायकत्वादनिर्वच-नीयस्य यदि न मिथ्याशब्दो वाचकस्तर्हि तद्वाच्यं वाच्यम् । सत्यम् । असदिति ब्रूमः । एवं तर्हि निरर्थक इति प्राप्तम् । न ह्यसदस्तीति सम्भवति । व्याघातात् । निरर्थकत्वे च पदत्वव्याघात इति चेन्मैवम् । अत्यन्ताभावप्रतियोगित्वलक्षणस्यासत्त्वस्य विद्यमानत्वात् । न

हि मिथ्येत्यस्य शशविषाणादिकमर्थः । तथा सति शशविषाणं मिथ्येति न स्यात् । किन्नाम तन्नास्तीति । तथा च मिथ्यैव रजतमित्यस्य नास्ति रजतं रजतात्यन्ताभावोऽ स्तीत्यर्थः । स्वयमसतः कथं प्रतियोगित्वमिति चेत् । किमिह कथम् । न हि प्रतियोगित्वं रूपादिवद्धर्मिसत्तासापेक्षम् । अभाव-ज्ञानोपयोगिज्ञानविषयतामात्रस्य प्रतियोगित्वात् । असतोऽपि प्रतीतिमुपपादयिष्यामः ।

### श्रीविजयीन्द्रभिक्षु

नन्वनिर्वचनीये प्रमाणाभावं प्रतिज्ञाय तदुपपादनमेव कर्तुमुचितम् । न तु मिथ्या-शब्दस्यानिर्वचनीयवाचकत्वनिराकरणम् । अनुपयोगादित्याशङ्क्य तस्य प्रकृतोपयोगं दर्शयितुं तदनुगुणां शङ्कामुत्थापयति- कथमनिर्वचनीयार्थे प्रमाणाभाव इति ।। ननु शुक्ताविदं रजतमित्यादिप्रत्यक्षं स्वविषयस्य शुक्तिरजतादेः नानिर्वचनीयत्वं गोचरयतीत्यत आह- बाधक-ज्ञानसमनन्तरमिति ।। ननु बाधकप्रत्ययानन्तरं मिथ्यैव रजतमित्यनुवादो न त्वनिर्वचनीयं रजतमितीति चेत्तत्राऽह- यावदुक्तमिति ।। नन्वयमनुवादः शुकबालाद्यनुवादवदस्त्वित्यत आह- न चाप्रतीतमिति ।। प्रकृतवाक्यार्थगोचरयथार्थज्ञानवत एवाऽप्तत्वादिति भावः । नन्वयमनुवादो भ्रममूल एवास्त्वित्यत आह- न चेति ।। बाधकाभावादिति भावः ।

नन्वनुवादहेतुभूतो बाधकप्रत्ययो लिङ्गादिजन्यः किं न स्यादित्यत आह- नापीति ।। लिङ्गशब्दाद्यनुसन्धानाभावेऽपि नेदं रजतमिति बाधकप्रत्ययोदयाच्चक्षुरन्वयव्यतिरेकानुविधानाच्चेति भावः । यद्यपि नेदं रजतं, नात्र रजतमित्यादिबाधकप्रत्ययस्याभावविषयतया अनुपलब्धित्वमेव वक्तुमुचितं न प्रत्यक्षत्वं तथाऽपि आरोपिताभावस्य परेण शुक्त्यधिष्ठानरूपत्वोपगमात् तत्प्रत्यक्षत्वोक्तिरिति ध्येयम् । पररीत्या परो बोधनीय इति न्यायेन वा तत्प्रत्यक्षत्वोक्तिरित्यत आहः१- भ्रान्त्युत्थितस्येति ।। विशेषदर्शनेन भ्रान्तित्वनिश्चयवत इत्यर्थः । तत्प्रयोगेति ।। मिथ्याशब्दप्रयोगेत्यर्थः । अनुमीयत इति ।। भ्रान्त्युत्थितोऽनिर्वचनीयविषयकप्रत्यक्षवान् तदा तद्वाचकशब्दप्रयोक्तृत्वात् । यथा सम्प्रतिपन्न इत्यनुमीयत इत्यर्थः । ननु मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च इत्यस्य साकाङ्क्षत्वाद्योग्यार्थसमर्पकपदान्तराध्याहारं विना विवक्षितवाक्यार्थालाभ इत्यत आह- न किञ्चिन्मानमित्यस्येति ।। व्याकरणाभिधानादीत्यादिशब्देनाऽप्तवाक्यादिपरिग्रहः । वादिसमयमात्रस्येति ।। वादिपरिभाषामात्रस्यातिप्रसङ्गेनानिर्वचनीयवाचकत्वानिश्चायकत्वादि-त्यर्थः । तद्वाच्यमिति ।। मिथ्याशब्दवाच्यमित्यर्थः । असदिति ब्रूम इति ।। तद्वाच्यमित्यनुषङ्गः । यद्यपि मिथ्याशब्दवाच्यानुक्तावपि परमतदूषणं सिद्ध्यति तथाऽपि वस्तुगतिमभि-प्रेत्यासतस्तद्वाच्यत्वोक्तिरियमिति ध्येयम् । मिथ्याशब्दस्यात्यन्तासदर्थकत्वे बाधकं शङ्कते- एवं तर्हीति ।। नैरर्थक्यपरिहारायासतः सत्त्वाङ्गीकारे बाधकमाह- न हीति ।। व्याहतत्वादिति ।। त्रिकालसर्वदेशीयनिषेधप्रतियोगिनोऽसतः कालसम्बन्धित्वरूपसत्त्वस्य व्याहतत्वादित्यर्थः । नैरर्थक्याङ्गीकारे को दोष इत्यत आह- निरर्थकत्वे चेति ।। अर्थवत एव 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'१ इति प्रातिपदिकसञ्ज्ञायां स्वाद्युत्पत्तौ 'सुप्तिङन्तं पदम्'२ इति पदत्वं सिद्ध्येत् । निरर्थकत्वे च तन्न सिद्ध्येदिति भावः । एतच्चोपलक्षणम् । मिथ्येति शब्दो मिथ्याशब्द इति मिथ्याशब्दशब्दशब्दयोर्मध्यमपदलोपी समासश्च न स्यात् । सुप्सुपेति समासशास्त्रप्रवृत्तौ निमित्तस्य सुबन्तत्वस्याभावादित्यपि द्रष्टव्यम् । एतेन 'कृत्तद्धितसमासाश्च'३ इति समासत्वप्रयुक्तप्राति-पदिकसञ्ज्ञायां स्वाद्युत्पत्तौ पदत्वसिद्धिरित्यपास्तम् । अत्यन्ताभावप्रतियोगित्वलक्षणस्येति ।। अतीतानागतादिशब्दानां ध्वंसप्रतियोगित्वप्रागभावप्रतियोगित्वादिविद्यमानार्थवत्त्ववत्४ मिथ्या-शब्दस्यापि अत्यन्ताभावप्रतियोगित्वरूपविद्यमानार्थेनार्थवत्त्वोपपत्तेरिति भावः । तथा सतीति ।। न हि तुल्यार्थकत्वे सहप्रयोगो दृष्ट इति भावः । तन्नास्तीति ।। शशविषाणं कालत्रयेऽपि नास्तीत्यर्थ इत्यर्थः । एतदेव दर्शयति- तथा चेति ।। स्वयमसत इति ।। अत्यन्तासत इत्यर्थः । प्रागभावादि-प्रतियोगित्वाश्रयस्यास्त्येव कदाचिद्विद्यमानत्वमिति भावः । रूपादिवदिति ।। वैधर्म्यदृष्टान्तः । कदाचिद्धर्मिसत्त्वस्य कालान्तरे धर्मवत्त्वाप्रयोजकत्वादिति भावः । अभावज्ञानोपयोगीति ।।

अभावत्वप्रकारकाभावज्ञानजनकज्ञानविषयतामात्रस्य प्रतियोगित्वरूपत्वादित्यर्थः । ननु शुक्ति-रूप्यादेरत्यन्तासत्त्वे इन्द्रियसम्प्रयोगादिसामग्र्यसम्भवेन कथं शुक्ताविदं रजतमिति प्रत्यक्षोदयः । कथं वा शुक्तिरूप्यादेरभावज्ञानोपयोगिज्ञानविषयत्वरूपं प्रतियोगित्वमित्यत आह- असतोऽपीति ।।

### श्रीवेदेशतीर्थ

नन्विदं नीलमितिवदिदमनिर्वचनीयमिति प्रत्यक्षाभावात्कथं प्रत्यक्षस्य प्रमाणीकरण-मित्यत आह- बाधकेति ।। ननु मिथ्यैव रजतं प्रत्यभादित्यनुवादेन रजतमिथ्यात्वे प्रत्यक्षं प्रमाणं भवतु । तदनिर्वचनीयत्वे किमायातमित्यत आह- यावदुक्तं भवत्यनिर्वचनीयमितीति ।। ननु रजते मिथ्यात्वप्रतीत्यभावेऽपि मिथ्यैव रजतं प्रत्यभादित्यनुवादः सम्भवति । घटज्ञानाभावेऽपि घटोऽ-स्तीति शुकबालादिभिरनुवादात् । अतः कथमनुवादबलेन प्रत्यक्षकल्पनमित्यत आह- न चाप्रतीतमाप्तेनानूद्यत इति ।। ननु बाधकप्रत्ययस्य भ्रमत्वेऽप्यनुवादसम्भवात् कथं तन्मूलव्यवहारेण १प्रत्यक्षकल्पनमित्यत आह - न च बाधकप्रत्यय इति ।। अन्यथाविज्ञातस्य सम्यग्विज्ञानस्यैव बाधकप्रत्ययत्वादिति भावः । ननु बाधकप्रत्ययस्य प्रमात्वेऽपि तस्य लिङ्गादिजन्यत्वेनाप्यनु-वादोपपत्त्या कथं तेन प्रत्यक्षकल्पनमित्यत आह- नापि लिङ्गादिजन्य इति ।। लिङ्ग-शब्दाद्यनुसन्धानाभावेऽपि जायमानत्वादिन्द्रियान्वयव्यतिरेकानुविधायित्वाच्चेति भावः । भ्रान्त्युत्थितस्येति ।। भ्रान्तित्वनिश्चयवत इत्यर्थः । अनुमीयत इति ।। भ्रान्त्युत्थितोऽनिर्वचनीय-विषयप्रत्यक्षवान् । तदा तद्वाचकशब्दप्रयोक्तृत्वात् । सम्प्रतिपन्नवदित्यनुमीयत इत्यर्थः । निरर्थ-कत्वे चेति ।। 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'२ इति प्रातिपदिकसञ्ज्ञायां 'सुप्तिङन्तं पदम्'३ इति पदत्वं सिद्ध्येत् । निरर्थकत्वे च तन्न सिद्ध्येदिति भावः । तथा सतीति ।। पौनरुक्त्या-पातादित्यर्थः । नास्ति रजतमिति प्रतियोगिप्राधान्येन मिथ्याशब्दार्थमभिधायाभावप्राधान्येनापि तदर्थमाह- रजतात्यन्ताभावोऽस्तीति ।। किमिह कथं का कथन्तेत्यर्थः । धर्म्यभावे कथं धर्म इत्यत आह- न हीति ।। रूपादिकं यथा धर्मिसत्तासापेक्षं न तथा प्रतियोगित्वम् । प्रागभावादिदशा-यामसतोऽपि घटादेस्तत्प्रतियोगित्वदर्शनात् । कालान्तरे सत्त्वस्य चेदानीमनुपयोगादिति भावः । अभावज्ञानेति ।। नन्वभावज्ञानोपयोगिज्ञानविषयत्वमधिकरणस्याप्यस्ति । अतः कथं तत् प्रतियोगित्वमिति चेन्न । तज्ज्ञानहेतुभूतज्ञानविषयत्वविशेषस्यैव प्रतियोगित्वरूपत्वादिति भावः । नन्वभावज्ञानोपयोगिज्ञानविषयत्वरूपप्रतियोगित्वं कथमसति सम्भवति । असतः प्रतीतेरभावा-दित्यत आह- असतोऽपीति ।।

### द्वैतद्युमणि

यावतेति ।। यस्मादित्यर्थः । यावदुक्तं भवतीति ।। अनिर्वचनीयमिति पदेन यादृश-विशिष्टस्वरूपं अस्मदभिमतं बोध्यते तदेव मिथ्यापदेन बोध्यते । तथैव लोकानुभवादित्यभिमानः ।

ननु अग्निर्माणवक इति वाक्यप्रयोक्तरि तद्वाक्येन यथाश्रुतेन जायमानबोधसमानविषयक-ज्ञानस्यादर्शनात् प्रकृते तादृशवाक्यप्रयोगमात्रेण तस्य तज्ज्ञानं कथं कल्प्यत इत्यत आह- न चाप्रतीतमिति ।। अनूद्यते स्वकीयप्रतिपत्तिविषयतया प्रतिपाद्यते । आप्तेन यथार्थवक्त्रा । अयं भावः । यदि रजतं मिथ्येत्येव शब्दस्तेन प्रयुज्येत तदा तथा ज्ञानरहितोऽपि व्यपदेशमात्रं करोतीति वक्तुं शक्यते । न चैवम् । किन्तु रजतं मम मिथ्यैवाभादिति मिथ्यात्वविशिष्टरजतविषयिणीं स्वप्रतीतिमेव शब्देन बोधयति । वाक्यप्रयोगकारणीभूतं च ज्ञानं बाधकप्रत्ययविषयकानुव्यवसायो वा गुरुमतवद् बाधकज्ञानमेव वा रजतं मिथ्या जानामीत्याकारम् । नोभयथाऽपि काचित् क्षतिरिति ।

ननु प्रत्यक्षप्रमाणोपन्यासप्रस्तावे एतत् कथनमयुक्तम् । अस्य शुक्तित्वादिरूपलिङ्ग-वाक्यादिजन्यत्वादित्यत आह- नापीति ।। लोके घटादेरनुमितिशाब्दबोधानन्तरं घटो मे प्रत्यभादिति न परीक्षकादिव्यवहारः । किन्तु तर्कित इत्यादिरूप एव । प्रत्यक्षानन्तरमेव घटः प्रत्यभादिति व्यावहारः । अत उक्तवाक्यं तज्ज्ञानं प्रत्यक्षत्वेनैव बोधयतीति लिङ्गादिजन्यत्वाङ्गीकारे

तद्विरोध इति भावः । अत एवोक्तबाधकप्रतीतेर्लिङ्गजन्यत्वाभावे हेत्वन्तरोपन्यासायासनिरासाय जन्यतया बाधकप्रतीत्यनुमापकं मिथ्यैव रजतमित्येतावन्मात्रवाक्यं विहाय बाधकप्रत्ययं प्रत्यक्षत्वेनावगाहमानेनानुव्यवसायेन वाक्यार्थज्ञानमुद्रया जन्यं बाधकप्रत्ययस्य प्रत्यक्षत्वेनैव शब्दविधया बोधकं वाक्यमुपात्तम् ।

असत्त्वस्य विद्यमानत्वादिति ।। तथा च मिथ्यापदं तद्बोधकमेवेति भावः । शशविषाणादीनां तत्पदेन बोधात् कथमुक्तार्थकत्वमित्यत आह- न हीति ।। शशविषाणादीनां तत्समभिव्याहृत-पदादिना बोध्यत्वेऽपि न शशविषाणत्वादिना तद्बोध्यत्वमित्यर्थः । विपक्षे बाधकमाह- तथा सतीति ।। तर्हि शशविषाणादिपदसभिव्याहृतमिथ्यापदेन किं प्रतीयत इत्यत आह- किं नामेति ।। तथा च प्रकृतेऽनुवादकवाक्यस्य कीदृशोऽर्थः पर्यवसन्न इत्यत आह- तथा चेति ।। प्रतियोगि-प्राधान्यविवक्षयाऽह-नास्ति रजतमिति ।। अभावप्राधान्यविवक्षयाऽऽह- रजतात्यन्ताभाव इति ।। स्वयमसत इति ।। सर्वैरपि रूपैरसत इत्यर्थः । तेन शङ्ककस्य मते सतोऽपि व्यावृत्तिरूपेणासत्त्वात् तस्य प्रतियोगित्वाङ्गीकारात् कथमेतदिति चोद्यानवकाशः । किमिह कथं का कथन्तेत्यर्थः । धर्मिसत्तासापेक्षमिति ।। तथात्वे स्वप्रागभावध्वंसकालेऽसतां घटादीनां प्रतियोगित्वेन भानाभाव-प्रसङ्गादिति भावः ।

### श्रीराघवेन्द्रतीर्थ

यावतेति ।। यस्मादित्यर्थः । एवमग्रेऽपि ज्ञेयम् । प्रत्यक्षमिति ।। अस्तीत्यन्वयः । तच्च शुक्तिरजतादिभ्रमवतस्तत्र जायमानमिथ्यात्वप्रत्ययरूपबाधकज्ञानमिति भावः । परकीयं बाधक-ज्ञानं तद्विषयमिति कथं ज्ञेयमित्यतस्तदीयानुवादरूपवाक्यलिङ्गादिति भावेनाऽह- बाधकेति ।। तावता अनिर्वचनीये किमायातमित्यत आह- यावदिति ।। मिथ्येत्यनिर्वचनीयमिति च अनर्थान्तर-मित्यर्थः । ननु रजतमिथ्यात्वप्रतीत्यभावेऽपि मिथ्यैव रजतं प्रत्यभादित्यनुवादः सम्भवति । घटज्ञानाभावेऽपि घटोऽस्तीति बालादिभिरनुवादात् । अतः कथमनुवादबलेन प्रत्यक्षकल्पनमित्यत आह- न चेति ।।१ हेतोर्द्वेधाऽन्यथोपपत्तिं हृद्याशङ्क्य निराह- न चेत्यादिना ।। तावता तस्य प्रत्यक्षता कुतः? इत्यत आह- नापि लिङ्गादिजन्य इति ।। शङ्कामुखेन मूलार्थं व्यनक्ति- नन्वित्यादिना ।। वादिसमयेति ।। वादिकृतसंकेतेत्यर्थः । अस्तीति प्रत्ययस्य वादिसंकेतेनाभावविषयता स्यात् । अतिप्रसङ्गेनेति ।।२ अन्तरित्यस्य बहिरित्यर्थ इत्याद्यतिप्रसङ्गादित्यर्थः । सत्स्वरूपवाचक एवार्थ-वानिति मन्वान आह- एवं तर्हीति ।। पदत्वव्याघात इति ।। 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'३ इत्यर्थवत एव प्रातिपदिकसञ्ज्ञायां 'ङ्याप् प्रातिपदिकात्'४ इत्यत्र 'स्वौजसमौड्'५ इति सुप्प्रत्यये 'सुप्तिङन्तं पदम्'६ इति पदत्वस्य विधानादर्थवत्त्वाभावे प्रातिपदिकसञ्ज्ञाभावेन सुबनुत्पत्तेः पदत्वव्याघात इत्यर्थः । अभावज्ञानोपयोगिज्ञानविषयतेति । सा चातीतादेरिवासतोऽपि युक्ता । अतीतादिकं कदाचिदस्ति असन्न कदाचिदपीति वैषम्यमात्रम् । ज्ञानकाले सत्त्वाभावस्योभयत्र साम्यादिति भावः । उपपादयिष्याम इति ।। 'असतोऽप्रतीतावसद्वैलक्षण्यज्ञानानुपपत्तिः' इत्यत्रेति भावः ।। शशविषाणादिकमर्थ इति ।। तथात्वे हि निरर्थकत्वं स्यादिति भावः । कथं प्रतियोगित्वमिति ।। अभावज्ञानजनकत्वरूपप्रतियोगित्वस्यासत्यसम्भवादिति भावः ।

### गुरुराजीया

ननु इदं नीलमितिवत् इदमनिर्वचनीयमिति प्रत्यक्षानुपलम्भात् कथं प्रत्यक्षस्य प्रमाणीकरणमित्यतः प्रत्यक्षानुपलम्भेनोपपादनानपेक्षस्य प्रत्यक्षस्य तत्र प्रमाणत्वासम्भवेऽपि उपपादनसापेक्षस्य नेदं रजतमित्यादिप्रत्यक्षस्य तत्र प्रमाणत्वं स्यादेव । तथा हि । नेदं रजतमिति ज्ञानानन्तरं मिथ्यैव रजतं प्रत्यभादित्यनुवादान्यथानुपपत्त्या बाधकज्ञानस्य शुक्तिरजतमिथ्यात्व-विषयकत्वसिद्ध्या तदनिर्वचनीयत्वविषयकत्वसिद्ध्या तत्र प्रामाण्यसम्भवादिति भावेन तदुप-पादयति- मिथ्यैव रजतमिति ।। ननु मिथ्यैव रजतं प्रत्यभादित्यनुवादस्य मिथ्यात्वविषयकत्वेन तदन्यथानुपपत्त्या तन्मूलभूतबाधकप्रत्ययस्य मिथ्यात्वविषयकत्वसिद्ध्या मिथ्यात्वे प्रामाण्य-प्राप्तावपि नानिर्वचनीयत्वे प्रामाण्यप्राप्तिः ।

तन्नियामकस्यानिर्वचनीयविषयकत्वस्यासिद्धत्वादि-त्यतो मिथ्याशब्दानिर्वचनीयशब्दयोः पर्यायत्वान्मिथ्यात्वविषयकत्वेनैवानिर्वचनीयत्वविषयकत्व-सिद्धेः नानुपपत्तिरित्यभिप्रेत्य तयोः पर्यायतामुपदर्शयति- यावदुक्तं भवतीति ।। ननु बाधक-प्रत्ययस्य रजतमिथ्यात्वाविषयकत्वेऽपि तदनुवादोपपत्तेर्नानुवादान्यथानुपपत्त्या बाधकप्रत्ययस्य तन्मिथ्यात्वविषयकत्वसिद्धिरित्यत आह- न चाप्रतीतमिति ।। अप्रतीतेति हेतुगर्भं विशेषणम् । अन्यथा आप्तत्वानुपपत्तिप्रसङ्गादिति भावः ।

ननु बाधकप्रत्ययस्य भ्रमत्वेऽप्यनुवादसम्भवेन तदन्यथानुपपत्तेरेवाभावान्नोक्तरीत्या बाधक-ज्ञानस्य रजतमिथ्यात्वविषयकत्वसिद्धिरित्यत आह- न चेति ।। अन्यथाविज्ञातस्य सम्यग्-विज्ञानस्यैव बाधकत्वादिति भावः । ननु बाधकप्रत्ययस्य प्रमात्वेऽपि तस्य लिङ्गादिजन्यत्वेनापि अनुवादोपपत्त्या कथं तेनोक्तविधप्रत्यक्षकल्पनमित्यत आह- नापि लिङ्गादिजन्य इति ।। व्याप्त्याद्यनुसन्धानविधुराणामपि जायमानत्वान्न तस्य लिङ्गादिजन्यत्वमिति भावः । भ्रान्त्युत्थित-स्येति ।। भ्रान्तित्वनिश्चयवत इत्यर्थः । अनुमीयत इति ।। भ्रान्त्युत्थितः अनिर्वचनीय-विषयकप्रत्ययवान् तदा तद्वाचकशब्दप्रयोक्तृत्वात् सम्प्रतिपन्नवदित्यनुमीयत इत्यर्थः । निरर्थकत्वे चेति ।। ‘अर्थवदधातुरप्रत्ययः प्रातिपदिकम्’१ इति प्रातिपदिकसञ्ज्ञायां ‘सुप्तिङन्तं पदम्’२ इति पदत्वं सिद्ध्येत् । निरर्थकत्वे च तन्न सिद्ध्येदिति भावः । तथा सतीति ।। पौनरुक्त्यापातादि-त्यर्थः । नास्ति रजतम् इति प्रतियोगिप्राधान्येन मिथ्याशब्दार्थमभिधाय अभावप्राधान्यमाश्रित्यापि तदर्थमाह- रजतात्यन्ताभावोऽस्तीति ।। किमिह कथं का कथन्तेत्यर्थः । धर्म्यभावे कथं धर्म इति पराभिसन्धिमुद्घाट्य दूषयति- न हीति ।। रूपादिकं यथा धर्मिसत्तासापेक्षं न तथा प्रतियोगि-त्वम् । घटप्रागभावादिदशायामसतोऽपि घटादेः तत्प्रतियोगित्वदर्शनात् । कालान्तरे सत्त्व-स्येदानीमनुपयोगादिति भावः । नन्वभावज्ञानोपयोगिज्ञानविषयत्वमधिकरणस्याप्यस्ति । अतः कथं तत् प्रतियोगित्वमित्यतस्तज्ज्ञानहेतुभूतज्ञानविषयत्वविशेषस्यैव प्रतियोगित्वरूपत्वाङ्गीकारेण तज्ज्ञानहेतुभूतज्ञानविषयत्वमात्रस्य तद्रूपत्वानङ्गीकारान्नानुपपत्तिरित्याह- अभावज्ञानेति ।। नन्वसतः प्रतीतेरभावात्तदपि कथमित्यतः असद्वैलक्षण्यज्ञानान्यथानुपपत्त्या तस्या उपपाद-यिष्यमाणत्वान्नानुपपत्तिरित्याह- असतोऽपीति ।।

### गोविन्दीया

यावतेति ।। यथाऽनुवादबलात् शुक्तिरजतादेरनिर्वचनीयतामावेदयत् प्रत्यक्षमस्तीत्यनुमीयते तथा प्रकृत इत्यर्थः । न चाप्रमितमिति१ ।। आप्तानुवादाद् अनिर्वचनीयं प्रमितमेवेत्यर्थः । घटज्ञानाभावेऽपि घटोऽस्तीत्यनुवादवत् । अत्रापि सम्भवात् तद्बलात् प्रत्यक्षकल्पनं न युक्तमिति शङ्कानवकाश इति भावः । न च बाधकप्रत्यय इति ।। अन्यथाविज्ञातस्य सम्यग्विज्ञानस्य बाधकप्रत्ययत्वात् न भ्रान्तिरित्यर्थः । बाधकप्रत्ययस्य भ्रान्तित्वेऽनुवादसम्भवात् तेन प्रत्यक्षकल्पनं न युक्तमिति शङ्का दूरापास्तेति भावः । नापीति ।। अनुसन्धानाभावेऽपि जायमानत्वाद् इन्द्रियानुविधायित्वाच्च बाधकप्रत्ययो लिङ्गादिजन्यो न भवतीत्यर्थः । बाधकप्रत्ययस्य लिङ्गादिजन्यत्वात् मिथ्यारजतज्ञानमपि लिङ्गादिजन्यमेव । अतोऽनिर्वचनीये न प्रत्यक्षं प्रमाणमिति शङ्का दूरोत्सारितेति भावः । सत्यमिति ।। तद्वाच्यं वाच्यमित्यनेन वाच्यं नास्तीति लब्धम् । स चानङ्गीकारांश इत्यर्थः । व्याघातादिति ।। असदित्युक्ते नास्तीति लाभात्, पुनरस्तीत्युच्यमाने स्ववचनव्याघात इत्यर्थः । निरर्थकत्वे चेति ।। मिथ्यापदस्य ‘अर्थवदधातु-रप्रत्ययः प्रातिपदिकम्’, ‘सुप्तिङन्तं पदम्’ इति व्याकरणसूत्रात् सार्थकत्वम्, पुनर्निरर्थकत्वेऽङ्गीक्रियमाणे व्याघात इत्यर्थः । मैवमिति ।। असत्पदार्थस्य अविद्यमानत्वेऽपि तद्धर्मस्यात्यन्ताभावप्रतियागित्वलक्षणस्यासत्त्वस्य सत्त्वादित्यर्थः । तथा सतीति ।। यदि मिथ्येति पदस्य शशविषाणादिकमर्थः स्यात्, पौनरुक्त्या शशविषाणं मिथ्येति व्यपदेशो न स्यादित्यर्थः। किन्नामेति ।। तर्हि कोऽर्थः ? नास्तीति, तन्नास्तीति विशिष्टवाक्यार्थ इत्यर्थः । तथा चेति ।। मिथ्यैव रजतमित्यस्य प्रतियोगिप्राधान्येन नास्ति रजतम्, अभावप्राधान्येन रजतात्यन्ता-भावोऽस्तीत्यर्थः । असमभिव्याहृतमिथ्यापदस्यात्यन्ताभावप्रतियोग्यसदर्थः ।

रजतपदेन समभि-व्याहृतस्य तत्पदस्यात्यन्ताभाव एवार्थः । रजतमेव प्रतियोगीति भावः । स्वयमिति ।। अविद्यमानस्यासतः प्रतियोगित्वरूपधर्मः कथमिति चेदित्यर्थः । किमिह कथमिति ।। किं कथम्? का कथन्तेत्यर्थः । विषयतामात्रस्येति ।। ज्ञानविषयत्वमात्रस्य प्रतियोगित्वरूपत्वादित्यर्थः । असतः ज्ञानमेव नास्ति तद्विषयत्वरूपधर्मो दूरोत्सारित इत्याशङ्क्य तत्परिहारकत्वेनाऽह- असतोऽपीति ।।

### नारोपन्तीया

नापि लिङ्गादिजन्य इति । यद्यपि लिङ्गादिजन्यत्वेऽपि न क्षतिः । तथापि प्रत्यक्षत्वेनोपन्यस्तप्रमाणस्योपपादनार्थमेव तदुक्तम् । अनुमानानां तु निरसिष्यमाणत्वात् । पदत्वव्याघात इति । अर्थवत्त्वाभावे प्रातिपदिकसञ्ज्ञाया अभावात्तन्निबन्धसुबुत्पत्तेरभावात्, सुबन्तत्वप्रयुक्तपदसंज्ञाऽनुपपत्तेरिति भावः ।

### जनार्दनभट्टीया

यावतेति ।। यत इत्यर्थः । ‘मिथ्यैव रजतम्’ इत्यनुवादे भ्रान्तिविषयस्य मिथ्यात्वसिद्धावपि अनिर्वचनीयसिद्धौ किमायातम्? इत्यत आह – यावदुक्तमिति ।। न चैक्यवादिना त्वया ‘व्यवहारे भट्टनयः’ इत्युररीकरणात्, तन्मते च अनुवादस्य अप्रमाणत्वात्, कथं अनुवादस्य अनिर्वचनीये प्रमाणत्वम्? इत्यत आह – न चाप्रतीतमिति ।। तथा च अनुवादमूलभूतप्रतीतिरेव अनिर्वचनीये मानमिति भावः । न च बाधकेति ।। मिथ्यापदप्रयोगहेतुभूतबाधकप्रत्यय इत्यर्थः । नेदं रजतमिति बाधकप्रत्ययस्य लिङ्गजन्यत्वात् कथं प्रत्यक्षं शुक्तिरजतादेः अनिर्वचनीयतामावेदयदस्तीत्युक्त-मित्याशङ्क्य निराकरोति- नापीति ।। व्याप्त्यननुसन्धानेऽपि नेदं रजतमिति बाधकप्रत्ययस्य अनुभव-सिद्धत्वात् इति भावः । व्यवहरतीति कृत्वेति ।। अनिर्वचनीयविषयः प्रत्ययोऽनुमीयत इति पूर्वेण सम्बन्धः ।। व्याकरणाभिधानेति ।। तद्रूपप्रमाणाभावादित्यर्थः । वादिसमयमात्रस्येति ।। मिथ्याशब्दः अनिर्वचनीयवचनः अपह्नववचनश्च इति विवरणादिति वाक्यरूपसमयेत्यर्थः । अतिप्रसङ्गेनेति ।। अपह्नवेऽपि प्रयोगादिति भावः । अनिर्वचनीयस्येति ।। सदसद्विलक्षणस्येत्यर्थः । तद्वाच्यमिति ।। मिथ्यापदशक्यमित्यर्थः । वाच्यमिति वक्तव्यमित्यर्थः । ‘त्वया’ इति शेषः ।

न ह्यसदस्तीति ।। ‘अस्तीति सत्’ इति शतृप्रत्ययान्तसच्छब्दस्य विद्यमानवाचकत्वेन असच्छब्दस्य अविद्यमानवाचित्वादित्यर्थः । निरर्थकत्वे चेति ।। ‘अर्थवदधातुरप्रत्ययः प्रातिपदिकम्’ इति सूत्रेण प्रातिपदिकसञ्ज्ञायां ‘ङ्याप्प्रातिपदिकात्’१ इत्यादिना स्वाद्युत्पत्तौ ‘सुप्तिङन्तं पदम्’ इति पद-सञ्ज्ञाविधानादिति भावः । अथवा यत्पदं तदर्थवदिति अर्थवत्वस्य पदव्यापकत्वेन व्यापकी-भूतार्थवत्वाभावे व्याप्यं पदत्वमपि न स्यादिति व्याघात इत्यर्थः । असत्वस्य विद्यमानत्वादिति ।। मिथ्याशब्दवाच्यम् असत असत्वरूपं प्रवृत्तिनिमित्तं च तत्र विशेष्यस्य असतोऽविद्यमानत्वेऽपि प्रवृत्तिनिमित्तस्य विद्यमानत्वात् मिथ्याशब्दस्य पदत्वमुपपद्यत इत्यर्थः । लाघवात् यत्किञ्चिदभिधेयत्वमेव पदत्वप्रयोजकमिति भावः । मिथ्याशब्दस्य अत्यन्ताभावप्रतियोगित्वार्थकत्वं परिशेषेण द्रढयति – नहीति ।। ननु मिथ्याशब्दस्य नास्तीत्यर्थकत्वे ‘मिथ्यैव रजतम्’ इति प्रयोगे एवकारवैयर्थ्यं स्यात् । एवशब्दार्थस्य नास्ति रजतमित्यस्य मिथ्यापदेनैव लाभादित्यत आह- तथा चेति ।। अत्यन्ता-भावोऽस्तीति ।। एवञ्च मिथ्याशब्दार्थविवरणपरत्वादेवकारः सार्थकः । कथं प्रतियोगित्वमिति ।। असति धर्मिणि धर्मस्यावस्थानासम्भवादिति भावः ।

ननु धर्मिसत्तानिरपेक्षं प्रतियोगित्वं कीदृशम्? इत्यतस्तन्निर्वक्ति– अभावेति ।। अभाव-ज्ञानोपयोगिज्ञानं यस्य तत् तस्य भावस्तत्ता । अभावज्ञानकारणज्ञानविषयत्वं प्रतियोगित्वमित्यर्थः । मात्रस्येति ।। सत्तासामानाधिकरण्यनिरपेक्षस्यापीत्यर्थः । ननु अभावज्ञानेत्यादिप्रतियोगिलक्षणस्य असम्भवः । असतः शशविषाणादेः सन्निकर्षाभावेन ज्ञानविषयत्वाभावादित्यत आह– असतोऽपीति ।।

## मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च..

**मिथ्याशब्देन अनिर्वचनीयावाचकेनाप्यनिर्वचनीयव्यवहार इति शङ्कानिरासः**

*मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च..*

### श्रीमज्जयतीर्थटीका

द्वितीयपक्षेऽपि मिथ्याशब्द इत्येवोत्तरम् । न हि तीरपुरुषादेरवाचकेनापि नदीसिंहादिशब्देन देवदत्तस्तद्वदतीति विना प्रमाणेन कल्प्यते । अपि तु वक्तुराप्तत्वनिश्चये सति वाच्यार्थानु-पपत्त्यादिदर्शनेनैव । न च तथा मिथ्येतिशब्दो यस्यासौ मिथ्याशब्दो भ्रान्तेरुत्थितोऽनिर्वचनीयं तेन वदतीत्यत्र किञ्चिन्मानमस्ति । अनिर्वचनीयत्वाद्रजतस्य मुख्यार्थानुपपत्तावमुख्या वृत्तिराश्रीयत इति चेन्न । परस्पराश्रयप्रसङ्गात् । सिद्धे शुक्तिरजतादेरनिर्वचनीयत्वे मिथ्याशब्दस्य तत्परत्वकल्पनं तेनैव चानिर्वचनीयत्वकल्पनमिति । प्रमाणान्तरेणानिर्वचनीयताप्रतिपत्तौ तु किमनेन । तच्च निरसिष्यते ।

### श्रीविजयीन्द्रभिक्षु

वदतिरिति ।। 'इक्श्तिपौ धातुनिर्देशे'१ इति वचनात् 'वद- व्यक्तायां वाचि' इति धातुरित्यर्थः । अत्रेति ।। मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च इति वाक्य इत्यर्थः । कर्मतेति ।। तथा च मिथ्याशब्दं वदतीति प्रयोगः स्यात् । अनभिहिते 'कर्मणि द्वितीया'२ इति द्वितीयाया अनुशासनादिति भावः । शाब्दप्रतीतिवाचीति ।। वदतिरित्यनुषङ्गः । करणतैवेति ।। तथा च मिथ्याशब्देनानिर्वचनीयं वदतीति प्रसङ्गः । 'कर्तृकरणयोस्तृतीया'३ इति करणे तृतीयाया अनुशासनादिति भावः । अन्यथेति ।। व्यापाररहितकारणमात्रस्यापि करणत्वे व्यापारस्यापि करणत्वापत्तेरित्यर्थः । नन्वस्तु व्यापारवत एव कारणस्य करणत्वम् । तावतोक्तदोषोद्धारः कथमित्यत आह- तत्रेति ।। एवं सति स्वव्यापाररूपक्रियां प्रति कारकमात्रस्य स्वातन्त्र्येण कर्तृत्वादित्यर्थः । 'स्वतन्त्रः कर्ता'४ इति पाणिनिस्मरणादिति भावः । करणेऽपीति ।। शाब्दप्रतीतिरूपफलापेक्षया करणस्यापि सतः शब्दस्य स्वव्यापाररूपक्रियाकर्तृत्वविवक्षयेत्यर्थः । प्रधानक्रियां प्रतीति ।। उद्देश्यत्वेन शाब्दप्रतीतिरूपप्रधानक्रियां प्रतीत्यर्थः । अवान्तरव्यापार इति विषयसप्तमी । प्राधान्येन निर्देश इति ।। वदतीति प्राधान्येन निर्देश इत्यर्थः । ननु मिथ्याशब्देन देवदत्तोऽनिर्वचनीयं वदतीत्यप्राधान्येन निर्देशेऽपि वाचकत्वपक्षकक्षीकरणस्य सूचितत्वसिद्धेस्तथा निर्देशः कुतो न कृत इत्यत आह- मिथ्याशब्देनेति ।। शाब्दप्रतीतिमात्रेऽपीति ।। देवदत्तो गङ्गाशब्देन तीरं वदतीत्यादौ लक्ष्येऽपि वदतिशब्दप्रयोगदर्शनादित्यर्थः ।

नन्ववाचकेनापि मिथ्याशब्देन भ्रान्त्युत्थितोऽनिर्वचनीयं व्यवहरतीति कृत्वेति द्वितीयपक्षे आकरे दूषणोक्त्यदर्शनात् न्यूनत्वमित्याशङ्क्याऽह- द्वितीयपक्षेऽपीति ।। तस्यैवोत्तरत्वमुपपाद-यितुमाह-न हीति ।। अत्र 'नद्यां घोषः, पुरुषोऽयं सिंहः' इत्यादिवाक्येष्विति शेषः । तद्वदतीति ।। तीरपुरुषादिकमित्यर्थः । अन्यत्र क्लृप्तलक्षणाकल्पनमेव वक्तुमाकाङ्क्षामुत्थापयति- अपि त्विति ।। वाच्यार्थानुपपत्त्यादीत्यादिपदेन तात्पर्यानुपपत्तिपरिग्रहः । ननु प्रकृतेऽपि तत्सत्त्वात्किं लक्षणा न कल्प्यत इत्यत आह- न च तथेति ।। नन्ववाचकेनापि मिथ्याशब्देन भ्रान्त्युत्थितोऽनिर्वचनीयं व्यवहरतीति द्वितीयपक्षोत्तरत्वं कथं १मिथ्याशब्दस्येत्याशङ्क्य तदुपपादयितुमाह- मिथ्येति शब्दो यस्यासाविति ।। भ्रान्तेरुत्थितः सञ्जातबाधः । तेन मिथ्याशब्देन । नन्वस्तु मिथ्याशब्दस्यासदेव वाच्योऽर्थः । तथाऽपि शुक्तिरजतादेरनिर्वचनीयत्वेन तत्र भ्रान्त्युत्थितेन प्रयुज्यमानमिथ्याशब्दस्य वाच्यार्थानुपपत्त्यैव लक्षणाऽश्रयणमित्यभिप्रेत्य शङ्कते- अनिर्वचनीयत्वादिति ।। तत्परत्व-कल्पनमिति ।। अनिर्वचनीयरजतादिपरत्वकल्पनमित्यर्थः । ननु न शुक्तिरजतादेः मिथ्याशब्द-व्यवहारविषयत्वान्यथानुपपत्त्याऽनिर्वचनीयत्वं ब्रूमः । येन परस्पराश्रयः स्यात् । किं तु मानान्तरेणेत्यत आह- मानान्तरेणेति ।। किमनेनेति ।। शुक्तिरूप्याद्यनिर्वचनीयत्वे मिथ्याशब्द-व्यवहारविषयत्वस्यासाधकत्वेन किं

अनाद्यनन्तकालेषु प्रवाहैकप्रकारकम् ।

नियमेनैव ससृजे भगवान्पुरुषोत्तमः ।'२

इति ईशावास्यभाष्यानुसारेण श्रुतिं व्याचष्टे - कविः सर्वज्ञ इत्यादिना ।।

### गुरुराजीया

'मघवन् यशस्विन् धनवन् मखपते' इति कर्मनिर्णयं मनसि निधाय मघवानावित्येतद् व्याख्याति- धनादिमन्ताविति ।। 'द्विवचनश्रुतेरपि न निरवकाशत्वम् । विष्णोरेव द्विरूपत्वात्' इति भगवत्पादोक्तं मनसि निधायाऽह- द्विरूपं प्रतीति ।। अस्यां श्रुतौ सत्यत्वानुक्तेरस्याः सत्यत्वे प्रमाणत्वेनोदाहरणानुपपत्तिमाशङ्क्य आगमतया तत्साधकत्वाभावेऽपि अर्थतस्तदवगमकत्वाद् युक्तमुदाहरणमित्यभिप्रेत्य तदुपपादयति- कर्मणामिति ।। जगत्सृष्ट्यादिलक्षण इति ।। अत्रापि पूर्ववत्सत्यत्वावगमकत्वादुपयोग इति द्रष्टव्यम् । कर्मानुक्तेरुक्तम्- तमिति ।। महिमानमित्यर्थः ।

'एवम्भूतोऽपि सार्वज्ञ्यात्कविरित्येव शब्द्यते ।'२

इत्यादीशावास्यभाष्योदाहृतप्रमाणानुसारेण 'कविर्मनीषी' इति श्रुतिं व्याख्याति- कविः सर्वज्ञ इत्यादिना ।।

### गोविन्दीया

विश्वमिति ।। हे मघवाना मघवानौ युवोः युवयोः सम्बन्धि विश्वं सत्यमिति तत्सत्य-मेव । वां युवयोः व्रतं जगत्सर्जनादिकं कर्म आपश्चन आपोऽपि प्रमिनन्ति जानन्तीत्यर्थः । प्रघेति ।। नु इदानीं अस्य महतः सत्यस्य परमेश्वरस्य महानि महान्ति सत्या सत्यानि करणानि कर्माणि प्र वोचं घा प्रावोचमेवेत्यर्थः ।

### नारोपन्तीया

द्विरूपं परमेश्वरं प्रति उच्यत इति । 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्'१ इत्यधिकरणन्यायेन द्विवचनान्तशब्दानां ब्रह्मणि समन्वयस्य सिद्धत्वादिति भावः ।

### जनार्दनभट्टीया

धनादिमन्ताविति आदिपदेन कर्मनिर्णयरीत्या यशस्विनावित्यर्थोऽभिधीयते । इन्द्राबृहस्पती इति ।। 'अच्छेन्द्राब्रह्मणस्पती हविर्नोन्नं युञ्जेव वाजिना जिगागम्' इत्युत्तरार्धस्थितस्य इन्द्रब्रह्मणस्पती इत्यस्य प्रतिपदं इन्द्राबृहस्पतीति । युवोरित्यस्य अर्थमाह– युवयोरिति ।। इत् इत्यस्यार्थः– एवेति ।। आपोऽपीति ।। 'आप्लृ व्याप्तौ' इति धातुव्याख्यानाद् व्यापनशीला देवाश्चेत्यर्थः । इदानीमिति ।। मघवानिति द्विवचनार्थमाह – द्विरूपमिति ।। 'आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः' इति प्रमाणोक्तद्विरूपमित्यर्थः । नु इत्यस्यार्थः – इदानीमिति ।। सत्या इत्यस्यार्थः – सत्यानीति ।। महान् इत्यस्यार्थः – महान्तीति ।। 'व्यवहिताश्छन्दसि' इति सूत्रानुसारेण व्यवहितानामपि प्रवोचं घा इति त्रयाणां योजनां मनसि निधाय एकप्रकारेणार्थमाह – प्रावोचमेवेति ।। 'वोचम्' इत्यत्र अडभावः छान्दसः । घ इत्यस्यार्थः- एवेति ।।

ननु एतच्छ्रुत्या कर्मसत्यत्वसिद्धावपि विश्वसत्यत्वे किमायातम्? इत्यत आह – कर्मणामिति ।। गृण इत्यस्यार्थमाह – स्तौमीति ।। 'गृण स्तुतौ' इति धातुव्याख्यानादिति भावः ।

## न चार्थापत्त्या अनिर्वचनीयत्वसिद्धिः ..

**अनिर्वचनीयत्वे अर्थापत्तिप्रमाणनिराकरणम्**

### श्रीमज्जयतीर्थटीका

अथापि स्यात् । अर्थापत्त्या शुक्तिरजतादेरम्बरादेर्वा अनिर्वाच्यता सेत्स्यति । तथा हि । यदत्यन्तासत्, न तत्प्रतीयते, यथा नरविषाणम् । यच्चात्यन्तसत्, न तद्बाध्यते, यथाऽऽत्मा । तदिहोभयान्यथानुपपत्त्या अनिर्वचनीयतैवाऽश्रयितुं युक्तेति ।। तत्राऽह-

## मूल

***न चार्थापत्त्या अनिर्वचनीयत्वसिद्धिः ।***

अर्थापत्तिः खलु नानुमानाद्भिद्यते । अनुमानञ्चाप्रसिद्धविशेषणतया निराकृतमिति नार्थापत्त्या च शुक्तिरजतादेरम्बरादेर्वाऽनिर्वाच्यतासिद्धिः ।

### श्रीविजयीन्द्रभिक्षु

अर्थापत्तेः पृथक्प्रामाण्याभिमानी शङ्कते- अथापीति ।। अनुमानादिति ।। विमतं सदसद्विलक्षणं बाध्यत्वे सति प्रतीयमानत्वादित्येवंरूपादित्यर्थः । अप्रसिद्धविशेषणतयेति ।। ननु भवतु विशिष्टमप्रसिद्धम् । सद्वैलक्षण्यमसद्वैलक्षण्यञ्च प्रत्येकं सिद्धमेव । बाध्यत्वप्रतीतत्वहेतुभ्यां तदुभयमेकत्र सिद्धं पक्षधर्मताबलात्सदसद्विलक्षणत्वरूपमेव पर्यवस्यतीति चेन्न । सदसद्वैलक्षण्ययोः परस्परविरोधेनैकत्र तदुभयसिद्धेरेवाभावादिति भावः ।

### श्रीवेदेशतीर्थ

ननु तर्हि विमतमनिर्वचनीयं बाध्यत्वे सति प्रतीयमानत्वादित्यनुमानेन तत्सिद्धिरित्यत आह- अनुमानञ्चेति ।। अप्रसिद्धविशेषणतयेत्युपलक्षणम् । विशेष्यवैयर्थ्यञ्चेत्यपि ज्ञातव्यम् । यद्वा नेदम् असत् प्रतीतत्वात्, नेदं सद् बाध्यत्वादिति सत्त्वासत्त्वप्रतिक्षेपे इदम् अनिर्वचनीयमनुपपन्न-सत्ताऽसत्ताकत्वादित्यनुमानेन तत्सिद्धिः स्यादित्यत आह- अनुमानञ्चेति ।। अस्मिन्व्याख्याने शुक्तिरूप्यपक्षकत्वेऽसत्त्वस्यैवोपपन्नत्वाद् अम्बरादिपक्षकत्वे सत्त्वस्यैवोपपन्नत्वात् स्वरूपासिद्धो हेतुः । न च प्रतीतत्वाद्बाध्यत्वात्कथमसत्त्वं सत्त्वं वा शुक्तिरूप्यजगतोरिति वाच्यम् । असतोऽपि प्रतीतिसम्भवेन सतोऽपि बाध्यत्वसम्भवेन व्याप्त्यभावादित्येवम्परतयोत्तरग्रन्थो नेयः ।

### द्वैतद्युमणि

अर्थापत्त्येति ।। परेण 'व्यवहारे भट्टनयः' इति वादिना अर्थापत्तेः पृथक् परिगणितत्वात् तन्मतानुसारेणाऽशङ्का । अतः स्वमतेऽस्या अनुमानाबहिर्भावेन तद्दूषणेन दूषितत्वेऽपि न पौन-रुक्त्यावकाशः । यदिति ।। असत्पदमभावप्रतियोग्यर्थकं प्रागभावादिप्रतियोगिघटादिबोधकमपि भवतीत्यतोऽत्यन्तेत्युक्तम् । यथा नरविषाणमिति ।। प्रत्यक्षातिरिक्तप्रमाणानङ्गीकर्तुरपि लोका-यतस्य परबोधनाय युक्त्याद्युपन्यासो यथा स्वमतसिद्धलोकरीत्यभिसन्धिपूर्वकः तथा नरविषाण-मित्यादिशब्दोऽपि विकल्पजननद्वारा प्रकृतोपयोगी भवत्वित्यभिसन्धिना परस्य व्यवहारः । अतोऽ-सत्प्रतीतिमनङ्गीकुर्वतः कथं तद्बोधेच्छया वाक्यप्रयोग इति शङ्कानवकाशः । विकल्पाख्यवृत्तीच्छयैव तत्प्रयोगात् । विकल्पे प्रतीतिभेदांशे परस्य भ्रम इत्यवसेयम् । अत्यन्तासत् बाध्यत्वसामान्यशून्यं, न बाध्यते - त्रैकालिकनिषेधप्रतियोगित्वप्रकारकप्रमागोचरत्वरूपबाध्यत्ववन्न भवतीत्यर्थः । यद्वा ज्ञानोच्छेद्यत्वस्वरूपबाध्यत्ववन्न

भवतीत्यर्थः । अतो न यथाश्रुते साध्यावैशिष्ट्यमिति शङ्कावाकशः । स्वमतमनुरुद्ध्यानुमानपक्षोक्तदूषणेनेदमपि दूषितं भवतीत्याशयेन मूले हेत्वनुक्तिरित्यभिप्रेत्याऽह- अर्थापत्तिरिति ।। अनुमानञ्चेति ।। 'विमतं सदसद्विलक्षणं बाध्यत्वे सति प्रतीतत्वात्' इति व्यतिरेक्यनुमानमित्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

उभयेति ।। प्रतीतिबाधान्यथाऽनुपपत्त्येत्यर्थः । अम्बरादेः बाधो 'नेह नाना' इत्यादिश्रुतिसिद्धो मिथ्यात्वानुमानैर्वा सिद्ध इति भावः । प्रागुक्तदोषेण निराह - अर्थापत्तिः खल्विति ।। 'विवादपदं सदसद्विलक्षणं प्रतीतत्वे सति बाध्यत्वात्' इत्यादिरूपेण प्रयोग-सम्भवान्नानुमानाद्भिद्यत इत्युक्तम् ।

### गुरुराजीया

ननु तर्हि विमतमनिर्वचनीयं बाध्यत्वे सति प्रतीयमानत्वादित्यनुमानेन तत्सिद्धिरस्त्वित्यत आह- अनुमानञ्चेति ।।

### गोविन्दीया

अथापि स्यादिति ।। अथापि= अनिर्वचनीये प्रत्यक्षानुमानागमरूपप्रमाणाभावेऽपि प्रमाणान्तरं स्यादित्यर्थः ।

### जनार्दनभट्टीया

अत्यन्तासदिति ।। स्वरूपेणासदित्यर्थः । अत्यन्तसदिति ।। पारमार्थिकसदित्यर्थः । अनिर्वचनीयतेति ।। सदसद्विलक्षणता इत्यर्थः । न हि प्रतिज्ञामात्रेण अर्थसिद्धिरित्यत आह – अर्थापत्तिः खल्विति ।।

## न चार्थापत्त्या अनिर्वचनीयत्वसिद्धिः..

**अनिर्वचनीयत्वसाधकत्वेनाभिमतार्थापत्तेर्व्याप्त्यभावोपपादनम्**

***न चार्थापत्त्या अनिर्वचनीयत्वसिद्धिः***

### श्रीमज्जयतीर्थटीका

अथ वाऽत्यन्तासतो नरविषाणादेरपि तत्पदात्प्रतीतिसम्भवेनासन्न प्रतीयत इति व्याप्त्यभावाच्छुक्तिरजतादेरत्यन्तासत्त्वेनैवोपपत्तेः । तथा अन्यथाविज्ञातस्य सम्यग्विज्ञान-गोचरत्वस्य बाध्यत्वस्य सतश्चिदानन्दात्मनोऽपि सम्भवेन सन्न बाध्यत इति व्याप्त्यभावा-दम्बरादेस्सत्त्वेनैवोपपत्तेर्नार्थापत्त्याऽनिर्वचनीयतासिद्धिरिति व्याख्येयम् ।

### श्रीविजयीन्द्रभिक्षु

अस्तु वाऽर्थापत्तिर्मानान्तरम् । तथाऽपि बाध्यत्वप्रतीतत्वयोरन्यथाऽप्युपपत्त्या न तदवतारसम्भव इत्याह- अथ वेति ।। अयमाशयः । कल्पनीयत्वाभिमतव्यतिरेकप्रयुक्त-व्यतिरेकप्रतियोगित्वेन प्रमा ह्यर्थापत्तिः । न हि सा प्रकृते सम्भवति । कल्पनीयत्वाभिमत-सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं विनाऽपि बाधप्रतीत्योरुपपत्तेः । प्रमितिविषयत्वरूपबाध्यत्वस्य सदात्मन्यसम्भवोऽस्ति । न च नरविषाणादिशब्दजन्यप्रतीतिविषयत्वस्यात्यन्तासति नरविषाणादा-वसम्भवः । ततश्च सच्चेन्न बाध्येत असच्चेन्न प्रतीयेतेत्यापादने व्याप्त्यभावाच्छुक्तिरजतादेरम्बरादेश्च सत्वासत्वयोरन्यतरेणैवोपपत्तेर्बाध्यत्वप्रतीतत्वयोर्न

सदसद्वैलक्षण्यकल्पकत्वं युक्तम् । न च बाध्यत्वमिह ज्ञाननिवर्त्यत्वं प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वं वा विवक्षितम् । अतो न बाध्यत्वस्य सत्त्वेनाप्युपपत्तिरिति वाच्यम् । निरसिष्यमाणत्वादिति भावः ।

### श्रीवेदेशतीर्थ

एवं वस्तुगतिमभिधायार्थापत्तेः पृथक्प्रामाण्यपक्षेऽप्याह- अथ वेति ।। अत्यन्ता-सत्त्वेनैवेति ।। तथा चार्थापत्तेरन्यथैवोपपत्तिर्दूषणमित्यर्थः । सतश्चिदात्मनोऽपीति ।। सत्योऽप्यात्मा देहाद्यात्मना विज्ञातो वेदान्तजनितविज्ञानविषय इति परेणाप्यङ्गीकार्यम् । अन्यथाऽविद्याया निवृत्त्यनुपपत्तेरिति भावः ।

### श्रीराघवेन्द्रतीर्थ

अर्थापत्त्याभासोऽयमिति भावेनाऽभासतां व्यनक्ति- अथ वेति ।। एतेनार्थापत्तेर्मानान्तर-त्वान्न प्रागुक्तदोष इति परास्तम् ।

‘विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतम् ।’१

इत्यनुव्याख्यानोक्तबाध्यत्वनिर्वचनं हृदि कृत्वाऽऽह- अन्यथा विज्ञातस्येति ।। ज्ञानचिकीर्षा-कृतिमत्त्वादिना विज्ञातस्य निर्गुणत्वादिना २सम्यग्विज्ञातत्वस्य परमतेऽपि सत्त्वादिति भावः ।

### गुरुराजीया

अर्थापत्तेः पृथक्प्रामाण्यमङ्गीकृत्याप्याह- अथ वेति ।।

### जनार्दनभट्टीया

तत्पदादिति ।। नरविषाणादिपदादित्यर्थः । अत्यन्तासत्वेनेति ।। अन्यथाऽप्युपपत्तिः अन्यथैवोपपत्तिरित्यर्थापत्तेः दोषद्वयम् । तत्र अन्यथोपपत्तिरित्यर्थः । ३सतश्चिदानन्दात्मनोऽ-पीति ।। अत्यन्तसतोऽपीत्यर्थः । ब्रह्मणोऽपि समयान्तररीत्या क्षणिकत्वेन ज्ञातस्य अक्षणिकत्वेन प्रतीतेः परैरपि अङ्गीकारादिति ।

## असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः ..

**असतः प्रतीत्यनङ्गीकारे बाधकोक्तिः**

### श्रीमज्जयतीर्थटीका

अत्यन्तासतः प्रतीत्यनङ्गीकारे बाधकञ्चाऽह-

## मूल

***असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः ।***

यदि परोऽसन्न प्रतीयात्तदा शुक्तिरजतादेरसद्वैलक्षण्यं न जानीयात् । वैलक्षण्यज्ञानस्य प्रतियोगिज्ञानसापेक्षतानियमात् । न हि केनाप्यविदिताद्घटाद्वैलक्षण्यं पटस्य ज्ञातुं शक्यते ।

### श्रीविजयीन्द्रभिक्षु

असद्वैलक्षण्यं न जानीयादिति ।। इदमुपलक्षणम् । असत्प्रतीत्यभावे तत्प्रतीतिनिषेधानुप-पत्तिः असदादिपदप्रयोगानुपपत्तिश्चेत्यपि द्रष्टव्यम् ।

### श्रीवेदेशतीर्थ

बाधकञ्चेति ।। अत्यन्तासतो नरविषाणादेरपि तत्पदात्प्रतीतिसम्भवेनेति साधकस्योक्त-त्वाच्चशब्द इति ज्ञातव्यम् ।

### श्रीराघवेन्द्रतीर्थ

बाधकञ्चेति ।। न केवलं नरविषाणादिपदात् तत्प्रतीतिरूपसाधकमस्ति । किं तु बाधकञ्चेत्यर्थः ।

### गुरुराजीया

बाधकं चेति ।। प्राचीनसाधकोक्त्या बाधकोक्तेः समुच्चयद्योतकश्चशब्दः ।

असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः..

**असतः अपरोक्षप्रतीत्यनङ्गीकारे बाधकोक्तिः**

***असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः***

### श्रीमज्जयतीर्थटीका

अथैवं ब्रूयात् ‘अस्त्येवासतोऽपि परोक्षप्रतीतिगोचरता । अपरोक्षप्रतीतिगोचरतां तु न मन्ये’ इति । तत्रापि ‘असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः’ इत्येवोत्तरम् । यद्यत्यन्तासतोऽ-परोक्षप्रतीतिविषयता न स्यात् तर्हि प्रातिभासिकतयाऽर्थक्रियानर्हस्य रजतस्य यदसत् प्रातिभासिकवैलक्षण्यं तदपरोक्षज्ञानं भ्रान्तस्य नोपपद्येत । तथा चाप्रवृत्तिः प्रसज्येतेति ।

### श्रीविजयीन्द्रभिक्षु

तर्हीति ।। यद्यप्यसद्वैलक्षण्यज्ञानं नासदपरोक्षप्रतीतिसापेक्षम् । स्तम्भे पिशाच-वैलक्षण्यापरोक्षज्ञानवत्प्रतियोगिज्ञानमात्रेणोपपत्तेः । यद्यपि चाप्रामाण्यशङ्काशून्यं प्रवृत्तिविषये इष्टतावच्छेदकवैशिष्ट्यावगाहिज्ञानमेव प्रवर्तकं तथाऽपि प्रतियोगिविशिष्टासद्वैलक्षण्यापरोक्ष-ज्ञानस्यानुभवसिद्धतया असतोऽप्यपरोक्षप्रतीतिविषयत्वं दुर्वारमित्यत्र इष्टातावच्छेदकवैशिष्ट्याव-गाहिज्ञानवदनाभासविषयत्वज्ञानमपि निष्कम्पप्रवृत्त्यङ्गम् । अन्यथा असदेव रजतं, प्रतीतं रजतं प्रातिभासिकमेवेति ज्ञानदशायामपि प्रवृत्त्यापत्तिरित्यत्र च तात्पर्यम् ।

### श्रीवेदेशतीर्थ

असतो वैलक्षण्यमसद्वैलक्षण्यमिति विग्रहाङ्गीकारेण व्याख्याय, इदानीमसच्च तद्वैलक्षण्यञ्चेति विग्रहमभिप्रेत्यापि व्याचष्टे- यद्यत्यन्तासत इति ।। प्रातिभासिकतयाऽर्थ-क्रियानर्हस्य रजतस्येत्यनेन रजते प्रातिभासिकवैलक्षण्यप्रतीतिरावश्यिकी । अन्यथा प्रवृत्त्यनुप-पत्तेरित्युक्तं भवति ।

इदमत्राऽकूतम् । शुक्तिरूप्यादिकं परेण प्रातिभासिकमङ्गीक्रियते । तच्च प्रतीतिवेलायां किं प्रातिभासिकत्वेन प्रतीयते उत तद्विलक्षणत्वेन । नाऽद्यः । रूप्यस्य प्रातिभासिकत्वज्ञाने प्रवृत्त्यभावापत्तेः । न हि प्रातीतिकं क्वचिदर्थक्रियासूपयुज्यमानं दृष्टम् । द्वितीये तत्प्रातिभासिक-वैलक्षण्यं सदुतासदिति प्रष्टव्यम् । नाद्यः । प्रातिभासिके प्राति-भासिकवैलक्षण्यस्य सत्त्वायोगात् । न द्वितीयः । प्रातिभासिके प्रातिभासिकवैलक्षण्यस्यासतो भ्रान्तिरूपापरोक्षज्ञानविषयत्वेऽसतोऽ-परोक्षज्ञानविषयत्वप्राप्तेः । न च तत्र प्रातिभासिकवैलक्षण्यं नासत्प्रतीयते । किं त्वनिर्वचनीयमेवेति वाच्यम् । तथात्वे प्रातिभासिकवैलक्षण्यस्यापि शुक्तिरूप्यवत्प्रातिभासिकत्वेन तत्प्रतीतेराव-श्यकत्वे तदपि किं प्रातिभासिकत्वेन प्रतीयते । उत तद्वैलक्षण्येनेत्यादिप्रकारेण दूषणाभिधाने तत्राप्यनिर्वचनीयत्वाङ्गीकारेऽनवस्था स्यादिति ।

केचित्तु 'यद्यप्यसद्वैलक्षण्यज्ञानं नासदपरोक्षप्रतीतिसापेक्षम् । स्तम्भे पिशाचवैलक्षण्यापरोक्ष-ज्ञानवत्प्रतियोगिज्ञानमात्रेणोपपत्तेः । तथाऽपि प्रतियोगिविशिष्टासद्वैलक्षण्यापरोक्षज्ञानस्यानुभव-सिद्धतया असतोऽप्यपरोक्षप्रतीतिविषयत्वं दुर्वारमित्यत्र तात्पर्यम्' इत्याहुः । तच्चिन्त्यम् । न ह्यत्रासद्वैलक्षण्यापरोक्षज्ञानेऽसदपरोक्षज्ञानं प्रतियोगिज्ञानत्वेनापेक्ष्यत इत्युच्यते । येनेदमुपपन्नं स्यात् । अपि तूक्तरीत्या रजतेऽसदेव प्रातिभासिकवैलक्षण्यमिदं रजतमिति साक्षात्कारे विषय इत्यसतोऽपि प्रातिभासिकवैलक्षण्यस्यापरोक्षप्रतीतिरागतेति । किञ्च यदि प्रतियोगिविशिष्टा-सद्वैलक्षण्यापरोक्षज्ञाने प्रतियोगिनोऽसतोऽपि विषयत्वं तर्हि स्तम्भे पिशाचवैलक्षण्यापरोक्षज्ञाने पिशाचस्याप्यपरोक्षं स्यात् । न च परोक्षज्ञानविषय एव पिशाचस्तटस्थस्सन्, अपरोक्षज्ञान-विषयवैलक्षण्यं व्यावर्तयतीति वाच्यम् । असदपि पदात्प्रतीतं तटस्थं सत् वैलक्षण्यं व्यावर्तयती-त्युपपत्तावसतोऽपरोक्षज्ञानाप्राप्तेः । तस्मादिदमसाम्प्रदायिकमेव तात्पर्यकल्पनमिति ।

ननु रजतसाक्षात्कारे रजते प्रातिभासिकवैलक्षण्यं न विषयः । येनासतोऽप्यपरोक्षज्ञानं स्यात् । अपि तु रजतत्वमात्रम् । प्रवृत्तिविषये इष्टतावच्छेदकवैशिष्ट्यावगाहिज्ञानस्यैव प्रवर्तकत्वादन्य-स्यानुपयोगादिति चेन्न । इदं रजतं प्रातिभासिकमिति ज्ञानेऽपि प्रवृत्त्यापत्तेः । न ह्यस्य साक्षात्प्रवृत्तौ प्रतिबन्धकत्वं प्रवृत्तिविषयाभावानवगाहित्वात् । अपि तु प्रवृत्तिजनकप्रातिभासिकवैलक्षण्य-ज्ञानविघटकत्वेनैव । तथा च प्रवर्तकापरोक्षज्ञाने रजतत्वादिवदसदपि प्रातिभासिकवैलक्षण्यं प्रकारत्वेन प्रतिभासत इत्यङ्गीकार्यमिति भावः ।

### श्रीराघवेन्द्रतीर्थ

पूर्वम् असद्वैलक्षण्येत्यत्र षष्ठीतत्पुरुषमाश्रित्यासत्प्रतीत्यनङ्गीकारे बाधकोक्तिपरतया व्याख्यायाधुनाऽसच्च तद्वैलक्षण्यञ्चेति कर्मधारयमाश्रित्य ज्ञानपदञ्चापरोक्षज्ञानपरं वैलक्षण्यप्रतियोगि च प्रातिभासिकमिति चोपेत्यासतोऽपरोक्षप्रतीत्यनङ्गीकारे बाधकोक्तिपरतयाऽप्यवतार्य व्याचष्टे- तत्राप्यसत इत्यादिना ।। शुक्तिरूप्ये प्रतीतस्य प्रातिभासिकवैलक्षण्यस्यासत्त्वोपपादनायार्थ-क्रियानर्हस्येति हेतुगर्भविशेषणम् । तत्र हेतुः प्रातिभासिकतयेति । ननु प्रातिभासिके शुक्तिरूप्ये प्रातिभासिकवैलक्षण्यमसदस्तु तथाऽपि तद्भ्रान्तस्य न प्रतीयत एव येनासतस्तस्यापरोक्षधीरस्तीति स्यादित्यत आह- तथा चेति ।। तस्याऽभाने सतीत्यर्थः । अर्थक्रियानर्हं प्रातिभासिकं शुक्तिरूप्यं तथैव चेद्भ्रान्तः प्रतीयात्तदा तत्र न प्रवर्तेतैवेत्यर्थः ।

### गुरुराजीया

असतो वैलक्षण्यमिति विग्रहमाश्रित्य व्याख्यायासच्च तद्वैलक्षण्यञ्चेत्यपि विग्रहमाश्रित्य व्याख्याति- यद्यत्यन्तासत इति ।। प्रातिभासिकतयेति ।। अत्यन्तासद् यत् प्रातिभासिकवैलक्षण्यं तदपरोक्षज्ञानमित्यर्थः । रजते प्रातिभासिकवैलक्षण्यस्यात्यन्तासत्त्वोपपादनाय प्रातिभासिकतया अर्थक्रियानर्हस्येत्युक्तम् ।

अयमर्थः । रजतं प्रातिभासिकम्मन्यमानस्यापि मते तत्किं प्रातिभासिकतया प्रतीयते उत तद्वैलक्षण्येन । न प्रथमः । तथा प्रतीत्यनुपलम्भात् । तथा प्रतीतौ प्रवृत्त्यभावप्रसङ्गाच्च । न हि प्रातिभासिकं कदाचिदनेनार्थक्रियासूपयुक्तं दृष्टम् । येन तद्भावं प्रतीत्यापि प्रवर्तेत । द्वितीये तत्प्रातिभासिकवैलक्षण्यं सदुतासदिति । नाऽद्यः । तथा सति रजतस्य प्रातिभासिकत्वानुपपत्तेः । न हि यस्य प्रातिभासिकवैलक्षण्यं सत् तत्प्रातिभासिकमिति सम्भवति । न द्वितीयः । तथा सति प्रातिभासिके प्रातिभासिकवैलक्षण्यस्यासतो भ्रान्तिरूपापरोक्षज्ञानविषयत्वेऽसतोऽपरोक्षज्ञान-प्राप्तेरिति ।

## गोविन्दीया

असतः वैलक्षण्यं असद्वैलक्षण्यमिति तत्पुरुषसमासमपेक्ष्यार्थः कथितः । इदानीं असच्च तद् वैलक्षण्यं चेति कर्मधारयमाश्रित्यार्थं वक्तुं शङ्कामुद्भावयति- अथैवमिति ।। असत्परोक्ष-प्रतीत्यभावयोः व्याप्त्यभावेऽपि असदपरोक्षप्रतीत्यभावयोः व्याप्तिः स्यात् । तथा चार्थापत्ते-रनुपपत्तिरित्यर्थः । तर्हीति ।। प्रवृत्त्यनुपपत्त्या प्रातिभासिकतया अर्थक्रियाऽनर्हस्य रजतस्य प्रातिभासिकत्वेन धर्मेण सह भानं नोपपद्यते । किन्तु प्रातिभासिकवैलक्षण्येन भानमङ्गीकर्तव्यम् । प्रातिभासिके रजते प्रातिभासिकरूपवैलक्षण्यधर्मस्य शुद्धरजतत्वस्य धर्मस्य सत्त्वमङ्गीकर्तुं नोचि-तम् । यद्यङ्गीकृतं तदा रजतं प्रातिभासिकमेव न स्यात् । अतोऽसत्त्वमेवाङ्गीकार्यम् । तथा च सत् प्रातिभासिकवैलक्षण्यं तदपरोक्षज्ञानं भ्रान्तस्य नोपपद्येत । यदसत् तद् अपरोक्षतः न प्रतीयादिति भावेनैव व्याप्तेरनङ्गीकृतत्वादित्यर्थः । तथा चेति ।। अप्रवृत्तिप्रसङ्गात् माऽस्तु अपरोक्षतः प्रतीतिरिति वक्तुं न शक्यत इत्यर्थः ।

## नारोपन्तीया

असत्प्रातिभासिकवैलक्षण्यमिति । असत् अत्यन्तासत् । एतादृशं यत्प्रातिभासिक-वैलक्षण्यं तद्ज्ञानमित्यर्थः । यद्वा-असच्च प्रातिभासिकं चेति द्वन्द्वः । उभयवैलक्षण्यज्ञानमित्यर्थः । ननु रजतत्वप्रकारकमिष्टसाधनताज्ञानं प्रवर्तकं लाघवात् । नतु प्रातिभासिकवैलक्षण्यादि-प्रकारकज्ञानमपि । गौरवात् । तथा च क्वातिप्रसङ्ग इति चेत् । इदं प्रातिभासिकम् अत्यन्तासद्वा रजतमिति ज्ञानेऽपि१ । न च प्रामाण्यनिश्चय एव प्रवर्तकः । उक्तविधज्ञानञ्च बाधरूपमेव । तथा च तादृशबाधकाले प्रवर्तकज्ञानाभावादेव न प्रवृत्तिरिति वाच्यम् । प्रातिभासिकरजतोत्पत्ति-वादिनस्तव मते तद्वति तत्प्रकारकज्ञानस्वरूपप्रामाण्यस्यापि तत्र सत्त्वात् । प्रामाण्यसंशयादपि प्रवृत्तिदर्शनाच्च । ननु मन्मते नेदं प्रामाण्यम् । किन्तु असत्प्रातिभासिकानवगाहित्वमेवेति चेत् । आगतं तर्हि मार्गे । पुरोवर्तिनि असत्प्रातिभासिकवैलक्षण्यज्ञानं विना तदनुपपत्तेरिति घट्टकुट्यां प्रभातः । नन्वस्तु प्रातिभासिकत्वज्ञानं प्रतिबन्धकमिति तदभाव एव तत्र हेतुः । प्रातिभासिक-वैलक्षण्यज्ञानस्य तु कुतः प्रवर्तकत्वं सिध्येदिति चेत् । हन्त तर्ह्यनुमितौ व्याप्तिज्ञाने शाब्दबोधे योग्यताज्ञानं रजतार्थिप्रवृत्तौ च रजतत्वप्रकारकज्ञानं च कारणं न स्यात् । तत्राप्यव्याप्य-त्वायोग्यत्वरजतत्वाभावावगाहिनिश्चयानां प्रतिबन्धकत्वेन तत्तदभावस्यैव तत्र तत्र कारणत्व-मस्त्वित्यादेरपि सुवचत्वात् ।

ननु तर्ह्यस्तु प्रातिभासिकवैलक्षण्यज्ञानं प्रवर्तकं तावताऽपि प्रातिभासिकरजतभ्रमकाले प्रवर्तमानस्य भ्रान्तस्य जायमानं प्रातिभासिकवैलक्षण्यज्ञानम् असद्विषयकं कुतः स्यात् ? अनिर्वचनीयापर-पर्यायप्रातिभासिकविषयमेव किं न स्यात् ? शुक्तिरजते प्रातिभासिकप्रातिभासिकवैलक्षण्यस्यापि प्रातिभासिकत्वाङ्गीकारे बाधकाभावादिति चेन्न । समानसत्ताकयोर्विरोध इति वादिनस्तव मते प्रातिभासिकतद्वैलक्षण्यस्याभ्युपगन्तुमशक्यत्वात् । अन्यथा पारमार्थिकत्वाकारेण वियदादि-प्रपञ्चाभाववति ब्रह्मणि पारमार्थिकप्रपञ्चाभ्युपगमोऽपि स्यात् । न तु व्यावहारिकतत्स्वीकारः । व्यावहारिकशुक्तौ च व्यावहारिकमेव रजतं स्यात् । न तु प्रातिभासिकमिति यत्किञ्चिदेतदिति दिक् । तस्मात्सुष्ठूक्तं रजतस्य प्रातिभासिकवैलक्षण्यम् असदिति ।

## जनार्दनभट्टीया

‘असतः प्रतीतिं विना’ इति मूलवाक्यं प्रकारान्तरेण योजयति–अथैवं ब्रूयादित्यादिना ।।

१ननु शुक्तिरूप्ये असतः प्रातिभासिकवैलक्षण्यस्य ज्ञानाभावेऽपि विषयमाहात्म्यादेव प्रत्ययोपपत्तेरित्यत आह – प्रातिभासिकतयेति ।। अर्थक्रियानर्हस्येति ।। एवञ्च विषयसामर्थ्यात् न प्रवृत्तिः सम्भवतीति भावः । यदसत्प्रातिभासिकेत्यत्र असदिति व्यस्तं पदं प्रातिभासिकवैलक्षण्यविशेष-णम् । नहि प्रातिभासिके प्रातिभासिकवैलक्षण्यं सद् भवितुमर्हतीति भावः । ननु शुक्तौ रजतारोपस्थले रजते प्रातिभासिकवैलक्षण्यं न प्रतीयत एव तत्प्रतीत्यनङ्गीकारे किं बाधकम्? इत्यत आह – तथा चेति ।। असद्वैलक्षण्यज्ञानाभावे तत्र असत्वमेव प्रतीयेत । तथा च प्रवृत्तिर्न स्यात् । अत एव ‘सर्वतो विलक्षणं पदार्थस्वरूपं दृश्यते’ इत्यस्माभिरङ्गीकृतं सर्वैरप्येवमेव अङ्गीकर्तव्यमिति भावः ।

**असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः..**

**असतः अपरोक्षज्ञानाङ्गीकारे सर्वज्ञानेष्वनाश्वासशङ्का तन्निरासश्च**

***असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः***

### श्रीमज्जयतीर्थटीका

किं निबन्धनश्चायमसतोऽपरोक्षप्रतीतिगोचरताऽनङ्गीकारः । क्वचिज्ज्ञानस्यानालम्ब-नत्वेऽन्यत्राप्यनाश्वासप्रसङ्ग इति चेत् तत्किं परोक्षप्रतीतेरसद्विषयत्वे नानाश्वासप्रसङ्गः । समानश्चायं प्रसङ्गः प्रातिभासिकविषयप्रत्ययाङ्गीकारेऽपि । बाधकाद्विवेक इति चेत् समं प्रकृतेऽपि ।

### श्रीविजयीन्द्रभिक्षु

असतोऽपरोक्षप्रतीतौ साधकमुक्त्वा बाधकमपि निराकर्तुं पृच्छति-किंनिबन्धनश्चेति ।। अनालम्बनत्व इति ।। असद्विषयत्व इत्यर्थः । अनाश्वासेति ।। अप्रामाण्यशङ्केत्यर्थः । तथा च निष्कम्पप्रवृत्तिः क्वापि न स्यादिति भावः । असद्विषयकापरोक्षज्ञानाङ्गीकारेऽन्यत्राप्यनाश्वासः स्यादित्युक्तं तुल्यं परोक्षज्ञानेऽपीत्याह- तत्किमिति ।। असद्विषयत्वे अङ्गीकृते सतीत्यन्वयः । अनाश्वासप्रसङ्गः किं न । अनाश्वासप्रसङ्गोऽन्यत्रापि भवत्येवेत्यर्थः । किञ्चेदं रूप्यमिति ज्ञानस्य प्रातिभासिकविषयकत्वेऽप्यतिप्रसङ्गस्तुल्य इत्याह- समान इति ।। बाधकात् नेदं रूप्यमित्येवं-रूपात् । प्रकृतेऽपीति ।। असद्विषयकत्वेऽपीत्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

ननु तत्र प्रतीतं प्रातिभासिकवैलक्षण्यमप्यनिर्वचनीयमेव नासदित्यतः ‘तुष्यतु दुर्जनः’ इति भावेनापरोक्षज्ञानानङ्गीकारबीजान्याशङ्क्य निराह - किं निबन्धनश्चायमिति ।। तदिति । तत्किं नानाश्वासप्रसङ्गः इत्यन्वयः । वेदान्तादिशब्दजन्यपरोक्षज्ञानेऽप्यनाश्वासप्रसङ्गादसद्विषयपरोक्ष-धीरपि नाभ्युपेया स्यादिति भावः । एवं वदता प्रातिभासिकगोचरा भ्रान्तिरूपधीरपि नोपेया स्यादि-त्याह- समानश्चेति ।। अयम् १अप्रातिभासिकज्ञानेऽनाश्वासप्रसङ्ग इत्यर्थः । समं प्रकृतेऽपीति ।। असतोऽपरोक्षज्ञानाङ्गीकारेऽपि बाधके सत्यनाश्वासस्तदभावे त्वाश्वास इति बाधकादसद्विषया धीरिति विवेक इत्यर्थः ।तत्किमिति । अनाश्वासप्रसङ्गः किं नेत्यन्वयः । असतः परोक्षप्रतीतिविषयत्वाङ्गीकारे कदलीफलविषयकपरोक्षज्ञानेऽप्यसद्विषयत्वशङ्कापातेन तस्माज्ज्ञानान्निष्कम्पा प्रवृत्तिर्न स्यादि-त्यर्थः । समानश्चायमिति । इदं रजतमिति ज्ञानस्याप्रातिभासिकविषयत्वेऽयं घट इत्यादि-ज्ञानानामपि प्रातिभासिकविषयकत्वशङ्कयाऽनाश्वासप्रसङ्गेन निष्कम्पप्रवृत्तिस्तस्मान्न स्यादित्यर्थः । बाधकादिति । घटादिज्ञाने बाधकाभावाद्विश्वासः रजतज्ञाने तदभावादविश्वास इति

विवेको युक्त इत्यर्थः । सममिति । इदं रजतमित्याद्यपरोक्षज्ञानस्यासद्विषयकत्वे घटादिविषयकापरोक्षज्ञानेऽपि तदाशङ्कयाऽनाश्वासप्रसङ्गो नास्ति । बाधकसद्भावासद्भावाभ्यां विश्वासाविश्वासरूपविवेको युक्त इत्यर्थः ।

### गुरुराजीया

किञ्चासतो रजतस्यापरोक्षप्रतीतिविषयत्वे बाधकाभावेनाप्रयोजकतया यदसत् तन्नापरोक्षतया प्रतीयत इति व्याप्त्यसिद्ध्याऽसत्त्वेनापरोक्षप्रतीतिविषयत्वाभावापादनानुपपत्त्या नापरोक्षप्रतीतिविषयत्वेनासत्त्वाभावसिद्धिरित्याशयेनासतोऽपरोक्षप्रतीतिविषयत्वानङ्गीकारे निमित्तं पृच्छति- किंनिबन्धनश्चेति ।। इदं रजतमिति प्रतीतेः निरालम्बनत्वे अयं घट इत्यादिप्रतीतेरप्यविशेषेण निरालम्बनत्वापत्त्या तत्प्रसङ्गस्यैव विपक्षे बाधकत्वेनाप्रयोजकत्वाभावात् ‘यदसत् तन्नापरोक्षतया प्रतीयते’ इति व्याप्तिसिद्ध्या असत्त्वाभावसिद्धिरित्याशयः । तर्हि असतः परोक्षप्रतीतिविषयत्वेऽपि परोक्षज्ञानमात्रेऽसद्विषयकत्वशङ्काप्रसङ्गस्यैव विपक्षे बाधकत्वस्य वक्तुं शक्यत्वेनाप्रयोजकत्वानापत्त्या ‘यदसत् तन्न परोक्षतया प्रतीयते’ इति व्याप्तिसिद्ध्या तन्मूलकं परोक्षप्रतीतिविषयत्वस्याप्यनङ्गीकर्तव्यत्वापत्त्या परोक्षप्रतीत्यङ्गीकारेणासद्वैलक्षण्यज्ञानोपपाद-नानुपपत्तिप्रसङ्गादित्याशयेनाऽह- तत्किमिति ।।

किञ्चैवं प्रातिभासिकविषयत्वेऽयं घट इत्यादिप्रतीतेरपि तदापत्त्या तत्प्रसङ्गस्यैव विपक्षे बाधकत्वेन अप्रयोजकत्वाभावेन ‘यत्प्रातिभासिकं तदपरोक्षतया न प्रतीयते’ इति व्याप्तिसिद्ध्या रजतस्य प्रातिभासिकत्वेऽपरोक्षतया प्रतीतिविषयत्वाभावापादनोपपत्त्याऽपरोक्षप्रतीतिविषयत्वेन प्रातिभासिकत्वाभावसाधनस्य वक्तुं शक्यत्वेनापरोक्षप्रतीतेरसद्विषयत्वानङ्गीकारवत् प्रातिभासिक-विषयत्वस्याप्यनङ्गीकर्तव्यत्वेन प्रातिभासिकस्य तदङ्गीकारोऽप्यनुपपन्नः स्यादित्याशयेनाऽह- समानश्चेति ।। ननु चेदं रजतमिति प्रतीतेः प्रातिभासिकविषयत्वेऽपि न घटादिप्रतीतेः प्रातिभासिकविषयत्वं प्रसज्यते । बाधकभावाभावाभ्यां विशेषेण तत्प्रसङ्गमूलभूताविशेषव्याप्त्य-सिद्धेः । ततश्च नापरोक्षप्रतीतिविषयत्वेनाप्रातिभासिकत्वसिद्धिरिति भावेन शङ्कते- बाधकाद्विवेक इति चेदिति१ ।। हन्त तर्हि बाधकभावाभावाभ्यां विशेषेण प्रसङ्गमूलभूताविशेषव्याप्त्यसिद्ध्या इदं रजतमिति प्रतीतेरसद्विषयत्वेऽपि घटादिप्रतीतेरसद्विषयकत्वप्रसङ्गानवकाशेनासतोऽपि रजतस्येदं रजतमित्यपरोक्षप्रतीतिविषयत्वोपपत्त्या नापरोक्षप्रतीतिविषयत्वेन शुक्तिरजतस्यासत्त्वाभाव-सिद्धिरिति सममेवेत्याशयेनाऽह- समं प्रकृतेपीति ।।

### गोविन्दीया

क्वचिदिति ।। शशविषाणाद्यसज्ज्ञानस्य अनालम्बनत्वे आश्रयराहित्ये सर्वत्र घटपटादिज्ञाने अनाश्वासप्रसङ्ग इति चेदिति सामान्यतः शङ्केत्यर्थः । शशविषाणादेरत्यन्तासत्त्वेन तदपरोक्षप्रतीतेरेवाभावादिति । बहिरेव परिहृत्य तत्परोक्षप्रतीतिमादाय इयं शङ्केति विशेषनिष्ठतया शङ्काभिप्रायमाह- तत्किमिति ।। शशविषाणपदात् जायमानपरोक्षप्रतीतेरसद्विषयत्वेन तत्र यथाऽनाश्वासः तद्वद् घटपटादिपदाद् जायमानपरोक्षप्रतीतेः परोक्षत्वाविशेषाद् असद्विषयत्वेन तत्राप्यानाश्वासः स्यादिति प्रसङ्ग इत्यर्थः ।

उत्तरमाह- समानश्चेति ।। प्रातिभासिकरजतविषयापरोक्षप्रत्ययाङ्गीकारेऽपि अयं प्रसङ्गः समानः । तथा हि प्रातिभासिकरजतस्यात्यन्तासत्त्वेन तदपरोक्षप्रतीतौ यथाऽनाश्वासः अपरोक्षत्वाविशेषाद् घटपटाद्यपरोक्षज्ञानेऽपि असद्विषयत्वेन अनाश्वासः स्यादित्यर्थः । पुनरपि शङ्कते- बाधकादिति ।। नेदं रजतमिति बाधकज्ञानात् प्रातिभासिकरजतविषयापरोक्षप्रत्ययेऽनाश्वासः नायं घटपटादिरिति बाधकज्ञानाभावात् तद्विषयापरोक्षज्ञाने विश्वास इति विवेक इति चेदित्यर्थः । उत्तरमाह- सम-मिति ।। प्रकृतेऽपि शशविषाणप्रतीतावपि समं समाधानम् । तथा हि शशविषाणं नास्तीति पदात् जायमानं बाधकपरोक्षज्ञानात् शशविषाणमस्तीति पदात् जाते परोक्षज्ञानेऽनाश्वासः घटादिकं

नास्तीति पदप्रयोगाभावेन तज्जनितबाधकज्ञानाभावाद् घटोऽस्तीति पदात् जाते तत्परोक्षज्ञाने विश्वास इति विवेक इत्यर्थः ।

### जनार्दनभट्टीया

'साकारवादाद् असतो नभानात् संविद्विरोधाद् अथ हेत्वभावात् ।

धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्था ।'१

'नभानात्' इत्येतत् नसमासत्वात् समस्तमेकं पदम् । भानाभावादित्यर्थः । इति असदपरोक्षज्ञानाङ्गीकारे पञ्च बाधकानि । तत्र क्रममविवक्षयित्वा शङ्कते- क्वचिद् ज्ञानस्येति ।। अनालम्बनत्व इति ।। असद्विषयत्वे इत्यर्थः । अनाश्वासेति ।। अप्रामाण्यसंशयेत्यर्थः ।

## रजतज्ञानस्य सविषयत्वसमर्थनम्

**रजतज्ञानस्य सविषयत्वसमर्थनम्**

***असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः***

### श्रीमज्जयतीर्थटीका

न च वयं शून्यवादिन इव रजतज्ञानं निरालम्बनं ब्रूमः । शुक्तिविषयताऽङ्गीकारात् । केवलं स्वविषयं शुक्तिकाशकलमत्यन्तासद्रजततया अवगाहत इत्यसद्विषयमुच्यते । रजतज्ञानस्य शुक्तिकाविषयत्वं संविद्विरुद्धमिति चेन्न । रजतज्ञानस्येति कोऽर्थः । यदि रजतविषयस्येति तदाऽसिद्धिः । यदि रजतमिति ज्ञानस्येति तदा परस्यैव संविद्विरोधः । यदिदं रजतमित्यमनिषि२ सा शुक्तिकैवेति प्रतीतेः । यदाकारं यद्विज्ञानं तत्तद्विषयमिति तु प्रमितिनिष्ठेयं व्यवस्था ।

एतेन 'अपरोक्षज्ञानस्येन्द्रियसमुत्थत्वात्, इन्द्रियाणाञ्चार्थसन्निकृष्टानामेव ज्ञानहेतुत्वात्, असता च सन्निकर्षायोगान्नासद्विषयापरोक्षज्ञानम्' इति परास्तम् । शुक्तिसन्निकृष्टेनेन्द्रियेण दोषवशाद् रजततया तज्ज्ञानजननाङ्गीकारात् ।

### श्रीविजयीन्द्रभिक्षु

नन्वसद्विषयकज्ञानाभ्युपगमे शून्यवाद्यभिमतज्ञाननिरालम्बनत्वमनुमतं स्यादित्यत आह- न च वयमिति ।। शुक्तिविषयतेति ।। असन्मात्रविषयकज्ञानाभ्युपगम एव निरालम्बनतानुमतिरिति भावः । नन्वेवमसतः प्रतीतिर्नोपपादिता स्यात् । अधिष्ठानस्य यथार्थत्वादित्यत आह- केवल-मिति ।। स्वविषयं स्वविशेष्यम् । अत्यन्तेति ।। दोषवशादिति भावः । अवगाहत इति । रजतज्ञानमित्यनुषङ्गः । संविद्विरुद्धमिति ।। संवित्स्वभावविरुद्धमित्यर्थः । अन्यज्ञानस्यान्य-विषयकत्वायोगादिति भावः । असिद्धिरिति ।। रजतस्यासद्रूपतया भ्रमविषयत्वासम्भवादिति भावः। रजतमिति ज्ञानस्येति ।। रजताकारज्ञानस्येत्यर्थः । परस्य संविद्विरोधमुपपादयति- यदिदमिति ।। ननु यदि रजताकारं ज्ञानं तदा रजतविषयकत्वं दुर्वारम् । यदाकरं यज्ज्ञानं तत्तद्विषयमिति व्याप्तेरित्याह- यदाकारमिति ।। प्रमितीति ।। प्रमामात्रनिष्ठेत्यर्थः । एतेनेति ।। भ्रान्तेः शुक्ति-विषयकत्वकथनेनेत्यर्थः । अर्थसन्निकृष्टानामिति ।। यथावदर्थसन्निकृष्टानामित्यर्थः । ज्ञानहेतुत्वा-दिति ।। अपरोक्षज्ञानहेतुत्वादित्यर्थः । तज्ज्ञानेति ।। शुक्त्यपरोक्षज्ञानेत्यर्थः । तथा च विशेष्येन्द्रियसन्निकर्षः कारणम् । न तु विशेषणेन्द्रियसन्निकर्षोऽपि । न चैवमतिप्रसङ्गः । दोषस्य नियामकत्वादिति भावः ।

## श्रीवेदेशतीर्थ

न च वयमिति ।। तथा च क्वचिज्ज्ञानस्यानालम्बनत्व इत्युक्तमसिद्धमिति भावः । केचित्तु नन्वसद्विषयज्ञानाभ्युपगमे शून्यवाद्यभ्युपगतज्ञाननिरालम्बनत्वमनुमतं स्यादित्याशङ्क्याऽह- न चेति ।। इत्याहुः । शुक्तेः सत्त्वात्तद्विषयकत्वे कथमसद्विषयकत्वमित्यत आह- केवलमिति ।। संविद्विरुद्धमिति ।। रजतज्ञानानुव्यवसायसंविद्विरुद्धमित्यर्थः । तेन ज्ञाने रजतविषयत्वस्यैव भानादिति भावः । संविद्विरुद्धं संवित्स्वभावविरुद्धमित्यप्याहुः । तदाऽसिद्धिरिति ।। रजतस्य यत्सन्निकृष्टेत्यादिरूपविषयत्वाभावेन ज्ञाने रजतविषयकत्वस्यैवाभावादिति भावः । रजतमिति ज्ञानस्येति ।। रजतोल्लेखिज्ञानस्येत्यर्थः । ननु यदाकारं यद्विज्ञानं तत्तद्विषयमिति व्याप्त्या रजतज्ञानस्यापि रजतोल्लेखित्वरूपतदाकारत्वे रजतविषयत्वं दुर्वारमिति नासिद्धिरित्यत आह- यदाकारमिति ।।

## द्वैतद्युमणि

एवं विपक्षे बाधकेनासतोऽपरोक्षप्रतीतिं समर्थ्य अप्रयोजकत्वादपि असत्त्वमपरोक्ष-प्रतीतिविषयत्वाभावव्याप्यम् । सत्त्वमसद्विलक्षरत्वं सत्तादात्म्यपर्यवसन्नं वा अपरोक्षप्रतीति-विषयताव्यापकमिति च पक्षं निराकुरुते- किन्निबन्धन इति ।। अनाश्वास इति ।। इदं रजतमित्यपरोक्षज्ञाने असद्रजतस्य विषयत्वाङ्गीकारे निर्विषयकत्वमेवाऽगतम् । विषयो नास्तीत्य-स्यासद्विषयकत्वमित्यस्याभिन्नार्थकत्वात् । तथा चापरोक्षज्ञानत्वस्य निर्विषयकत्वसामानाधिकरण्ये घटादिप्रत्यक्षेष्वपि तादृशसाधारणधर्मदर्शनेन विशेषादर्शनेन च निर्विषयकत्वसन्देहेन तद्विषयासिद्ध्या घटादिगोचरप्रवृत्त्यादिकार्यविलयापात इति अनुकूलतर्कसत्त्वान्नाप्रयोजकतेति भावः । न च रजतस्यासत्त्वेऽपि शुक्तेरेव विषयीभूतायाः सत्त्वात् कथं तादृशज्ञानस्य निर्विषयत्वप्रसक्तिरिति वाच्यम् । विशष्टैकार्थविषयकैकज्ञाने एकस्य सत्त्वमेकस्यासत्त्वं न वक्तुं शक्यम् । सदसदुपरागाभावेन सदसदुभयघटितविशिष्टायोगात् । अत एकस्य प्रकारीभूतरजतस्यासत्त्वे तदुपरक्तं सर्वमसदेवेति प्राप्तमिति पराभिधानात् । तमेव 'न च वयम्' इत्यादिनाऽनुपदमेव निराकरिष्यति ।

परमुखेनैव समाधिं वाचयितुं प्रतिबन्दीं सूचयन् उत्तरयति- तत् किमिति ।। अनाश्वासप्रसङ्गो न इति यत् तत् किं केनोपपाद्यं तदेवाऽलोचयेत्यर्थः । बाधकाद् विवेक इत्यादि त्वयोच्यमानं ममापि सममिति हृदयम् । असतः परोक्षप्रतीतेः प्राक् व्यवस्थापितत्वान्न कश्चित् क्षुद्रोदप्रवः । अपरोक्षस्थल इव परोक्षस्थलेऽपि अनिर्वचनीयस्यैव भानमिति व्यधिकरणप्रकारकत्वमेव परोक्षज्ञानस्येति वा आग्रहकरणेऽप्याह- समानश्चेति ।। प्रत्ययेति ।। अपरोक्षप्रत्यक्षेत्यर्थः । तस्यैव प्रक्रान्तत्वात् ।

रजतमिति ज्ञानस्येति ।। तादृशव्यवहारानुकूलशक्तिमज्ज्ञानस्येत्यर्थः । यदिदमिति ।। इदंविषयकरजतशब्दोल्लेखादिप्रयोजकविषयिताश्रयज्ञानवानहमित्यर्थः । सेति विधेयापेक्षया स्त्रीलिङ्गः । यदिदमित्यत्र तु सामान्यापेक्षया नपुंसकता । अभिलापकवाक्ये इदंपदार्थविषयकत्वं तत्सन्निकर्षजन्यत्वं यदि प्रतीयते तदा तदन्वयव्यतिरेकज्ञानं तत् । यदि च तत्प्रयोज्या विषयतैव तदा तज्ज्ञानं भ्रमानुव्यवसायात्मकमेवेति विवेकः ।

ननूत्पन्नानां घटादिज्ञानानां 'इदं घटस्य ज्ञानं न पटस्य' 'पटस्य ज्ञानं न घटस्य' इति व्यवस्थायै यन्निरूपितोल्लेखाकारापरपर्यायविषयितावद् यज्ज्ञानं तत् तन्निष्ठस्वजनकसन्निकर्षाश्रयत्वविषयता-निरूपकमिति व्याप्तिरङ्गीकर्तव्या । तथा च घटशब्दादिव्यवहारानुकूलतादृशविषयितानिवेशबलाद् घटाद्यनुयोगिकस्वकरणसन्निकर्षज्यन्यत्वमनुमाय 'घटस्य ज्ञानम्' इत्यादि व्यवहरतीति वक्तव्यम् । तच्चेदानीं न घटते । रजातेल्लेखिज्ञानस्य रजतसन्निकर्षाजन्यत्वेन व्यभिचारादित्यत आह- यदाकारमिति ।। प्रमितीति ।। तथा चाबाधितनिरूपितविषयितैव हेतुरित्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

क्वचिज्ज्ञानस्यानालम्बनत्व इति यत्परेणाऽपादकमुक्तं तदसिद्धमित्याह- न वयमित्या-दिना ।। 'यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषयः' इति लक्षणमुपेत्याऽह-शुक्ति-विषयतयेति ।। तर्ह्यसद्विषयत्ववादो रिक्तः स्यादित्यत आह- केवलमिति ।। इतरासहायं स्वविषयमेवेत्यर्थः । शुक्तिज्ञानमन्यद् रजतज्ञानं चान्यदिति ज्ञानद्वैविध्यनिरासायैतदुक्तिः । केवलं रजततयाऽवगाहते न तु रजतमपीति वा रजतसन्निकृष्टकरणेन जायत इति वाऽर्थः । संविद्विरुद्ध-मिति ।। रजतसंविदिति न स्यात् शुक्तिसंविदित्येव स्यादिति १शुक्तिकासंवित्त्वं रजतसंवित्त्व-विरुद्धमापद्यत इत्यर्थः। असिद्धिरिति ।। उक्तविषयत्वस्य२ तत्राभावादिति भावः । अमनिषमिति ।। ज्ञानवानभूवमित्यर्थः । नन्विदं रजतमिति रजतोल्लेखितया रजताकारत्वाद् रजतविषयं स्यादेव । 'यद्यदाकारं तत्तद्विषयं' इति व्याप्तेरित्यत आह- यदाकारमिति ।। विरुद्धमिति । तथा च रजतज्ञानं शुक्तिविषयकं न भवति रजतज्ञानत्वादि-त्यनुमानमनेनोक्तं भवति । प्रमितिनिष्ठेति । यद्विज्ञानं यदुल्लेखि तत् तद्विषयमिति व्यवस्था प्रमितिनिष्ठैव, भ्रमे त्वन्योल्लेखित्वेऽप्यन्यविषयकत्वसम्भवेन रजतोल्लेखित्वेऽप्यन्यविषयकत्वं सम्भवतीत्यर्थः ।

### गुरुराजीया

एवं प्रसङ्गमूलभूतविशेषव्याप्तेरभावाद् बाधकभावाभावाभ्यां विशेषेणाविशेष-व्याप्तेरप्यसिद्धेः घटादिप्रतीतेरसद्विषयत्वशङ्काप्रसङ्गं३ निरस्य इदं रजतमितिप्रतीतेः निरालम्बनत्वा-भावेनाऽपादकस्यैवासिद्धेर्न घटादिप्रतीतेस्तत्प्रसङ्गावकाश इत्याशयेनाऽह- न च वयमिति ।। यावद्धि अस्मिन् प्रत्यये भासते तस्य सर्वस्याप्यसत्त्वे निरालम्बनत्वं स्यात् । न चैवमङ्गीक्रियत इत्यर्थः । तत्कथमित्यत आह- शुक्तीति ।। तस्याश्च सत्त्वादिति भावः । तर्हि कथमिदं रजतमिति प्रतीतेरसद्विषयत्वमित्यत आह- केवलमिति ।। संविद्विरुद्धमिति ।। भासमानत्वाति-रिक्तालम्बनत्वाभावाद् अन्यावभासिज्ञाने अन्यावभासनं संविद्विरुद्धमित्यर्थः । एतच्च४ संविद्विरुद्धत्वस्वरूपं नयवीथ्यां स्पष्टम्-

'अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।

वेद्यः स एव नान्यः स्याद्वेद्यं१ वेद्यस्य लक्षणम् ।। १ ।।

इदं रजतमित्यत्र रजतञ्चावभासते ।

तदेव तेन वेद्यं स्यान्न च शुक्तिरवेदनात् ।। २ ।।

तेनान्यस्यान्यथा भानं प्रतीत्यैव पराहतम् ।

परस्मिन् भासमाने हि न परं भासते यतः ।। ३ ।।' इति

यच्च संविद्विरुद्धमित्यस्य तदनुव्यवसायरूपसंविद्विरुद्धमित्यर्थकथनं तत्तु संविद्विरुद्धस्वरूपोप-दर्शकोदाहृतनयवीथ्यदर्शनमूलकत्वेनायुक्तत्वादुपेक्ष्यम् । असिद्धिरिति ।। शुक्तिसन्निकृष्टकरण-जन्यत्वेन शुक्तिविषयत्वस्यैव सिद्ध्या रजतसन्निकृष्टकरणाजन्यत्वेन रजतविषयत्वाभावसिद्धेरिति भावः ।

ननु 'यदाकारं यद्विज्ञानं तत्तद्विषयम्' इति व्याप्त्या रजतज्ञानस्य रजताकारत्वेन तद्विषयत्वसिद्धेः नासिद्धिरित्यतः 'यदाकारा या प्रमितिः सा तद्विषया' इत्येव व्याप्तौ रजताकारत्वेन रजतप्रमितेस्तद्विषयत्वसिद्धावपि तद्भ्रमस्य रजताकारत्वेन तद्विषयत्वासिद्ध्या असिद्धिरेवेत्याशयेनाऽह- यदाकारमिति ।।

### गोविन्दीया

संविद्विरुद्धमिति ।। ज्ञानविषये अनेकाकारत्वाभावात् शुक्तिकाविषयत्वं संविद्विरुद्धमित्यर्थः । यदीति ।। रजतविषयस्य ज्ञानस्येत्यर्थः स्यात् तदा रजतस्यैवाभावेन विषयाभावात् तद्विषयज्ञानस्यासिद्धिरित्यर्थः । यदीति ।। रजतमिति ज्ञानस्येत्यर्थः स्यात् तदाऽस्माकं शुक्तिकाविषयत्वं न विरुद्धम्, ज्ञानस्य भ्रमरूपत्वात् । रजतविषयत्वमङ्गीकर्तुः परस्यैवोत्तरत्र जायमानेन यदिदं रजतमिति अमनिषि सा शुक्तिकैवेत्येवंरूपेण ज्ञानेन विरोध इत्यर्थः । यदाऽऽकारमिति ।। इयं व्यवस्था मर्यादा प्रमितिनिष्ठा यथार्थज्ञाननिष्ठा न तु भ्रमनिष्ठे-त्यर्थः । एतेनेति ।। उपपादनेनेत्यर्थः ।

### नारोपन्तीया

तदाऽसिद्धिरिति ।। जनकीभूतयत्प्रतियोगिकसन्निकर्षवता यद्ज्ञानं जन्यते स तद्विषय इत्यङ्गीकारात् । आकाशसन्निकृष्टेन चक्षुषा जायमानघटज्ञानं प्रत्याकाशस्य विषयता माप्राङ्क्षी-दित्यादिमविशेषणम् । आकाशसन्निकर्षस्यावर्जनीयसन्निधेर्घटज्ञानं प्रत्यजनकत्वान्न प्रसङ्गः । अनुमितौ शाब्दे च ज्ञाने करणीभूतधूमादेः शब्दस्य च वह्निनिरूपितव्याप्तिरूपस्यार्थ-निरूपितशास्त्राख्यस्य सन्निकर्षस्य विद्यमानत्वान्नातिव्याप्तिरिति भावः। रजतमिति ज्ञानस्येति ।। रजतत्वप्रकारकज्ञानस्येत्यर्थः । यदाकारमिति । यत्प्रकारकमित्यर्थः ।

### जनार्दनभट्टीया

असतो न भानादिति बाधकं परिहरति– न च वयमिति ।। निरालम्बनमिति ।। असन्मात्रविषयमित्यर्थः ।

ननु रजतभ्रमस्य शुक्तिविषयत्वे तस्याः सत्वेन कथं भ्रमत्वम्? इत्यत आह – केवलमिति ।। संविद्विरोधं बाधकं शङ्कते– रजतेति ।। संविद्विरुद्धमिति ।। १अन्यज्ञानं नान्यविषयमिति संविद्-विरुद्धमित्यर्थः । तदाऽसिद्धिरिति ।। रजतसन्निकृष्टकरणजन्यत्वाभावेन रजतादिविषयकत्वादि-त्यर्थः । सा शुक्तिकैवेतीति ।। इतिशब्देन तथाऽवगमादिति भावः । साकारवादं परिहरति– प्रमिति-निष्ठेति ।। न भ्रमनिष्ठेत्यर्थः । तथा च भ्रमस्य असद्विषयकत्वेन स बाधक इति भावः । हेत्वभावलक्षणं बाधकं परिहरति – एतेनेति ।। वक्ष्यमाणेनेत्यर्थः ।

## न च बाध्यं जगदित्यत्र किञ्चिन्मानम् ..

**वियदादिजगतो ज्ञाननिवर्त्यत्वशङ्का तन्निरासश्च**

### श्रीमज्जयतीर्थटीका

न वयमन्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वं बाध्यत्वं ब्रूमः । येन सतस्तदस्तीति व्याप्तिभङ्गः स्यात् । किं नाम, ज्ञाननिवर्त्यत्वमित्यत आह-

## मूल

***न च बाध्यं जगदित्यत्र किञ्चिन्मानम् ।***

न तावज्ज्ञाननिवर्त्यत्वमम्बरादौ प्रत्यक्षसिद्धम् । अप्रतीतेः । न चानिर्वचनीयत्वहेतुसिद्धम् । परस्पराश्रयप्रसङ्गात् । दृश्यत्वादयस्तु निरसिष्यन्ते । 'ज्ञाते द्वैतं न विद्यते' इत्याद्यागमस्यान्य-परत्वमन्यत्रोपपादितम् । ज्ञानान्मोक्षाभिधानञ्चान्यथैवोपपादितम् । अतो ज्ञाननिवर्त्यत्वं चेद्बाध्यत्वं तर्हि तस्य वियदादावभावात्कस्यानुपपत्त्या तत्र सद्विलक्षणत्वप्रतिपत्तिः स्यात् ।

### श्रीविजयीन्द्रभिक्षु

ननु 'सच्चेन्न बाध्येत' इत्यत्र बाध्यत्वं सत्त्वेऽप्युपपन्नमिति यदुक्तं तन्न । बाध्यत्वमिह ज्ञाननिवर्त्यत्वमेव विवक्षितम् । न तूक्तम् । न च सदसदात्मनोर्ज्ञानेन निवृत्तिरिति कथं सत्त्वेऽपि बाध्यत्वमुपपन्नं स्यादित्यशङ्कानिरासार्थं न च बाध्यं जगदित्यत्र किञ्चिन्मानम् इत्युक्तम् । तदवतारयति- न च वयमिति ।। अनिर्वचनीयहेतुसिद्धमिति ।। अनिर्वचनीयत्वरूपहेतुसिद्धमित्यर्थः। परस्पराश्रयेति ।। अनिर्वचनीयत्वसिद्धेर्ज्ञाननिवर्त्यत्वरूपबाध्यत्वसिद्ध्यधीनत्वादित्यर्थः । ननु दृश्यत्वादिहेतुनैवाम्बरादेः ज्ञाननिवर्त्यत्वसिद्धेः क्व परस्पराश्रयप्रसङ्ग इत्यत आह- दृश्यत्वादय-स्त्विति ।। निरसिष्यन्त इति ।। दृश्यत्वादीनामम्बरादौ ज्ञाननिवर्त्यत्वसाधकतानिरासः करिष्यत इत्यर्थः । ननु 'विकल्पो विनिवर्तेत' इति माण्डूक्यश्रुत्यैव वियदादेः ज्ञाननिवर्त्यत्वं सेत्स्यतीत्यत आह - ज्ञाते द्वैतमिति ।। विकल्पो भेदप्रपञ्चो यद्यज्ञानादिना केनचित्कल्पितः स्यात्तर्हि निवर्तीति । न च निवर्तते । तस्मान्न कल्पितः' इत्ययमेव सतां वादः । श्रुत्यादिषु उपदेशात् । द्वैतं न विद्यत इति वादस्तु अज्ञाते तत्वाज्ञानदशायां अज्ञानिनामेवायं वाद इति अन्यत्र तद्भाष्यादावुक्तमित्यर्थः ।

ननु 'तमेवं विदित्वाऽतिमृत्युमेति'१ इत्यादौ ज्ञानान्मोक्षः प्रतीयते । मोक्षश्च बन्धनिवृत्तिरेव । बन्धश्च नाज्ञानादतिरिच्यते । तच्च वियदादिसकलजगदुपादानमिति ज्ञानादज्ञाननिवृत्तौ तदुपा-देयस्य सर्वस्य जगतोऽपि निवृत्तिरिति प्रपञ्चमात्रे ज्ञाननिवर्त्यत्वसिद्धिरित्यत आह- ज्ञानादिति ।। बन्धस्यापि न ज्ञानान्निवृत्तिः । किं तु भगवत्प्रसादादेव । 'यमेवैष वृणुते तेन लभ्यः'२ 'यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण' इत्यादिश्रुतेः । ज्ञाननिवर्त्यत्वेऽपि गरुड-ध्याननिवर्त्यविषस्येव, सेतुदर्शननिवर्त्यब्रह्महत्यादेरिव, सुहृद्दर्शननिवर्त्यदुःखादेरिव च सत्यत्वोप-पत्तेश्चेत्याद्यन्यथैवान्यत्रोपपादितमित्यर्थः । न च तथाऽपि प्रपञ्चस्य ज्ञाननिवर्त्यत्वं दुर्वारम् । 'तदा विद्वान्नामरूपाद्विमुक्तः'३ इत्यादिश्रुत्यैव नामरूपाऽत्मकप्रपञ्चस्य ज्ञाननिवर्त्यत्वादेरभिधानादिति वाच्यम् । 'निगडाद्विमुक्तः' इत्यत्रेव प्रपञ्चस्यानिवृत्तावपि विश्लेषमात्रेण ज्ञानाद्विमुक्तत्वोपपत्तेः। यद्वा यो विद्वांस्तदीयनामरूपनिवृत्तिमात्रप्रतिपादनपरत्वेन सकलप्रपञ्चस्य ज्ञाननिवर्त्यत्व-प्रतिपादनपरत्वासिद्धेश्चेति । उपसंहरति- अत इति ।। कस्यानुपपत्त्येति ।। एतच्चोपलक्षणम् । तस्य सत्त्वेऽप्युक्तरीत्या अन्यथोपपत्त्येत्यपि द्रष्टव्यम् ।

### श्रीवेदेशतीर्थ

अनिर्वचनीयहेतुसिद्धमिति ।। अनिर्वचनीयत्वहेतुसिद्धमित्यर्थः । परस्पराश्रय-प्रसङ्गादिति ।। सिद्धेऽनिर्वचनीयत्वे तेन बाध्यत्वसिद्धिः । तत्सिद्धौ तदन्यथानुपपत्त्याऽनिर्वच-नीयत्वसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः । ननु दृश्यत्वादिहेतुभिरेवाम्बरादेर्ज्ञाननिवर्त्यत्वसिद्धेः क्व परस्पराश्रयप्रसङ्ग इत्यत आह- दृश्यत्वादयस्त्विति ।। ननु 'विकल्पो विनिवर्तेत' इत्यादिश्रुतिरेव ज्ञाननिवर्त्यत्वे मानमित्यत आह- ज्ञाते द्वैतमिति ।। 'विकल्पो भेदप्रपञ्चः यद्यज्ञानादिना केनचित् कल्पितः स्यात्तर्हि निवर्तेत । न च निवर्तते । तस्मान्न कल्पितः' इत्ययमेव सतां वादः । श्रुत्यादिषूपदेशात् । 'द्वैतं न विद्यत' इति वादस्त्वज्ञाते तत्त्वाज्ञानदशायाम् । अज्ञानिनामेवायं वाद इत्यन्यपरत्वं माण्डूकोपनिषद्भाष्यादावुपपादितमित्यर्थः । ननु 'तरति शोकमात्मवित्' इत्यादिना ज्ञानान्मोक्षोऽभिधीयते । दुःखादिबन्धनिवृत्तिर्हि मोक्षः । न चाज्ञानोपादानकस्य साक्षाज्ज्ञान-निवर्त्यत्वम् । 'ज्ञानमज्ञानस्यैव निवर्तकम्' इति व्याप्तेः । तथा चाऽत्मज्ञानेनाऽज्ञाने निवृत्ते तदुपादानको बन्धः

स्वयमेव निवर्तत इत्यात्मज्ञानान्मोक्षाभिधानान्यथानुपपत्त्या वियदादि-प्रपञ्चस्याज्ञानोपादानकस्य ज्ञाननिवर्त्यत्वसिद्धिरित्यत आह- ज्ञानादिति ।। बन्धस्यापि ज्ञानान्निवृत्तिर्नास्त्येव । किन्तु भगवत्प्रसादात् । 'यस्य प्रसादात्' इति श्रुतेः । ज्ञाननिवर्त्यत्वेऽपि गरुडध्यानरूपज्ञाननिवर्त्यविषस्येव, सेतुदर्शननिवर्त्यपापस्येव, सुहृद्दर्शननिवर्त्यदुःखस्येव सत्यत्वोपपत्तेश्चेत्यन्यत्रान्यथैवोपपादितमिति भावः । कस्यानुपपत्त्येति ।। एतच्चोपलक्षणम् । तस्य सत्त्वेऽप्युक्तरीत्याऽन्यथोपपत्त्या चेत्यपि द्रष्टव्यम् । ननु 'ब्रह्म वेद ब्रह्मैव भवति'१ इति ब्रह्मभावरूपमोक्षो ब्रह्मज्ञानादभिधीयते । न चासौ बन्धस्य ज्ञाननिवर्त्यत्वं विनोपपद्यते । अनिवृत्तबन्धस्य ब्रह्मभावासम्भवात् । अतो ज्ञानिनो मोक्षाभिधानानुपपत्तिप्रसूतार्थापत्त्यैव जगति ज्ञाननिवर्त्यत्वसिद्धिरित्यत आह- ज्ञानादिति ।। सत्यं मोक्षो बन्धनिवृत्तिमपेक्षत इति । सा च भगवत्प्रसादेनैव । न ज्ञानेनेत्यन्यत्रोप-पादितमिति भावः ।

### श्रीराघवेन्द्रतीर्थ

शङ्कते - न वयमिति ।। परस्परेति ।। अनिर्वचनीयत्व-सिद्धावुक्तरूपबाध्यत्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिरित्येवमित्यर्थः । निरसिष्यन्त इति । 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इत्यत्रेति भावः। अन्यत्रेति ।

'द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।'२

इत्याद्याध्यायान्त-अनुव्याख्यानतत्त्वनिर्णयादावित्यर्थः । ननु 'तमेवं विद्वानमृत इह भवति'३ 'दृष्ट्वैव तं मुच्यते'१ इत्यादौ ज्ञानान्मोक्षोक्तिस्सर्वस्याऽविद्यकत्वं विना न युक्ता । ज्ञानस्य साक्षादज्ञानस्यैव निवर्तकत्वेन तन्निवृत्तिद्वारैव बन्धनिवृत्तेः वाच्यत्वादित्यत आह - ज्ञानादिति ।।

इत्याद्युक्तिबलेन च । 'ज्ञानस्वभावतोऽपि स्यान्मुक्तिः' । इति ।

'इत्युक्तेर्बन्धमिथ्यात्वं नैवमुक्तिरपेक्षते ।'२ इति ।

'अतो यथार्थबन्धस्य विना विष्णुप्रसादतः । अनिवृत्तेस्तदर्थं हि जिज्ञासा'३ इत्यादौ सत्यस्यापि बन्धस्य विष्णुप्रसादद्वारा निवृत्तिरित्युपपादितमित्यर्थः । नन्वद्वैतज्ञानाद्बन्धनिवृत्तिरूपो मोक्षस्तावच्छ्रूयते । तत्र बन्धस्य सत्यत्वे ज्ञानान्निवृत्तिर्न सम्भवति । सत्यस्याऽऽत्मनो निवृत्त्यभावात् । तथा च यतो ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमित्यज्ञानकार्यत्वप्राप्त्या बाध्यत्वापरपर्यायं मिथ्यात्वमेव प्राप्तम् । अज्ञानतत्कार्ययोरन्य-तरत्वस्यैव मिथ्यात्वादित्यत आह- ज्ञानान्मोक्षेति ।। अन्यथेति ।। न वयं मोक्षस्य ज्ञानसाध्यत्वं ब्रूमः । किन्नाम ज्ञानजन्यप्रसादसाध्यत्वमेव ब्रूमः । प्रसादनिवर्त्यत्वं च सत्यस्यापि सम्भवति । सत्यस्यापि निगडबन्धस्य प्रभुप्रसादान्निवृत्तिदर्शनात् । अस्तु वा बन्धस्य ज्ञाननिवर्त्यत्वं, तथाऽपि तदन्यथानुपपत्त्या न मिथ्यात्वसिद्धिः । सत्यस्यापि विषस्य गरुडध्याननिवर्त्यत्वस्य सत्यस्यापि ब्रह्महत्यादिपातकस्य सेतुदर्शनान्निवृत्तिदर्शनादिति भावः ।

### गुरुराजीया

यत्तु अनिर्वचनीयहेतुसिद्धमिति प्रतीकमुपादायानिर्वचनीयत्वहेतुसिद्धमिति व्याख्यानं तत्तु स्वकीयपुस्तकपाठदर्शनेनायुक्तत्वादुपेक्ष्यम् । सार्वजनीनचिरन्तनाचिरन्तनपुस्तकेषु अनिर्वचनीयत्वहेतुसिद्धमित्येव पाठदर्शनेन स्वपुस्तकेऽन्यथापाठस्य लेखकदोषमात्रमूलकत्वाव-धारणात् ।

परस्पराश्रयप्रसङ्गादिति ।। सिद्धेऽनिर्वचनीयत्वे तेन बाध्यत्वसिद्धिः । तत्सिद्धौ च तदन्यथानुपपत्त्या अनिर्वचनीयत्वसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः । ननु दृश्यत्वादिहेतुभि-रेवाम्बरादेर्ज्ञाननिवर्त्यत्वसिद्धेः क्व परस्पराश्रयत्वप्रसङ्ग इत्यत आह- दृश्यत्वादयस्त्विति ।। 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इत्यादिनेति शेषः । ननु-

'विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।

उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।।'१

इति २श्रुतिः । 'विकल्पः प्रपञ्चः यदि केनचित्कल्पितः स्यात्तदा निवर्तेत' इति यद्युपनिबन्धात् निवर्तेतेति लिङ्श्रवणाच्चात्र तर्क एवोपनिबद्धः । ३तर्कस्य च न वस्तुस्थितिः । तर्कस्य च न च निवर्तते तस्मान्न कल्पितः इति विपर्ययपर्यवसानमावश्यकम् । अन्यथा तर्काभासत्वप्रसङ्गात् । अतोऽज्ञानिनां मते द्वैतं न विद्यत इत्येवमर्थपरत्वं तु तत्वनिर्णयादावुपपादितमित्यर्थः ।

ननु 'तरति शोकमात्मवित्' इत्यादिना ज्ञानान्मोक्षः श्रूयते । बन्धनिवृत्तिर्हि मोक्षः । तस्य च ज्ञानसाध्यत्वमज्ञानोपादानकत्वेनोपपद्यते । ज्ञानेनाज्ञाननिवृत्तेः । उपादाननिवृत्तावुपादेय-निवृत्तेरावश्यकत्वादज्ञानोपादानकबन्धनिवृत्तिध्रौव्यात् । न सत्यत्वे । यतो 'ज्ञानमज्ञानस्यैव निवर्तकम्' इति व्याप्त्या ज्ञानस्य साक्षादज्ञाननिवर्तकत्वस्याज्ञाननिवृत्तिद्वारा तत्कार्यनिवर्तकत्वस्य सिद्धत्वेन बन्धस्य सत्यत्वे ज्ञाननिवर्त्यत्वानुपपत्तेरित्यतः सत्यस्यापि पापस्य सेतुदर्शनेन तादृशविषस्य च गरुडध्यानेन निवृत्तिदर्शनेन ज्ञानस्याज्ञानमात्रनिर्तकत्वासिद्ध्या सत्यस्यापि ज्ञाननिवर्त्यताया अनुव्याख्यानादवुपपादितत्वेनान्यथानुपपत्तेरेवाभावान्न तया दुःखादिरूपबन्धस्य मिथ्यात्वसिद्धिरित्याशयेनाऽह- ज्ञानान्मोक्षाभिधानमिति ।।

### गोविन्दीया

परस्परेति ।। अनिर्वचनीयत्वस्यैव साध्यत्वेनाद्यापि असिद्धत्वात् हेतुत्वायोगेनानिर्वच-नीयत्वसिद्धौ बाध्यत्वसिद्धिः, तत्सिद्धौ तत्सिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः । ज्ञाते द्वैतमिति ।।

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।

उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।।

विकल्पः= भेदप्रपञ्चः यदि अज्ञानादिना केनचित् कल्पितः स्यात्, तर्हि निवर्तेत न च कल्पितः, अतो न निवर्तते । इत्ययं वादः सतामेव श्रुत्यादिषूपदेशात् द्वैतं= भेदः न विद्यत इति वादः अज्ञाते= तत्त्वाज्ञानदशायाम् अज्ञानिनामेवेति अकारप्रश्लेषेण आगमस्य अन्यपरत्वेन अन्यत्र= मण्डूकोपनिषदादौ उपपादित इत्यर्थः । ज्ञानादिति ।। 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मज्ञानात् ब्रह्मभावरूपमोक्षोऽभिधीयते । स च बन्धस्य ज्ञाननिवर्त्यत्वं विना नोपपद्यत इति अर्थापत्त्या ज्ञाननिवर्त्यत्वसिद्धिरित्याशङ्क्य, तेन वाक्येन भगवत्प्रसादजात् ज्ञानाद् बन्धनिवृत्तिरूपमोक्षोऽभिधीयत इति प्रकारान्तरेणोपपादितम् । न तु बाधकज्ञानाद् ब्रह्मभावरूपमोक्षः । अतो ज्ञाननिवर्त्यत्वे न मानमित्यर्थः ।

### नारोपन्तीया

ज्ञाते द्वैतं न विद्यत इति ।।

'विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।

उपदेशादयं वादोज्ञाते द्वैतं न विद्यते ।।'

इति श्रुतिः । विकल्पः प्रपञ्चः यदि केनचित् कल्पितः स्यात् । तदा विनिवर्तेत इति यद्युपबन्धाल्लिङन्वयाच्च तर्क एवात्र श्रुतावुपनिबद्धो न तु वास्तवार्थकथनम् । तर्कस्य विपर्ययपर्यवसानमावश्यकमिति, न च निवर्तते तस्मान्न कल्पितः, किं तु पारमार्थिक एवेति वाक्यशेेषोऽवगम्यते । एतादृशवादश्च गुर्वाद्युपदेशाद्भवति । तस्माद्वैतं न विद्यत इति चेत् तत्तु अज्ञाने अज्ञानिनां मत इत्यर्थोऽस्याः श्रुतेर्ग्रन्थान्तरे दर्शित इत्यर्थः ।

ज्ञानेन मोक्षाभिधानमिति१ ।। 'ज्ञानेनाऽमृती भवति' इत्यादिना ज्ञानेन मोक्षो भवतीत्युच्यते । मोक्षश्च संसारनिवृत्तिः । न च संसारस्य सत्यत्वे अज्ञानकल्पितत्वाभावे ज्ञाने न तन्निवृत्तिर्भवतीति अर्थात्तस्य मिथ्यात्वं सिध्यति । यतो ज्ञानमज्ञानस्यैव निवर्तकमिति नियम इति पराभिप्रायः । सत्यस्यैव ब्रह्मवधजन्यस्य पापस्य सेतुदर्शनेन, विषस्य गरुडध्यानेन, पूर्वज्ञानस्य चोत्तरज्ञानेन निवृत्तेर्लोकवेदयोः सिद्धत्वात् संसारस्य सत्यत्वेऽपि तदुपपत्तेः क्षीणार्थापत्तिर्नार्थमिथ्यात्वे मानम् । तत्रैव व्यभिचाराच्च उक्तनियमोऽपि भग्न एवेति भावः ।

### जनार्दनभट्टीया

पूर्ववाक्यसङ्गतिरूपेण उत्तरवाक्यमवतारयति – न वयमित्यादिना ।। सतस्तदस्तीति ।। अत्र सतो ब्रह्मण इत्यर्थः । न चेति ।। 'अम्बरादिकं ज्ञाननिवर्त्यम् अनिर्वचनीयत्वात्' इति हेत्वसिद्धिर्नेत्यर्थः । 'अनिर्वचनीयत्वे सिद्धे ज्ञाननिवर्त्यत्वसिद्धिः, ज्ञाननिवर्त्यत्वसिद्धे अर्थापत्तिप्रवृत्तिद्वारा अनिर्वचनीयत्वसिद्धिरिति परस्पराश्रयः' इति भावः ।

ननु 'विमतं ज्ञाननिवर्त्यं दृश्यत्वात् जडत्वात्' इत्यादिना तत्सिद्धिरित्यत आह – दृश्यत्वादय इति ।। 'आत्मनोऽपि दृश्यत्वात् अनैकान्तिकता च' इत्यादिना निरसिष्यन्त इत्यर्थः । ज्ञाते द्वैत-मिति ।। परमात्मस्वरूपे यथावद् ज्ञाते द्वैतं मिथ्याज्ञानं निवर्तत इति अन्यपरत्वम् अन्यत्र= माण्डूकोपनिषद्भाष्ये उपपादितमित्यर्थः । ननु 'तमेवं विदित्वा अतिमृत्युमेति'१ इति ब्रह्मज्ञानेन मृत्युशब्दितसंसारबन्धान्मोक्षः प्रतीयते । नहि संसारबन्धस्य सत्यत्वे ज्ञाननिवर्त्यत्वं घटत इत्यत आह – ज्ञानादिति ।। अन्यथैवेति ।। सत्यस्यैव संसारस्य गरुडध्यानेन सत्यविषस्येव निवृत्तिरुपपादितेति भावः । एवशब्देन मिथ्यात्वस्य असत्वपर्यवसितत्वेन संसारस्य मिथ्यात्वे ज्ञानेन निवृत्तिः न सम्भवति ।

न च बाध्यं जगदित्यत्र किञ्चिन्मानम्..

**मूले जगत्पदग्रहणकृत्यम्**

***न च बाध्यं जगदित्यत्र किञ्चिन्मानम्***

#### श्रीमज्जयतीर्थटीका

ननु ज्ञाननिवर्त्यत्वमस्माकं शुक्तिरजतादेरपि नास्ति । यथोक्तम्- 'न हि नाशोऽसतो भवेत्' इति । अतः किं जगद्ग्रहणेन । मैवम् । न हि ज्ञाननिवर्त्यत्वं नाम ज्ञानेन विनाशः परस्याभिमतः । तेन 'अधिष्ठानयाथात्म्यज्ञानेनाविद्यायां विलीनायां तदुपादानकं रजतं स्वयमेव निवर्तते' इत्यङ्गीकृतत्वात् । किं नाम । प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम् । न च तच्छुक्तिरजतादौ नास्तीति शक्यते वक्तुम् । नात्र रजतमभूदिति प्रतिषेधस्य प्रमितत्वात् । ततः सार्थकं जगद्ग्रहणम् ।

शुक्तिरजताद्येवार्थापत्त्या यदि सदसद्विलक्षणतया सिषाधयिषितम् । तदैतद्दूषणं न घटत इति चेत् । मा घटिष्ट । प्रागुक्तदूषणेनार्थापत्तेर्दूषितत्वात् ।

**श्रीविजयीन्द्रभिक्षु**

ननु 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' इति वाक्ये जगद्ग्रहणं व्यर्थम् । अत्यन्तासतः शुक्तिरजतादेरस्माभिर्ज्ञाननिवर्त्यत्वानभ्युपगमेन तद्दृष्टान्तेन वियदादेरनिर्वचनीयत्वसाधनायोगेन 'न च बाध्यं शुक्तिरजतमित्यत्र किञ्चिन्मानम्' इत्येव वाक्यविन्यासौचित्यादिति शिष्यः पृच्छति- ननु ज्ञाननिवर्त्यत्वमिति ।। न हीति ।। परेण ज्ञानाज्ञानयोरेव विरोधाभ्युपगमेन जगद्रूपोपादेय-प्रपञ्चस्य ज्ञाननिवर्त्यत्वानङ्गीकारादिति भावः । किन्नामेति ।।

'तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।

अविद्या सह कार्येण नाऽसीदस्ति भविष्यति ।।'

इति परोक्तेरिति भावः । निषेधप्रतियोगित्वमेवोपपादयति- नात्रेति ।। तदा दूषणमिति ।। शुक्ति-रजतादावुक्तरीत्योक्तबाध्यत्वस्य सत्त्वात्कल्पकसत्त्वेन तदभावप्रयुक्तसद्वैलक्षण्यासिद्धिरूप-मित्यर्थः । प्रागुक्तेति ।। असत्त्वेऽपि प्रतीत्युपपत्त्या असद्वैलक्षण्यासिद्धिरिति प्रागुक्तेत्यर्थः ।

श्रीवेदेशतीर्थननु तदङ्गीकारबलेनाप्यज्ञानस्य तदुपादानकस्य वाऽधिष्ठानयाथात्म्यज्ञानविनाश्यत्व-मेवावगम्यत इति पृच्छति- किं नामेति ।। पराभिप्रायकथनेनोत्तरयति- प्रतिपन्नेति ।।

तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः ।

अविद्या सह कार्येण नाऽसीदस्ति भविष्यति ।।

इति तद्वचनादिति भावः । न घटत इति ।। तत्रोक्तरीत्या बाध्यत्वसत्त्वेन तदभावप्रयुक्त-सद्वैलक्षण्यासिद्धिरूपमिदं दूषणमित्यर्थः । प्रागुक्तेति ।। रजतस्यात्यन्तासत्त्वेनोपपत्तेः इत्युक्तान्यथैवोपपत्तिरूपदूषणेनेत्यर्थः ।

**श्रीराघवेन्द्रतीर्थ**

ज्ञाननिवर्त्यत्वं ज्ञाननाश्यत्वमिति मत्वा शङ्कते शिष्यः- नन्विति ।। यथोक्तमिति ।। 'कश्चात्र बाध उद्दिष्टो न हि नाशः' इति पृथगधिकरणानुव्याख्याने इति योज्यम् । अभिमत इत्यस्य किन्नामेत्यादिनाऽन्वयः । अनभिमतत्वोपपादनम्- तेनेत्यादि ।। अविद्यायामिति ।। शुक्त्यव-च्छिन्नचैतन्याऽवरकाविद्यायामित्यर्थः । प्रतिपन्नोपाधाविति ।। उपाधित्वेनाधिष्ठानत्वेन प्रतिपन्ने ज्ञाते शुक्तिकादौ यो निषेधस्तत्प्रतियोगित्वेनेत्यर्थः । अर्थापत्त्येति ।। प्रागुक्तख्यातिबाधान्यथाऽ-नुपपत्तिरूपार्थापत्त्येत्यर्थः । एतद्दूषणमिति ।। निषेधप्रतियोगित्वरूपज्ञाननिवर्त्यत्वलक्षणबाध्यत्वे मानं नेति दूषणमित्यर्थः । 'नात्र रजतमभूत्' इति प्रतिषेधप्रमितेरुक्तत्वादिति भावः । प्रागुक्तेति ।। असति अपरोक्षप्रतीतेरप्युपपादिततया 'असच्चेन्न प्रतीयेत' इति व्याप्तिभङ्गव्याहत्यादि-दूषणेनेत्यर्थः ।

**द्वैतद्युमणि**

परोक्तलक्षणवाक्यस्थनिवर्त्यपदस्य ध्वंसप्रतियोग्यर्थकत्वाभिमानिनः शङ्कामुद्भाव्य निरस्यति-नन्वित्यादिना ।। यथोक्तमिति ।। अनुव्याख्याने श्रुतिपाद इत्यर्थः । जगद्ग्रहणेनेति ।। जगत्पदस्य सत्यजगत एवोपस्थापकत्वेनासत्यस्य रूप्यादेरनुपस्थापनात् 'तत्र बाध्यत्वं नास्ति' इत्युक्तौ 'शुक्तिरजतादौ तद्वर्तते' इति व्यञ्जनया लभ्यते । विशेषनिषेधस्य शेषविध्यनुज्ञानरूप-त्वात् । तच्चायुक्तम् । 'मिथ्याशब्दोऽनिर्वचनीयम्' इत्यारभ्य प्रक्रान्तस्य शुक्तिरजतस्या-ग्रहणान्न्यूनत्वं चेति भावः । शिष्यः शङ्कते । नन्विति ।। शुक्तिरजतादेरपीति ।। तस्यास्मन्मतेऽसत्त्वेन जगदन्तः-पातित्वाभावादिति भावः । ज्ञानेन विनाशः ज्ञानजन्यध्वंसप्रतियोगित्वम् ।

**गुरुराजीया**

शिष्यः शङ्कते- नन्विति ।। ननु पराङ्गीकारबलेनाप्यज्ञानस्य तदुपादानकस्य च अधिष्ठानयाथात्म्यज्ञाननिवर्त्यत्वमेवावगम्यत इति पृच्छति- किन्नामेति ।। पराभिप्रायकथनेनोत्त-रयति- प्रतिपन्नेति ।।

'तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः ।

अविद्या सह कार्येण नाऽसीदस्ति भविष्यति ।।'

इति वचनादिति भावः । न घटत इति ।। तत्रोक्तरीत्या बाध्यत्वेन तदभावप्रयुक्तसद्वैलक्षण्या-सिद्धिरूपमिदं दूषणमित्यर्थः । प्रागुक्तेति ।। रजतस्यात्यन्तासत्त्वेनैवोपपत्तेरित्युक्तान्यथैवोप-पत्तिरूपदूषणेनेत्यर्थः ।

### गोविन्दीया

दूषणान्तरमाह- यथेति ।। तस्य बाध्यत्वस्य वियदादावभावेन हेतोरसिद्ध्या कस्याप्यनुपपत्त्या तस्य वियदादेः सदसद्विलक्षणत्वप्रतिपत्तिः स्यादित्यर्थः । तेनेति ।। अधिष्ठान-याथात्म्यज्ञानेन अधिष्ठानयथास्वरूपज्ञानेनेत्यर्थः । नात्रेति ।। रजतं नाभूत् इति निषेधस्य प्रमितत्वात् तत्प्रतियोगित्वमपि प्रमितमित्यर्थः । जगन्नाभूत् इत्यप्रमितत्वात् जगतः तत्प्रति-योगित्वमपि अप्रमितमिति भावः । तदेति ।। इदं दूषणं हेतोरसिद्धदूषणमित्यर्थः । प्रागुक्तेति ।। असत्त्वेनैवोपपत्तेरिति ।। अन्यथोपपत्तिरूपप्रागुक्तदूषणेनार्थापत्तेर्दूषितत्वादित्यर्थः ।

### नारोपन्तीया

प्रतिपन्नोपाधाविति । एवं प्रागुक्तज्ञाननिवर्त्यत्वान्तर्गतनिवृत्तिशब्दार्थो न ध्वंसः । किन्नाम नास्तिताप्रमितिरेवाभिप्रेता । तथा चोभयवादिसिद्धं ज्ञाननिवर्त्यत्वं शुक्तिरजतादावस्त्येव । अधिष्ठानयाथात्म्यज्ञानजन्यनास्तिताप्रमितिविषयत्वस्यैव ज्ञाननिवर्त्यत्वशब्दार्थतया फलितत्वा-दिति भावः ।

### जनार्दनभट्टीया

न हि असतः शशविषाणादेः केनापि निवृत्तिरिति सूचयति – सार्थकमिति ।। शुक्तिरजतादिव्यावृत्तेरेव प्रयोजनत्वादिति भावः । १तदेतद्दूषणमिति ।। अस्य मूलवाक्यस्य व्यावहारिक एव बाध्यत्वनिराकरणपरत्वादिति भावः । प्रागुक्तेति ।। व्याप्त्यभावान्यथोपपत्यन्यथैवोपपत्तिरूप-दूषणेनेत्यर्थः ।

## बाध्यत्वमपि हि तेषां मिथ्या ..

**ज्ञाननिवर्त्यत्वस्य मिथ्यात्वाङ्गीकारे दूषणाभिधानम्**

### श्रीमज्जयतीर्थटीका

किं च जगति सत्त्वानुपपत्त्यर्थमुपन्यस्तं बाध्यत्वं परेण सत्यमङ्गीक्रियते मिथ्या वा । आद्ये अपसिद्धान्तादिप्रसङ्गाद् द्वितीय एवाङ्गीकार्य इत्याह-

## मूल

***बाध्यत्वमपि हि तेषां मिथ्या ।***

अपिशब्दो युक्तिसमुच्चयार्थः । न केवलं जगत् । किं तु बाध्यत्वमपीति वा । तेषां हीति सत्यत्वाङ्गीकारेऽपसिद्धान्तादिकं सूचयति । किमत इत्यत आह-

**मूल**

***तस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्यं स्यात् ।***

यदा जगतो बाध्यत्वमपि मिथ्या तदा आत्मवन्मिथ्याभूतबाध्यत्वेन जगतोऽबाध्यत्वमेव सत्यं स्यात् । तथा च न केवलं प्रमाणाभावेन जगतो बाध्यत्वाभावः । किं नाम परन्यायेनापि । न केवलं बाध्यत्वाभावात्तदनुपपत्त्या सद्विलक्षणत्वासिद्धिः । प्रत्युत अबाध्यत्वस्य सत्यत्वात् सत्यत्वमेव सिद्ध्यति ।

ननु बाध्यत्वं मिथ्येत्यनेनैव जगति बाध्यत्वासिद्धिरुक्ता । तत्किमुत्तरेण वाक्येन । मैवम् । न हि मिथ्येत्यसत्त्वं परोऽङ्गीकुरुते । परन्यायेन चेह दूषणमुपक्रान्तम् । अतो व्याप्तिबलेनैव बाध्यत्वाभावमबाध्यतासत्यतया सत्यत्वं चोपपादयितुमुत्तरो ग्रन्थः । अत एव 'तस्य च मिथ्यात्वे बाध्यत्वाभावः' इति नोक्तम् ।

अनिर्वचनीयस्य निराक्रियमाणत्वान्मिथ्यात्वमसत्त्वमेव पर्यवस्यातीति बाध्यत्वासिद्धिः पूर्ववाक्येनैव शक्योपपादनेति चेत् सत्यम् । मार्गान्तरमेतदित्यदोषः ।

### श्रीविजयीन्द्रभिक्षु

सत्यमपि बाध्यत्वं किं ब्रह्मस्वरूपम् उत ततोऽन्यत् । नाऽद्यः । सोपाधिकस्य भ्रम-कालानिश्चितस्य तस्य निरुपाधिकभ्रमकालनिश्चितब्रह्मस्वरूपत्वायोगादिति आद्यपक्षदूषणम् आदिपदेन सूचयन् द्वितीयं दूषयति - अपसिद्धान्तादीति ।। न चाभावद्वैतपक्षे नेदं दूषणमिति वाच्यम् । तस्यैवायुक्तत्वात् । अन्योन्याभावरूपभेदस्यापि विशेषहेत्वभावेन सत्यत्वापत्तेः । 'नेह नाना'१ इति श्रुतौ किञ्चनेति सर्वनाम्ना ब्रह्मव्यतिरिक्तस्य सर्वस्याप्यभावप्रतीतेः । तदेतदभि-प्रेत्याप्याह- अपसिद्धान्तादीति ।। युक्त्यन्तराभिधानेनापि युक्तिसमुच्चयस्य ज्ञातुं शक्यत्वेन अपि-शब्दस्य नातिप्रयोजनतां मन्वान आह- न केवलमिति ।। यद्यपि जगद्ग्रहणेन बाध्यत्वमपि गृहीतं तथाऽपि परेण बाध्यत्वस्य जगदनिर्वचनीयतासाधकतया पृथगुपादानात् पृथगुक्तम् । यदेति ।। विमतं जगत् सत्यबाध्यत्वाभाववत् मिथ्याभूतबाध्यत्वकत्वात् आत्मवत् इति प्रयोगो द्रष्टव्यः । न च बाध्यं जगदित्यत्र किञ्चिन्मानम् बाध्यत्वमपि हि तेषां मिथ्या इति पूर्ववाक्यद्वयार्थानुवादपूर्वकं जगदबाध्यत्वसत्यत्वसाधनस्य प्रयोजनमत्राऽह- तथा चेति ।। परन्यायेनापीति ।। बाध्यत्वं मिथ्येति परोक्तेनेत्यर्थः । जगत्सत्यं सत्याबाध्यताकत्वात् आत्मवत् इति प्रयोगमभिप्रेत्याऽह- प्रत्युतेति ।। मिथ्याशब्दस्यापह्नववचनत्वं मन्वानः 'तस्य च' इत्युत्तरवाक्यवैयर्थ्यं शङ्कते- नन्विति ।। तत्किमुत्तरेणेति ।। तस्यापि जगद्बाध्यत्वाभावप्रतिपादनपरत्वादिति भावः । न हि मिथ्येति ।। न हि मिथ्याशब्दस्यासत्त्वमर्थ इति परोऽङ्गीकुरुत इत्यर्थः । न हि परानङ्गीकारमात्रेण तस्य तदर्थत्वासिद्धिरिति तद्वैयर्थ्यतादवस्थ्यमित्यत आह- परन्यायेनेति ।। व्याप्तिबलेनेति ।। 'यद्यत् मिथ्याभूतबाध्यत्वकं तत्तत् सत्यभूताबाध्यत्वकं यथा आत्मा' इति व्याप्तिबलेनेत्यर्थः । बाध्यत्वा-भावमिति ।। तद्रूपमित्यर्थः । पररीत्यैव च दूषणमुपक्रान्तमित्यत्र ज्ञापकमाह- अत एवेति ।। उपायस्य उपायान्तरादूषकत्वादिति परिहरति- सत्यमिति ।।

### श्रीवेदेशतीर्थ

आद्य इति ।। बाध्यत्वं सत्यं चेत् तद्ब्रह्मान्यद् ब्रह्ममात्रं वा । आद्ये सदद्वैतसिद्धान्त-भङ्गप्रसङ्गः । द्वितीये सोपाधिकस्य भ्रमकालानिश्चितस्य बाध्यत्वस्य निरुपाधिकभ्रमकाल-निश्चितब्रह्ममात्रत्वानुपपत्तिरिति दूषणमपसिद्धान्तादीत्यादिशब्देनाऽह । ननु भावाद्वैतपक्षे नेदं दूषणमिति चेन्मैवम् । दृश्यत्वादेस्तत्रैव व्यभिचारापत्त्या भेदस्याप्यन्योन्याभावरूपतयाऽभाव-त्वेनाविशेषात्सत्यत्वापत्त्या च तस्य पक्षस्यायुक्तत्वात् । एतदप्याहाऽदिपदेन-सूचयतीति ।। तेषां हीत्यस्य ब्रह्मातिरिक्तसर्वमिथ्यात्ववादिनामित्यर्थत्वादिति भावः । अपिशब्दो युक्तिसमुच्चयार्थ इत्येतद्दर्शयति- तथा चेति ।। परन्यायेनापीति ।। बाध्यत्वाभाव इति वर्तते । परन्यायेन बाध्यत्वं मिथ्येति परोक्तेत्यर्थः । तथा च अबाध्यत्वं स्यात् इत्येतद्बाध्यत्वाभावः प्राप्त इति व्याख्यातं भवति । ननु जगति सत्त्वानुपपत्त्यर्थमुपन्यस्तस्य बाध्यत्वस्याभाव एव तन्मिथ्यात्वेन साधनीयः । न त्वबाध्यत्वसत्यत्वम् । तस्य प्रकृतानुपयोगादित्यतो बाध्यत्वाभावसाधनप्रयोजनानुवादपूर्वकम-बाध्यत्वसत्यतासमर्थनप्रयोजनमाह- न केवलमिति ।। जगत्सत्यं सत्यबाध्यत्वकत्वादात्मवदित्यनु-मानमभिप्रेत्याऽह- प्रत्युतेति ।। तत्किमुत्तरेणेति ।। अत्रापि बाध्यत्वाभावस्यैव प्रतिपादनात् । न चाबाध्यत्वसत्यत्वमपि जगत्सत्यतासिद्ध्यर्थं प्रतिपाद्यत इति सार्थक्यम् । बाध्यत्वाभावोपपादनस्य सद्विलक्षणत्वासिद्ध्युपयुक्तत्ववदबाध्यत्वसत्यत्वेन जगत्सत्यताकथनस्य सद्विलक्षणत्वासिद्ध्य-नुपयुक्तत्वादिति शङ्कितुर्हृदयम् । यद्वा तस्य च इत्युत्तरवाक्ये बाध्यत्वाभाव एव प्रतिपाद्यत इति भ्रान्तः शङ्कते- नन्विति ।। न हीति ।। येन बाध्यत्वं मिथ्येत्युक्ते पूर्ववाक्ये तदसिद्धिरुक्ता स्यादिति भावः । ननु तथाऽप्यस्मन्मते मिथ्यात्वमसत्त्वमेवेति बाध्यत्वं मिथ्येत्युक्ते तदसिद्धिरुक्ता स्यादित्यत आह- परन्याये◌ेनेति ।। अत इति ।। यतो बाध्यत्वमपि मिथ्येत्युक्त्या न बाध्यत्वासिद्धिरुक्तेत्यर्थः । व्याप्तिबलेनैवेति ।। यन्मिथ्याभूतबाध्यताकं न तद्बाध्यम् । यन्मिथ्याभूतबाध्यताकं तत्सत्यभूता-बाध्यताकम् । यत्सत्यभूताबाध्यताकं तत्सत्यम् । यथाऽऽत्मेति व्याप्तिबलेनेत्यर्थः । सत्यत्वं चोपपादयितुमिति ।। तथा च जगति सद्वैलक्षण्यसाधने सत्प्रतिपक्षतारूपदोषान्तरकथनेनापि सार्थक्यमिति भावः । उभयोपपादनं विवक्षितमित्यत्रावष्टम्भकमाह- अत एवेति ।।

### श्रीराघवेन्द्रतीर्थ

अपसिद्धान्तादीति ।। 'एकमेवाद्वितीयम्'१ इत्यादिश्रुतिविरोधः । ब्रह्मणः सद्वितीयत्वं इत्यादिरादिपदार्थः । युक्तिसमुच्चयार्थ इत्युक्तं व्यञ्जयन्नुत्तरवाक्यार्थं चाऽह- न केवलमित्यादिना ।। उत्तरेणेति ।। तस्य चेत्यनेनेत्यर्थः । परन्यायेनेति । 'मिथ्याशब्दोऽनिर्वचनीयं वदति' इत्यादिना तथैव प्रक्रमादिति भावः । व्याप्तिबलेनेति ।। २अत एवेति ।। व्याप्तिबलेनोपपादनीयत्वादेवेत्यर्थः । तस्य चेति । तथोक्तौ सत्यत्वं नोपपादितं स्यादिति भावः । मार्गान्तरमेतदिति । तस्य चेत्यादिनाऽबाध्यत्वसत्यत्वोक्तिमुखेन बाध्यत्वाभावकथनमित्यर्थः । सत्त्वानुपपत्त्यर्थम् ।। सद्वैलक्षण्यार्थम् ।

### गुरुराजीया

युक्तिसमुच्चायकापिशब्दानुरोधाद् बाध्यत्वमपि इत्युत्तरग्रन्थस्य युक्त्यन्तरेण बाध्यत्वाभावोपपादकत्वमित्यभिप्रेत्य तत्परतयोत्तरग्रन्थं योजयति- किञ्चेति ।। अपसिद्धान्तादी-त्यादिपदेन३ बाध्यत्वे व्यभिचारपरिग्रहः । अत एव 'तस्य सत्त्वे तेनैवानैकान्तिकत्वात्' इति वक्ष्यतीति द्रष्टव्यम् । युक्तिसमुच्चयार्थ इति ।। 'बाध्यत्वमपि हि' इत्यादिवाक्योक्तयुक्तेः 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' इति पूर्ववाक्योक्तबाध्यत्वाभावसाधकप्रमाणाभावरूपयुक्त्या समुच्चयार्थ इत्यर्थः । अत एव वक्ष्यति 'तथा च न केवलं प्रमाणाभावेन जगतो बाध्यत्वा-भावः । किं नाम परन्यायेनापि' इति भावः ।

यत्तु 'युक्तिर्व्याप्यं लिङ्गमिति यावत् । तथा च बाध्यत्वरूपसाध्यसाधकत्वेनाभिमता१ युक्तिरपि मिथ्येत्यर्थः' इति तन्न । युक्तिसमुच्चयार्थकापिशब्दस्वारस्यलब्ध'किञ्च'इत्यादिरूपैतन्मूल-ग्रन्थावतारेण 'तथा च न केवलं प्रमाणाभावेन जगतो बाध्यत्वाभावः । किं नाम ? परन्यायेनापि' इत्युत्तरग्रन्थेन च विरुद्धत्वात् तद्ग्रन्थद्वयपर्यालोचनया बाध्यत्वाभावसाधकप्रमाणाभावतत्साधक-परन्यायरूपयुक्त्योरेव समुच्चयस्य तदर्थतायाः स्पष्टत्वात् । अपसिद्धान्तादीत्यादिपदेन व्यभिचारपरिग्रहः ।

परन्यायेनापीति ।। बाध्यत्वाभाव इति वर्तते । परन्यायेन बाध्यत्वं मिथ्येति परोक्त्येत्यर्थः । तथा च 'अबाध्यत्वं स्यात्' इत्येतद् बाध्यत्वाभावः प्राप्त इति व्याख्यातं भवति ।

ननु जगति सत्त्वानुपपत्त्यर्थमुपन्यस्तस्य बाध्यत्वस्याभाव एव तन्मिथ्यात्वेन साधनीयः । न त्वबाध्यत्वसत्यत्वम् । तस्य प्रकृतानुपयोगादित्यतः बाध्यत्वाभावसाधनप्रयोजनानुवादपूर्वकम् अबाध्यत्वसत्यतासमर्थनप्रयोजनमाह- न केवलमिति ।। जगत् सत्यं सत्याबाध्यत्वकत्वाद् इत्यनुमानं मनसि निधायाऽह- प्रत्युतेति ।। तत्किमुत्तरवाक्येनेति ।। अत्रापि बाध्यत्वाभावस्यैव प्रतिपादनात् । न चाबाध्यत्वसत्यत्वमपि जगत्सत्यतासिद्ध्यर्थं प्रतिपाद्यत इति सार्थक्यम् । बाध्यत्वाभावोपपादनस्य सद्विलक्षणत्वासिद्ध्युपयुक्तत्ववद् अबाध्यत्वसत्यत्वेन जगत्सत्यता-कथनस्य सद्विलक्षणत्वासिद्ध्यनुपयुक्तत्वादिति भावः ।

यद्वा पूर्ववाक्ये बाध्यत्वस्य मिथ्यात्वं प्रतिपादितम् । तच्च बाध्यत्वाभावे पर्यवसितम् । बाध्यत्वाभावस्य सत्यत्वमेवेति विवक्षितलाभस्तत्रैव जातः । अत उत्तरवाक्यमनुपयुक्तम् । तेनैव तत्साधनायोगादिति भावः ।

ननु तथाऽपि अस्मन्मते मिथ्यात्वमसत्त्वमेवेति बाध्यत्वं मिथ्येत्युक्ते तदसिद्धिरुक्ता स्यादित्यत आह-परन्यायेनेति ।। अत इति ।। यतो बाध्यत्वं मिथ्येत्युक्त्या न बाध्यत्वासिद्धिरुक्तेत्यर्थः । व्याप्तिबलेनेति ।। यन्मिथ्याभूतबाध्यताकं न तद्बाध्यम् । यन्मिथ्याभूतबाध्यताकं तत्सत्य-भूताबाध्यताकम् । यत्सत्यभूताबाध्यताकं तत्सत्यं यथा आत्मा इति व्याप्तिबलेनेत्यर्थः । सत्यत्वञ्चोपपादयितुमिति ।। तथा च जगति सद्वैलक्षण्यसाधने सत्प्रतिपक्षतारूप-दोषान्तरकथकत्वेनापि सार्थक्यमिति भावः । उभयोपपादनं विवक्षितमित्यत्रोपष्टम्भकमाह- अत एवेति ।।

### गोविन्दीया

आद्य इति ।। सत्यत्वपक्षेऽपि ब्रह्मान्यत्पक्षेऽपसिद्धान्तः । ब्रह्मस्वरूपपक्षे बाध्यत्वस्वरूपत्वात् जगद्वत् ब्रह्माप्यनिर्वचनीयं स्यादिति आदिशब्दार्थ इत्यर्थः । न हीति ।। मिथ्येति असत्त्वं परो नाङ्गीकुरुते येनोत्तरवाक्यं व्यर्थं स्यात् । इह च वाक्ये परन्यायेन बाध्यत्वासिद्धिरूपदूषणमुपक्रान्तम् । अतः सार्थकमुत्तरवाक्यमित्यर्थः । अत इति ।। मिथ्या-भूताबाध्यत्वाद् बाध्यं न भवतीति व्याप्तिबलेनैव बाध्यत्वाभावं सत्यभूतबाध्यत्वसत्यत्वं चेति व्याप्त्या सत्यत्वं चोपपादयितुमुत्तरो ग्रन्थ इत्यर्थः । मार्गान्तरमिति ।। अनिर्वचनीयनिराकरणद्वारा पूर्ववाक्येनैव बाध्यत्वसिद्धिरुक्ता इत्येको मार्गः । तस्य चेत्युत्तरवाक्येन परन्यायेन बाध्यत्वासिद्धिरुक्ता । अतो मार्गान्तरमेतदित्यर्थः ।

### नारोपन्तीया

युक्तिसमुच्चयार्थ इति । युक्तिर्लिङ्गं व्याप्यमिति यावत् । बाध्यत्वरूपसाध्यसाधकत्वेनाभिप्रेता युक्तिरपि मिथ्येत्यर्थः । किमुत्तरवाक्येनेति । पूर्ववाक्ये बाध्यत्वस्य मिथ्यात्वं प्रतिपादितम् । तच्च बाध्यत्वाभावे पर्यवसितम् । बाध्यत्वाभावश्च सत्यत्वमेवेति विवक्षितलाभः तत्रैव जातः । अत उत्तरवाक्यमनुपपन्नम् । तेनैव तत्साधनायोगादिति भावः । व्याप्तिबलेनेति । यद्यपि निष्कर्षे क्रियमाणे पूर्ववाक्येनैवेष्टसिद्धिः । तथाऽपि 'तुष्यतु दुर्जनः' इति न्यायेनाविवेचितस्वरूपं मिथ्यात्वमभ्युपगम्य, यत्र मिथ्याभूततद्धर्माधिकरणत्वं तत्र सत्यभूततदभावाश्रयत्वम् । यथा मिथ्याभूतरजतत्ववति शुक्तिशकले सत्यभूततदभावाश्रयत्वमिति दृष्टान्तसम्भवाद् व्याप्तिबलेन तत्साधनं युक्तमित्यर्थः ।। अत एवैतदाक्षिप्याऽह- मार्गान्तरमेतदित्यदोष इति ।

### जनार्दनभट्टीया

‘तस्य च बाध्यत्व’ इति वाक्यलब्धमर्थविशेषणमाह – तथा चेति ।। तेनैव लब्धमर्थान्तरमाह– न केवलमिति ।। अतो व्याप्तिबलेनेति ।। ‘यस्य बाध्यत्वं बाध्यं तस्याबाध्यत्वं सत्यम्’ इति व्याप्तिबलेनेत्यर्थः । शङ्कते – अनिर्वचनीयस्येति ।। सच्छब्दार्थविकल्पानुपपत्तिः सद्विलक्षणत्वस्येति शेषः ।

**ज्ञाननिवर्त्यत्वस्य मिथ्यात्वाङ्गीकारे दूषणाभिधानम्**

**श्रीमज्जयतीर्थटीका**

किं च जगति सत्त्वानुपपत्त्यर्थमुपन्यस्तं बाध्यत्वं परेण सत्यमङ्गीक्रियते मिथ्या वा । आद्ये अपसिद्धान्तादिप्रसङ्गाद् द्वितीय एवाङ्गीकार्य इत्याह-

**मूल**

***बाध्यत्वमपि हि तेषां मिथ्या ।***

अपिशब्दो युक्तिसमुच्चयार्थः । न केवलं जगत् । किं तु बाध्यत्वमपीति वा । तेषां हीति सत्यत्वाङ्गीकारेऽपसिद्धान्तादिकं सूचयति । किमत इत्यत आह-

**मूल**

***तस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्यं स्यात् ।***

यदा जगतो बाध्यत्वमपि मिथ्या तदा आत्मवन्मिथ्याभूतबाध्यत्वेन जगतोऽबाध्यत्वमेव सत्यं स्यात् । तथा च न केवलं प्रमाणाभावेन जगतो बाध्यत्वाभावः । किं नाम परन्यायेनापि । न केवलं बाध्यत्वाभावात्तदनुपपत्त्या सद्विलक्षणत्वासिद्धिः । प्रत्युत अबाध्यत्वस्य सत्यत्वात् सत्यत्वमेव सिद्ध्यति ।

ननु बाध्यत्वं मिथ्येत्यनेनैव जगति बाध्यत्वासिद्धिरुक्ता । तत्किमुत्तरेण वाक्येन । मैवम् । न हि मिथ्येत्यसत्त्वं परोऽङ्गीकुरुते । परन्यायेन चेह दूषणमुपक्रान्तम् । अतो व्याप्तिबलेनैव बाध्यत्वाभावमबाध्यतासत्यतया सत्यत्वं चोपपादयितुमुत्तरो ग्रन्थः । अत एव ‘तस्य च मिथ्यात्वे बाध्यत्वाभावः’ इति नोक्तम् ।

अनिर्वचनीयस्य निराक्रियमाणत्वान्मिथ्यात्वमसत्त्वमेव पर्यवस्यातीति बाध्यत्वासिद्धिः पूर्ववाक्येनैव शक्योपपादनेति चेत् सत्यम् । मार्गान्तरमेतदित्यदोषः ।

**श्रीविजयीन्द्रभिक्षु**

सत्यमपि बाध्यत्वं किं ब्रह्मस्वरूपम् उत ततोऽन्यत् । नाऽद्यः । सोपाधिकस्य भ्रम-कालानिश्चितस्य तस्य निरुपाधिकभ्रमकालनिश्चितब्रह्मस्वरूपत्वायोगादिति आद्यपक्षदूषणम् आदिपदेन सूचयन् द्वितीयं दूषयति - अपसिद्धान्तादीति ।। न चाभावद्वैतपक्षे नेदं दूषणमिति वाच्यम् । तस्यैवायुक्तत्वात् । अन्योन्याभावरूपभेदस्यापि विशेषहेत्वभावेन सत्यत्वापत्तेः । ‘नेह नाना’१ इति श्रुतौ किञ्चनेति सर्वनाम्ना ब्रह्मव्यतिरिक्तस्य सर्वस्याप्यभावप्रतीतेः । तदेतदभि-प्रेत्याप्याह- अपसिद्धान्तादीति ।। युक्त्यन्तराभिधानेनापि युक्तिसमुच्चयस्य ज्ञातुं शक्यत्वेन अपि-शब्दस्य नातिप्रयोजनतां मन्वान आह- न केवलमिति ।। यद्यपि जगद्ग्रहणेन बाध्यत्वमपि गृहीतं तथाऽपि परेण बाध्यत्वस्य जगदनिर्वचनीयतासाधकतया पृथगुपादानात् पृथगुक्तम् । यदेति ।। विमतं जगत् सत्यबाध्यत्वाभाववत् मिथ्याभूतबाध्यत्वकत्वात् आत्मवत् इति प्रयोगो द्रष्टव्यः । न च बाध्यं जगदित्यत्र किञ्चिन्मानम् बाध्यत्वमपि हि तेषां मिथ्या इति पूर्ववाक्यद्वयार्थानुवादपूर्वकं जगदबाध्यत्वसत्यत्वसाधनस्य प्रयोजनमत्राऽह- तथा चेति ।। परन्यायेनापीति ।। बाध्यत्वं मिथ्येति परोक्तेनेत्यर्थः । जगत्सत्यं सत्याबाध्यताकत्वात् आत्मवत् इति प्रयोगमभिप्रेत्याऽह- प्रत्युतेति ।। मिथ्याशब्दस्यापह्नववचनत्वं मन्वानः ‘तस्य च’ इत्युत्तरवाक्यवैयर्थ्यं शङ्कते- नन्विति ।। तत्किमुत्तरेणेति ।। तस्यापि जगद्बाध्यत्वाभावप्रतिपादनपरत्वादिति भावः । न हि मिथ्येति ।। न हि मिथ्याशब्दस्यासत्त्वमर्थ इति परोऽङ्गीकुरुत इत्यर्थः । न हि परानङ्गीकारमात्रेण तस्य तदर्थत्वासिद्धिरिति तद्वैयर्थ्यतादवस्थ्यमित्यत आह- परन्यायेनेति ।। व्याप्तिबलेनेति ।। ‘यद्यत् मिथ्याभूतबाध्यत्वकं तत्तत्

सत्यभूताबाध्यत्वकं यथा आत्मा’ इति व्याप्तिबलेनेत्यर्थः । बाध्यत्वा-भावमिति ।। तद्रूपमित्यर्थः । पररीत्यैव च दूषणमुपक्रान्तमित्यत्र ज्ञापकमाह- अत एवेति ।। उपायस्य उपायान्तरादूषकत्वादिति परिहरति- सत्यमिति ।।

### श्रीवेदेशतीर्थ

आद्य इति ।। बाध्यत्वं सत्यं चेत् तद्ब्रह्मान्यद् ब्रह्ममात्रं वा । आद्ये सदद्वैतसिद्धान्त-भङ्गप्रसङ्गः । द्वितीये सोपाधिकस्य भ्रमकालानिश्चितस्य बाध्यत्वस्य निरुपाधिकभ्रमकाल-निश्चितब्रह्ममात्रत्वानुपपत्तिरिति दूषणमपसिद्धान्तादीत्यादिशब्देनाऽह । ननु भावाद्वैतपक्षे नेदं दूषणमिति चेन्मैवम् । दृश्यत्वादेस्तत्रैव व्यभिचारापत्त्या भेदस्याप्यन्योन्याभावरूपतयाऽभाव-त्वेनाविशेषात्सत्यत्वापत्त्या च तस्य पक्षस्यायुक्तत्वात् । एतदप्याहाऽदिपदेन- सूचयतीति ।। तेषां हीत्यस्य ब्रह्मातिरिक्तसर्वमिथ्यात्ववादिनामित्यर्थत्वादिति भावः । अपिशब्दो युक्तिसमुच्चयार्थ इत्येतद्दर्शयति- तथा चेति ।। परन्यायेनापीति ।। बाध्यत्वाभाव इति वर्तते । परन्यायेन बाध्यत्वं मिथ्येति परोक्तेत्यर्थः । तथा च अबाध्यत्वं स्यात् इत्येतद्बाध्यत्वाभावः प्राप्त इति व्याख्यातं भवति । ननु जगति सत्त्वानुपपत्त्यर्थमुपन्यस्तस्य बाध्यत्वस्याभाव एव तन्मिथ्यात्वेन साधनीयः । न त्वबाध्यत्वसत्यत्वम् । तस्य प्रकृतानुपयोगादित्यतो बाध्यत्वाभावसाधनप्रयोजनानुवादपूर्वकम-बाध्यत्वसत्यतासमर्थनप्रयोजनमाह- न केवलमिति ।। जगत्सत्यं सत्यबाध्यत्वकत्वादात्मवदित्यनु-मानमभिप्रेत्याऽह- प्रत्युतेति ।। तत्किमुत्तरेणेति ।। अत्रापि बाध्यत्वाभावस्यैव प्रतिपादनात् । न चाबाध्यत्वसत्यत्वमपि जगत्सत्यतासिद्ध्यर्थं प्रतिपाद्यत इति सार्थक्यम् । बाध्यत्वाभावोपपादनस्य सद्विलक्षणत्वासिद्ध्युपयुक्तत्ववदबाध्यत्वसत्यत्वेन जगत्सत्यताकथनस्य सद्विलक्षणत्वासिद्ध्य-नुपयुक्तत्वादिति शङ्कितुर्हृदयम् । यद्वा तस्य च इत्युत्तरवाक्ये बाध्यत्वाभाव एव प्रतिपाद्यत इति भ्रान्तः शङ्कते- नन्विति ।। न हीति ।। येन बाध्यत्वं मिथ्येत्युक्ते पूर्ववाक्ये तदसिद्धिरुक्ता स्यादिति भावः । ननु तथाऽप्यस्मन्मते मिथ्यात्वमसत्त्वमेवेति बाध्यत्वं मिथ्येत्युक्ते तदसिद्धिरुक्ता स्यादित्यत आह- परन्यायेेनेति ।। अत इति ।। यतो बाध्यत्वमपि मिथ्येत्युक्त्या न बाध्यत्वासिद्धिरुक्तेत्यर्थः । व्याप्तिबलेनैवेति ।। यन्मिथ्याभूतबाध्यताकं न तद्बाध्यम् । यन्मिथ्याभूतबाध्यताकं तत्सत्यभूता-बाध्यताकम् । यत्सत्यभूताबाध्यताकं तत्सत्यम् । यथाऽऽत्मेति व्याप्तिबलेनेत्यर्थः । सत्यत्वं चोपपादयितुमिति ।। तथा च जगति सद्वैलक्षण्यसाधने सत्प्रतिपक्षतारूपदोषान्तरकथनेनापि सार्थक्यमिति भावः । उभयोपपादनं विवक्षितमित्यत्रावष्टम्भकमाह- अत एवेति ।।

### श्रीराघवेन्द्रतीर्थ

अपसिद्धान्तादीति ।। ‘एकमेवाद्वितीयम्’१ इत्यादिश्रुतिविरोधः । ब्रह्मणः सद्वितीयत्वं इत्यादिरादिपदार्थः । युक्तिसमुच्चयार्थ इत्युक्तं व्यञ्जयन्नुत्तरवाक्यार्थं चाऽह- न केवलमित्यादिना ।। उत्तरेणेति ।। तस्य चेत्यनेनेत्यर्थः । परन्यायेनेति । ‘मिथ्याशब्दोऽनिर्वचनीयं वदति’ इत्यादिना तथैव प्रक्रमादिति भावः । व्याप्तिबलेनेति ।। २अत एवेति ।। व्याप्तिबलेनोपपादनीयत्वादेवेत्यर्थः । तस्य चेति । तथोक्तौ सत्यत्वं नोपपादितं स्यादिति भावः । मार्गान्तरमेतदिति । तस्य चेत्यादिनाऽबाध्यत्वसत्यत्वोक्तिमुखेन बाध्यत्वाभावकथनमित्यर्थः । सत्त्वानुपपत्त्यर्थम् ।। सद्वैलक्षण्यार्थम् ।

### गुरुराजीया

युक्तिसमुच्चायकापिशब्दानुरोधाद् बाध्यत्वमपि इत्युत्तरग्रन्थस्य युक्त्यन्तरेण बाध्यत्वाभावोपपादकत्वमित्यभिप्रेत्य तत्परतयोत्तरग्रन्थं योजयति- किञ्चेति ।। अपसिद्धान्तादी-त्यादिपदेन३ बाध्यत्वे व्यभिचारपरिग्रहः । अत एव ‘तस्य सत्त्वे तेनैवानैकान्तिकत्वात्’ इति वक्ष्यतीति द्रष्टव्यम् । युक्तिसमुच्चयार्थ इति ।। ‘बाध्यत्वमपि हि’ इत्यादिवाक्योक्तयुक्तेः ‘न च बाध्यं जगदित्यत्र किञ्चिन्मानम्’ इति पूर्ववाक्योक्तबाध्यत्वाभावसाधकप्रमाणाभावरूपयुक्त्या समुच्चयार्थ इत्यर्थः । अत एव वक्ष्यति ‘तथा च न केवलं प्रमाणाभावेन जगतो बाध्यत्वा-भावः । किं नाम परन्यायेनापि’ इति भावः ।

यत्तु ‘युक्तिर्व्याप्यं लिङ्गमिति यावत् । तथा च बाध्यत्वरूपसाध्यसाधकत्वेनाभिमता१ युक्तिरपि मिथ्येत्यर्थः’ इति तन्न । युक्तिसमुच्चयार्थकापिशब्दस्वारस्यलब्ध‘किञ्च’इत्यादिरूपैतन्मूल-ग्रन्थावतारेण ‘तथा च न केवलं प्रमाणाभावेन जगतो बाध्यत्वाभावः । किं नाम ? परन्यायेनापि’ इत्युत्तरग्रन्थेन च विरुद्धत्वात् तद्ग्रन्थद्वयपर्यालोचनया बाध्यत्वाभावसाधकप्रमाणाभावतत्साधक-परन्यायरूपयुक्त्योरेव समुच्चयस्य तदर्थतायाः स्पष्टत्वात् । अपसिद्धान्तादीत्यादिपदेन व्यभिचारपरिग्रहः ।

परन्यायेनापीति ।। बाध्यत्वाभाव इति वर्तते । परन्यायेन बाध्यत्वं मिथ्येति परोक्त्येत्यर्थः । तथा च ‘अबाध्यत्वं स्यात्’ इत्येतद् बाध्यत्वाभावः प्राप्त इति व्याख्यातं भवति ।

ननु जगति सत्त्वानुपपत्त्यर्थमुपन्यस्तस्य बाध्यत्वस्याभाव एव तन्मिथ्यात्वेन साधनीयः । न त्वबाध्यत्वसत्यत्वम् । तस्य प्रकृतानुपयोगादित्यतः बाध्यत्वाभावसाधनप्रयोजनानुवादपूर्वकम् अबाध्यत्वसत्यतासमर्थनप्रयोजनमाह- न केवलमिति ।। जगत् सत्यं सत्याबाध्यत्वकत्वाद् इत्यनुमानं

मनसि निधायाऽह- प्रत्युतेति ।। तत्किमुत्तरवाक्येनेति ।। अत्रापि बाध्यत्वाभावस्यैव प्रतिपादनात् । न चाबाध्यत्वसत्यत्वमपि जगत्सत्यतासिद्ध्यर्थं प्रतिपाद्यत इति सार्थक्यम् । बाध्यत्वाभावोपपादनस्य सद्विलक्षणत्वासिद्ध्युपयुक्तत्ववद् अबाध्यत्वसत्यत्वेन जगत्सत्यता-कथनस्य सद्विलक्षणत्वासिद्ध्यनुपयुक्तत्वादिति भावः ।

यद्वा पूर्ववाक्ये बाध्यत्वस्य मिथ्यात्वं प्रतिपादितम् । तच्च बाध्यत्वाभावे पर्यवसितम् । बाध्यत्वाभावस्य सत्यत्वमेवेति विवक्षितलाभस्तत्रैव जातः । अत उत्तरवाक्यमनुपयुक्तम् । तेनैव तत्साधनायोगादिति भावः ।

ननु तथाऽपि अस्मन्मते मिथ्यात्वमसत्त्वमेवेति बाध्यत्वं मिथ्येत्युक्ते तदसिद्धिरुक्ता स्यादित्यत आह-परन्यायेनेति ।। अत इति ।। यतो बाध्यत्वं मिथ्येत्युक्त्या न बाध्यत्वासिद्धिरुक्तेत्यर्थः । व्याप्तिबलेनेति ।। यन्मिथ्याभूतबाध्यताकं न तद्बाध्यम् । यन्मिथ्याभूतबाध्यताकं तत्सत्य-भूताबाध्यताकम् । यत्सत्यभूताबाध्यताकं तत्सत्यं यथा आत्मा इति व्याप्तिबलेनेत्यर्थः । सत्यत्वञ्चोपपादयितुमिति ।। तथा च जगति सद्वैलक्षण्यसाधने सत्प्रतिपक्षतारूप-दोषान्तरकथकत्वेनापि सार्थक्यमिति भावः । उभयोपपादनं विवक्षितमित्यत्रोपष्टम्भकमाह- अत एवेति ।।

### गोविन्दीया

आद्य इति ।। सत्यत्वपक्षेऽपि ब्रह्मान्यत्पक्षेऽपसिद्धान्तः । ब्रह्मस्वरूपपक्षे बाध्यत्वस्वरूपत्वात् जगद्वत् ब्रह्माप्यनिर्वचनीयं स्यादिति आदिशब्दार्थ इत्यर्थः । न हीति ।। मिथ्येति असत्त्वं परो नाङ्गीकुरुते येनोत्तरवाक्यं व्यर्थं स्यात् । इह च वाक्ये परन्यायेन बाध्यत्वासिद्धिरूपदूषणमुपक्रान्तम् । अतः सार्थकमुत्तरवाक्यमित्यर्थः । अत इति ।। मिथ्या-भूताबाध्यत्वाद् बाध्यं न भवतीति व्याप्तिबलेनैव बाध्यत्वाभावं सत्यभूतबाध्यत्वसत्यत्वं चेति व्याप्त्या सत्यत्वं चोपपादयितुमुत्तरो ग्रन्थ इत्यर्थः । मार्गान्तरमिति ।। अनिर्वचनीयनिराकरणद्वारा पूर्ववाक्येनैव बाध्यत्वसिद्धिरुक्ता इत्येको मार्गः । तस्य चेत्युत्तरवाक्येन परन्यायेन बाध्यत्वासिद्धिरुक्ता । अतो मार्गान्तरमेतदित्यर्थः ।

### नारोपन्तीया

युक्तिसमुच्चयार्थ इति । युक्तिर्लिङ्गं व्याप्यमिति यावत् । बाध्यत्वरूपसाध्यसाधकत्वेनाभिप्रेता युक्तिरपि मिथ्येत्यर्थः । किमुत्तरवाक्येनेति । पूर्ववाक्ये बाध्यत्वस्य मिथ्यात्वं प्रतिपादितम् । तच्च बाध्यत्वाभावे पर्यवसितम् । बाध्यत्वाभावश्च सत्यत्वमेवेति विवक्षितलाभः तत्रैव जातः । अत उत्तरवाक्यमनुपपन्नम् । तेनैव तत्साधनायोगादिति भावः । व्याप्तिबलेनेति । यद्यपि निष्कर्षे क्रियमाणे पूर्ववाक्येनैवेष्टसिद्धिः । तथाऽपि 'तुष्यतु दुर्जनः' इति न्यायेनाविवेचितस्वरूपं मिथ्यात्वमभ्युपगम्य, यत्र मिथ्याभूततद्धर्माधिकरणत्वं तत्र सत्यभूततदभावाश्रयत्वम् । यथा मिथ्याभूतरजतत्ववति शुक्तिशकले सत्यभूततदभावाश्रयत्वमिति दृष्टान्तसम्भवाद् व्याप्तिबलेन तत्साधनं युक्तमित्यर्थः ।। अत एवैतदाक्षिप्याऽह-मार्गान्तरमेतदित्यदोष इति ।

### जनार्दनभट्टीया

'तस्य च बाध्यत्व' इति वाक्यलब्धमर्थविशेषणमाह – तथा चेति ।। तेनैव लब्धमर्थान्तरमाह– न केवलमिति ।। अतो व्याप्तिबलेनेति ।। 'यस्य बाध्यत्वं बाध्यं तस्याबाध्यत्वं सत्यम्' इति व्याप्तिबलेनेत्यर्थः । शङ्कते – अनिर्वचनीयस्येति ।। सच्छब्दार्थविकल्पानुपपत्तिः सद्विलक्षणत्वस्येति शेषः ।

## सद्विलक्षणत्वं च ..

**जगतः सच्छब्दार्थविकल्पानुपपत्त्या सद्विलक्षणत्वानुपपत्तिसमर्थनम्**

### श्रीमज्जयतीर्थटीका

न केवलं बाध्यत्वाभावाज्जगति सद्विलक्षणत्वानुपपत्तिः । किन्तु सच्छब्दार्थ-विकल्पानुपपत्तेश्चेति भावेन विकल्पमाह-

## मूल

***सद्विलक्षणत्वं च सज्जातिविलक्षणत्वं सन्मात्रविलक्षणत्वं वा***

इह केचिज्जातिरेव पदार्थ इत्यातिष्ठन्ते । अपरे तु जातिविशिष्टा व्यक्तिरिति मन्यन्ते । अन्ये तु स्वरूपमेवेति सङ्गिरन्ते । तत्राऽद्ये मते सत् सत्ता जातिः । द्वितीये सत्ताविशिष्टा व्यक्तिः । तदुभ-याभिप्रायेणोक्तम्-सज्जातीति ।। सतो जातिः सज्जातिः । तथा सत्त्वं जातिर्यस्य तत्सज्जातीति ।

तृतीयमतानुसारेणोक्तम्- सन्मात्रेति ।। सन्मात्रं स्वरूपेणैव सत् । न जात्या । अत्र सच्छब्दार्थ एव विकल्प्यते । वैलक्षण्योक्तिस्त्वनुवादमात्रं दूषणोक्तिसौकर्यायेति ज्ञातव्यम् । ननु सत्यमबाध्यमिति परेणाङ्गीकृतम् । तदपि कस्मान्न शङ्क्यते । सत्यम् । तथा सति 'यदबाध्यं न तद्बाध्यते' इति व्याप्य-व्यापकभावानुपपत्तिः स्फुटैवेति निर्दलत्वेन शङ्कानर्हत्वात् । आद्यपक्षद्वयं दूषयति-

**मूल**

*जात्यङ्गीकारे सद्बहुत्वम् ।*

सच्छब्दार्थत्वेन सच्छब्दप्रवृत्तिनिमित्तत्वेन वा सत्ताजात्यङ्गीकारे सतां बहुत्वमनेकत्व-मङ्गीकर्तव्यं स्यात् । लक्षणव्याघातप्रसङ्गेनैकस्मिन्नुपदेशादिनैव सङ्गतिग्रहणाद्युपपत्त्या वैयर्थ्य-प्रसङ्गेन च जातिवादिभिर्जातेरनेकाश्रयताश्रयणात् । सद्बहुत्वं च सदद्वैतवादिनामनिष्टम् ।

अथ बहूनि व्यावहारिकाणि सन्ति सन्तीति नेदमनिष्टमिति चेत् । एवं तर्हि जगदेव सदिति न सद्विलक्षणम् । अथ सद्बहुत्वमनङ्गीकृत्य शशविषाणादिप्रतिषेधवदयं प्रतिषेधः क्रियत इति चेन्न । तथा सति जातिजातिमद्वैलक्षण्यसाधनेऽर्थान्तरतादिप्रसङ्गात् । तृतीयं दूषयति -

**मूल**

*सन्मात्रविलक्षणत्वं चेत्सिद्धसाधनता ।*

चेच्छब्दो यद्यर्थे । सद्विलक्षणत्वशब्दार्थस्तर्हीति शेषः । सिद्धसाधनता अर्थापत्तेरिति शेषः । कथमित्यत आह-

**मूल**

*ब्रह्मवैलक्षण्याङ्गीकारात् ।*

सत्तासम्बन्धमन्तरेण स्वरूपत एव सत् ब्रह्मैव परेणाङ्गीकृतम् । तद्वैलक्षण्यं च तद्विपरीत-लक्षणयोगो वा तल्लक्षणराहित्यं वा तत्तादात्म्याभावो वा । तत्सर्वं जगत्यस्माभिरङ्गीकृतमेवेति कथं न सिद्धसाधनता । सद्वादिना जगतो यत्सत्त्वमङ्गीक्रियते तदभावः सद्विलक्षणत्वमिति चेन्न । सद्वादिना प्रतिपन्नोपाधौ निषेधानर्हत्वलक्षणस्य सत्त्वस्याङ्गीकृतत्वात् । तत्र च दोषस्योक्त-त्वात् । तदेवं नानिर्वचनीये प्रमाणमस्तीति स्थितम् ।

### श्रीविजयीन्द्रभिक्षु

सच्छब्दार्थेति ।। बाध्यत्वानुपपत्त्या जगति परेण यत्सद्विलक्षणत्वमुच्यते तत्सच्छब्दार्थस्य विकल्पासहत्वाच्चेत्यर्थः । ननु सच्छब्दस्य नियतैकार्थत्वेनाऽऽचार्यकृतविकल्पानुपपत्तिरित्याशङ्क्य तदुपपत्तये मतभेदमाह- केचिदिति ।। तान्त्रिकेषु भट्टमतानुसारिण इत्यर्थः । जातिरिति ।। अनन्तासु व्यक्तिषु शक्तिकल्पने गौरवात् सामान्यलक्षणाभावेन प्रतिव्यक्तिशक्तिग्रहासम्भवात् निर्विक-ल्पकोपस्थितव्यक्तौ शक्तिग्रहासम्भवेन जातिविशिष्टव्यक्त्युपस्थितेरावश्यकत्वात् नागृहीत-विशेषणन्यायेन जातिविशिष्टे शक्तिग्रहे जातावपि शक्तेरावश्यकत्वात् व्यक्तेराक्षेपादिना लाभ-सम्भवाच्च जातिरेव पदार्थ इत्यर्थः । अपरे त्विति ।। गौतममतानुसारिण इत्यर्थः । जातिविशिष्टेत्युपलक्षणम् । यथासम्भवमाकृतिविशिष्टेत्यपि ज्ञेयम् ।

तेषामयमाशयः । व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकैक्येन शक्यैक्योपपत्तेः । सामान्य-लक्षणया सकलव्यक्त्युपस्थितौ शक्तिग्रहसम्भवात् । प्रौढप्रकाशकयावत्तेजःप्रतियोगिक-संसर्गाभावरूपतमःप्रतीत्यनुरोधेन प्रसिद्धधूमव्यक्तौ वह्निसम्बन्धावगमेऽपि 'धूमो वह्निव्यभिचारी न वा' इति संशयानुरोधेन च सामान्यलक्षणाया अप्यवश्यमभ्युपेयत्वात् । न हि प्रतियोगिज्ञानं विना अभावज्ञानं सम्भवति । न च धर्मिज्ञानं विना अप्रसिद्धधूमविषयकः संशयः । निर्विकल्पकोप-स्थितायामपि व्यक्तौ शक्तिग्रहसम्भवेन जातौ व्यक्त्यतिरिक्तविशेषणान्तराभावेन च व्यक्ति-विशिष्टत्वेनोपस्थितावेव शक्तिग्रहस्याऽवश्यकतया नागृहीतविशेषणान्यायस्य वैपरीत्यापातात् । व्यक्तेराक्षेपेण लाभे प्राधान्यानुपपत्तेः । प्रकृत्यर्थान्वितस्वार्थावबोधकप्रत्ययार्थभूत-कर्मत्वान्वयानुपपत्तेः जातिव्यक्त्योः युगपदुपस्थितेः आनुभविकत्वेन शक्यार्थव्यवहितप्रतीत्यभावेन च लक्षणानुपपत्तेश्चेति ।

स्वरूपमेवेति ।। व्यक्तिस्वरूपमेव पदार्थः । न जातिरपि । न वा जातिविशिष्टव्यक्तिरि-त्यर्थः । तेषां तु 'प्रत्ययार्थभूतकर्मत्वादीनां व्यक्तावेवान्वयदर्शनात् स्वरूपमात्रे शक्त्यङ्गीकारेऽपि येन रूपेणोपस्थिते स्वरूपे यस्य पदस्य पिण्डादौ अयस्त्वसुवर्णत्वयोः विनाशोत्पत्तिदर्शनेन

अनुगतजात्यभावेऽपि तव सुवर्णरजतघटादिषु अनुगतघटाकारबुद्धिवत् अनुगतधर्मं विनाऽपि घटोऽयमित्यनुगतप्रतीत्युपपत्त्या च पराभिमतजातौ मानाभावाच्च' इत्याशय इति ।

नन्वेवमाचार्यकृतविकल्पस्य न्यूनतेत्याशङ्क्य तत्रावृत्तिभ्यामुभयपरत्वान्न न्यूनतेत्याह- तदुभयेति ।। सच्छब्दस्य भावप्रधानत्वमभिप्रेत्याऽह- तथा सत्त्वमिति ।। नन्वत्र सत्ताजातिर्वा जातिविशिष्टा व्यक्तिर्वा सन्मात्रं वेति सच्छब्दार्थ एव विकल्पनीयः । तद्वैलक्षण्यं किमर्थमुच्यत इत्यत आह- दूषणोक्तिसौकर्यायेति ।। केवलसच्छब्दार्थविकल्पने सिद्धान्तिकर्तृकबहुदूषणदानेन भग्नोत्सवः परो झटिति प्रकृतदूषणं न जानीयादिति तत्स्फुरणायेत्यर्थः । तथा सतीति ।। व्याप्यव्यापकभावस्य भेदगर्भत्वादिति भावः । सच्छब्दार्थत्वेनेति भट्टमते । सच्छब्दप्रवृत्तिनिमित्तत्वेनेति न्यायमते । अनेकत्वमिति ।। अवस्थाद्वयविशिष्टस्यैव पिण्डस्य यत्र विनाशस्तत्रापि चैत्रत्वादिजात्यङ्गीकारादिति भावः । लक्षणव्याघातप्रसङ्गेनेति ।। नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वरूपतल्लक्षणव्याघातप्रसङ्गेनेत्यर्थः । वैयर्थ्यप्रसङ्गेनेति ।। जात्यङ्गीकारस्य विफलत्वप्रसङ्गेनेत्यर्थः । सद्बहुत्वाऽऽपादनमिष्टमित्याशङ्क्याऽह- सद्बहुत्वञ्चेति ।। ननु सदद्वैतमित्यस्य परमार्थसदैक्यमित्यर्थः । एवञ्च सत्ताजातिनिर्वाहाय अनेकसत्पदार्थाङ्गीकारेऽपि नाद्वैतहानिरित्याशयेन शङ्कते- अथेति ।। न सद्विलक्षणमिति ।। स्यादिति शेषः । ननु यथा शशविषाणादेः प्रतिषेधेऽपि न तस्य सत्त्वम् । तथा जगति सत्ताजातिमद्वैलक्षण्याङ्गीकारेऽपि न सत्ताजातिमदङ्गीकारप्रसङ्ग इति शङ्कते- अथेति ।। अर्थान्तरत्वादिप्रसङ्गादिति ।। 'जगत् ब्रह्मवत्सत्यं न वा' इति विप्रतिपत्तौ सत्ताजातिमद्वैलक्षण्यसाधनस्य प्रकृतानुपयुक्तत्वादिति भावः । तद्वैलक्षण्यसाधने सिद्धसाधनमादिपदार्थः । अर्थापत्तिरनुमानान्तर्भूतेत्यभिप्रेत्य सिद्धसाधनतोक्ति-रित्याशयेनाऽह- अर्थापत्तेरिति ।। सन्मात्रवैलक्षण्यसाधने ब्रह्मवैलक्षण्याङ्गीकारेण सिद्ध-साधनतोक्तिरसङ्गतेत्यत आह- सत्तासम्बन्धमन्तरेणेति ।। विशब्दलक्षणशब्दयोः नानार्थत्वेनैवा-नेकार्थाश्रयणेनापि तत्सिद्धसाधनतादोषानिस्तार इत्याह- तद्वैलक्षण्यञ्चेति ।। तद्विपरीतेति ।। ब्रह्मविपरीतेत्यर्थः । ननु प्रपञ्चसत्यत्ववादिना यत्सत्त्वं प्रपञ्चेऽभ्युपगम्यते तदभावरूप-सद्विलक्षणत्वमेव साध्यत इति न सिद्धसाधनतेति शङ्कते- सद्वादिनेति ।। तत्र चेति ।। प्रतिपन्नोपाधौ निषेधानर्हत्वरूपसत्त्वाभावसाधने च 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' इत्यत्र मानाभावरूपदोषस्योक्तत्वादित्यर्थः । अनिर्वचनीये साधकप्रमाणदूषणं निगमयति- तदेवमिति ।।

**श्रीवेदेशतीर्थ**

सच्छब्दस्य नियतैकार्थत्वेनाऽऽचार्यकृतविकल्पानुपपत्तिमाशङ्क्य तदुपपत्तये मतभेदमाह- केचिदित्यादिना ।। निर्विकल्पकोपस्थितव्यक्तौ शक्तिग्रहासम्भवेन जातिविशिष्टव्यक्ति-ग्रहस्याऽवश्यकत्वान्नागृहीतविशेषणन्यायेन जातिविशिष्टव्यक्तिग्रहे जातावेव शक्तिः । व्यक्तेरा-क्षेपादिना लाभ इति भावः । अपरे त्विति ।। निर्विकल्पकोपस्थितायामपि जातौ शक्तिग्रहासम्भवेन जातौ व्यक्त्यतिरिक्तविशेषणान्तराभावेन च व्यक्तिविशिष्टत्वेनोपस्थितजातावेव शक्तिग्रह-स्याऽवश्यकतया नागृहीतविशेषणान्यायस्य वैपरीत्यापाताद्व्यक्तेराक्षेपलभ्यत्वेऽप्राधान्यप्रसङ्गाच्च प्रकृत्यर्थान्वितस्वार्थावबोधकप्रत्ययार्थभूतकर्मत्वाद्यन्वयानुपपत्तेश्च जातिविशिष्टव्यक्तिरेव शक्येति भावः । अन्ये त्विति ।। क्षीरविक्रयादिना ब्राह्मणत्वशूद्रत्वयोः स्पर्शमणिसम्बन्धेनायः-पिण्डादावयस्त्वसुवर्णत्वयोश्च विनाशोत्पत्तिदर्शनेन सुवर्णरजतमृद्घटादिष्वनुगतधर्माभावेऽप्यनु-गताकारबुद्धिवद्घटोऽयं घटोऽयमित्यनुगतप्रतीत्युपपत्त्या च नित्यानुगतजातौ मानाभावेन स्वरूप-मात्रमेव पदशक्यमित्याशयः । सत्त्वं जातिर्यस्येति ।। तथा च सदिति मूले भावप्रधानमिति भावः । व्याप्यव्यापकभावानुपपत्तिरिति ।।

नन्वभेदेऽपि व्याप्यव्यापकभावोऽवश्यमङ्गीकार्यः । अन्यथा शब्दोऽनित्यः कृतकत्वादित्यादा-वनित्यत्वसमव्याप्तस्य स्वाभिन्नसाधनाव्यापकस्य कृतकत्वस्याप्युपाधितापत्तेः । तत्र ह्यभेदेऽपि व्याप्तिमङ्गीकृत्य साधनव्यापकत्वेनानुपाधित्वं वक्तव्यमिति सर्वत्राभेदेऽपि व्याप्यव्यापक-भावोऽङ्गीकार्य इति चेन्न । साधनस्योपाधित्वेऽप्यनिष्टाभावात् । न च तस्योपाधित्वे तत्र व्यभिचारस्य व्याप्यत्वासिद्धेर्वोन्नयनं स्यादिति वाच्यम् । साधनस्य साध्यव्याप्यत्वग्राहक-प्रमाणविरोधेन तत्र तदुन्नयनासम्भवादिति भावः ।

बहुत्वमनेकत्वमिति ।। 'अनेकानुगतं सामान्यम्' इति लक्षणानुरोधेनैवमुक्तम् । लक्षणव्याघातप्रसङ्गेनेति ।। जातेरेकमात्राश्रितत्वेऽनेकाश्रितत्वघटितलक्षणव्याघातप्रसङ्गेनेत्यर्थः । ननु सत्ताजातिरेव नाङ्गीक्रियते येन सद्बहुत्वं स्यात् । न चैवं सद्विलक्षणमिति तत्प्रतिषेधासम्भवः । शशविषाणादिप्रतिषेधवदुपपत्तेरित्याशङ्कते- अथेति ।। अर्थान्तरतादिप्रसङ्गादिति ।। जगद्ब्रह्मवत् सन्न वेति विप्रतिपत्तौ सत्ताजातितद्वद्वैलक्षण्यसाधनस्य प्रकृतानुपयुक्तत्वादित्यर्थः । सिद्धान्ते सत्ताजातेरङ्गीकारेऽप्यतिरिक्ताया अभावेन तद्वद्वैलक्षण्यसाधने सिद्धसाधनम् आदिशब्दार्थः । स्वविकल्पितानुवादे यदीत्यस्यैव स्वारस्यं मन्वान आह-चेच्छब्द इति ।। यद्वा तर्हीत्युपादानं ह्यत्र विवक्षितम् । चेच्छब्दस्य शङ्कार्थत्वे तदसङ्गतं स्यादित्याशयेनाऽह- चेच्छब्द इति ।। नञ्समानार्थकवीत्युपसर्गस्य तद्विरुद्धतदभावतदन्यरूपार्थत्रयमभिप्रेत्याऽह- तद्वैलक्षण्यं चेति ।। तत्तादात्म्याभावो वेति ।। तल्लक्षणवद्भेद इत्यर्थः । तत्र चेति ।। तादृशसद्वैलक्षण्यसाधने यदबाध्यं न तद्बाध्यमिति व्याप्यव्यापकभावानुपपत्तिरिति दोषस्योक्तत्वादित्यर्थः । केचित्तु प्रतिपन्नोपाधौ त्रैकालिकनिषेधानर्हत्वरूपसत्त्वाभावसाधने च न च बाध्यं जगदित्यत्र किञ्चिन्मानम् इत्यत्र मानाभावरूपदोषस्योक्तत्वादित्यर्थ इत्याहुः ।

**द्वैतद्युमणि**

आतिष्ठान्ते भट्टा इत्यर्थः । मन्यन्ते नैयायिकाः । सङ्गिरन्ते जरन्नैयायिकाः ।

### श्रीराघवेन्द्रतीर्थ

सच्छब्दार्थेति ।। 'सच्चेन्न बाध्येत' इत्यर्थापत्तिशरीरप्रविष्टसच्छब्दार्थेत्यर्थः । एवं चाग्रे व्याप्यव्यापकभावानुपपत्त्युक्तिः स्वरसेति ज्ञेयम् । इहेति । १शब्दार्थविषये । आतिष्ठन्त इति ।। अङ्गीकुर्वन्तीत्यर्थः । सत्तेत्यनुवादः जातिरिति विधिः । 'सच्चेन्न बाध्येत' इत्यत्र सत्त्वं जातिरि-त्यर्थः । व्यक्तिरिति । सच्छब्दार्थ इति योज्यम् । सतो जातिरिति । सन्निष्ठो जातिरूपो धर्म इति तत्पुरुष इति भावः । बहुव्रीहिमुपेत्याऽह- सत्त्वं जातिर्यस्येति ।। दूषणेति ।। सिद्धसाधनत्वादि-वक्ष्यमाणदूषणोक्तिसौकर्यायेत्यर्थः । अन्यथा 'ब्रह्मवैलक्षण्याङ्गीकारात्' इत्याद्युक्तेरयोग इति भावः। मतद्वयानुरोधेन व्याचष्टे- सच्छब्दार्थत्वेनेति ।। लक्षणव्याघातेति ।। 'नित्यमेकमनेकानुगतं सामान्यम्' इति लक्षणव्याघातप्रसङ्गेन इत्यस्य अनेकाश्रयताश्रयणादित्यन्वयः । हेत्वन्तरमाह- एकस्मिन्नुपदेशादिनेति ।। व्याकरणव्यवहारावादिपदार्थः । सङ्गतिग्रहणादीति । व्याप्तिकार्य-कारणग्रहावादिपदार्थः । वैयर्थ्येति । सङ्केतग्रहणादेरिति वा, जात्यङ्गीकारस्येति वा योज्यम् । अनेकत्र सङ्केतग्रहणाद्यर्थमिति यावत् । सन्ति सन्तीति ।। आद्यं शत्रन्तं कारकपदम् । द्वितीयं क्रियापदम् । सतामेव बहुत्वम् । न सद्विलक्षणानामिति मूलार्थमुपेत्याऽह- एवं तर्हीति ।। अर्थान्तरतादीति ।। गगनादेरिव ब्रह्मण इव च सत्त्वेनाप्युपपत्त्या त्वदभिमतसत्त्वाभावासिद्धेरिति भावः। आदिपदेन सिद्धसाधनत्वग्रहः । जातेरधिकरणात्मकत्वेन तद्वैलक्षण्यादेरिष्टत्वात् । तद्विप-रीतलक्षणेति ।। परिच्छिन्नसत्ताकत्वादिरूपेत्यर्थः । तत्र चेति ।। तादृशसत्त्वाभावसाधनपक्षे च 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' 'बाध्यत्वमपि हि तेषां मिथ्या' इत्यादिना दोषस्योक्तत्वादित्यर्थः ।

१सच्छब्दप्रवृत्तिनिमित्तत्वेनेति ।। जातिविशिष्टव्यक्तौ शक्तिरिति मते जातेः शब्दप्रवृत्ति-निमित्तत्वादिति भावः । एकस्मिन्निति । जातेरेकव्यक्तिमात्राश्रितत्वेऽनेकाश्रितत्वगर्भजाति-लक्षणव्याघातः । किञ्चानेकव्यक्तिषूपदेशायोगेन सङ्गतिग्रहणायोगेनैकस्यां जातौ शक्तिरङ्गीकृता । तत्र जातेरेकव्यक्तिमात्राश्रितत्वे एकस्यां व्यक्तौ उपदेशेन शक्तिग्रहसम्भवेन जात्यङ्गीकारवैयर्थ्यप्रसङ्ग इत्यर्थः ।

### गुरुराजीया

सज्जातीत्यनेन कथं पक्षद्वयलाभ इत्यतस्तं दर्शयति- सतो जातिरित्यादिना ।। बहुत्वमनेकत्वमिति ।। 'नित्यमेकमनेकानुगतं सामान्यम्' इति परकीयतल्लक्षणोक्तेरिति भावः । व्याघातेनेति ।। जातेरेकमात्राश्रितत्वेऽनेकाश्रितत्वघटिततल्लक्षणायोगादिति भावः । उपदेशादि-नैवेत्यादिशब्देन वृद्धव्यवहारादिपरिग्रहः जातिवादिभिरिति ।। नैयायिकादिभिरित्यर्थः । अर्थान्तर-प्रसङ्गादिति२ ।। बाध्यत्वाबाध्यत्वविप्रतिपत्तौ जगतो जातिजातिमद्वैलक्षण्यसाधनस्यानुपयोगादिति भावः । चेच्छब्दो यद्यर्थ इति ।। स्वविकल्पितपक्षानुसारेण यदिशब्दस्यैव स्वारस्यादिति भावः । दोषस्योक्तत्वादिति ।। सिद्धसाधनत्वस्येत्यर्थः ।

### गोविन्दीया

तदिति ।। तदुभयमताभिप्रायेणेत्यर्थः । नन्विति ।। यदबाध्यं तत्सत्यमिति परेणाङ्गी-कृतम् । सत्यशब्दार्थपर्यालोचनयाऽबाध्यत्वरूपोऽर्थः अवसीयते । तथा च उभयोः साध्यसाधनयोः ऐक्येन व्याप्यव्यापकभावानुपपत्तेः तदपि कस्मात् न शङ्क्यत इत्यर्थः । सत्यमिति ।। कस्मान्न शङ्क्यते इत्याक्षेपांशो नाङ्गीकार्य इत्यर्थः । तथाऽपीति३ ।। यद्यपि शङ्क्यः तथाऽपीत्यर्थः । निर्दलत्वेनेति ।। निर्बीजत्वेनेत्यर्थः । सतामिति ।। जातेरनेकाश्रितत्वेन सतामनेकत्वमङ्गीकर्तव्यं स्यादित्यर्थः । लक्षणेति ।। जाते एकाश्रितत्वे 'नित्यमेकमनेकानुगतं सामान्यम्' इति जातिलक्षण-विरोधप्रसङ्गेन अनेकाश्रयताश्रयणम् । अथवा एकस्मिन् वस्तुनि उपदेशेन लक्षणेन च वाच्य-वाचकसम्बन्धग्रहणाद्युपपत्त्या तज्जातीयेषु इतरवस्तुषु उपदेशाद्यभावात् सम्बन्धग्रहणानुपपत्त्या अवाच्यत्वेन तेषां वैयर्थ्यप्रसङ्गेन च अनेकाश्रयताश्रयणम् । अनेकाश्रयत्वे एकस्यां जातिविशिष्ट-व्यक्तौ सङ्गतिग्रहणे सति तज्जातीयेतरव्यक्तिस्थजातिज्ञानसम्भवेन तत्र सङ्गतिग्रहणं सुशकमि-त्यर्थः । अथेति ।। जगति सद्बहुत्वमङ्गीकृत्य शशविषाणादिप्रतिषेधवद् अयं प्रतिषेधः विलक्षणपदेन क्रियत इति चेदित्यर्थः । तथा सतीति ।। सद्बहुत्वनिषेधे क्रियमाणे सति तन्निषेध एव साधनीयः। जगतो जातिजातिमद्भिन्नत्वसाधनेऽर्थान्तरता स्यात् । आदिपदेन सिद्धसाधनता स्यात् । तथा हि । सत्ताजातेः व्यक्त्यभिन्नत्वेन व्यक्तिभिन्नत्वसाधनेन जातिभिन्नत्वं साधितमेव । पुनस्तत्साधने सिद्धसाधनता स्यादित्यर्थः । सन्मात्रेति ।। यदि सद्विलक्षणशब्दार्थः सन्मात्रविलक्षणं तर्ह्यर्थापत्तेः सिद्धसाधनतेति शेषपूरणेन समग्रवाक्यार्थः। तद्वैलक्षण्यं चेति ।। ब्रह्मणः सकाशाद्विरुद्धं लक्षणं यस्य जगतस्तद्विलक्षणं तस्य भावस्तद्वैलक्षण्यं विपरीतलक्षणयोग इति यावत् । विमतं ब्रह्मलक्षणं यस्मात् तत् तस्य भावस्तद्वैलक्षण्यं तल्लक्षणराहित्यम् । ब्रह्मणः सकाशाद्विलक्षणं भेदो यस्य तत् तस्य भावस्तद्वैलक्षण्यं तत्तादात्म्याभावो वेत्यर्थः । तत्र चेति ।। प्रतिपन्नोपाधौ निषेधार्हत्वरूपसत्त्वाभाव-साधने 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' इति मानाभावरूपदोषस्योक्तत्वादित्यर्थः । तदेवेति ।। यस्मादेवमुक्तरीत्याऽनिर्वचनीयप्रमाणं नास्तीति सिद्धमित्यर्थः ।

### नारोपन्तीया

जातिवादिभिरिति । नैयायिकादिभिः । न तु सिद्धान्तेऽपि । शक्तिग्रहादेरन्यत्रा-न्यथैवोपपादितत्वादिति भावः ।

### जनार्दनभट्टीया

अनेकार्थशब्दस्थल एव विकल्पप्रवृत्तेः अनेकार्थत्वं शब्दस्य दर्शयितुं मतभेदमाह – इह केचिदित्यादिना ।। स्वरूपमेवेति ।। व्याप्तिस्वरूपमात्रमित्यर्थः । स किं सत्ताजातिः सत्ताजातिमद्वा? इति विकल्पे कर्तव्ये सद्विलक्षणत्वं च सज्जातिविलक्षणत्वमिति विलक्षणग्रहणं कुतः? इत्यत आह – अत्रेत्यादिना ।। व्याप्यव्यापकभावानुपपत्तिरिति ।। अभेदादिति भावः । आद्यपक्षमात्रदूषणत्वं निवारयति – आद्यपक्षद्वयमिति ।।

आद्यपक्षानुसारेण योजयति – सच्छब्दार्थत्वेनेति ।। द्वितीयमतानुसारेण योजयति – सच्छब्द-प्रवृत्तिनिमित्तत्वेनेति ।। जातेरनेकाश्रयत्वं दर्शयति– १लक्षणव्याघातप्रसङ्गेनेति ।। यत्र जातिरेव लक्षणत्वेनोच्यते 'पृथिवीत्ववती पृथिवी' इत्यादौ तत्र सम्भाविताशेषरूपयावल्लक्ष्यमात्र-वृत्तित्वरूपलक्षणविरोधेन इत्यर्थः । वैय्यर्थप्रसङ्गेनेति ।। जातेरेकव्यक्तिकत्वाङ्गीकारे शक्तिग्रहाद्यर्थम् अनेकव्यक्तिक्रोडीकाररूपप्रयोजनाभावेन जातेः वैय्यर्थ्यप्रसङ्गेनेति शेषः । शशविषाणादिप्रतिषेध-वदिति ।।१ असत्या एव जातेः प्रतिषेध इत्यर्थः । अयं प्रतिषेध इति ।। जगत् सच्चेत् न बाध्येत । बाध्यते च अतः सद्विलक्षणमिति अर्थापत्तिपर्यवसानरूपप्रतिषेध इत्यर्थः । यद्यप्यत्र घटो नास्तीत्यादाविव प्रतिषेधः२ पृथङ् न श्रूयते । तथाऽपि 'नश्छव्यप्रश्नान्'३ 'सुडनपुंसकस्य'४ इत्यादाविव ५नञ्समानार्थक-विलक्षणशब्दस्यैव प्रतिषेधत्वमभिप्रेत्य एवमुक्तम् । अथवा 'जगत् सच्चेत् न बाध्येत । बाध्यते च जगत् अतः सन्न' इति प्रतिषेध इत्यर्थः । एवं च न क्वापि कुसृष्टिरिति ज्ञेयम् । अर्थान्तरादीति ।। आदिपदात् सत्ताजातेः घटादौ प्रत्यक्षसिद्धत्वेन सद्वैलक्षण्यशब्देन तत्प्रतिषेधे प्रत्यक्षबाधकप्रसङ्गश्चे-त्यर्थः । तत्र च दोषस्येति ।। 'बाध्यत्वं मिथ्या न वा' इत्यादिना वाक्यद्वयेन दूषितत्वादित्यर्थः । यद्वा प्रतिपन्नोपाधौ निषेधानर्हरूपसद्विलक्षणत्वे प्रत्यक्षबाधलक्षणदोषस्योक्तत्वादित्यर्थः ।

## न च कयाऽपि युक्त्या ..

**वियदादिजगतोऽनिर्वचनीयत्वे भेदनिराकरणायोगरूपबाधकसमर्थनम्**

### श्रीमज्जयतीर्थटीका

एवं साधकप्रमाणाभावेनानिर्वचनीयं निरस्य बाधकेनापि निराचष्टे

## मूल

***न च कयाऽपि युक्त्या मानेन वा भेदनिराकरणं भवति ।***

यदि वियदादिकमनिर्वचनीयमङ्गीक्रियते तदा 'भेदस्य भेदिनो भिन्नत्वेऽनवस्थाप्रसङ्गः । अभिन्नत्वे भेदभेदिनोरन्यतराभावप्रसङ्गः' इत्यादिकया युक्त्या 'मायामात्रमिदं द्वैतम्' इत्यादिना मानेन वा यत्परेण स्वशास्त्रे भेदनिराकरणं क्रियते तदनुपपन्नं स्यात् ।

ननु युक्तेर्मानत्वे कथं पृथग्ग्रहणम् । अमानत्वे कथं निराकरणाङ्गत्वमिति चेत् इत्थम् । युक्तिरागमेतिकर्तव्यतात्वेन स्वयममानमपि निराकरणाद्यङ्गं भवतीति परेणाङ्गीकृतम् । तदनुवादश्चायमिति ।

कुतोऽनिर्वचनीयवादिनो भेदनिराकरणं न सम्भवतीत्यत आह-

**मूल**

***अङ्गीक्रियमाणत्वात् ।***

अनिर्वचनीयत्वं हि सदसद्विलक्षणत्वम् । वैलक्षण्यं च भेदो वा भेदव्याप्तं वा । एवं चानिर्वचनीयमङ्गीकुर्वता भेदस्याङ्गीक्रियमाणत्वाद् १अङ्गीकारनिराकरणयोर्व्याहतत्वान्न भेदनिराकरणं सम्भवति । इष्यते च तत् । अतो नानिर्वचनीयाङ्गीकारो युक्तः । सदसद्विलक्षणत्वं नाम सत्त्वासत्त्वानाधारत्वम्, न भेद इति चेन्न । सत्त्वविकल्पनिराकरणेन निरस्त्वात् । निराकरिष्यमाणत्वाच्च ।

### श्रीविजयीन्द्रभिक्षु

‘न च कयाऽपि युक्त्या’ इति वाक्ये अनिर्वचनीयनिराकरणाप्रतीतेरसङ्गतं तदित्याशङ्क्य सङ्गमयति- एवमिति ।। अनिर्वचनीयनिराकरणपरत्वस्फोरणाय शेषं पूरयन् भवतीत्यस्य भवेदिति विपरिणामं सूचयन् व्याचष्टे- यदि वियदादिकमिति ।। भेदानिराकरणे प्रस्तुतानिर्वचनीय-सिद्धिरविकलैवेत्यत आह- इष्यते चेति ।। तत् भेदनिराकरणम् । सत्त्वासत्त्वानाधारत्वमिति ।। सत्त्वासत्त्वात्यन्ताभावाधारत्वमित्यर्थः । निरस्तत्वादिति ।। सत्ताजात्यनाश्रयत्वसाधने सिद्ध-साधनत्वात् प्रतिन्नोपाधौ निषेधानर्हत्वाभावाधारत्वविवक्षायां चासिद्धेरिति निरस्तत्वादित्यर्थः । निरसिष्यमाणत्वाच्चेति ।। ‘सदसदात्मकत्ववत्सत्त्वासत्त्वोभयानाधारत्वस्यापि विरुद्धत्वात्’ इति निराकरिष्यमाणत्वाच्चेत्यर्थः ।

### श्रीवेदेशतीर्थ

युक्त्येति ।। तर्केणेत्यर्थः । ननु स्वमते तर्कस्य दूषणानुमानत्वेन कथं पृथग्ग्रहणमित्यत आह- तदनुवादश्चेति ।। भेदव्याप्तं वेति ।। तदङ्गीकारे व्यापकीभूतभेदाङ्गीकारोऽप्यावश्यक इति भावः । इष्यते च तदिति ।। तत् भेदनिराकरणम् । अन्यथा औतवादित्वानुपपत्तेः । सत्त्वविक-ल्पेति ।। यदि सत्ताजात्यनाधारत्वं तदा सद्बहुत्वापत्तिः। यदि ब्रह्मत्वानाधारत्वं तदा सिद्धसाधन-मित्यर्थः । निराकरिष्यमाणत्वाच्चेति ।। ‘सत्त्वासत्त्वरूपविधिसमुच्चयस्य एकत्र विरुद्धत्ववत्तन्निषेध-समुच्चयस्यापि जगति विरुद्धत्वात्’ इति निराकरिष्यमाणत्वाच्चेत्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

एवं साधकेति ।। ‘मिथ्याशब्दोऽनिर्वचनीयं वदति’ इत्यादिनेति भावः । बाधकेना-पीति । भेदापाकरणवादिनो व्याहतत्वरूपबाधकेनापीत्यर्थः । निराकरणादीति । उपन्यास आदिपदार्थः । इष्यते च तदिति । भेदनिराकरणमित्यर्थः । निरस्तत्वादिति ।। ‘जात्यङ्गीकारे सद्बहुत्वम्’ इत्यादिनोक्तेन सद्बहुत्वार्थान्तरत्वनिरधिष्ठानब्रह्माधारत्वाभावादिदोषेण निरस्तत्वादि-त्यर्थः । निराकरिष्यमाणत्वाच्चेति ।। ‘अथ वा’ इति वक्ष्यमाणयोजनयेति भावः ।

### गुरुराजीया

युक्त्येति ।। तर्केणेत्यर्थः । भेदव्याप्तं वेति ।। तथा च व्याप्याङ्गीकारे तद्व्यापक-भेदस्याप्यङ्गीकारसिद्धिरिति भावः । इष्यत इति ।। अन्यथा औतवादित्वानुपपत्तेरिति भावः । निरस्तत्वादिति ।। यदि सत्ताजात्यनाधारत्वं तर्हि सद्बहुत्वम् । यदि ब्रह्मत्वानाधारत्वं तदा सिद्धसाधनमिति निरस्तत्वादित्यर्थः । निराकरिष्यमाणत्वादिति ।। ‘सत्त्वासत्त्वरूपविधि-समुच्चयस्यैकत्र विरुद्धत्ववत् तन्निषेधसमुच्चयस्याप्येकत्र विरुद्धत्वेनासम्भवित्वात्’ इति निराकरिष्य-माणत्वादित्यर्थः ।

### गोविन्दीया

न चेति ।। अनिर्वचनीयं हि सदसद्विलक्षणम् । विलक्षणं च भिन्नम् । तथा च वियदादिजगतः सदसद्भिन्नत्वेऽङ्गीक्रियमाणे कयाऽपि युक्त्या मानेन वा स्वशास्त्रे क्रियमाणं भेदनिराकरणमुपपन्नं न च भवति । अङ्गीकारानङ्गीकारयोर्व्याहतत्वादित्यर्थः । भेदस्येति ।। भेदिनो सदसतोः सकाशाद् भेदस्य भिन्नत्वे भेदो भेदान्तरवान् स्यात् । सोऽपि भेदः धर्मिभूतभेदाद् भिन्नश्चेत् पुनर्भेदान्तरवान् स्यादित्येवं भेदपरम्परयाऽनवस्थाप्रसङ्गः । अभिन्नत्वे भेदाभेदिनोर्मध्येऽन्यतरस्य भेदस्य वा भेदिनो वा एकस्याभावप्रसङ्ग इत्यादिकया युक्त्येत्यर्थः । मायामात्रमिति ।। इदं द्वैतं भेदः मायामात्रं मायाकल्पितमित्यर्थः । इत्थमित्युत्तरमाहेत्यर्थः । युक्तिमिति ।। आगमेतिकर्तव्यतात्वेनागमानुकूलत्वेन स्वयममानमपि युक्तिनिराकरणाङ्गं भवतीति परेणाङ्गीकृतं कयाऽपि युक्त्या मानेन चेत्ययं ग्रन्थः परोक्तवाक्यस्यार्थतोऽनुवाद इत्यर्थः । इष्यते चेति ।। तद्भेदनिराकरणमिष्यते क्रियते चेत्यर्थः । सत्त्वेति ।। सत्ताजातितद्विशिष्टव्यक्तिस्वरूपसद्भिः सत्त्वविकल्पैः सदसद्विलक्षणत्वस्य निराकरणेनास्यापि सत्त्वासत्त्वानाधारत्वे सिद्धे सिद्धसाधनता स्यादित्यर्थः । निराकरिष्यमाणत्वाच्चेति ।। सत्त्वासत्त्वरूपविधिसमुच्चयस्येत्यादिवाक्येन निराकरिष्यमाणत्वादित्यर्थः ।

### नारोपन्तीया

युक्तिरागमेतिकर्तव्यतात्वेनेति ।। तथा चाऽगमरूपप्रमाणसहकारित्वाद्युक्तेरन्यथा-सिद्धत्वम् । सहकारित्वं च विपरीतशङ्कानिवर्तकत्वम् । तेन युक्त्या विपरीतशङ्कायां निवर्तितायाम् आगम एव स्वप्रतिपाद्यमर्थं साधयतीति परो मन्यते ।

### जनार्दनभट्टीया

‘न च कयापि’ इति मूले १भेदनिराकरणानुपपत्तिकथनस्य असङ्गतिमाशङ्क्य प्रघट्टिकाविच्छेदं दर्शयन् एतदपि वाक्यं प्रकृतानिर्वचनीयनिराकरणपरतया योजयति – एवमिति ।। आगमार्थ-निर्णयानुकूलत्वेनेत्यर्थः । ‘अङ्गीक्रियमाणत्वात्’ इत्यस्य षष्ठ्यन्तसापेक्षत्वात् तदध्याहृत्य पूर्ववाक्येन सह पञ्चम्यन्तं योजयति – अनिर्वचनीयत्वं हीति ।। सत्वासत्वानाधारत्वमिति ।। सत्वासत्वाधारत्वा-त्यन्ताभावाधिकरणत्वमित्यर्थः । निराकरिष्यमाणत्वाच्चेति ।। ‘अनिर्वचनीयासिद्धेश्च’ इति उत्तरवाक्य इति शेषः ।

## अनिर्वचनीयासिद्धेश्च ...

**अनिर्वचनीयत्वस्य मिथ्यात्वे भेदनिराकरणोपपत्तिशङ्का तन्निरासश्च**

### श्रीमज्जयतीर्थटीका

सदसद्विलक्षणत्वं मिथ्याभूतमङ्गीक्रियते । भेदस्तु पारमार्थिक एव निराक्रियते । तत्कथं भेदाङ्गीकारनिराकरणयोर्विरोधः । न हि मिथ्याभूतं चन्द्रभेदमङ्गीकृत्य पारमार्थिकतन्निरासे विरोधो भवतीत्यत आह-

## मूल

***अनिर्वचनीयासिद्धेश्च सद्विलक्षणत्वमसद्विलक्षणत्वं च***

***मिथ्येत्यविलक्षणत्वमेव सत्यं स्यात् ।***

यदि विरोधपरिहाराय जगतः सद्विलक्षणत्वमसद्विलक्षणत्वं च मिथ्येत्यङ्गीक्रियते तदा अनिर्वचनीयस्योक्तरीत्या प्रमाणाभावेनासिद्धेर्मिथ्याशब्दस्य तदर्थत्वानुपपत्तौ असदर्थत्वे चाङ्गीकार्ये जगतः सदसदात्मकत्वं सत्यं प्रसज्यते । स्तम्भे स्तम्भवैलक्षण्यस्यासत्त्वे स्तम्भात्मकत्वस्य सत्यत्ववदिति ।

### श्रीवेदेशतीर्थ

तत्कथमिति ।। समानसत्ताकयोरेव भावाभावयोर्विरोधादिति भावः ।

### द्वैतद्युमणि

ननु 'साधकप्रमाणाभावेन अनिर्वचनीयं निराकृत्य बाधकेनापि निराचष्टे' इत्युपक्रान्तम् । इदानीं तु अविर्वचनीये प्रमाणाभावमभिधायासत्त्वपक्ष एवेदं दूषणमभिहितम् । तथा च कथं न पूर्वोत्तरविरोध इति चेन्न ।

यतोऽत्रानिर्वचनीयाङ्गीकारे स्वव्याहतत्वादिरूपबाधकप्रदर्शनार्थमयं ग्रन्थः प्रवृत्तः । तत्राङ्गी-कारनिराकरणयोर्व्याहतिपरिहाराय पारमार्थिकभेदनिराकरणं मया क्रियत इत्युक्ते तत्रानेन ग्रन्थेनेद-मुच्यते 'लोके सत्त्वासत्त्वौदासीन्येन प्रतीतिर्नास्तीति स्थितिः । तत्र 'इदं सद्विलक्षणम्' इत्यादिवाक्यं सद्विलक्षणत्वं पारमार्थिकत्वेनैव बोधयति । तन्निषेधवाक्यमपि सत्त्वनिषेधरूपमसत्त्वं भेदे सत्त्वेनैव बोधयतीत्येकत्र विरुद्धे सत्त्वासत्त्वे बोधयतोर्वाक्ययोर्व्याहतिः१ । एवं सद्विलक्षणत्वं जगत्यसत्त्वरूपम् । तदभावेऽभिहिते तदेव सत्त्वमित्येवं जगतः सत्त्वासत्त्वोभयप्राप्त्या व्याहतिः । वचनविरोधस्य विषयविरोधमूलत्वात्' इत्यभिहिते तत्र 'जगति निषिद्ध्यमानोऽपि भेदः सत्त्वाभाववानपि नासत्त्ववान् । जगति तद्भेदसत्त्वेऽपि न तन्निराकरणेन पुनः सत्त्वम् । अतो न व्याहतिः । अनिर्वचनीयस्य तृतीयप्रकारस्याङ्गीकारात्' इत्याशयेन शङ्कितम् । तन्न घटते । तत्र प्रमाणाभावेन तेन रूपेण भेदादिजगतां बुद्धावनारोहेणोक्तवाक्याभ्यामुपपादितरीत्या विरुद्धधर्म-वत्त्वेनैव प्रतीयमानत्वाद् व्याहतिर्दुर्वारैवेति । तथा च कथं पूर्वोत्तरविरोधः ।

### श्रीराघवेन्द्रतीर्थ

चशब्दसमुच्चेयमाह - मिथ्याशब्दस्येत्यादि ।।

२सदसदात्मकत्वमिति । सद्वैलक्षण्यस्य मिथ्यात्वे असत्त्वस्यासद्वैलक्षण्यस्य मिथ्यात्वे सत्त्वस्यैव प्राप्त्या सदसदात्मकत्वं सत्यं प्रसज्येतेत्यर्थः । अविलक्षणत्वं सत्यमित्यस्यार्थः ।

### गुरुराजीया

तत्कथमिति ।। समानसत्ताकयोरेव भावाभावयोर्विरोधादिति भावः ।

### गोविन्दीया

सदिति ।। सदसद्विलक्षणत्वं सदसद्भ्यां भेदः मिथ्याभूतोऽङ्गीक्रियत इत्यर्थः ।

### नारोपन्तीया

सदसदात्मकत्वं सत्यमिति । अनेन विलक्षणत्वमिति मूलं पूर्वप्रकृतसदसद्विलक्षणत्वा-भावपरमिति व्याख्यातं वेदितव्यम् ।

### जनार्दनभट्टीया

उत्तरवाक्यमवतारयति – सदसद्विलक्षणत्वं मिथ्याभूतम् इत्यादिना ।। 'अविलक्षणत्वमेव स्यात्' इति मूले आपादकाप्रतीतेः योजयति – यदि विरोधेत्यादिना ।।

## अनिर्वचनीयासिद्धेश्च..

**अनिर्वचनीयलक्षणानुपपत्त्या अनिर्वचनीयनिराकरणम्**

### श्रीमज्जयतीर्थटीका

अथवा अनिर्वचनीयं साधकप्रमाणाभावेन बाधकसद्भावेन च निराकृत्य लक्षणानुपपत्त्याऽपि निराकरोति-

## मूल

***अनिर्वचनीयासिद्धेश्च***

अनिर्वचनीयमित्यनिर्वचनीयलक्षणम् । तस्यासिद्धेश्च न च भेदे विकल्पो युज्यत इति सम्बन्धः। तथा हि, न तावन्निर्वचनानर्हत्वमनिर्वचनीयत्वम् । मूकीभावप्रसङ्गेनासम्भवित्वात् । नापि सत्त्वा-सत्त्वाभ्यां निर्वक्तुमशक्यत्वलक्षणम् । प्रत्येकं सदसतोरनिर्वचनीयतापातात् । समुच्चितस्य तथात्वे सतोऽसतश्च सदसदात्मकत्वाभावेन तत्प्रसङ्गानिवारणात् । सत्त्वेन निर्वक्तुमशक्यत्वे सत्यसत्त्वेन निर्वक्तुमशक्यत्वमिति चेन्न । सदसदात्मकतावत्प्रतिषेधसमुच्चयस्यापि विरुद्धत्वेनासम्भवित्वात् । अनिर्वचनीयवादिनो विरोधोऽसिद्ध इति चेन्न । अनिर्वचनीयसिद्धौ विरोधासिद्धिः । ततो लक्षणसिद्ध्या अनिर्वचनीयसिद्धिरिति परस्पराश्रयप्रसङ्गात् ।

### श्रीविजयीन्द्रभिक्षु

पूर्वव्याख्याने 'अनिर्वचनीयासिद्धेश्च' इति चकारस्य नातिप्रयोजनतां मन्वान आह- अथवेति ।। नन्वनिर्वचनीयलक्षणनिराकरणपरत्वे 'सदसद्विलक्षणत्वासिद्धेश्च' इति तद्वाक्याकारः स्यादित्यत आह- अनिर्वचनीयमितीति ।। अनिर्वचनीयत्वरूपलक्षणस्यासिद्धेरित्यर्थः । हेतोः साध्यापेक्षायां साध्येन सह सम्बन्धं दर्शयति- न च भेद इति ।। लक्षणासिद्धिमुपपादयति- तथा हीति ।। मूकीभावप्रसङ्गेति ।। गुरुशिष्ययोः लोकमात्रस्य वा अभिलपनाभावप्रसङ्गेनेत्यर्थः । सदसतोरिति ।। सतोऽसत्त्वेनासतश्च सत्त्वेन निर्वक्तुमशक्यत्वादिति भावः । समुच्चितस्येति ।। समुच्चितप्रतियोगिकाभावस्य लक्षणत्व इत्यर्थः । सत्त्वेनेति ।। सत्त्वेन निर्वक्तुमशक्यत्वेन सहितमसत्त्वेन निर्वक्तुमशक्यत्वं लक्षणमस्त्वित्यर्थः । असम्भवित्वादिति ।। यद्यपि सत्त्वेन निर्वक्तुमशक्यत्वासत्त्वेन निर्वक्तुमशक्यत्वयोः परस्परविरहरूपत्वाभावेन गोत्वाश्वत्वयोरिवैकत्र निषेधसम्भवः तथाऽपि तयोः परस्परविरहात्मकसत्त्वासत्त्वोभयघटितमूर्तित्वेन सत्त्वासत्त्वयोरिव तयोरप्येकत्र निषेधो न सम्भवतीति भावः ।

### श्रीवेदेशतीर्थ

'अनिर्वचनीयासिद्धेश्च' इति चशब्दास्वारस्यं मन्वान आह- अथवेति ।। सदसतो-रनिर्वचनीयतापातादिति ।। सत्त्वेन निर्वक्तुमशक्यत्वमसति, असत्त्वेन निर्वक्तुमशक्यत्वं सती-त्यतिव्याप्त्यापत्तेरित्यर्थः । समुच्चितस्येति ।। सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वस्य लक्षणत्व इत्यर्थः । सदसदात्मकत्वाभावेनेति ।। सतः सन्मात्रात्मकत्वाद् असत असन्मात्रात्मकत्वात् तयोः सदसदात्मकत्वाभावादित्यर्थः । ननु सदसदात्मकत्वयोः विरुद्धत्वेऽपि न तदभावौ विरुद्धौ । सत्त्वासत्त्वयोरेकत्र प्रवेशाभावेऽपि तदभावयोरनिर्वचनीये जगति शुक्तिरूप्यादौ च सत्त्वात् । यथा गोत्वाश्वत्वयोरेकत्र समावेशाभावेन विरुद्धत्वेऽपि तदभावयोरेकत्र महिष्यादौ समावेशेना-विरुद्धत्वमित्यभिप्रेत्य शङ्कते- अनिर्वचनीयवादिन इति ।।

### श्रीराघवेन्द्रतीर्थ

तस्यासिद्धेश्चेति ।। न केवलं साधकाभावबाधकभावाभ्यामनिर्वचनीयाभावात्; लक्षणस्य असिद्धेश्चानिर्वचनीयाभावात्, न च भेदे विकल्पो युज्यत इत्यर्थः । मूकीभावेति ।। अनिर्वच-नीयपदेनैव निर्वचनेन व्याघातप्रसङ्गभयेनेति भावः । सदसतोरिति ।। सत्त्वेन निर्वक्तुमशक्यत्वमसति असत्त्वेन

निर्वक्तुमशक्यत्वं सति ब्रह्मणीति यथायोगमन्वयः । समुच्चयपक्षेऽपि किं सत्त्वे सति यदसत्तत् सदसत् । तत्त्वेन निर्वचनानर्हत्वमिति प्रतियोगिनि समुच्चयपक्षं निराह - समुच्चित-स्येति ।। तथात्वे लक्षणत्व इत्यर्थः । तदिति ।। अनिर्वचनीयताप्रसङ्गादित्यर्थः । असद्ब्रह्मणो-रनिर्वचनीयत्वं न परस्येष्टमिति भावः । निषेधसमुच्चयपक्षं विवृण्वन्नेव निराह- सत्त्वेनेत्यादिना ।। असम्भवित्वादिति । लक्षणस्येति योज्यम् । लक्षणानुपपत्त्याऽपीति । वस्तुसिद्धेर्लक्षणाधीनत्वादिति भावः । समुच्चितस्येति ।। सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वस्य लक्षणत्व इत्यर्थः । सदसदात्मकत्वाभावेनेति ।। सतः सन्मात्रात्मकत्वेनासदात्मकत्वाभावात् सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्व१ सद्भावेन सतोऽ-निर्वचनीयत्वं स्यात् । एवमसतोऽप्यसन्मात्रात्मकत्वेन सदात्मकत्वाभावात् सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वसद्भावेनासतोऽनिर्वचनीयत्वं स्यादित्यर्थः ।

### गुरुराजीया

'अनिर्वचनीयासिद्धेश्च' इति चशब्दस्वारस्यानुरोधादाह- अथ वेति ।। सदसतोर-निर्वचनीयतापातादिति ।। सत्त्वेन निर्वक्तुमशक्यत्वस्यासति, असत्त्वेन निर्वक्तुमशक्यत्वस्य सति सत्त्वेनातिव्याप्त्यापत्तेरित्यर्थः । समुच्चितस्येति ।। सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वस्य लक्षणत्व इत्यर्थः । सतः सन्मात्रात्मकत्वादसतश्चासन्मात्रात्मकत्वात् तयोः सत्त्वेनासत्त्वेन निर्वक्तुमशक्यत्वाभावेऽपि सतोऽसतश्च सदसदात्मत्वाभावेन सत्त्वविशिष्टासत्त्वेन निर्वक्तु-मशक्यत्वस्य सत्त्वात् तत्रातिव्याप्तिरेवेत्यर्थः ।

ननु सदसदात्मकताया विरुद्धत्वेऽपि न तदभावौ विरुद्धौ । सत्त्वासत्त्वाभावयोः प्रत्येकं सति असति चावृत्तावपि अनिर्वचनीये वियदादौ शुक्तिरूप्यादौ च सत्त्वात् । गोत्वाश्वत्वयोरेकत्र समावेशाभावेन विरुद्धत्वेऽपि तदभावयोः महिष्यादौ समावेशस्याविरुद्धत्वादिति शङ्कते- अनिर्वचनीयवादिना इति ।।

### गोविन्दीया

अनिर्वचनीयमिति ।। अनिर्वचनीयमिति पदेनानिर्वचनीयलक्षणं लक्ष्यते । तस्यासिद्धेः अनिर्वचनीयासिद्धिः । तदसिद्ध्या भेदे विकल्पो न युज्यत इत्यर्थः । समुच्चितस्येति ।। समुच्चितस्य सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वस्य तथात्वे लक्षणत्वे सतोऽसतश्च सदसदात्मकत्वाभावेन तत्प्रसङ्गानिवारणादनिर्वचनीयतानिवारणादित्यर्थः । अनिर्वचनीयेति ।। अनिर्वचनीयसिद्धौ विरोधासिद्धिः तदसिद्धेर्लक्षणसिद्धिद्वाराऽनिर्वचनीयसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः ।

### जनार्दनभट्टीया

'अनिर्वचनीयासिद्धेश्च' इति पञ्चम्यन्तस्य 'विलक्षणत्वम्' इत्यनेन अन्वयाङ्गीकारे पूर्वयोजनापेक्षया भेदाभावप्रसङ्गे सति योजनान्तरत्वानुपपत्तेराह – न च भेद इति ।।१ प्रतिषेध-समुच्चयस्येति ।। सत्यत्वेन निर्वक्तुं शक्यत्वाभाव असत्वेन निर्वक्तुं शक्यत्वाभावद्वयस्येत्यर्थः । अनिर्वचनीयवादिन इति ।। उभयाभावाधिकरणस्यैव अनिर्वचनीयत्वेन विरोधोऽसिद्ध इति भावः ।

### सद्विलक्षणत्वमसद्विलक्षत्वं च..

**अनिर्वचनीयलक्षणस्य मिथ्यात्वे जगत्सत्यतापादनम्**

### श्रीमज्जयतीर्थटीका

स्यादयं विरोधः । यदि निषेधसमुच्चयस्तात्विकः स्यात् । न चैतदस्ति । तस्यापि मिथ्यात्वाङ्गीकारादित्यत आह-

### मूल

***सद्विलक्षणत्वमसद्विलक्षत्वं च मिथ्येत्यविलक्षणत्वमेव सत्यं स्यात् ।***

निषेधसमुच्चयपक्षनिराकरणसूचनार्थं द्विर्विलक्षणत्वग्रहणम् । अन्यथा सदसद्विलक्षणत्व-मित्यवक्ष्यत् ।

ननु प्रपञ्च एव धर्मी नास्ति । कस्य सदसदात्मकत्वमापद्यत इति चेन्न । परेणाप्य-सत्त्वस्यानङ्गीकृतत्वात् ।

### श्रीविजयीन्द्रभिक्षु

स्यादयमिति ।। स्वप्ने वसन्तग्रीष्मयोः विरुद्धयोरप्यविरोधदर्शनेन तात्त्विकयोरेव विरोध इति भावः । सदसदात्मकत्वापादनस्य सत्त्वसमुच्चितासत्त्वाभावनिराकरणेऽप्युपपन्नतया कथं निषेधसमुच्चयनिराकरणार्थत्वेन व्याख्यायत इत्याशङ्क्याऽह- निषेधसमुच्चयपक्षेति ।। ननु मिथ्या-शब्दस्यापह्नववचनत्वेन प्रपञ्चो मिथ्येत्युक्ते नास्तीत्येवोक्तं स्यात् । एवञ्च न तस्य सदसदात्मक-त्वापादनं युज्यत इति शङ्कते- नन्विति ।। असत्त्वस्येति ।। निःस्वरूपत्वस्येत्यर्थः ।

### श्रीवेदेशतीर्थ

स्यादयमिति ।। स्वप्ने वसन्तग्रीष्मयोर्विरुद्धयोरप्यविरोधदर्शनेन तात्त्विकयोरेव विरोध इति भावः ।

### श्रीराघवेन्द्रतीर्थ

व्याख्यानं प्रागिवेति मत्वा स्वोक्तार्थज्ञापकमात्रमाह- निषेधसमुच्चयेति ।। अविलक्षणत्वं सत्यं स्यादित्यस्य सदसदात्मकत्वं सत्यं स्यादिति प्राग् व्याख्यानाच्छङ्कते- ननु प्रपञ्च एवेति ।।

सदसदात्मकत्वं स्यादिति ।। अविलक्षणत्वं सत्यं१ स्यादित्यविलक्षणशब्दार्थः । अनङ्गीकृतत्वादिति ।। व्यावहारिकसत्त्वस्याङ्गीकारादिति भावः ।

### गोविन्दीया

सद्विलक्षणत्वमिति ।। यदि सद्विलक्षणत्वमसद्विलक्षणत्वं मिथ्या स्यात् तर्हि अविलक्षणत्वं सदसदात्मकत्वं सत्यं स्यादिति अनिष्टप्रसङ्गात्, मिथ्यात्वत्यागेन विरोधो दुर्वार एवेत्यर्थः । परेणेति ।। परेणापि प्रपञ्चस्यानङ्गीकारात् सत्त्वमेवाङ्गीकृतम् । अतो धर्मिसद्भावात् सदसदात्मकत्वापादनं युक्तमित्यर्थः ।

## एवमेव हेत्वादिष्वपि ..

**पूर्वोक्तप्रतिज्ञादोषनिरासस्य हेत्वादिदोषनिरासे अतिदेशः**

### श्रीमज्जयतीर्थटीका

एवमनिर्वचनीयासिद्ध्या साध्यभेदविषयविकल्पनिरासेनापसिद्धान्तादिप्रतिज्ञादोष-निराकरणं कृतम् । एतमेव न्यायं हेत्वादिदोषनिरासे अतिदिशति ।

## मूल

***एवमेव हेत्वादिष्वपि विकल्पो निराकरणीयः ।***

अत्र हेतुशब्देन तदर्थो मुक्तत्वमुच्यते । आदिपदेन दृष्टान्तगते मुक्तत्वभिन्नत्वे गृह्येते । विषयसप्तमी चेयम् । किमनिर्वचनीयं मुक्तत्वं हेतूक्रियते उत पारमार्थिकम् । आद्ये वाद्यसिद्धिः । द्वितीये प्रतिवाद्यसिद्धिः ।

न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ।

इति तेनाङ्गीकृतत्वात् । एवं दृष्टान्तेऽपि मुक्तत्वभिन्नत्वे यद्यनिर्वचनीये विवक्षिते तदा वादिनं प्रति दृष्टान्तस्य साधनादिविकलता । यदा पारमार्थिके तदा प्रतिवादिनं प्रति तथा । तत्साधने पुनः दृष्टान्तानुसरणेऽनवस्थेति । आसतामेते विकल्पदोषाः । विकल्प एवायं पुरोवदनिर्वचनीयासिद्ध्या निराकरणीय इति ।

नन्वत्राधिकाशङ्काभावात्किमतिदेशेन । उदाहरणभेदेनातिदेशे त्वपर्यवसानं स्यात् । सत्यम् । तथाऽप्येकत्रोक्तो न्यायोऽन्यत्रानुसन्धेय इति मन्दान् व्युत्पादयितुमतिदेश इत्यदोषः ।

### श्रीविजयीन्द्रभिक्षु

इयता प्रबन्धेन प्रतिपादितानिर्वचनीयत्वनिरासेन किं फलं साधितमित्यत आह- एव-मिति ।। साध्यभेदेति ।। 'विमतो भिन्नो मुक्तत्वात्' इत्यनुमाने यः साध्यो भेदस्तद्विषयेत्यर्थः । ननु हेतुशब्दस्य पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनमर्थः । न च तद्विकल्पस्य निराकरणस्य वा प्रकृतोपयोगोऽस्तीत्यत आह- अत्रेति ।। अपर्यवसानमिति ।। उदाहरणोक्त्यपर्यवसानमित्यर्थः ।

### श्रीवेदेशतीर्थ

अपसिद्धान्तादिप्रतिज्ञादोषेति ।। आदिपदेन साध्याप्रसिद्धिः । दृष्टान्तस्य साध्य-वैकल्येनापि तस्या एव लाभादिति भावः । ननु साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः । तत्र च परेण विकल्पस्याकृतत्वात्तन्निराकरणायातिदेशोऽनुपपन्न इत्यत आह- अत्र हेतुशब्देनेति ।। उच्यते प्रतिपाद्यते । लिङ्गवचनवाचकेन हेतुशब्देन लिङ्गं लक्ष्यत इति यावत् । तत्र शक्य-सम्बन्धोपपादनायाऽह- तदर्थ इति ।। एतेन धूमो हेतुरित्यादिप्रयोगोऽपि लाक्षणिकतयैव व्याख्यातव्य इति ज्ञातव्यम् ।

### श्रीराघवेन्द्रतीर्थ

प्रतिवाद्यसिद्धिं व्यनक्ति- न मुमुक्षुरिति ।। प्रतिवादिनं प्रति तथेति ।। मायावादिनं प्रति साधनसाध्यविकलतेत्यर्थः । तत्साधन इति ।। निगडमुक्तः सत्यमुक्तत्वभिन्नत्ववान् तादृशाबाधित-धीविषयत्वात् सम्मतपाशमुक्तवदिति साधन इत्यर्थः । आसतामिति ।। एतेऽसिद्ध्यादयो विकल्पदोषास्तिष्ठन्तु तावदित्यर्थः । उदाहरणभेदेनेति । एवं वा एवं वेति विकल्पनिरासस्य साध्यभूतभेद इव हेत्वादिकमपि विषयतया उदाहरणमिति विकल्पनिरासस्थानम् । तत्र सर्वत्रा-तिदेशः कार्य इत्युदाहरणभेदेनातिदेश इत्यर्थः । यद्वैकत्रोक्तन्यायः तत्समानतयोदाहरणभेद-शब्दितेष्वतिदेश इति सामान्योक्तिः ।

हेत्वादीति ।। मुक्तत्वरूपहेतुदृष्टान्तगतमुक्तत्वादिविषये यः परेणोक्तदोषस्तन्निरास इत्यर्थः । पारमार्थिकत्वसाधने कुतः प्रतिवादिनोऽसिद्धिरित्यत आह- न मुमुक्षुरिति ।। एषा स्थितिः परमार्थता परमार्था । स्वार्थे तल्प्रत्ययः । तत्साधनायेति ।। दृष्टान्तगतभिन्नत्वमुक्तत्वयोः पार-मार्थिकत्वसाधनायेत्यर्थः । दृष्टान्तशब्देनानुमानमुपलक्ष्यते । पुरोवत् ।। पूर्ववत् न च मुक्तत्वे विकल्पो युज्यत इत्यादिरूपेणेत्यर्थः । उदाहरणेति ।। साध्यविकल्पदोषनिरासं कृत्वा तमेव प्रकारं हेतुविकल्पदोषनिरासेऽप्यतिदिशतीत्युदाहरणभेदेनेत्यर्थः । अपर्यवसानेति ।। दृष्टान्तविकल्प-दोषनिराकरणेऽपि पुनरतिदेशापत्त्याऽपर्यवसानप्रसङ्ग इत्यर्थः ।

### गुरुराजीया

अपसिद्धान्तादीत्यादिपदेन साध्याप्रसिद्धिपरिग्रहः । लिङ्गवचनस्यादूषितत्वादाह- हेतु-शब्देनेति ।। लिङ्गमुच्यते लक्षणया प्रतिपाद्यत इत्यर्थः । तदर्थ इति लक्षणाहेतुभूतशक्य-सम्बन्धकथनम् । एवं हेत्वादिविषये विकल्पदोषप्रकारमभिधाय तन्निरासप्रकारमाह- आसता-मिति ।। नन्वत्रेति ।। यत्र शङ्कायामाधिक्यं परिहारस्य चाविशिष्टत्वं तत्रैवातिदेशप्रवृत्तिनियमादिति भावः ।

### गोविन्दीया

एवमिति ।। अनिर्वचनीयासिद्ध्या भेदविकल्पो यथा निराकृतः, एवमनिर्वचनीयासिद्ध्या साध्यभूतभेदविषयविकल्पनिरासेनापसिद्धान्तसाध्याप्रसिद्धिरूपप्रतिज्ञादोषनिराकरणं कृतमित्यर्थः । वादिनाऽनिर्वचनीयभेदाङ्गीकारेऽपसिद्धान्तादिकं स्यादिति भावः । एतमिति ।। प्रतिज्ञादोषनिरासे यो न्यायोऽनुसृतः, एतमेव न्यायं हेत्वाभासादिदोषनिरासेऽतिदिशति उपदिशतीत्यर्थः । आद्ये इति ।। वादिमतानुसारेणासिद्धिः, तेन चानिर्वचनीयमुक्तत्वस्यानङ्गीकृतत्वादित्यर्थः । द्वितीयेति ।। प्रतिवादिमतानुसारेणासिद्धिः, तेन च सदसद्वैतभङ्गभिया पारमार्थिकमुक्तत्वस्यानङ्गीकारादि-त्यर्थः । अनवस्थेति ।। यथा पक्षगतभिन्नत्वसाधने दृष्टान्तोऽपेक्षितः, तथा दृष्टान्तगतभिन्नत्व-मुक्तत्वसाधने दृष्टान्तान्तरमङ्गीकरणीयम् । पुनरपि तत्साधने दृष्टान्तान्तरमिति दृष्टान्त-परम्परयाऽनवस्थेत्यर्थः । पुरोवदिति ।। पूर्ववदित्यर्थः । नन्विति ।। अत्र हेत्वंशेऽधिकशङ्काभावात् साध्यांशविकल्पनिरासवद्धेत्वंशविकल्पनिरासोऽपि कार्य इत्यतिदेशेन किं प्रयोजनम्, कृतेऽप्यति-देशे निगडमुक्तपाशमुक्ताद्युदाहरणानां भेदेनातिदेशस्याप्यपर्यवसानं स्यादित्यर्थः । सत्यमिति ।। अधिकशङ्काभावस्तु अङ्गीकारः । अतिदेशेन किमित्याक्षेपोऽनङ्गीकार इत्यर्थः ।

### जनार्दनभट्टीया

तथा तत्साधन इति ।। यथा पक्षे मुक्ते पारमार्थिको भेदः साध्यते; तथा निगडमुक्ते दृष्टान्ते तत्साधने = पारमार्थिकभेदसाधने इत्यर्थः । 'हेत्वादिष्वपि विकल्पदोषो निराकरणीयः' इत्यनतिदिश्य, 'विकल्प' इत्येव निर्देशः कुतः कृतः? इत्याशङ्क्य कैमुत्यन्यायसूचनार्थम् इत्याह –

आसतामिति ।। पुरोवदिति ।। ‘भेदः किमनिर्वचनीयः पारमार्थिको वा? इति प्रतिज्ञायामिव’ इति ‘पूर्ववत्’इत्य-स्यार्थः । अपर्यवसानमिति ।। व्याप्तिः किमनिर्वचनीया उत पारमार्थिकी? इत्याद्याशङ्क्य निराकरणे अनवस्था स्यादित्यर्थः ।

एवमेव हेत्वादिष्वपि..

**मुक्तत्वहेतुना पारमार्थिकभेदासिद्धिशङ्का**

***एवमेव हेत्वादिष्वपि***

**श्रीमज्जयतीर्थटीका**

अथापि स्यात् । नानेनानुमानेन मुक्तौ भेदः सिद्ध्यति । असिद्धेः प्रमाणविरोधाच्च । तथा हि, एकस्यैव परमार्थसतः परब्रह्मणोऽनाद्यविद्याविलसितो हि जीवेश्वरजडरूपोऽयं भेद-प्रपञ्चः । न परमार्थः । ब्रह्मैवाविद्यादिप्रतिबिम्बितं खलु बालैर्जीव इति ईश्वर इति चाभिलप्यते । जडप्रपञ्चस्तु स्वरूपेणैवाविद्योपादानको ब्रह्मविवर्तः । अत्र च विवादपदं मिथ्या दृश्यत्वाज्जडत्वात् परिच्छिन्नत्वात् शुक्तिरजतवत् । विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत् इत्याद्यनुमानं मानम् । ‘वाचारम्भणं विकारो नामधेयम्’१ ‘नान्योऽतोऽस्ति द्रष्टा’२ इत्यादिश्रुतिश्च । सैवाविद्याकर्तृत्वभोक्तृत्वदोषसंसर्गाध्यासप्रवाहरूपसंसारस्योपादानम् । संसार-निवर्तकेन चाऽत्मज्ञानेनावश्यमविद्या निबर्हणीया । सति चैवं बन्धस्यैव परमार्थतोऽभावात्कुतो मुक्तत्वम् । कुतो वा मुक्तौ भेदः स्यात् । बहुजीववादे भेदे विद्यमानेऽपि नासौ मुक्तप्रतीतिगोचर इति न तस्य नियम्यत्वोपयोगित्वम् इति ।

**श्रीविजयीन्द्रभिक्षु**

ननु दृश्यत्वाद्यनुमानस्य परेण प्रागनुपन्यासात् तद्दूषणोक्तिरसङ्गतेत्यतोऽवतारयति- अथापि स्यादिति ।। अनेन मुक्तत्वरूपेण । मुक्तत्वहेतोरसिद्धिं प्रमाणबाधितत्वञ्चोपपादयितुमाह- अनाद्यविद्याविलसित इति ।। एकस्यैवेति ।। सजातीयविजातीयस्वगतभेदशून्यस्येत्यर्थः । अनादीत्युपलक्षणम् । भावरूपानिर्वचनीयेत्यपि द्रष्टव्यम् । हिशब्दो हेतौ । यस्माद्भेदप्रपञ्चोऽयं ब्रह्मस्वरूपाऽवरकतादृशाविद्याविलसितस्तस्मान्न परमार्थ इत्यर्थः । ननु जडप्रपञ्चवज्जीवेश्वर-योरप्यविद्याविलसितत्वे स्वरूपेण मिथ्यात्वापत्तिरित्याशङ्क्याऽह- ब्रह्मैवेति ।। तथा च स्वरूपेणाविद्याविलसितत्वाभावेन प्रतिबिम्बादेरविद्याविलसितत्वेऽपि न स्वरूपेण मिथ्यात्वमिति भावः । अविद्याप्रतिबिम्बितमित्यस्यानन्तरं बिम्बभूतञ्चेति शेषः । बालैः अज्ञैः । नन्वेवं जडप्रपञ्चस्यापि स्वरूपेण मिथ्यात्वं न स्यादित्यत आह- जडप्रपञ्चस्त्विति ।। अविद्योपादानकः अविद्यासमानसत्ताकस्तत्परिणाम इत्यर्थः । ब्रह्मविवर्त इति ।। ब्रह्मसत्तान्यूनसत्ताकोऽन्यथाभाव इत्यर्थः । ‘तात्विकोऽन्यथाभावः परिणामः । अतात्विकोऽन्यथाभावो विवर्तः’ इति लक्षणात् । ब्रह्मव्यतिरिक्तस्यापरमार्थत्वे किं मानमित्यत आह- अत्रेति ।। विवादपदमिति ।। ब्रह्मासत्प्रातिभासिकाविषयकविमतिगोचर इत्यर्थः । आत्मान इति ।। अन्तःकरणातिरिक्तत्वे सति अहमिति प्रतीयमाना जीवा इत्यर्थः । परमात्मन इति ।। मोक्षसाधनज्ञानगोचरादित्यर्थः । व्याव-हारिकभेदमादाय बाधवारणायाऽह- तत्वत इति ।। ननु कर्तृत्वभोक्तृत्वादिविरुद्ध-धर्माधिकरणत्वाद्भेदो बाधित एवेत्यत आह- सैवेति ।। या परमार्थसद्ब्रह्मस्वरूपावरिका जीवेश्वरजडरूपभेदप्रपञ्चरूपविलासाऽपादिका सैवेत्यर्थः । तथा च कर्तृत्वादिविरुद्धधर्मस्य कल्पितत्वेन न स्वाभाविकाभेदविरोधित्वम् । न हि कल्पितेन कार्श्येनाऽकाशस्य स्वाभाविक-कूटस्थता विहन्यत इति भावः । ननु यद्यविद्यैव कर्तृत्वादिरूपसंसारस्योपादानं तदा आत्मज्ञानेन संसारनिवृत्तावपि अविद्यानुवृत्त्या पुनस्तादृशसंसारः स्यादित्यत आह- संसारनिवर्तकेन चेति ।। ‘तरति शोकमात्मवित्’ इत्यादिना संसारनिर्वतकत्वेन सिद्धात्मज्ञानस्यैव -

‘विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।

आत्मनो ब्रह्मणोऽभेदमसन्तं कः करिष्यति ।।’

इत्यादिना अज्ञाननिबर्हणत्वेनापि सिद्धत्वात् तादृशसंसारनिवृत्तेश्च स्वोपादानभूताज्ञानात्यन्तिक-निवृत्तिं विना अयोगात् तन्निवृत्तिरपि अज्ञाननिवृत्तिद्वारैव वाच्या । न साक्षात् । तथा च संसारनिवर्तकज्ञानमेवाविद्यानिवर्तकमिति नाज्ञानानुवृत्त्या पुनः संसारापत्तिरिति भावः ।

ननु बन्धस्य मिथ्यात्वेऽपि तदभावलक्षणमुक्तत्वं वा मुक्तौ तत्प्रयुक्तभेदो वा पारमार्थिकः किं न स्यादित्यत आह- सति चैवमिति ।। परमार्थतो बन्धस्यैवाभावे मुक्तेरप्यभाव एव । मुक्तेर्बन्धसत्तापूर्वकत्वनियमात् । न हि कदाऽपि वस्तुतो निगडासंस्पृष्टस्ततो मुक्त इत्युच्यते । न वा भेदकधर्मस्य मिथ्यात्वे भेदः सत्यः । अङ्गुल्यवष्टब्धचक्षुषा चन्द्रे विरुद्धधर्मोपलम्भेऽपि भेदस्य सत्यत्वादर्शनादिति भावः । नासाविति ।। भेदप्रतीतिमात्रस्य अज्ञानमूलतया मुक्तस्य चाज्ञानाभावेन तत्प्रतीत्यसम्भवादिति भावः ।

यद्यपि स्वानियम्यपित्रादिभिन्नतया ज्ञानरहिते सुप्ते शिशौ तन्नियम्यत्वमिव मुक्ते ईश्वरभिन्नत्वज्ञानराहित्येऽपि तन्नियम्यत्वमुपपद्यते तथाऽपि पित्रादेरिवेश्वरस्याज्ञानविधुरतया भेदप्रतीत्यसम्भवेन नियामकत्वस्यासम्भवात्तन्नियम्यत्वमपि मुक्ते असम्भवीति भावः ।

### श्रीवेदेशतीर्थ

एकस्येति ।। सजातीयविजातीयस्वगतभेदशून्यस्येत्यर्थः । अनादीत्युपलक्षणम् । भाव-रूपानिर्वचनीयेत्यपि द्रष्टव्यम् । हिशब्दो हेतौ । यस्माद्ब्रह्मस्वरूपावरकताद्दशाविद्याविलसितः तस्मान्न परमार्थ इति । अविद्याविलसितत्वं त्रयाणां नैकप्रकारमित्याह- ब्रह्मैवेत्यादि ।। प्रति-बिम्बितमित्यस्यानन्तरं बिम्बभूतं चेति शेषः । बालैः अज्ञैः । अविद्योपादानकः अविद्यासमान-सत्ताकस्तत्परिणाम इति यावत् । ब्रह्मविवर्त इति ।। ब्रह्मसत्तान्यूनसत्ताकोऽन्यथाभाव इत्यर्थः । 'तात्त्विकोऽ-न्यथाभावः परिणामः । अतात्त्विकोऽन्यथाभावो विवर्तः' इति तल्लक्षणात् । ब्रह्मव्यतिरिक्तस्यापारमार्थिकत्वे किं प्रमाणमित्यत आह- अत्रेति ।। विमता आत्मन इति ।।

नन्वत्र पक्षतावच्छेदकं न तावदात्मत्वम् । परमात्मनोऽपि पक्षत्वापत्त्या अंशे सिद्धसाधनत्वात् । नापि परमात्मेतरात्मत्वम् । पक्षतावच्छेदकस्य साध्येन सह विरोधात् । अत एव न परमात्मेतरतया प्रमीयमानत्वं तथा । नापि भ्रान्त्या परमात्मेतरतया प्रतीयमानत्वम् । जडस्यापि पक्षत्वापत्त्या हेतोरसिद्ध्यापत्तेः । नापि तथा प्रतीयमानात्मत्वम् । परमात्मन्यपि परमात्मेतरत्वभ्रान्तिसम्भवेन तस्यापि पक्षतापत्तावंशतः सिद्धसाधनतातादवस्थ्यादिति चेन्न । परमात्मनो भिद्यन्ते न वेति विप्रतिपत्तिगोचरत्वस्यैव पक्षतावच्छेदकत्वात् । तदेतदाह- विमता इति ।। अन्यथा तवापि परमात्मनः परमार्थतो भिद्यन्त इति भेदसाधनस्याप्यसम्भव इति भावः ।

व्यावहारिकभेदस्य स्वमते सिद्धत्वाद्बाधः । तत्परिहारायाऽह- तत्त्वत इति ।। अत्र मिथ्यात्व-साधकानुमानागमौ स्वरूपासिद्ध्युपपादनोपयुक्तौ । अभेदसाधकौ तु प्रमाणविरोधप्रदर्शनायेति ज्ञातव्यम् । ननु कर्तृत्वभोक्तृत्वादिरूपविरुद्धधर्माधिकरणत्वादभेदो बाधित एवेत्याशङ्क्याऽह- सैवेति ।। तथा च कर्तृत्वादिरूपविरुद्धधर्मस्य कल्पितत्वेन स्वाभाविकाभेदविरोधित्वं नेति भावः । ननु यद्यविद्यैव कर्तृत्वादिरूपसंसारस्योपादानं तदा आत्मज्ञानेन संसारनिवृत्तावप्यविद्यानुवृत्त्या पुनस्ताद्दशसंसारः स्यादित्यत आह- संसारनिवर्तकेन चेति ।।

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।

आत्मनो ब्रह्मणोऽभेदमसन्तं कः करिष्यति ।।'

इत्यादिश्रुत्याऽज्ञाननिवृत्तिद्वारेणैवाऽत्मज्ञानस्य संसारनिवर्तकत्वश्रवणात् 'तरति शोकमात्मवित्' इत्यादावपि स एवार्थ इति भावः । ननु बन्धस्य मिथ्यात्वेऽपि तदभावलक्षणं मुक्तत्वं मुक्तौ तत्प्रयुक्तभेदो वा पारमाथिकः किं न स्यादित्यत आह- सति चैवमिति ।।

परमार्थतो बन्धस्यैवाभावे मुक्तेरप्यभाव एव । मुक्तेर्बन्धसत्तापूर्वकत्वनियमात् । न हि कदाऽपि वस्तुतो निगडासंस्पृष्टस्ततो मुक्त इत्युच्यते । न वा भेदकधर्मस्य मिथ्यात्वे भेदः सत्यः । अङ्गुल्यवष्टब्धचक्षुषा चन्द्रे विरुद्धधर्मोपलम्भेऽपि भेदस्य सत्यत्वादर्शनादिति भाव इत्याहुः ।

वस्तुतस्तु 'बन्धस्यैव परमार्थतोऽभावात्' इति 'कुतो मुक्तत्वम्' इत्यत्रैव हेतुः । 'कुतो वा मुक्तौ भेदः स्यात्' इत्यत्र तु 'जीवस्यैकत्वेन तन्मुक्तौ कस्याप्यनवशेषेण प्रतियोगिन एवाभावात्' इति हेतुर्द्रष्टव्यः। अत एवाह- बहुजीववाद इति ।। भेदस्याऽविद्यकत्वेन निवृत्ताविद्ये मुक्ते न तत्प्रतीतिरित्याशयेनाऽह- नासाविति ।।

### द्वैतद्युमणि

भेद इति ।। भिद्यत इति व्युत्पत्त्या भेदवत्परम् । बालैः अनिवृत्ताविद्यैः । ब्रह्मविवर्तः स्वबाधावधित्वे सति स्वप्रतियोगिकतादात्म्यानुयोगि यद् ब्रह्म तत्र प्रतीयमान इत्यर्थः । 'अस्वाभाविकान्यथाभावो विवर्तः' इत्यादितदुक्तेरत्रैव पर्यवसानात् । अविद्योपादानक इत्यस्य तत्परिणाम इत्यर्थः । स्वाभाविकान्यथाभावस्यैव परिणामत्वेनोक्तत्वात् । स्वबाधानावधि स्वप्रतियोगिकतादात्म्यानुयोगि यत् तज्जन्यत्वं तत्परिणामत्वमिति निष्कर्षः । उभयानुगतोपादानत्वं तु स्वतादात्म्यवत् कार्यजनकत्वं ज्ञातव्यम् । विमता आत्मान इति ।। अत्र जीवपदवाच्यत्वं वोपलक्षणविधया दुःखित्वादिकं वा पक्षतावच्छेदकम् । अवच्छेदकावच्छेदेन साध्यमभिलषितम् । परमात्मन इति ।। सर्वज्ञत्वाश्रयचेतनादित्यर्थः । भेदस्य स्वरूपतो निषेधाभावपक्षे बाधवारणाय तत्त्वत इति । पारमार्थिकत्वेनेत्यर्थः । व्यधिकरणधर्मावच्छिन्नाभावश्चायम् । अतो न बाधः । आत्मत्वादिति ।। व्यक्तीनां कल्पितस्वसमानसत्ताकभेदवत्त्वेनाऽत्मत्वजातिः पक्षदृष्टान्तयोरस्तीति भावः । मिथ्यात्वे अभेदे च क्रमात् श्रुतिद्वयमनुसन्धेयम् । नान्योऽत इति ।। अतः = अन्तर्यामितया प्रकृताद् ब्रह्मणः सकाशाद्, अन्यो = भिन्नो द्रष्टा = जीवो न भवतीत्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

विलसितः प्रतिभातः । अविद्यादि इत्यादिपदेन परव्यामोहनकरमायाग्रहः । अविद्या तु स्वाश्रयव्यामोहनकरीति ज्ञेयम् । ब्रह्मविवर्तः ब्रह्मण्यारोपितः । अत्रेत्यस्येत्यनुमानमित्यादि-श्रुतिश्चेत्यन्वयः । मानमिति शेषः । विवादेति । सत्यत्वमिथ्यात्वाभ्यां विवादस्थानं ब्रह्मासत्प्राति-भासिकेभ्योऽन्यज्जगदित्यर्थः । व्यावहारिकभेदेन बाधवारणाय तत्त्वत इत्युक्तिः । वाचेत्यादि-श्रुत्यर्थस्त्वग्रे व्यक्तः । बन्धमिथ्यात्वेन मुक्तत्वहेतोरसिद्ध्युपपादनाय न परमार्थ इत्यन्तोक्तिः । तद्घटनाय विलसित इत्यन्तोक्तिः । जीवादेरनादित्वघटनाय अनाद्यविद्येति । तदुपपत्तये तदाश्रयत्वाय ब्रह्मण इत्यन्तोक्तिः । जीवेश्वरस्वरूपयोरप्यपरमार्थत्वशङ्कानिरासाय१ अभेदोप-पादनाय च ब्रह्मैवेत्यादिग्रन्थः । श्रुतिश्चेत्यन्तेन प्रमाणविरोधोक्तिः ।

नन्वस्तु भेदप्रपञ्चोऽपरमार्थः । तावता कथं मुक्तत्वहेतोरसिद्धिः । बन्धस्य सत्यत्वादित्यत आह- सैवाविद्येति ।। दोषेति । रागद्वेषदुःखादिदोषेत्यर्थः । अध्यासेत्युक्त्या कर्तृत्वादिधीः भ्रान्तिरित्युक्तं भवति । अविद्यायाः असत्त्वोपपादनाय संसारनिवर्तकेनेत्यादि ।। मुक्तप्रतीतीति ।। मुक्तपदेन नियामकस्य परमात्मनोऽपि ग्रहणादेवमुक्तम् । नियम्यत्वेति । आद्यपद्योक्तनियम्यत्वघटनायैवात्र भेदसाधनादिति भावः ।

### गुरुराजीया

तदुभयं कथमित्यतस्तदुपपादयितुमाह- तथा हीति ।। एकस्यैवेति ।। सजातीय-विजातीयस्वगतभेदशून्यस्येत्यर्थः । अन्योन्याश्रयत्वप्रसङ्गवारणाय परमार्थसत इत्युक्तम् । हिशब्दो हेतौ । यस्मादविद्याकल्पितस्तस्मादपरमार्थ२ इति । अविद्याविलसितत्वं त्रयाणामपि नैकप्रकार-मित्याह- ब्रह्मैवेति ।। अविद्योपादानक इति ।। अविद्यासमानसत्ताकस्तत्परिणाम इति यावत् । ब्रह्मविवर्त इति ।। ३ब्रह्मसत्ताशून्यसत्ताकोऽन्यथाकार इत्यर्थः । ब्रह्मव्यतिरिक्तस्यापारमार्थिकत्वे किं प्रमाणमित्यत आह- अत्रेति ।। अत्र स्वरूपासिद्ध्युपपादनाय मिथ्यात्वसाधनं कृतम् । प्रमाण-विरोधव्युत्पादनाय भेदाभावसाधनम् । उपाधिप्रतिपक्षग्रस्ततया मिथ्यात्वानुमानस्य भेदाभाव-साधकानुमानस्य चाऽभासताशङ्कापनोदाय तदनुग्राहकतयोभयत्र क्रमेण श्रुत्युदाहरणं कृतमिति द्रष्टव्यम् ।

ननु १कर्तृत्वाभाववत्कर्तृत्वाध्यासरूपबन्धस्याविद्योपादानकत्वानुक्त्याऽपारमार्थिकत्वाभावेन वास्तवतया ततो मुक्तत्वस्य भावात् कथं तदसिद्धिरित्यतः बन्धस्याप्यविद्योपादानकत्वेना-पारमार्थिकत्वेन वास्तवत्वाभावात् ततो मुक्तत्वाभावेन मुक्तत्वहेत्वसिद्धिरवर्जनीयेत्याह- सैषेति ।। यद्विलसितो जीवेश्वरजडरूपः प्रपञ्चः सैषेत्यर्थः ।

ननु निवर्तकशून्यत्वेनाविद्याया निवृत्त्यसम्भवान्न तदुपादानकस्य कर्तृत्वभोक्तृत्वाद्यध्यास-रूपबन्धस्य निवृत्तिः स्यादित्यतोऽविद्याया आत्मज्ञाननिवर्त्यत्वेन तन्निवृत्तौ बन्धस्याप्यवश्यं निवृत्तिसम्भवान्न तन्निवृत्त्यनुपपत्तिरिति भावेनाविद्यानिवृत्तौ बन्धनिवृत्तिमुपपादयितुम् अविद्या-निवृत्तिं निवर्तकोक्त्योपपादयति- संसारनिवर्तकेनाऽत्मज्ञानेनेति ।।

नन्वस्तु बन्धस्याविद्योपादानकत्वम् । किमेतावता सिद्धमित्यतः ‘असिद्धेः प्रमाणविरोधाच्च’ इति प्रतिज्ञातं दोषद्वयं सिद्धमित्याशयेन तदुपपादयति- सति चैवमिति ।। बन्धस्याविद्योपादानकत्वेऽविद्यायाश्चाऽत्मयाथात्म्यज्ञानेन निवर्त्यत्वे सिद्धे सतीत्यर्थः ।

मुक्तपरमात्मनोर्भेदस्य बहुजीववादिमते२ सत्त्वात् तन्मतेऽपि नियम्यनियामकभावोपपत्तेर्न भेदाभावेन तदाक्षेपो युक्त इत्यतः सत्यं, बहुजीववादिमते भेदोऽस्ति तथाऽपि नासौ मुक्तप्रतीतिगोचरः । यथा हि लोकेऽनेकेषु मायामयान् गजतुरगादीन् पश्यत्सु यस्य कारणविशेषेण मायाऽपगच्छति स एव तान्न पश्यति । अन्ये तु पश्यन्त्येव । एवं यस्य द्वैतदर्शनकारणमज्ञानमपगतं स एव तन्न पश्यति । अन्येषां तु भेदादिदर्शनं वर्तत एवेति भेदस्य मुक्तप्रतीतिगोचरत्वाभावस्य तन्मतेऽन्यत्र व्युत्पादितत्वान्न भेदसद्भावमात्रेण नियम्यनियामकभावो युक्त इति युक्त एव तदाक्षेप इत्याह- बहुजीववाद इति ।।

### गोविन्दीया

अथापि स्यादिति ।। अथापि उक्तरीत्या भेदे शङ्कापरिहारेऽपि प्रकारान्तरेण शङ्का स्यादित्यर्थः । तथा हीति ।। असिद्धिप्रमाणविरोधौ उपपादयतीत्यर्थः । अविद्याविलासित इति ।। अविद्याप्रकाशित इत्यर्थः । भेदप्रपञ्च इति ।। जीवेश्वरजडभेदमुक्तप्रपञ्च इत्यर्थः । ब्रह्मविवर्त इति ।। ब्रह्मण्यारोपित इत्यर्थः । वाचारम्भणमिति ।। भेदज्ञापकः विकारः नामधेयं च वाचारम्भणं वाक्प्रलपनमित्यर्थः । नान्योऽतोऽस्तीति ।। अतः ब्रह्मणः सकाशादन्यो नास्तीत्यर्थः । कर्तृत्वेति ।। कर्तृत्वभोक्तृत्वसम्बन्धारोपप्रवाहरूपसंसारस्योपादानमित्यर्थः । बहुजीवेति ।। संसारावस्थायां भेदे विद्यमानेऽपि नासौ भेदो मुक्तप्रतीतिगोचर इत्यर्थः । इतीति ।। इतिरीत्या तस्य भेदस्य नियम्यताकारणकत्वं च नास्तीत्यर्थः ।

### नारोपन्तीया

एवं बन्धस्यैव परमार्थतोऽभावादिति । यद्यपि प्रतियोगिनोऽप्रसिद्धत्वेऽपि शशशृङ्गाद्य-भावो दृष्टः । तथाऽप्यसत्प्रतियोगिको ध्वंसो न सम्भवति । प्रकृते च मुक्तत्वं बन्धध्वंसरूपमित्युक्त-मिति भावः । भेदनिराकरणानुपपत्तिश्चेति । सद्विवेकस्येत्यत्र विवेकशब्देन भेदादन्यस्य वक्तु-मशक्यत्वादिति भावः ।

### जनार्दनभट्टीया

असिद्धेरिति ।। 'मुक्तत्वहेतोः' इति शेषः । प्रमाणविरोधाच्चेति ।। 'भिन्नत्वलक्षणस्य' इति शेषः ।

ननु प्रपञ्चस्य अविद्योपादानकत्वे ब्रह्मोपादानकत्वमिति सिद्धान्तभङ्गः स्यादित्यत आह – ब्रह्मविवर्त इति ।। अयमाशयः– उपादानं द्विविधम् । परिणाम्युपादानं विवर्तोपादानञ्चेति । तत्र अविद्या प्रपञ्चस्य परिणाम्युपादानम्, घटस्य मृत्पिण्ड इव । ब्रह्म तु जडस्य विवर्तोपादानम्१ शुक्तिरूप्यं प्रति शुक्ति-रिव । विवर्तो नाम आरोपाधिष्ठानमिति । सर्वप्रपञ्चमिथ्यात्वसाधकानुमानमाह– अत्र चेति ।। भेदरूप-तत्साधनानुमानमाह –विमता इति ।। प्रातिभासिकभेदाभावमादाय अर्थान्तरवारणायाह – परमात्म-वदिति ।। परमात्मनि परमात्मप्रतियोगिकभेदाभावेन साध्यमस्तीति भावः । वाचारम्भणमिति ।। विकारः घटशरावादिः । वाचारम्भणम् = वाचा केवलमारभ्यते ।

न तु वस्तुगत्या विकारो नाम कश्चिदस्ति । नामधेयमात्रं हि एतदनृतमिति श्रुत्यर्थः । एवं सर्वप्रपञ्चमिथ्यात्वे श्रुतिमभिधाय भेदमात्रमिथ्यात्वे तामाह – नान्य इति ।। अतः परमात्मनः सकाशात् अन्यो द्रष्टा नास्तीति श्रुत्यर्थः । भेदाभावलक्षणसाध्यमुपपादयति – सैवेत्यादिना ।। कुतो मुक्तत्व-मिति ।। भवन्मते२ मोचनस्य पारमार्थिकावधिसापेक्षत्वाङ्गीकारादिति भावः । भट्टभास्करमतानु-सारेणाऽह– बह्विति ।। विद्यमानेऽपीति ।। 'सत्योपाधिकृत' इति शेषः । नासाविति ।। मुक्तौ उपाधेः निवृत्तत्वेन भेदस्यापि निवृत्ततया भेदस्य मुक्तप्रतीत्यगोचरत्वमिति भावः ।

### दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः ..

**पूर्वोक्तशङ्कानिरासार्थं मिथ्यात्वादिसाधकानुमाने पूर्वोक्तदोषातिदेशः**

### श्रीमज्जयतीर्थटीका

तत्र तावदनुमाननिरासायोक्तदोषानतिदिशति-

### मूल

***दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः ।***

'विवादपदमनिर्वचनीयं बाध्यत्वात्' इत्यादेर्येऽप्रसिद्धविशेषणत्वादयो दोषा उक्ता एत एव दृश्यत्वाद्यनुमानेष्वपि द्रष्टव्याः ।

तथा हि, मिथ्याशब्देनानिर्वचनीयत्वमुच्यते असत्त्वं वा । नाऽद्यः । अप्रसिद्धविशेषणत्वा-पातात् । न द्वितीयः । अपसिद्धान्तप्रसङ्गात् । अथानिर्वचनीयासतोः समानं मिथ्यात्वम् । तस्मिन्ननेन अनुमानेन सिद्धेऽसत्त्वे च बाधितेऽनिर्वाच्यतासिद्धिरिति चेन्न । मिथ्यात्वसामान्य-स्योभयसम्प्रतिपन्नस्याभावात् । सद्विवेकस्य मिथ्याभावस्य साध्यत्वान्नाप्रसिद्धविशेषणता नाप-सिद्धान्तोऽपीति चेत् । किमिदं सत् । जातिर्वा जातिमद्वा स्वरूपसद्वा । प्रथमद्वितीययोः सद्बहुत्वा-पत्तिः । तृतीये ब्रह्मविवेकस्य मयाऽप्यङ्गीकृतत्वात्सिद्धसाधनता भेदनिराकरणानुपपत्तिश्च । बाध्यत्वं मिथ्यात्वमिति चेन्न । बाध्यत्वमपि हि तेषां मिथ्या । सत्यत्वे दृश्यत्वादीनां तेनैवानैकान्त्यापा-तात् । दृश्यत्वाद्यभावे चासाध्यत्वाद्यापत्तेः । बाध्यत्वस्य च मिथ्यात्वे अबाध्यत्वमेव सत्यं स्यात् आत्मवत् । किं च दृश्यत्वादयः सत्याश्चेन्मायावादिनोऽसिद्धाः । तैरेवानैकान्त्यं च । यद्यसन्तोऽनिर्वाच्या वा तदा तत्ववादिनोऽसिद्धाः । न च सत्यासत्ययोर्दृश्यत्वादिसामान्य-मुभयसम्प्रतिपन्नमस्तीत्येषा दिक् ।

### श्रीविजयीन्द्रभिक्षु

तत्रेति ।। उक्तेषु प्रमाणत्वाभिमतेष्वित्यर्थः । तावच्छब्दः क्रमार्थः । १किं मिथ्यादोषा दृश्यत्वाद्यनुमानेषु द्रष्टव्या इत्याकाङ्क्षायां व्याचष्टे- विवादपदमिति ।। 'मिथ्याशब्दो द्व्यर्थः । अपह्नववचनोऽनिर्वचनीयतावचनश्च' इति पञ्चपादिकोक्तेः दूषणसौकर्याय विकल्पयति- मिथ्या-शब्देनेति ।। गूढाभिसन्धिः शङ्कते- अथेति ।। असच्छब्दस्याल्पाच्त्वेऽपि अनिर्वचनीयशब्दस्या-भ्यर्हितत्वेन अनिर्वचनीयासतोरिति निर्देशः । असत्त्वे चेति ।। प्रतीतत्वहेतुना असत्त्वे निरस्त इत्यर्थः । गूढाभिसन्धिरेव दूषयति-मिथ्यात्वेति ।। शङ्ककः स्वाशयमुद्घाटयति- सद्विवेकस्येति ।।

सद्भिन्नत्वस्येत्यर्थः । मिथ्याभावस्य मिथ्यात्वस्य । अत्रापि पूर्वन्यायेनासत्त्वे प्रतिक्षिप्तेऽ-निर्वचनीयत्वसिद्धिरिति भावः । तृतीय इति ।। स्वरूपतो जात्यादिसम्बन्धं विना ब्रह्मैव सदिति पराभ्युपगमादिति भावः । बाध्यत्वमिति ।। मिथ्यात्वं बाध्यत्वमिति चेदिति सम्बन्धः । बाध्यत्वं अबाध्यं बाध्यं वा । आद्येऽपि किं तद्ब्रह्ममात्रमतिरिक्तं वा । नाऽद्यः । सोपाधिकस्य तस्य निरुपाधिकब्रह्ममात्रत्वायोगादित्याद्यं बहिरेव निरस्य द्वितीयं निराचष्टे- बाध्यत्वमपीति ।। तथा च सत्यभूतस्य तस्य ब्रह्मातिरिक्तत्वाङ्गीकारेऽपसिद्धान्त इति भावः । किञ्च सत्यमपि बाध्यत्वं दृश्यमदृश्यं वा । आद्य आह- सत्यत्व इति ।। दृश्यत्वाद्यभावे चेति ।। अनुमितिरूपसिद्धि-विषयत्वस्यैव साध्यत्वादिति भावः । अनुमानस्य साध्यप्रतीत्यर्थत्वेन बाध्यत्वस्यादृश्यत्वे अनुमान-वैयर्थ्यमादिशब्दार्थः । नान्त्यः इत्याह- बाध्यत्वस्येति ।। आत्मवदिति ।। आत्माबाध्यत्ववदि-त्यर्थः । अनैकान्त्यं चेति ।। दृश्यत्वादीनामदृश्यत्वे हेतोरज्ञानासिद्धिरिति ध्येयम् ।

ननु यथा महानसीयपर्वतीयधूमसाधारणधूमत्वावच्छिन्नत्वेन धूमस्य हेतुत्वं तथा सत्यासत्य-दृश्यत्वादिसाधारणदृश्यत्वताजडत्वत्वाद्यवच्छिन्नत्वेनैव हेतुत्वसम्भवान्नोक्तविकल्पावकाशः । अन्यथा धूमादावपि किमेतद्देशकालसंलग्नो धूमो हेतुर्नैतद्देशकालसंलग्नो वा । नाऽद्यः । दृष्टान्तस्य साधनवैकल्पापत्तेः । न द्वितीयः । स्वरूपासिद्ध्यापत्तेः इत्यादिदूषणसम्भवेनानुमानमात्रोच्छेद-प्रसङ्गादित्याशङ्क्य निराकरोति- न चेति ।। दृश्यत्वादिसामान्यं दृश्यत्वादीनां सामान्यम् ।

### श्रीवेदेशतीर्थ

तत्रेति ।। उक्तेषु प्रमाणत्वाभिमतेष्वित्यर्थः । 'मिथ्याशब्दो द्व्यर्थः । अपोह-वचनोऽनिर्वचनीयवचनश्च१' इति पञ्चपादिकोक्तेर्दूषणसौकर्याय विकल्पयति- मिथ्याशब्देनेति ।। अपसिद्धान्तप्रसङ्गादिति ।। यद्यपि नायं पूर्वोक्तदोषस्तथाऽपि न च धूमत्ववन्मिथ्यात्वम् इत्युक्तदूषणकथनाय 'अनिर्वचनीयासतोः समानं खलु मिथ्यात्वम्' इति शङ्कोत्थानार्थं स्वयमुक्तमिति द्रष्टव्यम् । असत्त्वे चेति ।। 'नेदमसत्प्रतीतत्वात्' इत्यनेनेत्यर्थः । मिथ्यात्वेति ।। उपलक्षणमेतत् । असतोऽप्रतीतावसद्वैलक्षण्यज्ञानानुपपत्त्या प्रतीत्यङ्गीकारे तद्बाधानुपपत्तेश्चेति ज्ञेयम् । नाप्रसिद्धविशेषणतेति ।। असति प्रसिद्धत्वादिति भावः । बाध्यत्वमबाध्यं बाध्यं वा । आद्येऽपि किं तद्ब्रह्ममात्रं अतिरिक्तं वा । नाऽद्यः । सोपाधिकस्य तस्य निरुपाधिकब्रह्म-मात्रत्वायोगादित्याद्यं बहिरेव निरस्य द्वितीयं निराचष्टे- बाध्यत्वमपि हीति ।। तथा च सत्यभूतस्य तस्य ब्रह्मातिरिक्तत्वाङ्गीकारे अपसिद्धान्त इति भावः । किञ्च सत्यमपि बाध्यत्वं दृश्यमदृश्यं वा । आद्ये आह- सत्यत्व इति ।। द्वितीये आह- दृश्यत्वाद्यभावे चेति ।। अनुमितिरूपसिद्धिविषयस्यैव साध्यत्वादिति भावः । अनुमानस्य साध्यप्रतीत्यर्थत्वेन बाध्यत्वस्य अदृश्यत्वेऽनुमानवैयर्थ्यम् आदिशब्दार्थः । इदमपि तेषाम् इत्यनेन दृश्यत्वेन मिथ्यात्वं साधयतामित्यर्थकेन सूचितमिति ज्ञेयम् ।

इदं च दृश्यत्वहेत्वपेक्षयैव । जडत्वपरिच्छिन्नत्वयोरभावे चेतनत्वापरिच्छिन्नत्वप्राप्त्या प्रत्यक्ष-विरोध इत्यपि आदिशब्दार्थ इत्याहुः ।

नान्त्य इत्याह- बाध्यत्वस्येति ।। आत्मवत् आत्माबाध्यत्ववत् । किं चेति ।। नन्विदं दूषणं प्रागनुक्तमिति चेन्न । न च धूमत्ववन्मिथ्यात्वम् इत्युक्तन्यायसिद्धदोषाभिधानार्थमेतस्य स्वय-मेवाभिधानात् । अनैकान्त्यं चेति ।। दृश्यत्वादीनामदृश्यत्वे हेतोरज्ञानासिद्धिश्चेति ज्ञातव्यम् । ननु न सत्यं मिथ्या वा दृश्यत्वादि हेतुत्वेन विवक्षितम् । किन्तूभयानुगतदृश्यत्वत्वाद्यवच्छिन्न-दृश्यत्वादिमात्रम् । न हि सामान्यतः प्रयुक्तहेतोः विशेषविकल्पेन निराकरणं युक्तम् । अनुमान-मात्रोच्छेदप्रसङ्गादित्यत आह- न चेति ।। दृश्यत्वसामान्यमिति ।। दृश्यत्वस्य सामान्यमित्यर्थः । दृश्यत्वत्वमिति यावत् ।

### श्रीराघवेन्द्रतीर्थ

उभयसाधारणमिथ्यात्वसाधने १कथमसिद्धिरित्यत आह - तस्मिन्निति ।। उभयेति ।। वादिप्रतिवादीत्यर्थः । तथा च अप्रसिद्धविशेषणतैवेत्यर्थः । मिथ्याभावस्येति ।। मिथ्यात्वस्येत्यर्थः। किमिदं सदित्यनुवादः२ । भेदनिराकरणेति ।। भेदः भेदिभ्यां भिन्नोऽभिन्नो वेत्यादिना स्वग्रन्थे यद्भेदनिराकरणं तस्य सद्वैलक्षण्यरूपभेदाङ्गीकारव्याघातेनानुपपत्तेरित्यर्थः । असाध्यत्वाद्या-पत्तेरिति । दृष्टयर्थत्वात् साध्यताया इति भावः । अबाध्यत्वमेव सत्यं स्यादिति । अनिर्वच-नीयत्वस्य निरस्तत्वेन मिथ्येत्यस्यासदित्यर्थकत्वादिति भावः । तैरेवानैकान्त्यं चेति ।। दृश्यत्व-जडत्वपरिच्छिन्नत्वात्मकेषु३ दृश्यत्वादिहेतुषु सत्स्वपि मिथ्यात्वाभावात् । दृश्यत्वाभावे चाज्ञाना-सिद्धिप्रसङ्ग इति भावः। किञ्च दृश्यत्वं दृग्विषयत्वं दृश्यध्यस्तत्वं वा । नाऽद्यः । परस्यासिद्धेः । नान्त्यः। प्रतिवाद्यसिद्धेः । किञ्च दृक् चैतन्यं वृत्तिर्वा । नाऽद्यः तद्विषयत्वस्य तदध्यस्तत्वस्य वा वियदादिप्रपञ्चे प्रतिवाद्यसिद्धेः। नान्त्यः । परमते तदुभयस्याप्यसिद्धेः । प्रपञ्चस्तु वादावल्यां न्यायामृते च । अत एवाऽह- एषा दिगिति ।। परोक्तहेतूनामपाकरणे अयं मार्ग इति । भेदनिराकरणानुपपत्तिश्चेति । सत्यविवेको नाम सत्याद्भेदस्तद्रूपमिथ्यात्वमङ्गीकृत्य स्वशास्त्रे पुनर्भेदनिराकरणं क्रियमाणमनुपपन्नं स्यादित्यर्थः ।

### गुरुराजीया

१‘मिथ्याशब्दो द्व्यर्थः । असद्वचनोऽनिर्वचनीयवचनश्च’ इति पञ्चपादिकोक्तं दूषणसौकर्याय विकल्पयति- मिथ्याशब्देनेति ।। अपसिद्धान्तप्रसङ्गादिति ।। यद्यपि नायमत्र पूर्वदोष उक्तः । तथाऽपि मिथ्यात्वानुमानखण्डने उक्तत्वाभिप्रायेण वा तदनुसारेणात्राप्युक्तत्वाभिप्रायेण वोक्तदोष इत्यभिप्रायकत्वादुक्तदोष इत्युक्तेरविरोध इति द्रष्टव्यम् । बाधित इति ।। नेदमसत् प्रतीतत्वादित्यनुमानेन प्रतिक्षिप्त इत्यर्थः । मिथ्यात्वेति ।। आश्रयासिद्धौ तदाश्रित-सामान्यासिद्धेरिति भावः । नाप्रसिद्धविशेषणतेति ।। असति प्रसिद्धत्वादिति भावः । भेदनिरा-करणेति ।। तथा सति भेदातिरिक्तस्य विवेकशब्दार्थस्य वक्तुमशक्यतया भेदाङ्गीकारप्रसङ्गात् । अङ्गीकारनिराकरणयोः व्याहतत्वेन भेदनिराकरणानुपपत्तिश्चेत्यर्थः । कुतो नेत्यतस्तदुत्तरतयाऽऽ-चार्यवाक्यमेव व्यापारयति- बाध्यत्वमपि हि तेषां मिथ्येति ।। ननु बाध्यत्वस्य सत्यतायाः सम्भवात्कुतो मिथ्यात्वमित्यतस्तत्पक्षे तेषां हीति सूचितं दोषं प्रकटयितुं बाध्यत्वं किं दृश्यत्वादिमत्, उत न इति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- सत्यत्व इति ।। दृश्यत्वादिमत्त्वे चेति शेषः । तेनैव बाध्यत्वेनैव ।

ततश्चायमर्थः । बाध्यत्वस्य सत्यत्वे दृश्यत्वादिहेतूनां तत्रैव व्यभिचारः । बाध्यत्वे दृश्यत्वादि-हेतुवृत्तावपि तस्य सत्यत्वेन मिथ्यात्वाभावादिति । नेति पक्षं दूषयति- दृश्यत्वाद्यभावे चेति ।। बाध्यत्वस्य दृश्यत्वाभावेऽनुमितिरूपसिद्धिविषयत्वाभावेन तस्यासाध्यत्वम् । उक्तहेतूनां साध्यज्ञप्त्यर्थत्वात् तस्यादृश्यत्वेऽनुमानवैयर्थ्यम्२ । जडत्वपरिच्छिन्नत्वयोरभावे तु सुधोक्तरीत्या अपसिद्धान्तः स्यादित्यर्थः । यद्यपि बाध्यत्वस्य जडत्वपरिच्छिन्नत्वाभावे३ अपसिद्धान्तः स्पष्टत्वान्नोक्तः । तथाऽपि जडत्वपरिच्छिन्नत्वयोः जडत्वपरिच्छिन्नत्वाभावे तस्योक्त्या समानन्यायतया सूचितत्वाद् आदिशब्देन तत्परिग्रहो युक्त इति द्रष्टव्यम् ।

यत्तु ‘बाध्यत्वमबाध्यं बाध्यं वेति । आद्ये किं ब्रह्ममात्रं तदतिरिक्तं वा । नाऽद्यः । सोपाधिकस्य निरुपाधिकब्रह्ममात्रत्वायोगादित्याद्यं बहिरेव निरस्य द्वितीयपक्षनिरासकतया बाध्यत्वमपीति ग्रन्थमवतार्य सत्यभूतस्य बाध्यत्वस्य ब्रह्मातिरिक्तत्वाङ्गीकारेऽपसिद्धान्तः’ इति एतद्ग्रन्थार्थ-निरूपणम् । तन्न । उक्तयोजनायां सोपाधिकस्य निरुपाधिकब्रह्ममात्रत्वायोगादिति दूषणस्य प्रागनुक्ततयाऽनुक्तदूषणातिदेशप्रसङ्गात् । तेषां हि इत्युक्तस्य तत्सत्यत्वपक्षे दोषस्येह टीकायां सत्यत्व इत्यादिना उत्तरत्र प्रतिपादनाप्रसक्तप्रतिपादनप्रयासानर्थक्याच्च । न च सत्यमपि बाध्यत्वं दृश्यमदृश्यं वा । आद्ये सत्यत्व इति द्वितीये दृश्यत्वाद्यभाव इत्येवं दूषणान्तरपरत्वात् सत्यत्व इत्यादिग्रन्थस्य तेषां हीत्यस्योक्तदूषणपरत्वमिति वाच्यम् । चशब्दादिदूषणान्तरपरत्व-ज्ञापकाभावेनोत्तरग्रन्थस्य तत्परत्वायोगात् । ‘तेषां हीत्यपसिद्धान्तादिप्रसङ्गं सूचयति’ इति पूर्वग्रन्थानुसारेण अपसिद्धान्तस्येव व्यभिचारस्यापि तद्ग्रन्थसूचितत्वसिद्ध्या तदसूचितदूषणान्तर-परत्वाश्रयणस्य निर्निबन्धनत्वाच्च ।

कथञ्चिद्दूषणान्तरपरत्वेऽपि दृश्यत्वादीनामित्युत्तरग्रन्थानुरोधेन सत्यमपि बाध्यत्वं दृश्यत्वादि-मन्न वेति विकल्पनीयत्वेन दृश्यमदृश्यं वेति विकल्पस्योत्तरग्रन्थाननुसारित्वेनानुत्थानमेव ।

यच्च ‘जडत्वपरिच्छिन्नत्वयोरभावे चेतनत्वापरिच्छिन्नत्वप्राप्त्या प्रत्यक्षविरोधस्याऽदिशब्देन परिग्रहः’ इति तन्न । दृश्यमदृश्यं वेत्येव विकल्पस्योपदर्शितत्वेन जडत्वादिमत्त्वतदभाव-विकल्पानुपदर्शनेन तदभावे प्रत्यक्षादिविरोधस्याऽदिशब्देन परिग्रहवर्णनस्य त्वदीयपूर्वग्रन्थाननु-गुणत्वात् । सुधानुसारेण दोषान्तरस्यैवाऽदिशब्देन ग्रहणसम्भवे तत्परित्यागेन दोषान्तर-स्याऽदिशब्दार्थत्वकल्पनस्य निर्निबन्धनत्वाच्च ।

दृश्यत्वादिकं दृश्यत्वादिमन्न वा । दृश्यत्वे दृश्यत्वाभावेऽज्ञानासिद्धिः । जडत्वे जडत्वस्य परिच्छिन्नत्वे परिच्छिन्नत्वस्यावृत्तौ अपसिद्धान्त इत्यभिप्रेत्याऽद्यं दूषयति- तैरेवेति ।। दृश्यत्वादिभिरेवेत्यर्थः । तत्र दृश्यत्वादिरूपहेतुवृत्तावपि मिथ्यात्वाभावादिति भावः ।

यत्तु दृश्यत्वादीनामदृश्यत्वेऽज्ञानासिद्धिरिति भाववर्णनं तदसत् । दृश्यत्वे १दृश्यत्वावृत्ता-वज्ञानासिद्धिप्राप्तावपि जडत्वपरिच्छिन्नत्वयोस्तदवृत्तावपसिद्धान्तप्राप्तावप्यज्ञानासिद्धेरप्रसङ्गात् । दृश्यत्वादीनां दृश्यत्वाभाववत्त्वस्यैव तत्रानैकान्त्याभावोपपादकत्वात् ‘दृश्यत्वाद्यभावे च’ इत्येव वक्तव्यतया अदृश्यत्व इत्युक्तेरज्ञानमात्रमूलत्वाच्च ।

ननु न सत्यं मिथ्या वा दृश्यत्वादि । किन्तु उभयानुगतसामान्यमेव । न च सामान्येन प्रयुक्त-हेतोर्विशेषविकल्पनेन निराकरणं सम्भवति । तथा सति धूमाद्धूमध्वजानुमानेऽप्युक्तरीत्या विशेष-विकल्पेन निराकरणसम्भवात्तदुच्छेदप्रसङ्गादित्यत आह- न चेति ।। बाष्पारोपितसत्यधूमानुगत-धूमत्वसामान्यस्येव सत्यानिर्वचनीयसाधारणदृश्यत्वसामान्यस्याप्याश्रयासिद्ध्याऽसिद्धत्वेन तदसम्भवादिति भावः ।

ननु बाष्पारोपितधूमे सत्यधूमे च धूमत्वसामान्यस्य मयाऽङ्गीकृतत्वाद् दृष्टान्तो विप्रतिपन्न इत्यत आह- दिगिति ।। तदर्थस्तु पूर्वोक्तरीत्या आकर एव स्पष्टः ।

**गोविन्दीया**

अथेति ।। अनिर्वचनीयासतोः समानं मिथ्यात्वं मिथ्यात्वसामान्यं तस्मिन् मिथ्यात्व-सामान्येऽत्र प्रपञ्चेऽनुमानेन सिद्धे सति तदाश्रयः प्रपञ्चोऽसन् वाऽनिर्वचनीयो वेति सन्देहेऽसच्चेन्न प्रतीयेत इति असत्त्वे बाधितेऽनिर्वाच्यतासिद्धिरिति चेदित्यर्थः । उभयेति ।। उभयसम्प्रतिपन्न-स्यानिर्वचनीययोः सम्प्रतिपन्नस्य मिथ्यात्वसामान्यस्याभावादित्यर्थः । सद्विवेकस्येति ।। सद्विविक्तत्वस्य मिथ्याभूतधर्मस्य साध्यत्वादनिर्वचनीयताभावेन नाप्रसिद्धविशेषणताऽसत्त्वाभावेन नापसिद्धान्तोऽपीति चेदित्यर्थः । भेदेति ।। सद्विविक्तत्वं हि सद्भिन्नत्वं भेद इति यावत् । तस्य साधने स्वशास्त्रे भेदनिराकरणानुपपत्तिश्चेत्यर्थः । सत्यत्व इति ।। बाध्यत्वस्य सत्यत्वे दृश्यत्वादीनां हेतूनां तेन बाध्यत्वेन सहानैकान्त्यात् । तत्र बाध्यत्वे सत्यत्वाङ्गीकारेण मिथ्यात्वरूपसाध्याभावाद् दृश्यत्वादीनां हेतूनां सत्त्वाद् अनैकान्त्यमित्यर्थः । बाध्यत्वे दृश्यत्वादिरूपहेतोरेव आगमनान्न व्यभिचार इत्याशङ्क्य दृश्यत्वानङ्गीकारे बाधकमाह- दृश्यत्वाद्यभाव इति ।। बाध्यत्वस्य दृग्विषयत्वाभावे ज्ञानाविषयत्वाभावेऽसाध्यत्वोपपत्तेः । दृश्यत्वानुमानं प्रति यत्साध्यत्वमङ्गीकृतम्, तच्च न स्यात् । तथा हि बाध्यत्वं हि सिद्धिविषयत्वात् साध्यम् । सिद्धिर्हि अनुमितिरूप-ज्ञानम् । तथा च तस्य ज्ञानविषयत्वेऽसाध्यत्वं स्यादित्यर्थः । अनुमानवैयर्थ्यापत्तिरादिशब्दार्थ इति भावः । लोकेऽनुमानानां साध्यप्रतीतिजनकत्वाद् दृश्यत्वानुमानस्यापि साध्यप्रतीतिजनकत्वं वक्तव्यम् । बाध्यत्वरूपसाध्यस्यैव दृग्विषयत्वाभावेनानुमानस्यापि साध्यप्रतीत्यजनकत्वम्, तथा चानुमानवैयर्थ्यमित्यर्थः । तेनैवेति ।। तत्र दृश्यत्वादिष्वनैकान्त्यं च । तथा हि । अज्ञानसिद्ध्यापत्त्या दृश्यत्वेऽपि दृश्यत्वमङ्गीकर्तव्यम् । तथा च दृश्यत्वहेतोर्भावात् सत्यत्वेन मिथ्यात्वरूप-साध्यस्याभावाद् अनैकान्त्यमित्यर्थः । न चेति ।। यदि सत्यासत्ययोः दृश्यत्वसामान्य-मुभयवादिसम्प्रतिपन्नं स्यात् तदा विकल्पानवकाशः । न च तदस्ति । अतो विकल्प्य दूषणाभिधानं युक्तमित्यर्थः । एषा दिगिति ।। एषः दोषप्रदर्शनमार्गः । अन्येऽपि बहवो दोषाः सन्ति । तेऽपि बुद्धिमतो हि इत्यर्थः ।

### नारोपन्तीया

बाध्यत्वस्य च मिथ्यात्व इति । ननु वन्ध्यासुतः किं जीवति मृतो वेत्यादिप्रश्ने यदेव भवतामुत्तरं तदेवास्माकमत्रापि । तत्र हि भवद्भिः कोटिद्वयस्य प्रतिषेध एव कार्यः । नापि जीवति, नापि मृत इति । न हि तत्र जीवनप्रतिषेधे मरणं सत्यमिति वा, मरणप्रतिषेधे जीवनं सत्यमिति वाऽभ्युपगतं स्यात् । पुनस्तन्निषेधे व्याघात इति वा दूषणं सम्भवति । एवमेव प्रपञ्चे बाध्यत्वम-बाध्यत्वं चोभयं मिथ्याऽस्तु । बाधकाभावात् । एतेन सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगि-नीत्यनुमाने अविरुद्धत्वोपाधिः प्रागुक्तः परास्तः । अत्रैव साध्यव्यापकताभङ्गादिति चेदुच्यते । भ्रान्तोऽसि । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथा हि - जीवनं हि प्राणसंयोगविशेषः । 'जीव= प्राणधारणे' इति धातोः । तथा मरणमपि प्राणविभागविशेषः । 'मृञ्-प्राणत्यागे' इति धातोः । तदुभयमपि शरीरगुणविशेषरूपं पृथक्पदार्थान्तरं, भावरूपं वा, प्राणसंयोगतद्ध्वंसरूपं वा । न तु परस्परात्यन्ताभावरूपम् । तथा चान्यतरप्रतिषेधे कथं अन्यतरसत्त्वापत्तिः ? न हि गजे गोत्वं मिथ्येत्येतावताऽश्वत्वं सम्भवति । नापि घटे मरणं मिथ्येत्येतावता जीवनं सत्यं भवति । तथा च वन्ध्यासुतपर्यन्तं धावनं व्यर्थम् । ननु घटे कथं जीवनं मिथ्या स्यात् ? ध्वंसात्प्राक् घटजीवनस्य प्रमितत्वादिति चेत् । मूर्खोऽसि । स्थितिमात्रमेव तत् । घटस्तु न जीवनपदार्थः । तस्य जीवच्छरीरमात्रवृत्तित्वात् । अन्यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वादिति हेतोः सर्वतान्त्रिकाभिमतव्याप्तिकस्याप्यनैकान्त्यं प्रसज्येत । न च तथा प्रकृते । बाध्यत्वाबाध्यत्वयोः अनिर्वचनीयसिद्धेः, प्राक् परस्परविरहरूपत्वस्यैव सम्मतत्वात् । अत एव वन्ध्यासुते वक्तृत्वस्य मिथ्यात्वात् तदभावस्य सत्यत्वम् । असदाश्रयत्वं च- ध्वस्ते उत्पत्स्यमाने वा घटे पटत्वं नास्तीत्यबाधितप्रतीतेः सर्वैरपि स्वीकृतमेव । अत एवाविरुद्धत्वोपाधिरपि उद्धृतो वेदितव्य इत्यलमतिप्रपञ्चनेनेति दिक् ।।

### जनार्दनभट्टीया

'दृश्यत्वाद्यनुमानेष्वपि एत एव' इत्युक्ते एत एवेत्यस्य असङ्कुचितवृत्तित्वेन अभेदवादिनं प्रति भेदवादिभिरभिहितो 'न च भेदे विकल्पो युज्यते' इत्यादिदोषोऽप्यतिदिश्यत इत्याभाति । तां भ्रान्तिं निवारयितुमाह – विवादपदमित्यादिना ।। तथा च अनिर्वचनीयानुमानोक्तदोषाणामेव अत्रातिदेश इत्युक्तं भवति । असत्वे चेति ।। प्रतीतत्वादिति भावः । किञ्च सत्यासत्ययोरनुगत-सामान्याङ्गीकारे आरोपितधूमत्वाश्रयस्य धूमस्य ह्रदादावपि सत्वात् अनैकान्तिकप्रसङ्ग इत्यादिकं 'न च बाष्पारोपितधूमेन धूमत्वं व्यभिचरति' इत्यादिनोक्तं सर्वत्र आवर्तनीयमित्याह– एषा दिगिति ।।

## आत्मनोऽपि दृश्यत्वादनैकान्तिकता च

**दृश्यत्वानुमाने अनैकान्तिकतोपपादनम्**

### श्रीमज्जयतीर्थटीका

एवं सामान्यतोऽनुमानानि निरस्य विशेषतो निराचिकीर्षुर्दृश्यत्वानुमानस्य तावद् दोषान्तरमाह-

## मूल

***आत्मनोऽपि दृश्यत्वादनैकान्तिकता च ।***

शुक्तिरजतादेः सपक्षस्येव विपक्षस्याऽऽत्मनोऽपि दृश्यत्वादनैकान्तिकता साध्यमिथ्यात्व-सम्बन्धनियमाभावश्च दृश्यत्वस्य भवति । अनैकान्तिकश्चोर्ध्वतादिवत्सन्देहहेतुत्वान्न साध्यं साधयति ।

नन्वात्मनो दृश्यत्वमेव कुत इति चेन्न । 'आत्मा वा ओ द्रष्टव्यः'१ 'दृश्यते त्वग्ऱ्रयया बुद्ध्या सूक्ष्मया'२ इत्यादिश्रुतेः ।

### श्रीविजयीन्द्रभिक्षु

ननु दृश्यत्वादिहेतूनां साध्याभावसम्बन्धेऽपि साध्यसम्बन्धस्य सत्त्वात् साध्यसाधनता किन्न स्यादित्यत आह- अनैकान्तिकश्चेति ।। तथा चोर्ध्वतादिवत् साधारणधर्मतया संशय-जनकत्वमेव । न तु साध्यनिश्चायकत्वमिति भावः । आत्मा वेति ।। 'आत्मा वा ओ द्रष्टव्यः'३ इत्यादौ तव्यस्य, दृश्यत इत्यादौ तिङः, 'तमेव धीरो विज्ञाय' इत्यादिपदोपात्तश्रुतौ द्वितीयायाः 'तयोरेव कृत्यक्तखलर्थाः'१ 'भावकर्मणोः'२ 'कर्मणि द्वितीया'३ इति कर्मण्यनुशासनादिति भावः।

### श्रीवेदेशतीर्थ

नन्वसिद्ध्यव्याप्त्योरेव हेतुदूषणत्वात्कथमनैकान्तिकत्वं हेतुदोष इत्यत आह- साध्य-मिथ्यात्वेति ।। तथा च तस्याव्याप्तावन्तर्भाव इति भावः । ननु दृश्यत्वादेः साध्यसम्बन्धस्य सत्त्वात् साध्यसाधकता किं न स्यादित्यत आह- अनैकान्तिकश्चेति ।। साध्यसम्बन्धनियमाभाववानित्यर्थः ।

### द्वैतद्युमणि

साध्यमिथ्यात्वेत्यादि ।। इदमेकमेवान्तिके यस्यासावेकान्तिकः । न एकान्तिकोऽ-नेकान्तिकः । तस्य भावोऽनेकान्तिकतेति व्युत्पत्तिलब्धार्थप्रदर्शनपरमिति ज्ञातव्यम् । मतविशेष-सिद्धदूषकताबीजं दर्शयति- अनैकान्तिकश्चेति ।।

### श्रीराघवेन्द्रतीर्थ

अपिपदार्थं वदन्नेव व्याचष्टे-शुक्तिरजतादेरिति ।। अनैकान्तिकशब्दार्थः साध्येत्यादि । ततश्च को दोष इत्यत आह- अनैकान्तिकश्चेति ।। ४स्थाणुतोर्ध्वतादिवदित्यर्थः ।

### गुरुराजीया

असिद्ध्यव्याप्त्यन्यतरत्वाभावादनैकान्तिकत्वस्य हेतुदोषत्वाभावात् तदुद्भावनमनुप-पन्नमित्यतोऽनैकान्त्यपदेन साध्यसम्बन्धनियमाभावरूपाव्याप्तेरेव विवक्षितत्वान्न तदुद्भावनानु-पपत्तिरित्याशयेनाऽह- साध्यमिथ्यात्वेति ।। ततोऽपि कुतो न साधकत्वमित्यतः कोटिद्वय-सहचरितत्वेन सन्देहहेतुत्वान्न तदित्यभिप्रेत्य, तदुपपादयति- अनैकान्तिकश्चेति ।। अन्यथोर्ध्व-त्वादिकमप्यन्यतरकोटिनिर्णायकं स्यादिति भावः । आत्मनो दृश्यत्वानङ्गीकारे बाधकोक्तेरिव साधकोक्तेरपि तत्साधकत्वान्मूलकारीयविपक्षबाधकोक्तिमात्रस्यानुपपन्नतामाशङ्क्य, बाधकोक्तेः साधकोक्त्युपलक्षणत्वान्नानुपपत्तिरित्यभिप्रेत्य स्वयं साधकं वक्तुं स्वयं साधकाभावमाशङ्क्य परिहरति- नन्वात्मन इत्यादि ।।

### गोविन्दीया

एवमिति ।। जडत्वानुमानेऽपि बाध्यत्वं सत्यं चेत्, तत्रैव जडत्वहेतोः सत्त्वाद् व्यभि-चारः । तथा हि । बाध्यत्वे जडत्वधर्मानङ्गीकारे तस्य बाध्यत्वस्य पक्षधर्मत्वेन धर्मधर्मिणोरभेदव्यप-देशात् पक्षे धर्मिणि जडत्वं न स्यादिति बाधकवशात् तत्रापि जडत्वमङ्गीकर्तव्यम् । तथा च हेतोः सत्त्वाद् अनैकान्तिकत्वमिति । किञ्च जडत्वस्य सत्यत्वे तत्रैव जडत्वहेतोः सत्त्वात् मिथ्यात्वाभावात् व्यभिचारः । तथा हि । जडत्वे जडत्वानङ्गीकारे चेतनत्वापत्त्या जडत्वमङ्गीकर्तव्यम् । तथा च हेतोः सत्त्वात् साध्याभावाद् व्यभिचार इति दोषो ज्ञातव्यः । अनया रीत्या परिच्छिन्नत्वानुमानेऽपि दोषो ज्ञातव्यः । एवं पूर्वोक्तरीत्या सामान्यतोऽनुमानानि त्रीणि निरस्य विशेषतो निराचिकिर्षुः दृश्यत्वानुमानस्य तावत् दोषान्तरमाह- जडत्वपरिच्छिन्नत्वरूपानुमानद्वये दोषं वक्ष्याम इत्यर्थः । अनैकान्तिकता चेति ।। दृश्यत्वानुमाने न केवलं बाध्यत्वानुमानदोषः, किन्तु अनैकान्तिकता चेति चशब्दार्थ इत्यर्थः । अनैकान्तिकश्चेति ।। अनैकान्त्यदोषयुक्तो दृश्यत्वधर्म इत्यर्थः ।

### नारोपन्तीया

आत्मनोऽपि दृश्यत्वादित्यत्र अपिशब्दार्थं दर्शयन्नेव वाक्यं योजयति । शुक्तिरजतादे-रिति ।। अनैकान्तिकतापदं व्याचक्षाण एव वाक्यार्थमाह । साध्यसम्बन्धेति१ ।। एकान्तो नियमः सोऽस्यास्तीत्यैकान्तिकः । 'अत इनिठनौ'२ इत्यस्त्यर्थे ठन् । 'ठस्येकः'३ इति इकादेशः । 'ञ्नित्यादिर्नित्यम्'४ इत्याद्युदात्तस्वरार्थो नकार इत्संज्ञकः । योग्यतया नियमस्य साध्यसम्बन्ध-प्रतियोगित्वं लभ्यते । तथा च

साध्यनिरूपितसम्बन्धिनिरूपितसम्बन्धनियमवानैकान्तिकः । अतथाभूतोऽनैकान्तिकः । तस्य भावस्तत्ता । साध्याभावसामानाधिकरण्यमिति यावत् । सन्देह-हेतुत्वादिति । यद्यपि पक्षीयः साध्यसन्देहः स्वारसिको नानुमितिप्रतिबन्धकः । प्रत्युत 'सन्दिग्धे न्यायः प्रवर्तते' इति न्यायात् प्रमाणवृत्तेरनुकूल एव । तथाऽप्यन्वयव्यतिरेकाभ्यां आहितः प्रतिबन्धकः एवेति भावः ।

#### जनार्दनभट्टीया

'अनैकान्तिकता च' इति चशब्दोक्तदूषणं विवृणोति – साध्यमिथ्यात्वेति ।।

### न चाऽत्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वम् ..

**आत्मनो दृश्यत्वाभावे बाधकोक्तिः**

#### श्रीमज्जयतीर्थटीका

विपक्षे बाधकञ्चाऽह-

### मूल

***न चाऽत्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वम् ।***

तज्ज्ञानत्वेनाभिमतस्येति शेषः । भवतीति वक्ष्यमाणेन सम्बन्धः । प्रकृतत्वाद् दृश्यत्वमिति वक्तव्ये दृक्कर्मत्वमिति दृश्यत्वव्याख्यानमतिप्रसङ्गस्फुटीकरणार्थम् ।

तदयमर्थः । यद्यात्मनो दृश्यत्वं न स्यात् तदा वेदान्तवाक्यजनितविज्ञानस्याऽत्मज्ञानत्वं न स्यात् । दृशिं प्रति कर्मत्वं हि दृश्यत्वम् । आत्मकर्मकं ज्ञानमेवाऽत्मज्ञानम् । तथा च आत्मनो दृश्यत्वाभावे कथमात्मज्ञानं सम्भवेत् । अकर्मणः कर्मतया ज्ञानव्यावर्तकत्वे व्याघातात् ।

#### श्रीविजयीन्द्रभिक्षु

'न चाऽत्मनो दृक्कर्मत्वम्' इत्यत्र दृक्कर्मत्वं विना आत्मनस्तज्ज्ञानत्वं स्वविषयकज्ञानत्वं नेत्यर्थः प्रतीयते । तत्र चेष्टापत्तिमाशङ्क्याऽह- तज्ज्ञानाभिमतस्येति ।। भवतीति वक्ष्यमाणे-नेति ।। 'तदज्ञाननिवृत्तिश्च तेन भवति' इति वक्ष्यमाणेनेत्यर्थः । दृशिमिति ।। यद्यपि 'इक्श्तिपौ धातुनिर्देशे' इति स्मरणाद्दृशिशब्दस्य दृशिधातुरेवार्थः । न तु दर्शनक्रिया । तथाऽपि तस्य कुषादिषु पाठात् 'कुषादिभ्यः' इति भावे इक्प्रत्ययान्तत्वाद्दर्शनक्रियार्थत्वमिति भावः । कर्मत्वं हीति ।। हिशब्देन 'लः कर्मणि च भावे चाकर्मकेभ्यः'१ इति सूत्रे लकारोपलक्षितकृत्यादीनां कर्मार्थत्व-मेव । न तु भावार्थत्वमित्युक्तां तत्सूत्रव्याख्यानप्रसिद्धिं सूचयति । नन्वात्मव्यावर्तितमेव ज्ञानमात्मज्ञानम् । न चाऽत्मनोऽकर्मत्वे व्यावर्तकत्वानुपपत्तिः । सम्बन्धाभावादिति वाच्यम् । विषयतया व्यावर्तकत्वोपपत्तेरित्याशङ्क्याऽह- अकर्मण इति ।। विषयत्वातिरिक्तस्य ज्ञानकर्मत्वस्य दुर्निरूपतयाऽकर्मत्वाभ्युपगमे अविषयत्वमेवाभ्युपगतं स्यात् । तथा च व्याघात इति भावः ।

#### श्रीवेदेशतीर्थ

आत्मनस्तज्ज्ञानत्वमित्यन्वयभ्रमनिवारणायाऽह- तज्ज्ञानत्वेनाभिमतस्येति शेष इति ।। भवतीत्यस्य स्यादित्यर्थकतिङन्तप्रतिरूपकाव्ययत्वं लटो लिङर्थत्वं वाऽभिप्रेत्याऽह- यद्यात्मन इति ।। एवमुत्तरत्रापि द्रष्टव्यम् ।

#### श्रीराघवेन्द्रतीर्थ

अतिप्रसङ्गेति ।। व्याघातरूपातिप्रसङ्गस्फुटीकरणायेत्यर्थः ।

#### गुरुराजीया

आत्मनः आत्मज्ञानत्वाभावापादनस्येष्टसाधनतामप्रयोजकताञ्चाऽशङ्क्य परिहरति- तज्ज्ञानत्वाभिमतस्येति शेष इति ।।

#### गोविन्दीया

विपक्षे इति ।। दृश्यत्वानङ्गीकार इत्यर्थः । न चेति ।। तज्ज्ञानाभिमतस्य आत्मज्ञानत्वेन सम्मतस्य वेदान्तजनितज्ञानस्य तज्ज्ञानत्वम् आत्मज्ञानत्वं न च भवति । अतो दृक्कर्मत्वम् आत्मन्यङ्गीकर्तव्यमित्यर्थः । अकर्मण इति ।। अकर्मणोऽप्यात्मनः कर्मतया स्वात्मज्ञानस्य अज्ञान-व्यावर्तकत्वे अज्ञाननिवर्तकत्वे कर्मत्वाकर्मत्वाङ्गीकारेण व्याघातात् कर्मत्वमेवाङ्गीकर्तव्यमित्यर्थः ।

#### जनार्दनभट्टीया

'न च आत्मनः' इति मूले आत्मनो दृक्कर्मत्वाभावे आत्मनः आत्मज्ञानत्वं न स्यादिति अन्यथाप्रतीतेः अध्याहृत्य योजयति – तज्ज्ञानत्वेनाभिमतस्येति ।। शेष इति ।। ब्रह्मविषयकज्ञानत्वेन अभिमतस्य वेदान्तवाक्यजनितज्ञानस्येत्यर्थः । 'तज्ज्ञानाभिमतस्य' इति शेषे तज्ज्ञानशब्दार्थाप्रतीतेः मूलोक्ततर्के आपाद्यापादकयोः निमित्तनैमित्तिकभावस्य अस्फुटत्वाच्च विस्तरेण प्रतिपादयितुमाह – तदयमित्यादिना ।।

### तदज्ञाननिवृत्तिश्च तेन भवति ..

**आत्मज्ञानाभावे बाधकोक्तिः**

#### श्रीमज्जयतीर्थटीका

आत्मज्ञानाभावे किं बाधकमित्यत आह-

### मूल

***तदज्ञाननिवृत्तिश्च तेन भवति ।***

नेत्यनुवर्तते । अतिप्रसङ्गसमुच्चये चशब्दः । यदा वेदान्तजनितविज्ञानमात्मज्ञानं न स्यात् । तदा आत्माज्ञाननिवृत्तिस्तेन न स्यात् । तज्ज्ञानेनैव तदज्ञाननिवृत्तिदर्शनात् । तथा च वेदान्तानां वैयर्थ्यं स्यात् ।

#### श्रीविजयीन्द्रभिक्षु

बाधकोपन्यासात्मकत्वस्फोरणायाऽह- नेतीति ।। भवतीत्यस्य स्यादित्यर्थकतिङन्त-प्रतिरूपकाव्ययत्वं लटो लिङर्थत्वं वा अभिप्रेत्य व्याचष्टे- यदीति ।। वेदान्तानामिति ।। संसाराऽ-पादकाज्ञाननिवर्तकज्ञानाजनकत्वेन निष्प्रयोजनत्वं स्यादित्यर्थः ।

#### श्रीवेदेशतीर्थ

मूले विपर्ययपर्यवसानोक्तिसूचकतर्कस्वरूपमाह- यदेति ।।

#### श्रीराघवेन्द्रतीर्थ

अतिप्रसङ्गेति ।। न केवलमात्मज्ञानत्वाभावः । तदज्ञाननिवृत्त्यभावश्चेत्येवमतिप्रसङ्ग-समुच्चय इत्यर्थः । तमेव व्यनक्ति- यदेति ।।

### तदज्ञाननिवृत्तिश्च तेन भवति..

**आत्मनो दृश्यत्वानङ्गीकारे अतिप्रसङ्गान्तरोक्तिः**

***तदज्ञाननिवृत्तिश्च तेन भवति***

#### श्रीमज्जयतीर्थटीका

अथवा आत्मनो दृक्कर्मत्वानङ्गीकारेऽतिप्रसङ्गान्तरमेतत् । तथा हि, यद्यात्मनो दृक्कर्मत्वं न स्यात्तदा तदज्ञानं नाम न स्यात् । सति पुष्कलकारणे तत्कर्मकज्ञानप्रतिबन्धकं हि तदज्ञानम् । सम्बन्धान्तरानिरूपणात् । आत्माज्ञानाभावे च तन्निवृत्तिलक्षणमोक्षश्च न स्यादिति शास्त्रवैयर्थ्यं स्यादिति ।

#### श्रीविजयीन्द्रभिक्षु

सम्बन्धान्तरेति ।। अज्ञानस्याऽत्मना सहाऽत्मकर्मकज्ञानप्रतिबन्धकत्वादन्यस्य सम्बन्धान्तरस्य निरूपयितुमशक्यत्वादित्यर्थः । न च विषयविषयिभाव एव सम्बन्धो निरूपयितुं शक्यत इति वाच्यम् । स्वरूपसम्बन्धस्य त्वया अनभ्युपगमात् । अज्ञानविषयत्वाङ्गीकारे तुल्य-न्यायेन दृग्विषयत्वस्याप्युपपत्तेश्च । न च 'यत्तदद्रेश्यम्' इत्यादिश्रुतिविरोधान्न दृग्विषयत्वमिति वाच्यम् । 'दृश्यते त्वग्र्या बुद्ध्या' इत्यादिश्रुतिविरोधेन साकल्येन दृश्यत्वाभावस्यैव तच्छ्रुत्यर्थ-त्वात् । त्वद्रीत्या चैतन्यं चैतन्यविषयो नेति तदर्थवर्णनसम्भवाच्च । आश्रयाश्रयिभावस्य तेजस्तिमिरयोरिव विरोधेनासम्भवात् । अत एव नाऽध्यासिकसम्बन्धोऽपि । अज्ञानस्यानादित्वेन आत्मवदध्यासानुपपत्तेश्च । संयोगसमवाययोस्त्वयैवानभ्युपगमाच्चेति भावः ।

### श्रीवेदेशतीर्थ

सति पुष्कलकारण इति ।। यदा शुक्तिका रजताद्याकारेणावभासते तदा शुक्ति-ज्ञानोत्पादकेन्द्रियादिकारणकलापे सति शुक्त्यज्ञाननिमित्तमेव शुक्तित्वप्रकारकज्ञानानुत्पाद इति तदज्ञानस्य प्रतिबन्धकत्वमिति भावः । 'तत्कर्मकज्ञानप्रतिबन्धकं तदज्ञानम्' इत्युक्तेऽसम्भवः । इन्द्रियाद्यप्रवृत्तौ शुक्त्यादिज्ञानानुत्पत्तेरिन्द्रियाद्यभावप्रयुक्तत्वेनाज्ञानस्य प्रतिबन्धकत्वासिद्धेः । तदर्थं सति पुष्कलकारण इत्युक्तम् । ज्ञानप्रतिबन्धकं तदज्ञानमित्युक्ते घटज्ञानाप्रतिबन्धकस्यापि पटाज्ञानत्वं स्यादित्यत उक्तम्- तत्कर्मकेति ।।

इदं त्वापाततः । वस्तुतस्तु पूर्वोक्तयोजनायामेव तात्पर्यम् । तथा हि, तदज्ञानं तत्कर्मकज्ञानप्रतिबन्धकमेव न भवति । घटाज्ञाने विद्यमान एवेन्द्रियादिसन्निकर्षप्रवृत्तौ ज्ञानोत्पत्तेरनुभवसिद्धत्वात् । न हि पूर्वं ज्ञात एव घटो ज्ञायत इति नियमोऽस्ति । किं चाज्ञानस्य ज्ञानप्रतिबन्धकत्वे अज्ञानाभावस्य ज्ञानोत्पत्तौ कारणत्वं प्रयोजकत्वं वा स्वीकार्यम् । अज्ञानाभावश्च ज्ञानेनैव साध्य इत्यन्योन्याश्रयः । न च शुक्त्यादि यदा रजताद्याकारेणावभासते तदा शुक्तित्वग्रहणस्यानन्यनिमित्तत्वात् तदग्रहणप्रयोजकतया अज्ञानमङ्गीकार्यमिति वाच्यम् । दोषवशादेव तदग्रहणोपपत्तेः । यथोक्तं सुधायाम्- 'केचित्सहजशक्तिप्रतिबन्धेन विपरीतामपि शक्तिमादधति' इति ।

यत् सिद्धान्ते अज्ञानं भावरूपं प्रतिबन्धकमङ्गीकृतं तत् जीवस्वरूपादिविषय एव । न सर्वत्र । तदभिप्रायेणेदमज्ञाननिर्वचनं चेन्न कोऽपि दोष इति प्रतिभाति । तत्सत्त्वे स्वरूपपरमात्मादि-साक्षात्काराभावात् पश्चाच्छ्रवणादिजनितपरोक्षज्ञानादिना तच्छैथिल्ये सत्यपरोक्षज्ञानेन तदात्यन्तिकनिवृत्त्यङ्गीकारात् । तदुक्तं 'श्रुत्वा मत्वा तथा ध्यात्वा' इत्यादौ ।

नन्वज्ञानार्थयोः कुत उक्तपरम्परासम्बन्धोऽङ्गीकार्यः । आश्रयाश्रयिभावादिलक्षणसाक्षात्-सम्बन्धस्यैवोपपत्तेरित्यत आह- सम्बन्धान्तरेति ।। त्वयेति शेषः । उक्तसम्बन्ध-स्योत्तरत्र दूष्यत्वात् । न च विषयविषयिभावलक्षणः सम्बन्धोऽस्त्विति वाच्यम् । स्वरूपसम्बन्धस्य त्वयाऽ-नङ्गीकारात् । अज्ञानविषयत्वे ब्रह्मणस्तन्न्यायेन दृग्विषयत्वस्याप्यापत्तेश्च । न चाज्ञान-ब्रह्मणोराध्यासिक एव सम्बन्धोऽस्त्विति वाच्यम् । प्रकाशे तमस इवाध्यासस्याप्यनुपपत्तेः । संयोगसमवाययोश्च त्वयैवानङ्गीकारादिति भावः ।

### द्वैतद्युमणि

अथ वेति ।। एतन्मूलं पूर्वमूलोक्तातिप्रसङ्गे इष्टापत्तिपरिहारकातिप्रसङ्गान्तरपरतयैव न व्याख्यायते । किन्तु तत्समकक्षातिप्रसङ्गान्तरपरतयैव व्याख्यास्यत इति भावः । सति पुष्कल इति ।। ज्ञानोत्पादकसामग्र्यां सत्यामित्यर्थः । प्रतिबन्धकं तन्निष्ठकार्यानुकूलशक्तिविघटकम् । परस्यापि मते प्रतिबन्धकाभावस्य कारणत्वानङ्गीकारादिति भावः । अत्र तदनुकूलशक्ति-विघटकत्वमेव तत्प्रतिबन्धकत्वम् । पुष्कलकारणोक्तिस्तु तदनुमापकतया । अन्यथैककारणकाले कार्यानुत्पत्तेः कारणान्तरविरहादपि सम्भवेन तदसिद्धेः ।

### श्रीराघवेन्द्रतीर्थ

अज्ञानं कुतो न स्यादित्यत आह- सतीति ।। वेदान्तश्रवणादिरूपे वा आकाङ्क्षादिमत्सदेव सोम्येत्यादिवाक्यज्ञानरूपे वा पुष्कलकारणे सत्यपि ब्रह्मगोचरज्ञानाभावो हि किञ्चित्प्रति-बन्धकायत्त इति वाच्यम् । तच्चाज्ञानमेव । अन्यस्यानिरूपणात् । सत्यामपि ज्ञानसामग्र्यां वस्तु-स्वभावादेव ज्ञानकर्मत्वं न चेत् किं प्रतिबन्धकाज्ञानेन कृत्यम् । अतोऽज्ञानं नाम वस्त्वेव न स्यादित्यर्थः ।

### गुरुराजीया

न चेत्यादिवाक्यद्वयमुपपाद्योपपादकभावापन्नैकातिप्रसङ्गसमर्पकत्वेन व्याख्याय वाक्य-द्वयोक्तमर्थं पूर्ववाक्यार्थत्वेनैव वर्णयित्वा द्वितीयं वाक्यमतिप्रसङ्गान्तरसमर्पकत्वेन व्याचष्टे- अथ वेति ।। किं तदतिप्रसङ्गान्तरं यत्समर्पकत्वं द्वितीयवाक्यस्याऽश्रीयते इत्यतस्तदेवोपदर्शयति- तथा हीति ।। इतीत्यस्य इत्यतिप्रसङ्गान्तरमिति पूर्वेण सम्बन्धः ।

### गोविन्दीया

अतिप्रसङ्गान्तरमेतदिति ।। एतद्दूषणम् अतिप्रसङ्गान्तरम् । अथवा एतद्वाक्यम् अतिप्रसङ्गान्तरं वक्तीत्यर्थः । सतीति ।। समग्रकारणे सत्यपि तत्कर्मज्ञानप्रतिबन्धकं हि तज्ज्ञान-प्रतिबन्धकत्वेनाज्ञानस्य चार्थेन परम्परासम्बन्ध इत्यर्थः । सम्बन्धेति ।। अज्ञानार्थयोः सम्बन्धान्त-राणि विषयविषयिभाव-संयोग-समवाय-अध्यासरूपाणां चतुर्णां स्वशास्त्रेऽनिरूपणात् । तथा हि । अज्ञानार्थयोः स्वशास्त्रे स्वरूपसम्बन्धस्य विषयविषयिभावसम्बन्धस्यानङ्गीकृतत्वाद् उभयोः द्रव्यत्वाभावेन संयोगसम्बन्धाभावात् । अवयवावयवित्वाद्यभावेन समवायाभावात् । प्रकाश-तमसोरिवाध्याससम्बन्धानुपपत्तेः परम्परासम्बन्ध एवाङ्गीकार्य इत्यर्थः ।

### जनार्दनभट्टीया

सति पुष्कलेति ।। अन्धकारस्यापि घटचाक्षुषसाक्षात्कारप्रतिबन्धकस्य घटाज्ञानत्ववारणाय 'पुष्कल' इत्युक्तम् । अन्धकारकाले घटचाक्षुषज्ञानकारणस्य आलोकस्य अभावात् नातिव्याप्तिरिति भावः । सम्बन्धेति ।। 'घटस्य अज्ञानम्' इत्यत्र षष्ठ्यर्थस्य सकलतदज्ञानकारणकाले तदज्ञानप्रतिबन्धकत्वातिरिक्तस्य सम्बन्धस्य निरूपयितुमशक्यत्वादित्यर्थः ।

## न च तदाकारम् ..

**आत्माविषयकस्याप्यात्मज्ञानस्याऽत्माऽकारत्वशङ्का तन्निरासश्च**

### श्रीमज्जयतीर्थटीका

नन्वात्मनो दृक्कर्मत्वाभावेऽपि वेदान्तवाक्यजनितज्ञानस्याऽकारसमर्पकतया व्यावर्तकत्वमङ्गीक्रियत एव । अत आत्मकर्मत्वाभावेऽप्यात्माकारं वेदान्तवाक्यजनितापरोक्ष-विज्ञानं भविष्यति । तेन न कोऽप्यतिप्रसङ्गः । 'द्रष्टव्यः'१ इत्यादिश्रुतयश्च तत्परतयैवोपपत्स्यन्ते ।

न चाऽत्मकर्मकत्वेन विना आत्माकारत्वं विज्ञानस्य कथमिति वाच्यम् । यथा खलु शशविषाणशब्दात्तदाकारं विज्ञानमुत्पद्यते । न च शशविषाणस्य कर्मता सम्भवति । सकल-सामर्थ्यविधुरस्य कारकताया एव दुर्लभत्वात् । तदिहापि वेदान्तवाक्यसामर्थ्यादनात्मकर्मकमपि विज्ञानमात्माकारमुत्पत्स्यते । को दोष इत्यत आह-

### मूल

*न च तदाकारम् ।*

आत्मनो दृक्कर्मत्वं विनेत्यनुवर्तते । स्यादेवं यदि तदाकारं ज्ञानमुत्पद्येत । न चाऽत्मनो दृक्कर्मत्वं विना आत्माऽकारं ज्ञानमुत्प-द्यते । कुत इत्यत आह-

**मूल**

***अतद्विषयत्वादेव ।***

यथा अनात्मविषयत्वाद्वेदान्तवाक्यजनितविज्ञानमात्मज्ञानं न भवतीत्युक्तम् । तथा तत एव तदात्माऽकारमपि न भवतीत्येवकारसम्बन्धः । अनात्मविषयमपि तदात्माऽकारं कुतो न स्यादित्यत आह-

**मूल**

***तद्विषयत्वमेव हि तदाकारत्वम् ।***

हिशब्दो हेतौ । यस्मात्तद्विषयत्वमेव तदाकारत्वं ज्ञानस्य नान्यम् । तस्मादात्मविषयत्वा-भावादात्माऽकारमपि तन्न भवति । व्याघातादिति ।

### श्रीविजयीन्द्रभिक्षु

नन्वात्मनोऽकर्मत्वेऽपि स्वाकारसमर्पकत्वेन तद्व्यावर्तकत्वमुपपन्नम् । तत एव अज्ञान-निवृत्तिश्चेति न वेदान्तानां वैयर्थ्यम् । न चाज्ञानस्याऽऽत्मना सह सम्बन्धानिरूपणम् । तज्ज्ञान-प्रतिबन्धकत्वस्यैव सम्बन्धस्य सम्भवादित्याशयेन शङ्कते- नन्विति ।। तत्परतयेति ।। तदाकारत्व-प्रतिपादनपरतयेत्यर्थः । यद्यपि तव्यादिप्रत्ययाः कर्मण्येव विहितास्तथाऽपि क्रियया आप्तुमिष्टतमत्वे सति क्रियानिष्पादकत्वरूपकर्मत्वस्य मुख्यस्य त्वात्मन्यसम्भवाद् अर्थान्तरस्वीकारे तु तदाकारत्व-मेव स्वीकारार्हमिति भावः । यदि तद्विषयत्वं न स्यात्तर्हि तदाकारत्वमपि न स्यात् । तद्विषयत्वाति-रिक्तस्य तदाकारत्वस्य दुर्वचत्वादिति परिहरति- अत आहेति ।। एवकारान्वयप्रदर्शनाय वृत्तानुवादपूर्वकं व्याचष्टे- यथेति ।। अनात्मविषयत्वादिति ।। आत्माविषयत्वादित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । तत् वेदान्तजनितं ज्ञानम् ।

### श्रीवेदेशतीर्थ

तेन न कोऽपीति ।। आत्माऽऽकारज्ञानस्यैवाऽऽत्माज्ञाननिवर्तकत्वोपपत्तेः प्राचीनाति-प्रसङ्गस्य आत्माऽऽकारज्ञानप्रतिबन्धकमेवाऽऽत्माज्ञानमित्यङ्गीकाराद्द्वितीयातिप्रसङ्गस्य चाभावादि-त्यर्थः । तत्परतयैवेति ।। तदाकारत्वप्रतिपादनपरतयैवेत्यर्थः । यद्यपि तव्यादिप्रत्ययः कर्मण्येव विहितः तथाऽपि क्रिययाऽऽप्तुमिष्टतमत्वे सति क्रियानिष्पादकत्वरूपकर्मत्वस्य मुख्यस्य त्वन्मतेऽ-प्यसम्भवादर्थान्तरस्वीकारे तु तदाकारत्वमेव स्वीकारार्हमित्यर्थः । अनात्मविषयत्वात् । आत्माविषयत्वात् । एवमुत्तरत्रापि ।

### श्रीराघवेन्द्रतीर्थ

वेदान्तजनितापरोक्षेति ।। 'दशमस्त्वमसि' इत्यादाविव वाक्यादप्यपरोक्षज्ञानोत्पत्तेः परैरङ्गीकारादेवमुक्तम् । न कोऽपीति ।। आत्मज्ञानत्वेनाभिमतस्य तज्ज्ञानत्वाभावप्रसङ्गो वा अज्ञाननिवृत्त्यभावप्रसङ्गो वा अज्ञानस्यैवाभावप्रसङ्गो वा नेत्यर्थः । करणसामर्थ्यादित्याह- यथा खल्विति ।। कारकताया एवेति ।। तद्विशेषकर्मकारकत्वं दूरादपास्तमित्यर्थः । तदिहेत्यत्र तदित्यस्य विज्ञानपदेनान्वयः। इहेति । आत्मज्ञानिन्यपीत्यर्थः । विप्रतिपन्नज्ञानाकारत्वविषयेऽपीति वाऽर्थः । अनात्मेति । आत्माकर्मकमपीत्यर्थः । स्यादेवमिति । 'न कोऽप्यतिप्रसङ्गः' इत्युक्तप्रकारः स्यादित्यर्थः । एवकारोक्तिघटनायाऽऽह- यथेति ।। तत एवेति ।। आत्माविषयत्वादेवेत्यर्थः । येन हेतुना आत्मज्ञानत्वाभाव आपादितः तत एव हेतोरित्यर्थः । इत्येवकारसम्बन्ध इति । एवकारेण प्रागुक्तहेतोरेवेति प्रतीतेः यथेत्यादिनोक्तप्रकारेण प्राक् प्रकृतहेतुतां स्पष्टीकृत्यानन्तरमेवकार-सम्बन्धो बोध्य इत्यर्थः । अन्यथाऽपूर्वहेतुत्वेऽतद्विषयत्वादित्येव ब्रूयादिति भावः । सामर्थ्यादिति । आकाङ्क्षादिमच्छब्दस्य तदाकारज्ञानजनकत्वस्वाभाव्यादित्यर्थः ।

### गुरुराजीया

न कोऽपीति ।। आत्माऽऽकारज्ञानस्यैवाऽऽत्माज्ञाननिवर्तकत्वान्न तदनिवृत्तिप्रसङ्गः । आत्माऽऽकारज्ञानस्यैवाऽऽत्मज्ञानत्वान्न वेदान्तजनितविज्ञानस्याऽऽत्मज्ञानत्वानुपपत्तिरित्येवं प्रागुक्तं प्रसङ्गद्वयं नेत्यर्थः । तत्परतयैवेति ।। वेदान्तजनितज्ञानस्याऽऽत्माकारत्वपरतयैवेत्यर्थः । अनात्म-विषयत्वात् आत्मविषयत्वाभावात् ।

### गोविन्दीया

नन्विति ।। आत्मनो दृक्कर्मत्वाभावेऽपि वेदान्तजनितज्ञानस्य स्वाकारसमर्पकतया, स्वाकारस्य समर्पणं यस्मिन् तत् तस्य भावः तत्ता, तया आत्मसदृशाकारत्वेन आत्मज्ञानत्वाद् व्यावर्तकत्वम् अज्ञाननिवर्तकत्वमङ्गीक्रियत एवेत्यर्थः । अत इति ।। स्वाकारासमर्पणाद् आत्मकर्मकत्वाभावेऽपि वेदान्तजनितविज्ञानाद् आत्माकारत्वेन आत्मज्ञानं भविष्यतीति तेन कारणेन न कोऽप्यतिप्रसङ्ग इत्यर्थः । द्रष्टव्य इति ।। द्रष्टव्य इत्यादिश्रुतयश्च वेदान्तजनितज्ञानस्य स्वाकारसमर्पणेन आत्मनः तत्परतया द्रष्टव्यत्वप्रतिपादकतयोपपत्स्यते । न तु ज्ञानकर्मत्वेन । द्रष्टव्यत्वप्रतिपादकतयेत्यर्थः । कारकताया इति ।। कर्तृकर्मादिकारकताया एव दुर्लभत्वादित्यर्थः । स्यादेवमिति ।। यद्यात्मनः दृक्कर्मत्वं विना तदाकारं ज्ञानमुपपद्येत तर्ह्येव दोषाभावः स्यादित्यर्थः । अतद्विषयत्वादिति ।। एतत्पदमावृत्य योज्यम् । तथा चायमर्थः- यथेत्यादिना तत एवेति ।। अतद्विषयत्वादित्यावृत्य तस्यैवकारेण सम्बन्ध इत्यर्थः । व्याघातादिति ।। अनात्मविषयमपि आत्माकारं चेत् आत्मविषयत्व-अविषयत्वाङ्गीकारेण व्याघातादित्यर्थः ।

### जनार्दनभट्टीया

न कोऽपीति ।। अनैकान्तिकतालक्षणातिप्रसङ्गेनेत्यर्थः । तत्परतयेति ।। आकारसमर्पणपरतया इत्यर्थः । कारकताया एवेति ।। कुतः तद्विशेषरूपं कर्मत्वमित्यर्थः । 'क्रियां कुर्वद्धि कारकम्' इति न्यायेन क्रियानुकूलशक्तिमत्त्वरूपकारकत्वसामान्याभावे कुतः तद्विशेषरूपकर्मत्वम्? इति भावः । 'अनात्मविषयत्वादेव' इत्यत्र नत्वन्यस्माद्धेतोरित्यन्यथाप्रतीतेः एवकारसम्बन्धं दर्शयति – यथेत्या-दिना ।।

न हि ज्ञानज्ञेययोरेकाऽऽकारता ..

**आत्मज्ञानस्य आत्मविषयकत्वमेव आत्माकारत्वमिति समर्थनम्**

**श्रीमज्जयतीर्थटीका**

कुतस्तद्विषयत्वमेव तदाकारत्वमिति चेत् । परिशेषात् । तथा हि, तदाकार एवाऽकारो यस्येति वा, तदाकार इवाऽकारो यस्येति वा, स आकारो यस्येति वा तदाकारं विज्ञानमित्यभि-धातव्यम् । प्रकारान्तरासम्भवात् । तत्र तावत्प्रथमद्वितीयपक्षावनुपपन्नावित्याह-

मूल

***न हि ज्ञानज्ञेययोरेकाऽकारता ।***

सति हि ज्ञानज्ञेययोरेकाऽकारत्वे तदाकार एवाऽकारो यस्येति सम्भवेत् । न चैतदस्ति । अनुपलम्भात् । एकैव सत्ता ज्ञानज्ञेययोराकारोऽस्तीति चेन्न । अनुगतसत्ताया अनङ्गीकारात् । ब्रह्मसत्तयैकाऽकारत्वे च वेदान्तवाक्यजनितविज्ञानमात्माऽकारमेव कुतः ? घटाऽकारमपि तत्स्यात् । नापि परेणाऽत्मनि सत्तानामाऽकारोऽङ्गीक्रियते । निराकारताऽङ्गीकारादिति ।

एवं न हि ज्ञानज्ञेययोरेकाकारता सदृशाकारताऽस्ति । येन तदाकार इवाकारो यस्येत्युप-पद्येत । अत्यन्तसादृश्यस्यानुभवबाधितत्वात् । किञ्चित्सादृश्यस्य प्रागिवातिप्रसञ्जकत्वादिति योज्यम् ।

तृतीयेऽपि पक्षे न तावत्साक्षाज्ज्ञेयं ज्ञानस्याऽकारः सम्भवति । आधाराधेयभावाभावात् । अतः प्रकारान्तरासम्भवे परिशेषाद्विषयतया व्यावर्तकत्वेन स आकार इव यस्य तत्तदाकारमिति वक्तव्यम् । तथा च तद्विषयत्वमेव तदाकारत्वं सम्पद्यते । ततश्च वेदान्तवाक्यजनितं विज्ञान-मात्मविषयं न चेत्तदा तदाकारमपि न भवेदिति युक्तमेवेति ।

'यदि तर्हि तद्विषयत्वमेव तदाकारत्वम् । अतद्विषयत्वात् तदाकारं नेति व्याप्यव्यापक-योरभेदापत्तिः' इत्येतदप्यनेन निरस्तम् । न हि तदाकारत्वं तद्विषयत्वमिति पर्यायावेतौ । किं नाम सामान्यविशेषवचनौ । परिशेषसिद्धं तु पर्यवसानमभिप्रेत्य तद्विषयत्वमेव तदाकारत्व-मित्युक्तमिति ।

**श्रीविजयीन्द्रभिक्षु**

ननु न तदाकारत्वमेव तद्विषयत्वम् । शशविषाणशब्दजनितज्ञाने तद्विषयत्वाभावेऽपि तदाकारत्वदर्शनात् । न च तत्तद्विषयम् । असतः केनापि सम्बन्धाभावेन तत्सम्बन्धरूपविषयत्वा-नुपपत्तेरित्याशयेन शङ्कते- कुतस्तद्विषयत्वमिति ।। असतो निःस्वरूपत्वेन संयोगादेः सम्बन्ध-रूपत्वासम्भवेऽपि 'असच्छशविषाणम्' इत्यबाधितविशिष्टप्रतीतिबलेन सिद्धे सम्बन्धे विषयत्व-रूपस्वरूपसम्बन्धस्य विद्यमाने ज्ञान एव कल्पनात् वक्ष्यमाणरीत्या तद्विषयत्वातिरिक्तस्य तदाकारत्वस्य दुर्निरूपत्वाच्च तद्विषयत्वमेव तदाकारत्वमित्यभिप्रेत्य परिहरति- परिशेषादिति ।। आद्येऽपि विषयस्य यावदाकारत्वं, ज्ञानस्य तावदाकारत्वं विवक्षितं यत्किञ्चित्तदाकारत्वं वा । आद्य आह-अनुपलम्भादिति ।। द्वितीयं शङ्कते-एकैवेति ।। अनुगतेति ।। ब्रह्मणि पारमार्थिकी सत्ता । तदितरप्रपञ्चे व्यावहारिकी सत्तेति त्वत्सिद्धान्तादिति भावः । ननु सर्वत्र ब्रह्मसत्ता एकैवेति नोक्तदोष इत्यत आह- ब्रह्मसत्तयेति ।। किञ्च ब्रह्मसत्तयेति कोऽर्थः । ब्रह्मैव सत्तेति, ब्रह्मणः सत्तेति वा । नाऽद्यः । तथा सति तादृशसत्तावत्त्वेन जगतः पारमार्थिकसत्त्वापत्तेः । ब्रह्मणो घटत्वाऽदिवज्जगद्धर्मत्वाऽपाताच्चेत्याद्यं बहिरेव निराकृत्य द्वितीयं निराचष्टे- नापीति ।। निराकारतेति ।। निर्धर्मकतेत्यर्थः । आद्यपक्षदूषणार्थत्वमुपपाद्य द्वितीयपक्षदूषणार्थत्वमुपपादयति- एवमिति ।। एवं योज्यमिति सम्बन्धः । अत्यन्तसादृश्येति ।। आत्मतज्ज्ञानयोरिति शेषः । यद्यपि निराकारताऽङ्गीकारादिति दूषणेनैव द्वितीयपक्षोऽपि दूषितस्तथाऽप्यभ्युच्चयेन दूषणान्तरोक्तिरिति ध्येयम् । तृतीयेऽपीति ।। तदाकारो हि तदाश्रितो धर्मः । न च ज्ञेयं ज्ञानाश्रितम् । अननुभवात् । तथा च विषयतासम्बन्धेन ज्ञेयस्य ज्ञानव्यावर्तकत्वेन तस्य तदाकारत्वं निर्वर्त्यमिति परिशेषात् तदाकारत्वं तद्विषयत्वमेव पर्यवसन्नमित्यर्थः । किमतो यद्येवमत आह- ततश्चेति ।। अनेनेति ।। वक्ष्यमाणेनेत्यर्थः । किं नामेति ।। तद्विषयत्वं सामान्यं तदाकारत्वं तु विशेष इति विवेकः । नन्वेवं 'तद्विषयत्वमेव तदाकारत्वम्' इत्याचार्योक्तिः कथमित्यत आह- परिशेषसिद्धं त्विति ।। तथा च सामान्यविशेषयोरभेदोपचारेण तथोक्तमिति भावः ।

**श्रीवेदेशतीर्थ**

ननु तदाकारत्वमेव न तद्विषयत्वम् । शशविषाणशब्दजनितज्ञाने तद्विषयत्वाभावेऽपि तदाकारत्वदर्शनात् । तदपि सम्बन्धाभावादित्याशङ्कते- कुतस्तद्विषयत्वमिति ।। असतो निःस्वरूपत्वेन विषयत्वरूपसम्बन्धवत्त्वाभावेऽपि 'असच्छशविषाणम्' इत्यबाधितविशिष्ट-प्रतीतिबलेन सिद्धे सम्बन्धे विषयत्वरूपसम्बन्धस्य विद्यमाने ज्ञान एव कल्पनाद्वक्ष्यमाणरीत्या तद्विषयत्वातिरिक्तस्य तदाकारत्वस्य दुर्निरूपत्वाच्च तद्विषयत्वमेव तदाकारत्वमित्यभिप्रेत्य परिहरति - परिशेषादिति ।। तदाकार एवेति ।। यथा एतद्घटाकारं घटान्तरमित्यर्थः । तदाकार इवेति ।। यथा गवाकारो

गवय इत्यर्थः । स आकार इति ।। यथा घटत्वाकारो घट इत्यर्थः । आद्येऽपि विषयस्य यावानाकारः ज्ञानस्य तावदाकारत्वं विवक्षितम् । यत्किञ्चित्तदाकारत्वं वा । आद्य आह- अनुपलम्भादिति ।। द्वितीयं शङ्कते- एकैवेति ।। द्वितीयपक्षनिराकरणपरतयाऽपि मूलवाक्यं व्याचष्टे- एवमिति ।। एवं योज्यमिति सम्बन्धः । अत्यन्तसादृश्यस्येति ।। आत्मज्ञानयोरिति शेषः । यद्यपि निराकारताङ्गीकारेणैव द्वितीयपक्षोऽप्यनुपपन्नः । तथाऽप्यभ्युच्चयेन दूषणान्तरोक्तिरिति ध्येयम् । स आकार इवेति विषयस्याऽकारसादृश्यमुक्तम् । तन्नात्यन्तसादृश्यम् । आधाराधेय-भावाभावात् । नापि यत्किञ्चित्सादृश्यम् । वेदान्तजन्यज्ञानस्य घटज्ञानत्वापत्तेरित्यत उक्तम्- व्यावर्तकत्वेनेति ।। आधाराऽधेयभावाभावाद्व्यावर्तकत्वमपि कथमित्यत उक्तम्- विषयतयेति ।। यदि तर्हीति ।। तदाकारत्वमित्यतः परं तर्हीत्यस्य सम्बन्धः । अभेदापत्तिरिति ।। प्रतियोगि-भेदाभावेऽभावभेदस्याप्यभावादिति भावः । अनेनेति ।। न हीति मूलवाक्येनेत्यर्थः । न हि ज्ञानज्ञेययोः एकाकारत्वमिति वदतैकाकारत्वं सदृशाकारत्वं च तदाकारत्वशब्दार्थ इति सूचनेन तदाकारत्वस्य सामान्यत्वसूचनादित्यर्थः । किं नाम सामान्यविशेषवचनाविति ।। वृक्षत्वशिंशुपात्वे इव तदाकारत्वं सामान्यं तद्विषयत्वं विशेषः । तदाकारत्वस्य तद्विषयत्वपरित्यागेनोक्तप्रकारेण निर्विषये घटादावपि सत्त्वादित्यर्थः ।

नन्वेवं 'न च तदाकारम् । अतद्विषयत्वादेव' इति कथं विशेषाभावेन सामान्याभावसाधनम् । व्यभिचारात् । न हि शिंशुपात्वाभावेन वृक्षत्वाभावसाधनं युक्तमिति चेन्न । यावद्विशेषाभावेन सामान्याभावसाधनात् । अत एवोक्तं प्राक् 'ततश्च वेदान्तवाक्यजनितं विज्ञानमात्मविषयं न चेत्तदाकारमपि न भवेत्' इति ।

अत एव च 'अतद्विषयत्वादेव' इति हेतुमुक्त्वा 'तद्विषयत्वमेव हि तदाकारत्वम्' इत्युपपाद्य 'कथं तद्विषयत्वमेव तदाकारत्वम् । तदाकारत्वस्य तद्विषयत्वपरित्यागेनापि तदाकार एवाकारो यस्येत्यादिव्युत्पत्त्या निर्विषये घटादावपि सत्त्वात्' इत्याशङ्कापरिहारपरम् 'न हि ज्ञान-ज्ञेययोरेकाकारता' इति मूलं प्रसक्तप्रतिषेधपरतया प्रवृत्तमिति स्वरसम् । तदेतदुक्तम् 'अनेन निरस्तम्' इति ।

केचित्तु- अनेनेति ।। वक्ष्यमाणेनेत्यर्थः । किं नामेति ।। तद्विषयत्वं सामान्यं तदाकारत्वं विशेष इति विवेक इत्याहुः । परिशेषसिद्धमिति ।। तथा च तद्विषयत्वमेव तदाकारत्वमित्यभेदोक्ति-रौपचारिकीति भावः ।

### द्वैतद्युमणि

तावदिति ।। तृतीयपक्षस्य सर्वथा दूष्यत्वाभावादिवार्थमन्तर्भाव्य तस्यैवाङ्गीकारात् तावदित्युक्तम् । ननु मूलकारैस्तृतीयपक्षदूषणस्योत्तरत्राकृतत्वात् कथं तावदित्युक्तिरिति चेन्न । ज्ञानमेययोरिति निर्धारणसप्तमी । ज्ञेयस्येति योग्यतया सम्बन्धः । एकपदं मुख्यार्थकम् । तथा च ज्ञानज्ञेययोर्मध्ये ज्ञेयस्य ज्ञानमुख्याकारता नेत्यभिप्रायकतयोत्तरत्र १तृतीयपक्षेत्यादिना स्वयं धृत्वा व्याख्यास्यमानत्वेन तदभिप्रायकतया तावदित्युक्तिसम्भवात् ।

अनेनेति ।। अवयवव्युत्पत्तिलभ्यार्थान्तरनिराकरणपूर्वकं तत्र परिशेषकथनद्वारा तदाकारत्वपद-जन्यप्रमितिविषयत्वरूपसामान्यसूचनेनेत्यर्थः । तथा च तद्विषयकत्वाभावात् तदाकारणत्वजन्य-प्रमितिविषयत्वाभाववान् इति हेतुहेतुमद्भावो बोध्य इति भावः ।

### श्रीराघवेन्द्रतीर्थ

स एवाऽकारो यस्येति । आत्मैवाऽकारो यस्येत्यर्थः। द्वितीयपक्षनिरासकतयाऽपि तदेव वाक्यं योजयति- एवं न हीत्यादि ।। किञ्चित्सादृश्येति । सत्त्वादिना सादृश्यस्य वेदान्तजन्यं ज्ञानं घटाऽकारमपि स्यादिति प्रागुक्तदिशा अतिप्रसञ्जकत्वादित्यर्थः । आधाराऽधेयेति । आकार-स्याऽकार्येवाऽधारः । आत्मन एवाऽकारत्वे ज्ञानस्याऽधारता आत्मनश्चाऽधेयता स्यात् । न चायमाधाराऽधेयभावो युक्तः । आत्मनोऽपरिच्छिन्नतया अनाधेयत्वाज्ज्ञानस्य परिच्छिन्नतया तदनाधारत्वाच्चेति भावः । अनेन निरस्तमिति । विषयतया व्यावर्तकत्वेन आकार इवेति कथनेनेत्यर्थः । तद्व्यनक्ति- न हीति ।। सामान्येति । विषयत्वं सामान्यमाकारत्वं विशेष इत्यर्थः। तर्हि मूलविरोध इत्यत आह- परिशेषेति ।। अनुभवेति । आन्तरत्वबाह्यत्वरूपवैलक्षण्यस्यैवानुभवसिद्धत्वादिति भावः । प्रागिवेति ।। सत्तयैकाकारत्वेत्युक्तरीत्येत्यर्थः सामान्येति ।। तदाकारत्वस्य निर्विषये शशविषाणशब्दाज्जायमाने शशविषाणादिज्ञानेऽपि सत्त्वेन तदाकारत्वं सामान्यमित्यर्थः । परिशेषेति ।। तदाकारत्वशब्दार्थ-स्योक्तरीत्या प्रकारत्रयेणासम्भवादित्यर्थः ।

### गुरुराजीया

तद्विषयत्वाभावेऽपि शशविषाणादिज्ञानस्य तदाकारत्वदर्शनात् कथं तद्विषयत्वस्यैव तदाकारत्ववर्णनमिति भावेन शङ्कते- कुत इति ।। परिशेषयति-परिशेषादिति ।। आद्यपक्षमात्र-निरासकत्वाद्वाक्यस्य कथं पक्षद्वयनिरासकत्वेन व्यापार इत्यत एकशब्दस्यैकार्थत्वे२ प्रथमपक्ष-निरासकत्ववत् सदृशार्थकत्वे द्वितीयपक्षनिरासकत्वस्यापि सम्भवाद्युक्तः पक्षद्वयनिरासकत्वेनास्य व्यापार इत्यभिप्रेत्य तत्सिद्ध्यर्थं तथापि योजयति-एवमिति ।। १अत्यन्तसादृश्यस्येति ।। ज्ञानज्ञेयमात्रनिष्ठधर्मेण सादृश्यस्येत्यर्थः । घटज्ञानत्वस्य घटे घटत्वस्य च घटज्ञाने असत्त्वेना-

त्यन्तसादृश्यस्यानुभवबाधितत्वादिति भावः । यद्यपि निराकारत्वयुक्त्या अयं पक्षः प्रागेव दूषितः। तथाऽपि साकारत्वमङ्गीकृत्य पृथग्दूषणाभिधानमेतदिति द्रष्टव्यम् । प्रागिवेति ।। वेदान्तजनित-विज्ञानस्य आत्मनेव घटेनापि सत्तया सदृशत्वेनाऽत्मज्ञानत्ववद्घटज्ञानत्वस्यापि प्रसङ्गादित्यर्थः । स आकार इवेति विषयस्याऽकारसादृश्यमुक्तम् । तन्नात्यन्तम् । अनुभवबाधितत्वात् । नापि सत्तया । पूर्ववदतिप्रसङ्गित्वादित्यत उक्तम्- व्यावर्तकत्वेनेति ।। आधाराधेयभावाभावेन कथं व्यावर्तकत्वमपि तस्येत्यत उक्तम्- विषयतयेति ।। यदि तर्हीति ।। यदि तद्विषयत्वमेव तदाकारत्वं तर्हीति सम्बन्धः । अनेनेति ।। तदाकारत्वस्य परिशेषेण २तद्विषयत्वे पर्यवसानवर्णनेनेत्यर्थः ।

केचित्तु 'किन्नाम । सामान्यविशेषवचनौ' इत्यत्र वृक्षशिंशुपाशब्दाविवेति शेषः । वृक्षत्ववत् तदाकारत्वस्य सामान्यतायाः शिंशुपात्ववत् तद्विषयत्वस्य विशेषतायाः सत्त्वादित्यर्थः । एवं तर्हि 'न च तदाकारम् । अतद्विषयत्वादेव' इति कथं विशेषाभावेन सामान्याभावसाधनम् । व्यभि-चारात् । न हि शिंशुपात्वाभावेन वृक्षत्वाभावसाधनं युक्तमिति चेन्न । यावद्विशेषाभावेन सामान्याभावसाधनात् । अत एवोक्तं प्राक् 'ततश्च वेदान्तजनितविज्ञानम् आत्माविषयश्चेत् तदाकारमपि न भवेत्' इति । अत एव च 'अतद्विषयत्वादेव' इति हेतुमुक्त्वा 'तद्विषयत्वमेव हि तदाकारत्वम्' इत्युपपाद्य कथं तद्विषयत्वमेव तदाकारत्वम् । तदाकारत्वस्य तद्विषयत्वपरित्यागेनापि 'तदाकार एवाऽकारो यस्य' इत्यादिव्युत्पत्त्या निर्विषये घटादावपि सत्त्वाद् इत्याशङ्कापरिहारपरं 'न हि ज्ञानज्ञेययोरेकाऽकारता' इति मूलं प्रसक्तप्रतिषेधपरतया प्रवृत्तमित्याहुः ।

### गोविन्दीया

परिशेषादिति ।। परिशेषप्रमाणादित्यर्थः । स इति ।। स आत्मा आत्माकारः यस्येति वा, विज्ञानं तदाकारम् इत्यभिधातव्यमित्यर्थः । प्रकारान्तरेति ।। प्रकारत्रयाद् अन्यस्य प्रकार-स्यासम्भवादित्यर्थः । एकैवेति ।। ज्ञानज्ञेययोः एकैव सत्ता नाम आकारे सतीति चेदित्यर्थः । अनुगतेति ।। सत्तारूपजातेः अनुगतत्वानङ्गीकारादित्यर्थः । अङ्गीकृत्य दूषणमाह- सत्तयेति ।। वेदान्तजनितविज्ञानं पटगतसत्तयाऽपि एकाकारत्वेन पटाकारमपि स्यादित्यर्थः । दूषणान्तरमाह- नापीति ।। किञ्चिदिति ।। सत्ताया एव किञ्चित्सादृश्यस्य पूर्ववदतिप्रसङ्गजनकत्वादित्यर्थः । तथा हि- पटगतसत्तयाऽपि किञ्चित् सदृशत्वाद् वेदान्तजनितविज्ञानं पटाकारमपि स्यादिति । अत इति ।। प्रकारत्रयस्य दुष्टत्वात् प्रकारान्तरासम्भवे सति परिशेषाद् आत्मनो विषयतया व्यावर्तक-त्वेनेतरज्ञानापेक्षया अस्य ज्ञानस्य भेदकत्वेन स आत्मा आकार इव यस्य तत् तदाकारमिति वक्तव्यमित्यर्थः । उपसंहरति- ततश्चेति ।। यदीति ।। यदि तद्विषयत्वमेव तदाकारत्वं तर्हि भावधर्मयोरेकत्वेन अतद्विषयत्वात् तदाकारं तेनेति अभावरूपधर्मयोरप्येकत्वेन व्याप्यव्यापकभावो न स्यादिति । एतदपि अनेन हि ज्ञानज्ञेययोरेकाकारतेति वाक्येन निरस्तम् । तथा हि । तत्र वाक्ये एकाकारतेति भावप्रधाननिर्देशेन एकाकारतायाः सामान्यधर्मत्वं सूचितम् । तथा च एकाकारत्वमेव तदाकारत्वम्, तस्यापि सामान्यधर्मत्वेन व्यापकत्वम् । तद्विषयत्वस्य विशेषधर्मत्वेन व्याप्यत्वम् अतो न दोष इत्यर्थः । इममेवार्थमुपपादयति- न हीति ।। परिशेषेति ।। परिशेषप्रमाणेन सिद्धं तद्विषयत्वे पर्यवसानं स आकार इव यस्य तत् तदाकारं तस्य भावस्तदाकारत्वमभिप्रेत्य तद्विषयत्वमेव हि तदाकारत्वमित्यभेदोक्तमित्यर्थः ।

### जनार्दनभट्टीया

तदाकार एवेति ।। तत्र विकल्पद्वयेऽपि आकारशब्दः किमवयवसंस्थानवाचकः उत धर्ममात्रपरः? इति विकल्पं हृदि निधाय आद्यस्य निरवयवाकाशज्ञाने असम्भवात्१, तमुपेक्ष्य द्वितीयेऽपि किमेकासाधारणधर्मत्वं एकाकारत्वम् उत एकसाधारणधर्मवत्वमिति द्विधा विकल्प्य तद्दूषणपरतया 'न हि' इति मूलं योजयति– सति हीति ।। एकाकारत्व इति ।। एकसाधारणधर्मवत्त्वे इत्यर्थः । अनुपलम्भादिति ।। ज्ञाननिष्ठज्ञानत्वादेः विषये विषयनिष्ठघटत्वादेः ज्ञाने च अनुपलम्भादिति भावः। साधारणधर्मवत्त्वमेकाकारत्वम् इति द्वितीयं शङ्कते – एकैवेति ।। अननुगतस्वरूपसत्तायाः भेदवादिभिः अपि अङ्गीकारात् 'अनुगता' इत्युक्तम् ।

निराकारताङ्गीकारात् ।। निर्धर्मकत्वाङ्गीकारादित्यर्थः । 'तदाकार एव' इति द्वितीयविकल्प२ निराकरणपरतया तदेव वाक्यं योजयति – एवमिति ।। सदृशाकारतेति ।। एकशब्दस्य सादृश्येऽपि प्रयोगादिति भावः । असाधारणसाधारणविकल्पौ अत्रापि आवर्तयति– अत्यन्तेति ।। असाधारण-धर्माभिव्यङ्ग्यसादृश्यस्येत्यर्थः । साक्षादिति ।। ज्ञानमाश्रित्येत्यर्थः ।

ननु तदाकारत्वतद्विषयत्वशब्दयोः साधारणासाधारणधर्मवाचित्वे तद्विषयत्वमेव तदाकारत्व-मित्यैक्याभिधायिमूलानुपपत्तिरित्यत आह – परिशेषेति ।।

न हि ज्ञानज्ञेययोरेकाऽकारता..

**ज्ञानकर्मत्वविषयत्वयोरविशेषसमर्थनम्**

***न हि ज्ञानज्ञेययोरेकाऽकारता***

**श्रीमज्जयतीर्थटीका**

नन्वात्मनो दृक्कर्मत्वाभावे वेदान्तवाक्यजनितविज्ञानस्याऽत्माकारत्वं नोपपद्यत इति प्रतिज्ञाय 'अतत्कर्मत्वादेव' इति हेत्वभिधानं 'तत्कर्मत्वमेव हि तदाकारत्वम्' इत्युपपादनं चोचितम् । 'अतद्विषयत्वादेव' इत्यादि तु केन सङ्गच्छते । मैवम् । शशविषाणशब्दात्तदाकारं ज्ञानमुपजायत इति तावत्साक्षिसिद्धम् । न तु तत्सकर्मकम् । तथा वेदान्तवाक्यजनितं विज्ञान-मनात्मकर्मकमप्यात्माकारं किं न स्यादित्येतदाशङ्कानिवृत्तये ज्ञानं प्रति कर्मत्वविषयत्वयोर्विशेषा-भावसूचनाय कर्मोपक्रमेण विषयव्यवहारस्य सार्थकत्वात् ।

तथा हि, शशविषाणशब्दादुपजायमानं ज्ञानं सविषयं निर्विषयं वा । निर्विषयत्वे ज्ञानमेव न स्यात् घटवत् । सविषयत्वे कथमकर्मकं स्यात् । विषयस्यैव कर्मत्वात् ।

अथ कथं शशविषाणस्य सकलसामर्थ्यविकलस्य कर्मत्वमिति चेत् विषयत्वमपि कथम् । न विषयत्वं नाम वस्तुसामर्थ्यम् । किं नाम करणसामर्थ्याद्यदुल्लेखि ज्ञानमुपजायते स विषय इत्युच्यत इति चेत्, अथ ज्ञानं प्रति कर्मत्वमपि किमधिकं पश्यसि । जनकत्वमिति चेन्न । ज्ञानं प्रत्यर्थस्य क्वापि जनकताऽसम्मतेः । अपरोक्षज्ञानेऽपि कर्मणो न ज्ञानोत्पत्तौ व्यापारः । केवलं करणसन्निकर्षनिष्पत्तावेव तत्सत्तोपयुज्यते । यत्र तु शाब्दादौ ज्ञाने विनाऽपि विषयसत्त्वेन करणसन्निकर्षोत्पत्तिस्तत्रासतोऽपि कर्मत्वे किमनुपपन्नम् ।

ननु कर्तुरन्यत्वे सति क्रियाजन्यफलाश्रयत्वं कर्मत्वम् । यथा गतिजन्यसंयोगाश्रयत्वं ग्रामस्य । न च शशविषाणादीनां ज्ञानजन्यफलाश्रयत्वमिति कथं कर्मतेति चेन्न । तत्रापि ज्ञानेन शाब्दव्यव-हारजननात् । साक्षात्तदाश्रितं फलं नास्तीति चेत् । एवं तर्हि ज्ञानकर्ममात्रे तदभावेनाव्यापकं कर्मलक्षणं स्यात् । ज्ञाततायाश्चान्यत्र निराकृतत्वात् ।

एतेन 'आत्मनि प्रकाशरूपे ज्ञानजन्यप्रकाशोदयासम्भवात् आत्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वं न स्याद् इत्याद्यतिप्रसङ्गो विपर्ययापर्यवसायी' इत्येतदपि निरस्तम् ।

किञ्च ज्ञानजन्यफलाश्रयत्वं चेज्ज्ञानकर्मत्वं तदा दृश्यत्वहेतुः प्रतिवादिनोऽसिद्धः स्यात् । ज्ञातताङ्गीकारिभिरपि नित्यानुमेयेषु तदनङ्गीकाराद् भागासिद्धः स्यादिति ।

**श्रीविजयीन्द्रभिक्षु**

उचितमिति ।। उपक्रान्तशब्देनैव व्यवहारस्य झटित्यर्थोपस्थापकत्वेन प्रतिपत्तिलाघवा-दिति भावः । अनात्मकर्मकमिति ।। आत्मकर्मकत्वरहितमपीत्यर्थः । ज्ञानं प्रति कर्मत्वविषयत्व-योरविशेषज्ञापनाय शशविषाणादिशब्दजन्यज्ञानस्य सकर्मकत्वं तावत्साधयति- तथा हीति ।। विषयस्यैवेति ।। ज्ञानविषयस्यैव ज्ञानकर्मत्वादिति भावः । शक्तिमत्कारकमिति भावेन शङ्कते- अथ कथमिति ।। विषयत्वमपीति ।। वस्तुसामर्थ्यविशेषरूपविषयत्वस्यापि निःस्वरूपे तस्मिन्नसम्भवादिति भावः । अथेति ।। ज्ञानसामर्थ्याद्यदुल्लेखि ज्ञानं जायते तदेव कर्म । अन्यस्य ज्ञानकर्मणो दुर्वचत्वादिति भावः । जनकत्वमिति ।। कारकातिरिक्तत्वे सति ज्ञानजनकत्वमित्यर्थः। ज्ञानजनकत्वमित्यत्र किं ज्ञानत्वाच्छिन्नज्ञानजनकत्वं विवक्षितम् अपरोक्षज्ञानजनकत्वं वा । नाऽद्य इत्याह- ज्ञानं प्रतीति ।। अर्यत इति व्युत्पत्त्या अर्थशब्दो ज्ञेयवस्तुविषयः । तस्य क्वापि कस्मिन्नपि ज्ञाने व्यभिचारेण जनकत्वायोगादिति भावः । न द्वितीय इत्याह- अपरोक्षज्ञानेऽपीति ।। विषयसत्त्वस्थलीयापरोक्षज्ञानेऽपीत्यर्थः । कर्मण इति ।। 'इदं साक्षात्करोमि' इति कर्मत्वेना-नुभवसिद्धस्येत्यर्थः । ज्ञानेति ।। विद्यमानविषयापरोक्षज्ञानेत्यर्थः । व्यापारः सामग्रीशरीर-प्रविष्टत्वरूपः । क्व तर्हि प्रमाणसिद्धतदन्वयव्यतिरेकोपयोग इत्यत आह- केवलमिति ।।

ननु स्वतन्त्रान्वयव्यतिरेकदर्शनात् कर्मणोऽपि हेतुत्वं दुर्वारम् । अन्यथा इन्द्रियस्यापि तन्न स्यात् । अविशेषात् । इत्यत आह- यत्र त्विति ।। सति करणसन्निकर्षे विषयसत्त्वं विनाऽपि ज्ञानव्यतिरेकादर्शनेन विषयस्य न हेतुत्वमित्यर्थः । तथा च ज्ञानादिक्रियां प्रति अर्थस्य कर्मत्वेनैव जनकत्वं वाच्यम् । कर्मत्वञ्च जनकत्वाभावेऽप्यनुमितिशाब्दधीविषयस्य दृष्टमिति क्वचिद्विषय-सत्त्वेऽपि व्यभिचारेण न तस्य जनकत्वमभ्युपगमार्हम् । यदि च विद्यमानविषयप्रत्यक्षत्वावच्छेदेन विषयस्य ज्ञानजनकत्वं तदा विद्यमानविषयकानुमितित्वाद्यवच्छेदेनैव सामान्यरूपतया लघुभूत-विद्यमानविषयकज्ञानत्वावच्छेदेन वा विषयस्य जनकतापत्तिरिति भावः । यद्वा करणसन्निकर्ष-निष्पादकत्वेन जनकत्वेऽपि करणवत्कर्मणोऽपि जनकत्वं किं न स्यादित्यत आह- यत्र त्विति ।। विषयं विनाऽपि करणसन्निकर्षनिष्पत्त्या ज्ञानोत्पत्तिस्तत्रैव व्यभिचारान्न विषयस्य करणतुल्य-योगक्षेमतेत्यर्थः ।

ननु विनाऽपि विषयसत्त्वं करणसन्निकर्षोत्पत्तिरिति कथमुच्यते । कथं वा शब्दादिरूपकरणस्थले सन्निकर्षापेक्षेति चेत् न हि करणसन्निकर्षो विषयसत्त्वव्याप्यः । सामान्यादेरतीतानागतविषय-प्रत्यासत्तिरूपत्वाभ्युपगमात् । न च शब्दादिकमसन्निकृष्टकरणम् । घटशब्दादिना पटादेरपि बोधप्रसङ्गात् । न च शक्तिव्याप्त्यादिकमेवातिप्रसङ्गभञ्जकमिति वाच्यम् । तस्यैव सन्निकर्ष-शब्दार्थत्वोपगमादिति ।

शशविषाणादीनां ज्ञानकर्मत्वं नास्तीति वक्तुं कर्मसामान्यलक्षणं शङ्कते- नन्विति ।। मामहं जानामीति कर्तुरपि कर्मत्वानुभवात् तत्राव्याप्तिरिति दूषणे सत्येव दूषणान्तरमाह- तत्रापीति ।। ननु तादात्म्यसम्बन्धेन क्रियाजन्यफलशालित्वं कर्मत्वम् । न चासता कस्यचित्तादात्म्यं सम्भ-वति । तस्याप्यसत्त्वापत्तेरित्याशयेन शङ्कते- साक्षादिति ।। एवं तर्हीति ।। शब्दाभिलपन-रूपज्ञानजन्यफलस्य विषयेण सहावस्थानाभावेन ज्ञानकर्ममात्रे उक्तलक्षणाभावेनाव्याप्तिः स्यादित्यर्थः ।

ननु ज्ञानजन्यफलं न व्यवहारः । किं तु प्राकट्यापरपर्यायज्ञाततैव । तस्या विषयेण साक्षात्सम्बन्ध एवास्तीति नाव्याप्तिः । न च ज्ञाततायां मानाभावः । 'ज्ञातो घटः' इत्याद्यनुभवस्य एतस्यैवेतज्ज्ञानविषयत्वं नान्यस्येति नियमान्यथानुपपत्तेश्च मानत्वादित्यत आह- ज्ञातताया-श्चेति ।। 'ज्ञातो घटः' इत्याद्यनुभवेन ज्ञाततासिद्धौ 'इष्टो घटः' इत्याद्यनुभवेनेष्टतादेरपि सिद्धिप्रसङ्गेन अतीतादौ ज्ञातताऽभावेऽपि तद्धानस्य वस्तुस्वभावादेव नियतविषयत्वस्योपपत्त्या चेत्यन्यत्र पद्धत्यादौ निराकृतत्वादित्यर्थः ।

यद्यपि भाट्टाभिमतज्ञातता परैरपि नाङ्गीक्रियते तथाऽपि तदङ्गीकारेऽपि दूषणमिदमिति ज्ञात-व्यम् । तथा च ज्ञानकर्मत्वं तद्विषयत्वान्नातिरिच्यते । यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते तत्त्वमेव तद्विषयत्वमिति सिद्धं शशविषाणादिशब्दजन्यज्ञानस्यापि सकर्मकत्वमिति भावः । एतेनेति ।। ज्ञानकर्मत्वस्य ज्ञानविषयत्वव्यतिरेकेण दुर्निरूपत्वेनेत्यर्थः । आत्मनीति ।। प्रकाशरूपत्वा-दात्मनस्तत्र ज्ञानजन्यत्वाभिमतज्ञाततापरनामकप्रकाशोदयासम्भवादित्यर्थः ।

अयमाशयः । न हि घटादौ ज्ञातता कुलधर्मतयाऽङ्गीक्रियते । किं तु ज्ञानस्य तदीयता-सिद्ध्यर्थमेव । प्रकाशरूपे चाऽत्मनि स्वप्रकाशत्वं स्वतःसिद्धमिति न तत्र ज्ञाततोदयाङ्गीकारो युक्त इति ।

आत्मन इति ।। आत्मनो यदि दृक्कर्मत्वं न स्यत्तदा वेदान्तजनितविज्ञानमात्मज्ञानं न स्यात् । अस्ति च तस्याऽत्मज्ञानत्वम् । तस्मादस्त्येवाऽत्मनो दृक्कर्मत्वमिति विपर्यये पर्यवसाना-सम्भवेनाऽभासोऽयं तर्क इत्यर्थः । प्रतिवादिन इति ।। भट्टान्यभेदवादिन इत्यर्थः । तदनङ्गीकारा-दिति ।। नित्यानुमेयेषु प्राकट्याननुभवादिति भावः ।

### श्रीवेदेशतीर्थ

उचितमिति ।। उपक्रान्तशब्देनैव व्यवहारस्य झटित्यर्थोपस्थापकत्वेन प्रतिपत्ति-लाघवादिति भावः । अनात्मकर्मकमपीति ।। आत्मकर्मकत्वरहितमपीत्यर्थः । ज्ञानं प्रति कर्मत्वविषयत्वयोर्विशेषाभावसूचनेऽपि कथमुक्तशङ्कानिवृत्तिरित्यत आह- तथा हीति ।। ज्ञानं प्रति कर्मत्वविषयत्वयोरविशेषज्ञापनाय शशविषाणादिशब्दजन्यज्ञानस्य सकर्मकत्वं साधयति- तथा हीति ।। इत्यप्याहुः । जनकत्वमिति ।। कर्तृकारकाद्यन्यत्वे सति ज्ञानजनकत्वमित्यर्थः । ज्ञान-जनकत्वमित्यत्र किं ज्ञानत्वावच्छिन्नजनकत्वं विवक्षितम् अपरोक्षज्ञानजनकत्वं वा । नाऽद्य इत्याह- ज्ञानं प्रतीति ।। क्वापि कस्मिन्नपि ज्ञाने । व्यभिचारेण जनकत्वासम्भवादिति भावः । न द्वितीय इत्याह- अपरोक्षज्ञानेऽपीति ।। यद्यप्यपरोक्षज्ञाने विषयस्य नियतपूर्ववृत्तित्वमस्त्येव तथाऽपि नानन्यथासिद्धिः । करणसन्निकर्षनिष्पत्तावेवान्यथासिद्धत्वादित्यर्थः ।

न च वर्तमानविषयकजन्यप्रत्यक्षत्वावच्छेदेनाव्यभिचारादनन्यथासिद्धेश्च कर्मणोऽपि हेतुत्वम् । अन्यथा कर्मसन्निकर्षनिष्पादकत्वेन करणस्याप्यन्यथासिद्धत्वेनाजनकत्वं स्यादिति वाच्यम् । वर्तमानविषयकानुमितित्वावच्छेदेनापि कर्मणो हेतुत्वापत्तेः । सामान्यरूपतया लघुभूतविद्यमान-विषयकज्ञानत्वावच्छेदेनापि जनकतापत्तेश्च । तत्र विषयस्य व्याप्त्यादिलक्षणसन्निकर्ष-निष्पादकत्वेनान्यथासिद्धत्वेऽत्रापि तथाऽस्तु । क्रियायाः करणजन्यत्वनियमेन व्यापारवतश्च करणत्वेन सन्निकर्षजनकस्यापि चक्षुरादेर्ज्ञानहेतुत्वं युक्तमिति न करणसमानयोगक्षेमताऽपि विषयस्य युक्तेति भावः ।

ननु चक्षुरादेः करणस्य करणत्वसिद्ध्यर्थं कर्मसन्निकर्षरूपव्यापारजननद्वारा क्रियाजनकत्ववत् कर्मणोऽपि कर्मत्वसिद्ध्यर्थं १करणसन्निकर्षरूपव्यापरजननद्वारा क्रियाजनकत्वमस्तु । अन्यथा करणत्ववत्कर्मत्वमपि न स्यादित्यत आह- यत्र त्विति ।। न हि करणत्वमिव कर्मत्वमपि व्यापारवत्त्वम् । अतीतादिविषयकशाब्दादिज्ञानकर्मण्यव्याप्तेरिति भावः । उपलक्षणमेतत् । गमनक्रियाकर्मणि ग्रामेऽप्यव्याप्तिर्द्रष्टव्या ।

केचित्तु ‘करणसन्निकर्षजनकत्वेऽपि करणवत्कर्मणोऽपि जनकत्वं किं न स्यादित्यत आह- यत्र त्विति ।। विषयं विनाऽपि यत्र करणसन्निकर्षनिष्पत्त्या ज्ञानोत्पत्तिस्तत्रैव व्यभिचारान्न विषयस्य करणतुल्ययोगक्षेमतेत्यर्थः । ननु विनाऽपि विषयसत्त्वं सन्निकर्षोत्पत्तिरिति कथमुच्यते । कथं वा शब्दादिरूपकरणस्थले सन्निकर्षापेक्षेति चेन्न । न हि सन्निकर्षो विषयसत्त्वव्याप्यः । सामान्यादे-रतीतादिविषयप्रत्यासत्तित्वाभ्युपगमात् । न वा शब्दादिकमसन्निकृष्टकरणम् । घटशब्दादिना पटादेरपि बोधप्रसङ्गात् । न च शक्तिव्याप्यत्वादिकमेवातिप्रसङ्गभञ्जकमिति वाच्यम् । तस्यैव सन्निकर्षशब्दार्थत्वोपगमात्’ इत्याहुः । नन्वेवं पद्धत्यादिविरोधः । तत्र ‘प्रमातृप्रमेयव्युदासार्थं साधनग्रहणम्’ इत्युक्त्या प्रमेयस्यापि ज्ञानजनकत्वाभ्युपगमादिति चेन्न । तस्य परारीत्याऽङ्गी-कारवादत्वात् ।

कर्तुरन्यत्वे सतीति ।। कर्तर्यतिव्याप्तिवारणायेति ज्ञातव्यम् । ननु संयोगादिना साक्षात्सम्बन्धेन क्रियाजन्यफलशालित्वं विवक्षितम् । न चासता सह व्यवहाररूपफलस्य संयोगादिराश्रयताप्रयोजकः सम्भवतीत्याशयेन शङ्कते- साक्षात्तदाश्रितमिति ।। एवं तर्हीति ।। व्यवहाररूपस्य ज्ञानजन्य-फलस्य विषयेण सह संयोगाद्यसम्भवेन ज्ञानकर्ममात्रेऽपि उक्तलक्षणाभावादव्याप्तिः स्यादित्यर्थः । एतेनेति ।। दृग्जन्यफलाश्रयत्वस्य कर्मलक्षणत्वासम्भवेनेत्यर्थः । आत्मनीति ।। प्रकाश-रूपत्वादात्मनस्तत्र ज्ञानजन्यत्वाभिमतज्ञाततापरनामकप्रकाशोदयासम्भवादित्यर्थः । आत्मन इति ।। आत्मनो यदि दृक्कर्मत्वं न स्यात्तदा वेदान्तवाक्यजनितविज्ञानस्याऽत्मज्ञानत्वं न स्यात् । अस्ति च तस्याऽत्मज्ञानत्वम् । तस्मादस्त्येवाऽत्मनो दृक्कर्मत्वमिति विपर्ययपर्यवसाना-सम्भवेनाऽभासोऽयं तर्क इत्यर्थः ।

## द्वैतद्युमणि

असम्मतेरिति ।। १विषयत्वेनेत्यादिः । तेन ‘चैत्र ईश्वरं वा स्वात्मानं वा जानाति’ इत्यादौ विषयस्य कारणत्वेऽपि न क्षतिः । तादृशकारणत्वमेव सार्वत्रिकत्वाद् वक्तव्यमिति भावः । तथा च यत् क्रियास्थले यादृशजनकत्वं तु प्रसिद्ध्यति अधिकरणादिकं च प्रसिद्ध्यति तत्र तावदन्य-तमत्वमेव तत्क्रियाकारकत्वम् । क्रियाजनकत्वं तु प्रायिकम् । अन्यथा ‘ईश्वरो घटं जानाति, अस्ति’ इत्यादिस्थले तदीयज्ञानसत्त्वयोर्नित्यत्वेन घटेश्वरयोः कर्मकर्तृकारकत्वानुपपत्तिरिति भावः । ननु विषयस्य प्रत्यक्षान्वयिव्यतिरेकित्वेन तत्कारणात्वावधृत्या कारणत्वग्रहः सामान्यत एव विषयत्वेन जन्यज्ञानत्वेन जायते । यद्विशेषयोरिति न्यायादित्यतः तमेवादौ वस्तुस्थितिमनुरुद्ध्य दूषयति- अपरोक्षज्ञानेऽपीति ।। ज्ञानोत्पत्तौ व्यापार इति ।। न ज्ञानोपधायककोटौ निवेश इत्यर्थः । सन्निकर्षनिवेशस्यावश्यकत्वेनास्यान्यथासिद्धत्वादिति भावः ।

ननु तर्हीन्द्रियाणामप्यन्यथासिद्ध्यापत्तिरुक्तरीत्या । यदि च स्वतन्त्रान्वयव्यतिरेकशालि-त्वेनावधृतकारणताकत्वात् तन्निर्वाहायैव सन्निकर्षकारणत्वस्य कल्पनेन न तस्यान्यथासिद्धिरुप-जीव्यविरोधादिति ब्रूते विषयस्यापि तथात्वमेवास्तु । वैषम्यस्योपपादयितुमाक्यत्वादिति चेन्न । ज्ञानत्वेन प्रत्यक्षजातीयानुमित्यादिस्थले विषयं विनाऽप्यतीतादिविषयकानुमित्याद्युत्पत्तिदर्शनात् कारणीभूतलिङ्गपरामर्शरूपव्यापारादिकं विना तदुत्पत्त्यदर्शनात् करणव्यापारादीनामवश्यक्लृप्तत्वेन तज्जातीयप्रत्यक्षेऽपि तथैव कार्यसम्भवे तत्सहभूतविषयस्यान्यथासिद्धताया एवोचितत्वात् । अन्यथा चाक्षुषप्रत्यक्षमात्रेऽनेकद्रव्यत्वस्य (द्रव्य)समवेतद्रव्यसमवेतत्वरूपस्य कारणत्वापत्तेः । गौरवात् तस्य काणत्वानङ्गीकारेऽत्रापि तथास्तु ।

## श्रीराघवेन्द्रतीर्थ

कर्मत्वविषयत्वयोः भेदं मत्वा शङ्कते- नन्वात्मन इति ।। परोक्तमनुवदति-शशविषाणेति ।। अविशेषमुपपादयति- तथा हीत्यादिना ।। अथ ज्ञानमित्यत्राथेति निपातो विषयत्वादित्यर्थे । चक्षुरादेरपि घटादेरिव सत्तोपयुज्यतामिति शङ्कानिरासाय धर्मिग्राहकमानसिद्धं जनकत्वमिति भावेन करणसन्निकर्षेत्युक्तम् । कर्तर्यनतिव्याप्तये कर्तुरन्यत्वे सतीति ।। तदभावेनेति ।। संयोगादिरूपस्य साक्षात् तदाश्रितफलस्याभावेनेत्यर्थः । ज्ञाततैव तादृशं फलं सार्वत्रिकमित्यत आह- ज्ञातताया इति ।। ‘न प्रमासाधनं प्रमाणम्’ इत्यादिना प्रमाणलक्षणादौ निराकृतत्वादित्यर्थः । एतेनेति ।। ज्ञातताया निरस्तत्वेनेत्यर्थः । विषयत्वमेव कर्मत्वमिति कथनेनेत्यर्थः । ज्ञानजन्यप्रकाशेति ।। ज्ञाततारूपप्रकाशोदयासम्भवादित्यर्थः । विपर्ययापर्यवसायीति । ‘यद्यात्मनो न दृक्कर्मत्वं तर्हि वेदान्तजन्यज्ञानस्याऽत्मज्ञानत्वं न स्यात् । अस्ति तत् । अतो दृक्कर्माऽत्मा’ इति विपर्यय-पर्यवसानस्य बाधान्न विपर्यये पर्यवसायीत्येतन्निरस्तम् । ज्ञाततापर्यायस्य प्रकाशस्य निरस्तत्वेन न तदाश्रयत्वं कर्मत्वम् । किं तु विषयत्वमेव कर्मत्वम् । तदात्मनोऽपि सम्भवतीत्युपपादनेन बाधाभावाद्विपर्ययपर्यवसानं युक्तमिति भावः । असिद्ध इति ।। दृग्जन्यज्ञाततारूपफलाश्रयत्वं दृश्यत्वमिति वाच्यत्वाज्ज्ञाततायाः प्रतिवादिनोऽसम्मतेरिति भावः । वस्तुसामर्थ्यं वस्तुनो ज्ञानजनकत्वरूपं यदुल्लेखियत्संबद्धतया व्यवह्रियमाणम् । ज्ञानजनकत्वं कर्मत्वमित्युक्ते प्रष्टव्यम् । ज्ञानत्वावच्छिन्नज्ञानजनकत्वं विवक्षितम् अपरोक्षज्ञान-जनकत्वं वा । नाऽद्यः । अतीतानागतज्ञाने विषयाभावेऽपि ज्ञानस्य जायमानत्वेन व्यभिचारादर्थस्य ज्ञानं प्रति जनकत्वासम्मतेः यदाकदाचित्सत्त्वस्य ज्ञानसमयेऽनुपयुक्तत्वात् । न द्वितीयः । यद्यप्यपरोक्षज्ञाने विषयस्य नियतपूर्ववर्तित्वमस्ति तथाऽपि नान्यथासिद्धिः । इन्द्रियरूपकरण-सन्निकर्षनिष्पत्तावेव तत्सत्तायाः१ उपयुक्तत्वेनान्यथासिद्धतया ज्ञानजनकत्वाभावात् । ननु इन्द्रिय-रूपकरणस्यापि विषयसन्निकर्षजनकत्वेनान्यथासिद्धत्वान्न ज्ञानजनकत्वमिति चेत् । न । या क्रिया सा सकरणिकेति नियमेन व्यापारवतश्च करणत्वेन सन्निकर्षजनकस्यापि चक्षुरादीन्द्रियस्य ज्ञानजनकत्वावश्यंभावात् । या क्रिया सा सकर्मिकेति नियमस्य शयनासनादिक्रियायां व्यभिचारेणाभावान्न कर्मणो ज्ञानजनकत्वम् । ननु चक्षुरादेःकरणस्यावान्तरव्यापारवत्त्वरूप-करणत्वसिद्ध्यर्थं कर्मसन्निकर्षरूपव्यापारजननद्वारा

ज्ञानरूपक्रियाजनकत्ववत् कर्मणोऽपि कर्मत्व-सिद्ध्यर्थं करणसन्निकर्षरूपव्यापारजननद्वारा ज्ञानरूपक्रियाजनकत्वं किं न स्यादिति चेन्न । यत्र अतीतादिविषयके शाब्दानुमित्यादिरूपे ज्ञाने विनाऽपि विषयसत्त्वेनार्थप्रतिपादनादिरूप-सन्निकर्षोत्पत्तिस्तत्रासतोऽपि कर्मत्वे काऽनुपपत्तिः । तथा च करणत्वमिव कर्मत्वमपि न व्यापारवत्त्वं अतीतादिविषयकशाब्दादिज्ञानकर्मण्यव्याप्तेः । तथा च ज्ञानमात्रे २अर्थस्य जनकत्वाभावेन शशविषाणविषयकशाब्दज्ञाने शशविषाणस्य सत्त्वाभावेऽपि विषयत्वाङ्गीकारे न कोऽपि दोषः । ननु शाब्दादिरूपकरणस्थले कथं सन्निकर्षापेक्षा । तथात्वे च विषयसत्त्वं विना कथं सन्निकर्षोत्पत्ति-रिति चेत् । उच्यते । न हि सन्निकर्षो विषयसत्त्वव्याप्तः सामान्यादेरतीतादिविषयप्रत्यासत्तित्वस्य परैरङ्गीकारात् । न हि शब्दादिकमसन्निकृष्टकरणं घटशब्दादिना पटादेरपि बोधजननप्रङ्गात् । न च शक्तिव्याप्त्यादिकमेव तत्रातिप्रसङ्गभञ्जकमिति वाच्यम् । तस्यैव सन्निकर्षशब्दार्थत्वादि-त्यालोचनीयम् । तदेतत्सर्वमभिप्रेत्याऽह- ज्ञानं प्रत्यर्थस्येत्यादिना ।। ननु ज्ञानजन्यज्ञाततैव साक्षात्तदाश्रितं फलमस्तीति चेत्तत्राऽह - ज्ञातताया इति ।। एतेनेति ।। यद्यात्मनो दृक्कर्मत्वं न स्यात्तदा वेदान्तजनितज्ञानस्य तज्ज्ञानत्वं न स्यात् । वर्तते च तज्ज्ञानत्वं तस्मादात्मनो दृक्कर्मत्वमस्तीति भवद्भिर्विपर्ययपर्यवसानं कर्तुं न शक्यते । दृग्जन्यफलाश्रयत्वरूपदृक्कर्मत्व-स्याऽत्मन्यसम्भवात् । १आत्मनि प्रकाशरूपे ज्ञाततारूपप्रकाशाश्रयत्वायोगादिति यत्परेणोक्तं तदप्येतेन निरस्तम् । ज्ञातताया अन्यत्र निराकृतत्वेन दृग्जन्यज्ञाततारूपफलाश्रयत्वस्य कर्मलक्षणत्वाभावादित्यर्थः । तत्कर्मज्ञानप्रतिबन्धकस्यैव तदज्ञानत्वादित्यर्थ इति भावः ।

### गुरुराजीया

उचितमिति ।। उपक्रान्तशब्देनैव व्यवहारस्य झटित्यर्थोपस्थापकत्वेन प्रतिपत्ति-लाघवादिति भावः । अनात्मकर्मकमपीति ।। आत्मकर्मकत्वरहितमपीत्यर्थः । ननु शशविषाण-ज्ञानस्य निर्विषयत्वेऽपि ज्ञानत्वे बाधकाभावादप्रयोजकतेत्यतः तथा सति निर्विषयस्य घटस्यापि ज्ञानत्वप्रसङ्ग इति विपक्षे बाधकस्य सत्त्वान्न तदित्याशयेनाऽह- घटवदिति ।। विषयत्वं नामेति ।।

अयमर्थः । न विषयत्वं घटत्वादिवद् विषयहेतुकृतम् । नापि पाकजरूपादिवद् २बुद्धि-भिन्नाऽगन्तुकस्वहेतुकृतम् । किन्तु बुद्धिहेतुकृतमेवेति । तर्हि कर्मत्वमप्यनिवार्यमेवेत्याह- कर्मत्वमपीति ।। तस्यापि बौद्धत्वेन वस्तुसामर्थ्यकृतत्वाभावादित्यर्थः । अत एवोक्तमन्यथा-ख्यातिवादीयसुधायां 'बौद्धमेवाभावाश्रयत्वम् । न वस्तुकृतम् । अतो न विरोधः' इत्यादिना ।

विषयत्वातिरिक्तं कर्मत्वं शङ्कते- जनकत्वमिति चेदिति ।। तत्किं ज्ञानत्वावच्छेदेनाभिमतं जन्यज्ञानत्वावच्छेदेन वा लौकिकापरोक्षज्ञानत्वावच्छेदेन वा । न प्रथमद्वितीयावित्याह- ज्ञानं प्रत्यर्थस्य जनकताऽसम्प्रतिपत्तेरिति ।। ज्ञानत्वावच्छेदेन विषयस्य जनकत्वे ऐश्वरज्ञानस्य नित्यत्वेनार्थजन्यत्वाभावादर्थविषयत्वाभावप्रसङ्गात् । प्रत्यभिज्ञानस्य च तत्तांशजन्यत्वाभावेन तद्विषयकत्वाभावप्रसङ्गादिति भावः । तदुक्तं सुधायाम् 'तथा सतीश्वरज्ञानस्य नित्यस्यार्थो विषयो न स्यात् । प्रत्यभिज्ञानस्य च तदंशो न विषयो भवेत्' इति । तृतीयमनूद्य दूषयति- अपरोक्षज्ञानेऽपीति ।। लौकिकापरोक्षज्ञानेऽपीत्यर्थः । तत्र विषयस्य नियतपूर्ववृत्तिकत्वेऽपि करणसन्निकर्षनिष्पादकत्वेनानन्यथासिद्धत्वविशिष्टनियतपूर्ववृत्तित्वाभावान्न कारणत्वमिति भावः ।

न चैवं चक्षुषोऽपि करणसन्निकर्षनिष्पत्तावेवोपक्षीणत्वेनान्यथासिद्धत्वेन विशिष्टकारणलक्षणा-भावादकारणत्वप्रसङ्ग इति वाच्यम् । 'रूपाद्युपलब्धिः सकरणिका क्रियात्वाच्छिदिक्रियावत्' इति चक्षुरादेः करणत्वे सिद्धेऽवान्तरव्यापारवतः कारणस्यैव करणत्वात् तन्निर्वाहार्थं कल्प्यमान-सन्निकर्षस्य 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न्यायेन स्वोपजीव्यचक्षुः-करणत्वाविघातकत्वात् । न चैवं 'रूपाद्युपलब्धिः सकर्मिका क्रियात्वाच्छिदिक्रियावत्' इति कर्मणः १कारणत्वमुपजीव्य तन्निर्वाहार्थं कल्पितस्यार्थसन्निकर्षस्योक्तन्यायेनैव स्वोपजीव्यार्थकारणत्वा-विघातकत्वानुपपत्त्या नार्थस्याप्यन्यथासिद्धिः स्यादिति वाच्यम् । अव्यभिचारात् क्रियात्वेन करण-जन्यत्वानुमानसम्भवेऽप्यकर्मकक्रियायां व्यभिचारेण 'या क्रिया सा कर्मजन्या' इति व्याप्त्यसिद्ध्या क्रियात्वेन सकर्मकत्वस्यानुमातुमशक्यत्वेनोक्तन्यायाप्रवृत्त्या वैषम्येणान्यथासिद्धत्वावश्यम्भावा-दिति भावः ।

नन्वेवं चक्षुरादेः करणस्य करणत्वसिद्ध्यर्थं कर्मसन्निकर्षरूपव्यापारजननद्वारा क्रियाजनकत्ववत् कर्मणोऽन्यथासिद्धत्वेनाजनकत्वेऽपि करणसन्निकर्षनिष्पत्तावुपयोगित्वेन तत्सत्त्वावश्यम्भावात् कथमसतः शशविषाणादेर्ज्ञानकर्मत्वं स्यादित्यत आह- यत्र त्विति ।। मीमांसकाभिमतं कर्मलक्षणमाशङ्कते- कर्तुरन्यत्वे सतीति ।। क्रियाजन्यफलशालित्वेनैव कर्मत्वे देवदत्त-समवेतगतिक्रियाजन्यफलसंयोगशालिग्रामस्येव संयोगशालिनो देवदत्तस्यापि कर्मत्वं स्यात् । ततश्च 'देवदत्तं ग्रामं गच्छति' इति द्वितीयापत्तिः । अतः सत्यन्तोपादानम् ।

नन्वत्र अन्यसमवेतत्वं क्रियाविशेषणं फलविशेषणं वाऽभिमतम् । आद्येऽप्यन्यत्वं क्रिया-श्रयापेक्षया विवक्षितं फलाश्रयापेक्षया वा । नाऽद्यः । क्रियाश्रयादन्यत्र क्रियाया असम्भवात् । न द्वितीयः । 'ग्रामं गच्छति' इत्यादौ गमनक्रियायाः संयोगरूपफलाश्रयाद्देवदत्तशरीरादन्यत्रा-समवेतत्वेन ग्रामादेरकर्मत्वप्रसङ्गात् । न द्वितीयः । उक्तविकल्पक्रमेणातिव्याप्त्यसम्भवप्रसङ्गात् । गमनक्रियाश्रयदेवदत्तान्यग्रामनिष्ठसंयोगरूपफलभागिनि देवदत्त एवातिव्याप्तेः । फलाश्रयादन्यत्र फलासम्भवाच्च । अथ कर्मापेक्षयैवान्यत्त्वं विवक्ष्यते तदा आत्माऽश्रयप्रसङ्गः । कर्तर्यतिव्याप्तेश्च ।

एतेन 'कर्तुरेवान्यपदार्थत्वेन कर्तृसमवेतक्रियाफलशालित्वस्यैव लक्षणार्थत्वान्नाऽत्माश्रयप्रसङ्गः' इति निरस्तम् । तावताऽपि कर्तर्यतिव्याप्तेरपरिहारात् । तत्कथमिदं कर्मलक्षणमिति चेन्न । तत्क्रियानधिकरणत्वे सति तत्क्रियाफलशालित्वस्यैव समुदायार्थत्वेन विवक्षितत्वात् ।

ननु संयोगादिना क्रियाजन्यफलाश्रयत्वस्य लक्षणत्वेन विवक्षितत्वाद् असतश्च संयोगादिना१ क्रियाजन्यव्यवहारानाश्रयत्वान्न शशविषाणादेः कर्मत्वमित्याशङ्कते- साक्षादिति ।। तथा सति साक्षात्सम्बन्धेन गत्यादिरूपक्रियाजन्यसंयोगरूपफलाश्रयत्वस्य समवायेन संयोगवति ग्रामे सत्त्वेऽपि ज्ञानकर्ममात्रे घटादौ संयोगादिना ज्ञानरूपक्रियाजन्यव्यवहारानाश्रयतयाऽभावाज्ज्ञान-कर्ममात्रे लक्षणाभावप्राप्त्याऽव्याप्तत्वादलक्षणत्वं स्यादित्यत आह- एवं तर्हीति ।।

ननु ज्ञानकर्ममात्रे साक्षात्सम्बन्धेन ज्ञानजन्यव्यवहारानाश्रयत्वेऽपि ज्ञानजन्यज्ञाततारूप-फलाश्रयत्वस्य सत्त्वान्न २ज्ञानकर्मस्वव्याप्तिरित्यतो भवेदेवं यदि ज्ञाततैव स्यात् । न च साऽस्ति । साधकाभावेन बाधकसद्भावेन च तस्याज्ज्ञानव्यतिरिक्तज्ञाततायां प्रमाणाभावात् ।

'न च प्रमाणतोऽन्या स्यात् प्रमितिर्नाम कुत्रचित् ।।

मानाभावाद् गौरवाच्च कल्पनायाः किमेतया ।।'३

इत्यादिना प्रमाणलक्षणानुव्याख्यानयोः निरस्तत्वेन न ज्ञानजन्यज्ञाततारूपफलाश्रयत्वेन ४कर्म-लक्षणसमर्थनमित्याशयेनाऽह- ज्ञाततायास्त्विति ।। एतेनेति ।। दृग्जन्यफलाश्रयत्वस्य कर्मलक्षणत्वनिराकरणेनेत्यर्थः । आत्मनीति ।। प्रकाशरूपत्वादात्मनोऽनाधेयातिशयत्वेन तत्र ज्ञानजन्यप्रकाशोदयासम्भवादित्यर्थः । अयमाशयः । यथा घटादौ तदाकारवृत्त्या स्फुरणरूपोऽ-तिशय आधीयते नैवमात्मनि । तस्यैव स्फुरणरूपत्वादिति । आत्मन इति ।। 'आत्मनो यदि दृक्कर्मत्वं न स्यात् तदा वेदान्तजनितं विज्ञानमात्मज्ञानं न स्यात् । भवति च तत् तज्ज्ञानम् । तस्माद् अस्त्येवाऽत्मनो दृक्कर्मत्वम्' इति विपर्यये पर्यवसानासम्भवेनाऽभासोऽयं प्रसङ्ग इति निरस्तमित्यर्थः । दृग्जन्यफलाश्रयत्वस्य कर्मलक्षणत्वनिराकरणादिति भावः ।

ननु परेणापि परोक्षवृत्तौ न तदाधेयस्फुरणमङ्गीकृतम् । परोक्षवृत्तेरेव तत्र ज्ञानत्वाभ्युपगमात् । अन्यथा स्फुरणस्यापरोक्षैकरसत्वेनाभिव्यक्तापरोक्षैकरसस्फुरणसम्बन्धेन परोक्षवृत्तिविषयस्या-प्यतीतादेर्नित्यातीन्द्रियस्य धर्मादेश्चाऽपरोक्ष्यप्रसङ्गात् । एवं च परोक्षवृत्तेरिवापरोक्षवृत्तेरपि ज्ञानत्वोपपत्तौ तदाधेयस्फुरणमप्रामाणिकमिति प्रतिवादिनो भागासिद्धिः स्यादित्याशयेनाऽह- किञ्चेति ।।

### गोविन्दीया

कर्मत्वविषयत्वयोर्भेदाभिप्रायेण शङ्कते - नन्विति ।। तदुभयोरैक्याभिप्रायेणोत्तर-माह- एवमिति ।। निर्विषयत्वे इति ।। सविषयमेव ज्ञानमित्युच्यते, निर्विषयत्वे ज्ञानमेव न स्यात् घटवत् । तथा हि । विषयशून्यत्वेन यथा घटः ज्ञानं न भवति तथा इदमपि घटस्यैव विषयत्वादि-त्यर्थः । अथेति ।। विषयत्वात्किमप्यधिकं पश्यसि विषयत्ववत् कर्मत्वमपि न वस्तुसामर्थ्यमि-त्यर्थः । अपरोक्षज्ञानेऽपीति ।। अपरोक्षज्ञानं प्रत्यक्षस्य ज्ञानजनकताभावेऽपि अपरोक्षज्ञानं प्रति जनकताऽस्तीत्याशङ्क्य अपरोक्षज्ञानेऽपि कर्मभूतस्यार्थस्य ज्ञानोत्पत्तौ न व्यापारः जनकताऽस्ती-त्यर्थः । तत्सत्ता ज्ञानसत्तेत्यर्थः । न विषयेति ।। फलस्यैवाभावाच्छशविषाणादीनां ज्ञानजन्य-फलाश्रयत्वं नास्तीति कथं कर्मतेति चेदित्यर्थः । तत्रापीति ।। ज्ञानेन शब्दव्यवहारजननात् तत्रापि शशविषाणादावपि शब्दव्यवहाररूपफलाश्रयत्वमस्तीत्यर्थः । साक्षादिति ।। व्यवहारः फलं तत्र शब्दे वर्तते शब्दप्रतिपाद्यत्वादर्थे परम्परया वर्तते । अतः साक्षाच्छशविषाणाद्याश्रितं फलं नास्तीति तस्य कथं कर्मतेति चेदित्यर्थः । एवमिति ।। यद्येवं साक्षात्फलाश्रितत्वाभावात् कर्मता न स्यात्, तर्हि ज्ञानकर्मसु सर्वेषु ज्ञानजन्यसाक्षात्फलाश्रयत्वाभावात् कर्मलक्षणमव्यापकं स्यात् । ज्ञानव्यतिरिक्त-सकलक्रियां प्रति यानि कर्माणि तत्र लक्षणस्य सत्त्वाद्, ज्ञानक्रियां प्रति कर्माणि यानि तत्र च लक्षणस्यासत्त्वाद् अव्यापकमित्यर्थः । ज्ञातताया इति ।। ज्ञाततामादाय ज्ञानकर्मणामपि क्रिया-जन्यसाक्षात्फलाश्रयत्वान्नाव्यापकं कर्मलक्षणमिति न च वाच्यम् । ज्ञाततायाश्चान्यत्र प्रमाण-लक्षणविष्णुतत्त्वनिर्णयादौ निराकृतत्वाद् अव्यापकमेव लक्षणमित्यर्थः । एतेनेति ।। कर्मलक्षण-निराकरणेन एतच्चोद्यमपि निराकृतमित्यर्थः । किञ्चेति ।। मन्मते दृक्कर्मत्वमेव दृश्यत्वम्, तस्य च जगत्यभावादित्यर्थः । ज्ञाततेति ।। ऐन्द्रियकेषु पदार्थेषु ज्ञाततामादाय दृश्यत्वहेतोः सत्त्वेऽपि नित्यानुमेयेषु काल-धर्म-ईश्वरादिषु ज्ञातताया अभावात् हेतोरसत्त्वात् भागासिद्धिः स्यादित्यर्थः ।

### नारोपन्तीया

ज्ञानं प्रति कर्मत्वविषयत्वयोरिति । तथा च गत्यादिकर्मत्वस्याऽश्रयसत्तासापेक्षत्वेऽपि ज्ञानकर्मत्वस्य तदनपेक्षत्वादत्यन्तासतोऽपि शशशृङ्गादेरभावप्रतियोगित्ववत् ज्ञानविषयत्वरूप-तत्कर्मत्वमपेक्षितमेवेति भावः । करणसामर्थ्यादिति । प्रत्यक्षादिरूपकरणनिष्ठज्ञानजनन-

शक्तेरित्यर्थः । यदुल्लेखीति । यद्व्यवहारजनकमित्यर्थः । कर्तुरन्यत्वे सतीति । गतिजन्यसंयोग-रूपफलं ग्रामदेवदत्तसंयोगो द्विनिष्ठ इति पक्षे, देवदत्तप्रतियोगिको ग्रामे, तत्प्रतियोगिकश्च देवदत्त इति मते च, देवदत्ते कर्तरि अतिव्याप्तिवारणाय सत्यन्तम् ।

### जनार्दनभट्टीया

केन सङ्गच्छत इति ।। केन निमित्तेन इत्यर्थः । जनकत्वमिति ।। 'ज्ञान' इति शेषः । क्वापीति ।। परोक्षे प्रत्यक्षेऽपीत्यर्थः । एतदेव विवृणोति – अपरोक्षेति ।। कथं तर्हि अन्यापरोक्षज्ञानस्य विषयान्वयव्यतिरेकानुविधानमित्यत आह – केवलमिति ।। यत्र त्विति ।। करणसन्निकर्षोत्पत्ति-रिति ।। करणस्य शब्दस्य यः सन्निकर्षः शक्तिग्रहणरूपः तदुत्पत्तिरित्यर्थः । 'ग्रामं गच्छति देवदत्तः' इत्यत्र गमनक्रियाजन्यग्रामसंयोगलक्षणफलशालिनि देवदत्ते कर्तरि अतिव्याप्तिवारणाय 'कर्तुरन्यत्वे सति' इत्युक्तम् । जन्यपदादाने क्रियालक्षणफलशालित्वमित्यर्थपर्यवसानापत्त्या तदनाश्रये ग्रामादावव्याप्तिः । तन्निवृत्तये तदुपादानम् । फलपदन्तु स्वरूपकथनार्थम् । 'साक्षात्' इत्यस्यैव विवरणम् –तदाश्रितमिति ।।

ननु ज्ञाततैव ज्ञानजन्यं१ फलमित्यत आह – ज्ञातताया इति ।। एतेनेति ।। आत्मनोऽपि ज्ञान-जन्यशब्दव्यवहारलक्षणफलाश्रयत्वरूपकर्मत्वस्य सत्वेनेत्यर्थः । किञ्चेति ।। ज्ञानजन्यफलाश्रयत्व-मिति ।। ज्ञानजन्यज्ञाततालक्षणफलाश्रयत्वमित्यर्थः । प्रतिवादिन इति ।। तत्ववादिन इत्यर्थः । असिद्ध इति ।। तैः ज्ञाततायाः कुत्राप्यनङ्गीकारादिति भावः । मायावादिरीत्याऽपि असिद्धिमाह – ज्ञाततेति ।। नित्यानुमेयेष्विति ।। नित्यानुमेयान्तःकरणवृत्तिनिर्गमनाभावेन प्रत्यक्षस्थल एव ज्ञातताङ्गी-कारादिति भावः ।

आत्माज्ञाननिवर्तकतया आत्मसम्बन्धितया वा इति व्यधिकरणे तृतीया इति आत्माज्ञान-निवर्तकत्वेन आत्मसम्बन्धितयेति । आत्माज्ञाननिवर्तकत्वेन इत्थम्भावे तृतीया । आत्माज्ञान-निवर्तकरूपात्मसम्बन्धेनेत्यर्थः । आत्मनो दृक्कर्मत्वाभावे ज्ञानस्येत्यत्र अज्ञानस्येति पदविभागः दुर्घटमित्युक्तमिति । सति पुष्कलकारणे तत्कर्मज्ञानप्रतिबन्धकत्वातिरिक्तसम्बन्धानिरूपणादिति प्रागुक्तमिति भावः ।

### न हि ज्ञानज्ञेययोरेकाऽकारता..

**विषयाऽश्रिताज्ञाननिवर्तकतया आत्माकर्मकस्यापि ज्ञानस्याऽत्मज्ञानत्वमिति शङ्का**

***न हि ज्ञानज्ञेययोरेकाऽकारता***

### श्रीमज्जयतीर्थटीका

अथ मतं मा भूद्वेदान्तवाक्यजनितं विज्ञानमात्माऽकारतया आत्मज्ञानम् । तथाऽ-प्यात्माज्ञाननिवर्तकतया आत्मसम्बन्धितया तज्ज्ञानं भविष्यति । किमात्मनो दृक्कर्मत्वेन ।

न चाऽत्मनो दृक्कर्मत्वाभावे अज्ञानस्याऽत्माज्ञानत्वमपि दुर्घटमित्युक्तमिति वाच्यम् । आत्माऽश्रिताज्ञानमात्माज्ञानमित्यङ्गीकारात् ।

न च वक्तव्यं ज्ञातव्येनाऽत्मना अज्ञानं व्यावर्तनीयम् । न चाज्ञानं तमाश्रयते । किन्तु ज्ञातार-मेव । वस्तुतो भेदाभावेऽपि ज्ञातृज्ञेयभावसिद्धये यादृशतादृशस्यापि भेदस्याङ्गीकृतत्वात्१ । अतः कथम् आत्माज्ञानं निवर्तयदपि ज्ञानमात्मज्ञानं स्यादिति । अज्ञानस्य ज्ञातव्यपरब्रह्माऽ-श्रयत्वोरीकरणादिति ।

### श्रीविजयीन्द्रभिक्षु

आत्माकारतयेति ।। आत्मकर्मकतयेत्यर्थः । तथाऽपीति ।। यद्यप्यात्मकर्मकत्वं विना आत्माज्ञाननिवर्तकत्वमेवासम्भवीत्युक्तं तथाऽपि विस्मृतदूषणस्य शङ्केयमिति ध्येयम् । निवर्त-कत्वेन निवर्तकत्वरूपसम्बन्धेन । उक्तमिति ।। आत्मकर्मकज्ञानप्रतिबन्धकत्वादन्यस्य सम्बन्धस्य दुर्निरूपत्वादित्युक्तमित्यर्थः । नन्वाश्रयाश्रयिभावसम्बन्धेनाऽत्मव्यावर्तिताज्ञानमात्माऽज्ञानमिति वक्तव्यम् । न चाज्ञानं परमात्माऽश्रितम् । मानाभावात् । प्रत्युत 'अहमज्ञः' इति ज्ञात्राश्रितत्वेनैव तदनुभवात् । तथा च वेदान्तवाक्यजनितविज्ञानस्य परमात्माज्ञाननिवर्तकत्वेनापि तज्ज्ञानत्वं कथमुपपद्यत इत्याशङ्क्य निराचष्टे- न च वक्तव्यमिति ।। एतच्च इतीत्यनेन सम्बद्ध्यते । अज्ञानस्येति ।। 'तम आसीत्' 'तमसा गू•मग्रे' 'मायिनं तु महेश्वरम्' इत्यादिश्रुतेः । 'न जानामि' इति ज्ञात्राश्रितत्वेनानुभवस्याभेदमादायोपपन्नत्वाच्चेति भावः ।

### श्रीवेदेशतीर्थ

तथाऽपीति ।। यद्यप्यात्मकर्मत्वं विना आत्माज्ञाननिवर्तकत्वमेव न सम्भवतीत्युक्तम् । तथाऽपि विस्मृतदूषणस्य शङ्केयमिति ध्येयम् । निवर्तकतयेति ।। निवर्तकत्वरूपसम्बन्धेनेत्यर्थः । उक्तमिति ।। 'सति पुष्कलकारणे तत्कर्मकज्ञानप्रतिबन्धकं हि तदज्ञानम्' इत्यनेनाऽत्म-कर्मकज्ञानप्रतिबन्धकत्वादन्यस्य सम्बन्धस्य दुर्निरूपत्वादित्युक्तमित्यर्थः । नन्वाश्रयाऽश्रयिभाव-सम्बन्धेनाऽत्मव्यावर्तितमज्ञानमात्माज्ञानमिति वक्तव्यम् । न चाज्ञानं परमात्माऽश्रितम् । माना-भावात् । प्रत्युत 'अहमज्ञः' इति ज्ञात्राश्रितत्वेनैव तदनुभवात् । तथा चोक्तानुपपत्तिरित्या-शङ्क्याऽह- न च वक्तव्यमिति ।। एतच्च स्यादितीत्यनेन सम्बध्यते । ननु ज्ञात्राश्रितत्वेऽप्य-ज्ञानस्य ज्ञेयाश्रितत्वं सिद्ध्यति । तयोरभेदादित्यत आह- वस्तुत इति ।। अज्ञानस्येति ।।

'आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।

पूर्वसिद्धतमसो हि पश्चिमो नाऽश्रयो भवति नापि गोचरः ।।'

इति तदुक्तेरिति भावः ।

### श्रीराघवेन्द्रतीर्थ

आत्मज्ञानप्रतिबन्धकत्वेनाऽत्माज्ञानत्वाभावेऽपि आत्माऽश्रितत्वेनाऽत्माज्ञानत्वं स्यादित्याह- आत्माऽश्रितेति ।। आत्माऽश्रिताज्ञाननिवर्तकत्वेन ज्ञानस्याऽत्मज्ञानत्वमयुक्त-मित्याशङ्कते- न च वक्तव्यमिति ।। व्यावर्तनीयमिति ।। इदमात्माज्ञानं न त्वनात्माज्ञानमिति व्यावृत्तिमत्त्वेन बोधनीयमित्यर्थः । अस्य वाक्यस्य कथमात्मज्ञानं स्यादितीत्यन्त्यवाक्येनान्वयः । किं चाज्ञानस्याऽत्मानाश्रितत्वेनाऽत्मीयत्वमपि नास्ति येन तन्निवर्तकतया आत्मज्ञानत्वं स्यादि-त्याह- न चेति ।। किञ्चेति चार्थः । ननु नास्ति ज्ञात्रादिभेद इत्यत आह- वस्तुत इति ।। अत इति ज्ञातृनिष्ठत्वेनाज्ञानस्य ज्ञेयाऽत्मानाश्रितत्वेनाऽत्माज्ञानत्वाभावात् ज्ञातव्यात्मनैव आत्मज्ञानत्वस्य वाच्यत्वादित्यर्थः । इति न वक्तव्यमित्यन्वयः । अत्र हेतुमाह- ज्ञातव्येति ।।

सिद्धान्ती शङ्कते- न चात्मन इति ।। आत्माकारतया आत्मविषयकत्वेन । पूर्वपक्षी उत्तरमाह- आत्माश्रितमिति ।। परमात्माश्रितमित्यर्थः । पुनः सिद्धान्ती शङ्कते- न च वक्तव्य-मिति ।। ज्ञातव्येनेति ।। घटाद्यज्ञानप्रसक्तिवारणाय ज्ञातव्येनात्मनाऽज्ञानं व्यावर्तनीयम् । ज्ञानविषयो य आत्मा१ तेन आश्रयाश्रयिभावसम्बन्धेन व्यावर्तनीयम् । वेदान्तजन्यज्ञानं यद्विषयकं तदाश्रितमज्ञानमिति वक्तव्यमिति यावत् । ओमिति चेत् । 'अहमज्ञः' इति ज्ञातृजीवाश्रयत्व-स्यैवानुभवादित्यर्थः । ननु जीवाश्रितत्वेऽप्यज्ञानस्य परमात्माश्रयत्वं प्राप्तमेव वस्तुतो भेदा-भावादित्यत आह- वस्तुत इति ।। यादृशेति ।। व्यावहारिकेत्यर्थः । आत्माज्ञाननिवर्तकत्वेनाऽ-त्मसम्बन्धितया वेदान्तजनितं विज्ञानं तज्ज्ञानम् भविष्यतीत्युक्तमाक्षिपति- अतः कथमिति ।। न केवलं आत्माकारसमर्पकं ज्ञानमात्मज्ञानं उक्तरीत्या न भवति । किन्तु आत्माज्ञानं निवर्तयदपि ज्ञानं वेदान्तजनितं विज्ञानं आत्मज्ञानं कथं स्यात् । आत्माश्रितमज्ञानं ह्यात्माज्ञानम् । न चेदं युक्तम् । 'अहमज्ञः' इति अज्ञानस्य जीवाश्रितत्वेनानुभवेन ज्ञेयब्रह्माश्रितत्वाभावादित्यर्थः । इति न च वक्तव्यमिति सम्बन्धः । कुतो न वक्तव्यमित्यतो ज्ञेयभूतपरमात्माश्रितत्वमेव मयाऽङ्गीक्रियते अतः आत्माश्रिताज्ञाननिवर्तकत्वेनात्मसम्बन्धितया वेदान्तजनितविज्ञानस्याऽत्मज्ञानत्वं युक्त-मित्याह पूर्वपक्षी- अज्ञानस्येति ।। अत एवोत्तरत्रोपसंहारे वक्ष्यति तदेवं न ज्ञातव्यं परब्रह्माश्रयं युक्तमिति नात्माश्रयाज्ञाननिवर्तकत्वेन वेदान्तवाक्यजनितविज्ञानस्याऽत्मज्ञानत्वसिद्धिरिति ।

### गुरुराजीया

आत्माज्ञाननिवर्तकतयेति ।। १आत्माज्ञाननिवर्तकतालक्षणयाऽऽत्मसम्बन्धितयेति सामानाधिकरण्यम् । दुर्घटमिति ।। आत्मकर्मकज्ञानप्रतिबन्धकस्यैवाऽत्माज्ञानत्वादिति भावः । भवेदेतदेवम्, यदि तत्कर्मकज्ञानप्रतिबन्धकमेवाज्ञानं स्यात्२ । न चैतदस्तीत्याह- आत्माश्रितमिति ।। ननु आश्रयाश्रयिभावसम्बन्धेनाऽत्मव्यावर्तितमज्ञानमात्माज्ञानमिति वक्तव्यम् । न चाज्ञानं ज्ञातव्यपरमात्माश्रितम् । मानाभावात् । किन्तु ज्ञात्राश्रितमेव । 'अहमज्ञः' 'घटमहं न जानामि' इत्याद्यनुभवात् । तथा चोक्तानुपपत्तिरेवेति शङ्कते- न च वक्तव्यमिति ।। न च ज्ञातृज्ञातव्यात्म-नोरभेदाज्ज्ञात्राश्रितत्वे ज्ञातव्यपरमात्माश्रितत्वस्यैव सिद्धत्वान्नानुपपत्तिरित्यत आह- भेदाभावेऽ-पीति ।। भेदाङ्गीकारे हेतुमाह- ज्ञातृज्ञेयभावसिद्धय इति ।। यादृशतादृशभेदस्यापि तयोरभावे तद्व्याप्तज्ञातृज्ञेयभावस्यैवानुपपत्तेरिति भावः । इतीत्यस्य न च वक्तव्यमिति पूर्वेण सम्बन्धः । अज्ञानस्येति ।।

'आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।

पूर्वसिद्धतमसो हि पश्चिमो नाऽश्रयो भवति नापि गोचरः ।।'

इति तदुक्तेरिति भावः ।

### गोविन्दीया

अन्यो वादी शङ्कते-अथ मतमिति ।। तथाऽपीति ।। आत्माकारत्वाभावेऽपीत्यर्थः । न चेति ।। आत्माज्ञाननिवर्तकत्वेन हि आत्मज्ञानमित्युक्तम् । तस्मिन् पक्षे आत्माज्ञानमपि आत्मनो दृक्कर्मत्वाभावे दुर्घटमिति दूषणमुक्तमिति न च वाच्यमित्यर्थः । आत्माश्रितमिति ।। आत्मविषयकाज्ञानं आत्माज्ञानमिति नोच्यते, अपि तु आत्माश्रितमेव तदित्यङ्गीकारादित्यर्थः । न च वक्तव्यम् इतिपदम् आत्मज्ञानं स्यादितीति वाक्यस्थ'इति'शब्देन सम्बध्यते । ज्ञातव्येनेति ।। ज्ञातव्येनाऽत्मनाऽज्ञानम् आश्रयाश्रयिभावेन व्यावर्तनीयम् पृथक्करणीयमित्यर्थः । ज्ञातृ-ज्ञेयात्मनोरेकतया ज्ञात्रज्ञानमपि ज्ञेयात्मज्ञानं भविष्यति, को दोषः ? इति परिहारं मनसि निधाय निराकरोति- वस्तुत इति ।। यादृशतादृशभेदस्य व्यावहारिकभेदस्याङ्गीकार्यत्वात् ज्ञात्रज्ञानं ज्ञेयात्मज्ञानं न भवतीत्यर्थः । अत इति ।। ज्ञात्राश्रिताज्ञानस्य ज्ञेयात्मज्ञानत्वाभावाद् आत्माज्ञानं निवर्तयद् विज्ञानम् आत्मज्ञानं कथं स्यादिति न च वक्तव्यमित्यर्थः । उररीकरणादिति ।। अङ्गीकरणादित्यर्थः ।

### नारोपन्तीया

आत्माज्ञाननिवर्तकतयेति ।। आत्माज्ञाननिवर्तकतालक्षणयाऽत्मसम्बन्धितयेति सामा-नाधिकरण्यम् । ज्ञातव्येनात्मनेति । पराक्चैतन्यरूपशुद्धब्रह्मणो वेदान्तवाक्येन ज्ञातव्यत्वादिति भावः । अत इति ।। निवर्तकत्वोपयोगिसामानाधिकरण्यस्य तमःप्रकाशयोरिवाभावेन ज्ञानस्या-ज्ञाननिवर्तकत्वानुपपत्तेरित्यर्थः ।

### जनार्दनभट्टीया

आत्माश्रिताज्ञानमिति ।। न तु आत्मकर्मकज्ञानप्रतिबन्धकमित्यर्थः । आत्मज्ञान-मित्यात्मकर्मकं ज्ञानमित्येव अर्थो वाच्यः ।

ननु 'आत्माज्ञाननिवर्तकं ज्ञानम् आत्मज्ञानम्' इत्याशयेन शङ्कते – न च वक्तव्यमिति ।। 'न च वक्तव्यम्' इत्यस्य निवर्तकमपि ज्ञानम् आत्मज्ञानं स्यादिति अव्यवहितोत्तरवाक्येन अन्वयः । यदुक्तं मायावादिना 'आत्माज्ञाननिवर्तकत्वेन आत्मसम्बन्धितया तदज्ञानं भविष्यति' इति । तन्निराकरोति– ज्ञातव्येनेति ।। गत्यादिसविषयपदार्थभेदस्य गम्यादिविषयभेदप्रयुक्तत्वाद् इहापि ज्ञानरूपसविषयपदार्थभेद आत्मरूपविषयभेदप्रयुक्त इत्येव वक्तव्यम् । 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति अभियुक्तोक्तेः । एवञ्च 'आत्मनो ज्ञानम् आत्मज्ञानम्' इत्यत्र षष्ठ्यर्थः कर्मत्वमेवेति आत्मनो दृक्कर्मत्वं सिद्धमिति भावः । एतदभिप्रायसूचनायैव 'ज्ञातव्येन' इति विशेषणम् । केचित्तु 'ज्ञातव्येन आत्मना ज्ञानम्' इत्यत्र 'अज्ञानम्' इति पदं विभज्य व्याचक्षते । तदसत् । 'ज्ञातव्येन' इति पदवैय्यर्थ्यापत्तेः ।

'आत्माज्ञाननिवर्तकत्वेन आत्मसम्बन्धितया आत्मज्ञानं भविष्यति' इत्येतद्दूषयित्वा, 'आत्माश्रितमज्ञानम् आत्माज्ञानम्' इत्येतद्दूषयति – न चाज्ञानमिति ।। 'अहमज्ञः' 'मामन्यञ्च न जानामि' 'शास्त्रार्थं न जानामि' इत्यज्ञानस्य ज्ञातृपुरुषनिष्ठत्वावगाहिप्रतीतिविरोधादिति भावः । ननु अज्ञानं ज्ञातव्यं नाश्रयते किन्तु ज्ञातारमिति विभागानुपपत्तिः । मन्मते तयोरभेदादित्यत आह– वस्तुत इति ।। यादृशतादृशस्यापीति ।। व्यावहारिकस्येत्यर्थः । अङ्गीकृतत्वादिति ।। 'मिथ्या(त्व)वादिना त्वयाऽपि' इति शेषः । परब्रह्मेति ।। अतदाश्रयत्वे तदाच्छादकत्वानुपपत्तिरिति भावः ।

## न ह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वाऽस्ति ..

**अज्ञानस्य आत्माऽश्रितत्वाभावोपपादनेन पूर्वोक्तशङ्कानिरासः**

### श्रीमज्जयतीर्थटीका

तत्राऽह-

## मूल

***न ह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वाऽस्ति ।***

हिशब्दो हेत्वर्थे । वाशब्द उपमायाम् । यथा खलु न घटाज्ञानस्य घटाश्रयत्वं एवमज्ञानत्वान्न ब्रह्माज्ञानस्यापि तदाश्रयत्वमस्ति । अन्यथा घटाज्ञानस्यापि तदाश्रयत्वप्रसङ्गात् । यत एवं न ब्रह्माज्ञानं तदाश्रयं तस्मान्न तन्निवर्तयदपि ज्ञानं ब्रह्मज्ञानमिति ।

ननु घटाज्ञानमेव नास्ति । ज्ञानोत्पत्तेः प्राक् प्रमाणवैकल्यादेव ज्ञानाभावोपपत्तेः । उत्पन्ने तु ज्ञाने तत एव सुतरां अज्ञानकल्पकाभावात् । अतो यदज्ञानं न तद्विषयाश्रितमिति व्याप्तौ कथं घटाज्ञानं दृष्टान्तीक्रियते । कस्य वा घटाऽश्रयत्वमापाद्यते । ब्रह्मणि तु स्वयं प्रकाशमानेऽपि तत्स्वरूपानवभासस्यानन्यनिमित्तत्वाद्भावरूपमज्ञानं कल्प्यत इति । मैवम् । घटोऽपि यदाऽन्यात्मनाऽवभासते तदा इन्द्रियप्रवृत्तावपि घटत्वाग्रहणस्यानन्यनिमित्तत्वात् तत्राप्यज्ञानस्य परेणाङ्गीकार्यत्वात् । अन्यथा शुक्तिकाज्ञानमपि न स्यात् ।

### श्रीविजयीन्द्रभिक्षु

उदाहृतश्रुतिगतयोस्तमोमायाशब्दयोः प्रकृतिपरत्वेन पराभिमताज्ञानपरत्वे मानाभावात् मायिनं तमसा गू॰मिति शब्दाभ्यां मायाया आश्रयाश्रयिभावाप्रतीतेः गू॰शब्दस्य छन्नार्थकत्वात् मायिनमित्यस्य सम्बन्धमात्रार्थकत्वाच्च नाज्ञानं मुमुक्षुज्ञेयब्रह्माश्रितमित्यभिप्रायेणाऽह- तत्राऽहेति ।। अज्ञानस्य घटाश्रितत्वस्य परैरप्यनङ्गीकारात् पक्षान्तरसूचकवाशब्दस्याऽनर्थक्यमाशङ्क्याऽह- वाशब्द इति ।। यथा खल्विति ।। तदयमत्र प्रयोगः । ब्रह्माज्ञानं न स्वविषयाश्रितम् अज्ञानत्वात् घटाज्ञानवदिति । 'न ब्रह्माज्ञानस्यापि तदाश्रयत्वम्' इति मूले विशिष्टसाध्यनिर्देशस्तु पक्षधर्मता-बललभ्यविशेषाभिप्रायक इति न विरोधः ।

ननु ब्रह्माज्ञानमिति यदि ज्ञेयब्रह्माऽश्रिताज्ञानमित्यर्थोऽभिमतस्तदा विरोधः । यदा तु ब्रह्मविषयकमज्ञानमिति तदा अज्ञानस्य ब्रह्माश्रितत्वाभावेऽपि तद्विषयकाज्ञाननिवर्तकत्वसम्बन्धेन वेदजनितविज्ञानस्य तज्ज्ञानत्वासम्भवेनाऽत्मनो दृक्कर्मत्वाभावेन न दृश्यत्वहेतोः व्यभिचारापत्ति-रिति चेन्न । ब्रह्मविषयकाज्ञानमित्येव तदर्थः । न चैवमात्मनो दृग्विषयत्वाभावप्रसङ्गः । 'न जानामि' इतिवत् 'जानामि' इत्यनुभवेन ज्ञानविषयत्वस्यापि दुर्वारत्वात् । यथा चैतत्तथोपपादितमधस्तात् । तन्निवर्तयदपीति ।। तदज्ञाननिवर्तकत्वेनापीत्यर्थः ।

ननु घटाज्ञानदृष्टान्तेन ब्रह्माज्ञानस्य तदाश्रितत्वनिराकरणमयुक्तम् । घटाज्ञानस्यैवाभावात् । तथा हि, न ह्यज्ञानं कुलधर्मतयेष्यते । किं तु प्रसक्तप्रकाशप्रतिबन्धार्थमेव । एवञ्च घटाज्ञान-मङ्गीकुर्वन् प्रष्टव्यः । घटज्ञानोत्पत्तेः प्राक्प्रसक्तप्रकाशप्रतिबन्धार्थं तदभ्युपगम्यते ज्ञानोत्पत्त्यनन्तरं तत्प्रतिबन्धार्थं वा । नाऽद्यः । घटस्य जडत्वेन स्वतः प्रकाशप्रसक्त्यसम्भवेन प्रमाणत एव प्रसक्तिर्वाच्या । एवञ्च प्रमाणप्रवृत्त्यभावदशायां सामग्र्यभावादेव तदप्रकाशोपपत्त्या प्रतिबन्धका-ज्ञानकल्पनानुपपत्तेः । न द्वितीयः । ज्ञानोत्पत्त्यनन्तरं तस्य प्रकाशमानत्वेनाज्ञानकल्पक-विषयानवभासाभावेनाज्ञानकल्पनस्यैवायोगात् । ब्रह्मणस्तु स्वप्रकाशत्वेन तदभिन्नाऽनन्दादि-प्रकाशप्रसक्तौ तत्प्रतिबन्धार्थं भावरूपाज्ञानकल्पनमावश्यकमिति शङ्कते- नन्विति ।। अस्ति घटादीनां प्रमाणप्रवृत्त्यधीनैव प्रकाशप्रसक्तिः । तथाऽपि तदज्ञानं दुर्निरसम् । भ्रमस्थले सत्यामपि प्रमाणप्रवृत्तौ यथावदनवभासस्यानन्यनिमित्तत्वादिति परिहरति- मैवमिति ।। न च दोषादेव तत्रानवभासो नाज्ञानादिति वाच्यम् । ज्ञानप्रतिबन्धकाज्ञानातिरिक्तदोषस्य त्वया अनभ्युपगमात् । अभ्युपगमे च तेनैव ब्रह्मप्रकाशप्रतिबन्धसम्भवेन तदज्ञानस्याप्यसिद्धिप्रसङ्गात् । शुक्ति-रजताद्युपादानतया अज्ञानस्य परेणाङ्गीकाराच्चेति भावः । अन्यथेति ।। यद्यपि शुक्ति-विषयकमप्यज्ञानं परेण नाङ्गीक्रियते । जडत्वेन घटतुल्यत्वात् । किन्तु शुक्त्यवच्छिन्नचैतन्यविषय-मेव । तथाऽपि 'शास्त्रार्थं न जानामि' इत्यनुभवेन ब्रह्मविषयकाज्ञानवत् 'शुक्तिं न जानामि' इत्यनुभवेन तद्विषयकमप्यज्ञानं दुर्वारम् । न च प्रकाशप्रतिबन्धरूपप्रयोजनाभावात् न तद्विषयका-ज्ञानं स्वीकार्यमिति वाच्यम् । प्रयोजनाभावमात्रेण प्रमाणसिद्धवस्तुनः त्यागानर्हत्वादिति भावः ।

### श्रीवेदेशतीर्थ

अज्ञानस्य घटाश्रितत्वस्य परैरप्यनङ्गीकृतत्वात्पक्षान्तरसूचकवाशब्दस्याऽनर्थक्य-माशङ्क्याऽह- वाशब्द इति ।। ननु घटाज्ञानदृष्टान्तेन ब्रह्माज्ञानस्य तदाश्रितत्वनिराकरणमयुक्तम् । घटाज्ञानस्यैवाभावात् । तथा हि, न ह्यज्ञानं कुलधर्मतयेष्यते । किन्तु प्राप्तप्रकाशप्रतिबन्धार्थमेव । एवञ्च घटाज्ञानमङ्गीकुर्वन् प्रष्टव्यः । घट-ज्ञानोत्पत्तेः प्राक् प्रसक्तप्रकाशप्रतिबन्धार्थमभ्युपगम्यते । ज्ञानोत्पत्त्यनन्तरं प्रतिबन्धार्थं वा । नाऽद्यः । घटस्य जडत्वेन स्वतः प्रकाशप्रसक्त्यभावेन प्रमाणत एव तत्प्रसक्तिर्वाच्या । एवञ्च प्रमाणप्रवृत्त्यभावदशायां सामग््रयभावादेव तदप्रकाशोपपत्त्या प्रति-बन्धकाज्ञानकल्पनानुपपत्तेः । न द्वितीयः । ज्ञानोत्पत्त्यनन्तरं तस्य प्रकाशमानत्वेन अज्ञानकल्पक-विषयानवभासाभावेनाज्ञानकल्पनस्यैवायोगात् । ब्रह्मणस्तु स्वप्रकाशत्वेन तदभिन्नाऽनन्दादि-प्रकाशप्रसक्तौ तत्प्रतिबन्धार्थं भावरूपाज्ञानकल्पनमावश्यकमिति शङ्कते-नन्विति ।। तत एवेति ।। ज्ञानस्योत्पन्नत्वादेवेत्यर्थः । सुतरां घटाज्ञानं नास्तीति सम्बन्धः । माऽस्तु घटादीनां प्राप्तप्रकाश-प्रतिबन्धार्थमज्ञानम् । अतदाकारप्रतिभासरूपविक्षेपार्थं तु भविष्यति । सत्यामपि प्रमाणप्रसक्तौ यथावदनवभासस्यानन्यनिमित्तत्वादित्याशयेन परिहरति- मैवमिति ।। ननु घटत्वाग्रहणस्य दोषादेवोपपत्तेर्नाज्ञानं तत्र कल्प्यत इत्यत आह- अन्यथेति ।। यद्यपि शुक्तिविषयकमप्यज्ञानं परेण नाभ्युपगम्यते । जडत्वेन घटतुल्यत्वात् । किं तु शुक्त्यवच्छिन्नचैतन्यविषयमेव । तथाऽपि 'शास्त्रार्थं न जानामि' इत्यनुभवेन ब्रह्मविषयकाज्ञानवत् 'शुक्तिं न जानामि, घटं न जानामि' इत्यनुभवेन तद्विषयमप्यज्ञानं दुर्वारम् । न चाऽवरणादिप्रयोजनाभावान्न तत्राज्ञानमिति वाच्यम् । प्रयोजना-भावे प्रमाणसिद्धवस्तुनस्त्यागायोगादिति भावः । उपलक्षणञ्चैतत् । ज्ञानप्रतिबन्धकाज्ञानातिरेकेण दोषस्य त्वया अनभ्युपगमात् । अभ्युपगमे च तेनैव ब्रह्मप्रकाशप्रतिबन्धसम्भवेन तदज्ञानस्या-प्यसिद्धिप्रसङ्गादित्यपि द्रष्टव्यम् ।

### श्रीराघवेन्द्रतीर्थ

उक्तेहेतोरनुकूलतर्कमाह- अन्यथेति ।। हिशब्दो हेत्वर्थ इत्युक्तं व्यनक्ति- यत एवमिति ।। तत एवेति ।। ज्ञानस्योत्पन्नत्वादेव । सुतरां निःसन्देहम् । ज्ञानप्रतिबन्धकत्वेनैवाज्ञानस्य कल्प्यत्वात् तस्यैवोत्पत्तौ कल्पकाभाव इति भावः । कल्प्यत इति ।। तदावरणतयेति योज्यम् । अन्यात्मनेति ।। वल्मीकस्थूलमृत्पिण्डपाषाणाद्यात्मनेत्यर्थः । शुक्तिकाज्ञानमिति । तत्रापि शुक्तित्त्वा-ग्रहणाद्यर्थमेवाज्ञानस्याङ्गीकारादिति भावः । यथाखल्वित्यादि । तथा चाज्ञानं न ब्रह्माश्रितं अज्ञानत्वात् घटाज्ञानवदित्यनुमानमुक्तं भवतीति द्रष्टव्यम् । अप्रयोजकतां परिहरति-अन्यथेति ।। तदाश्रयं ब्रह्माश्रयम् । उपपत्तेरिति ।। तथा च नाज्ञानं कल्पनीयमित्यर्थः ।

### गुरुराजीया

अज्ञानस्य घटाश्रितत्वस्य परैरप्यनङ्गीकारात् पक्षान्तरसूचकवाशब्दानुपपत्तिरित्यतस्तं व्याचष्टे- वाशब्द उपमायामिति ।। ननु घटाज्ञानदृष्टान्तेन ब्रह्माज्ञानस्य तदाश्रितत्वनिराकरण-मयुक्तम् । घटाज्ञानस्यैवाभावात् । १तथा हि, न हि घटाज्ञानं व्यसनतयाऽङ्गीक्रियते । किन्तु प्राप्तप्रकाशप्रतिबन्धार्थमेव । न चात्र स सम्भवति । तथा हि, घटज्ञानोत्पत्तेः प्राक् प्रसक्तप्रकाशप्रतिबन्धार्थं वाऽभ्युपेयं ज्ञानोत्पत्तिप्रतिबन्धार्थं वा । नाऽद्यः । घटस्य जडत्वेन स्वतः प्रकाशप्रसक्त्यसम्भवेन प्रमाणत एव तत्प्रसक्तिर्वाच्या । एवञ्च प्रमाणप्रवृत्त्यभावदशायां प्रमाणाभावादेव तदप्रकाशोपपत्त्या प्रतिबन्धकाज्ञानकल्पनस्यैव वैयर्थ्यात् । न द्वितीयः । ज्ञानोत्प-त्त्यनन्तरं घटस्य प्रकाशमानत्वेनाज्ञानकल्पकविषयानवभासस्यैवाभावेन तत्कल्पनवैयर्थ्यात् । न चैवं ब्रह्मण्यप्यज्ञानस्य नाङ्गीकर्तव्यत्वप्रसङ्गः । तत्कल्पकभावाभावाभ्यां विशेषेणाऽविशेषाऽसिद्ध्या तदप्रसङ्गादित्याशयेन शङ्कते- नन्विति ।। तत एवेति ।। ज्ञानस्योत्पन्नत्वादेवेत्यर्थः । सुतरां घटज्ञानं नास्तीति सम्बन्धः । माऽस्तु घटादीनां प्राप्तप्रकाशप्रतिबन्धार्थमज्ञानम् । अतदाकारप्रतिभास-रूपविक्षेपार्थं तु भविष्यति । सत्यामपि प्रमाणप्रसक्तौ यथावदनवभासस्यानन्यनिमित्तत्वादि-त्याशयेन परिहरति- मैवमिति ।। ननु घटादेरतदाकारप्रतिभासस्य दोषादेवोपपत्तेर्न तस्यानन्य-निमित्तत्वमित्यत आह- अन्यथेति ।। यद्यपि परेण तत्राज्ञानं नाङ्गीक्रियत इति नेदमनिष्टं तथाऽपि शास्त्रार्थं न जानामीत्यनुभवबलाद् ब्रह्माज्ञानवत् शुक्तिं न जानामीत्यनुभवबलायातस्य शुक्त्य-ज्ञानस्यानङ्गीकारानुपपत्तेः । न चाऽवरणरूपप्रयोजनाभावो२ दोषः । प्रयोजनाभावे प्रमाणसिद्ध-वस्तुनस्त्यागायोगात् । अन्यथा कण्टकशौक्ल्यस्यापि३ प्रयोजनाभावयुक्त्या त्यागप्रसङ्गादिति भावः । उपलक्षणं चैतत् । ज्ञानप्रतिबन्धकाज्ञानातिरिक्तदोषस्य त्वयाऽनभ्युपगमात् । अभ्युपगमे च तेनैव ब्रह्मप्रकाशप्रतिबन्धसम्भवेन तदज्ञानस्याप्यसिद्धिप्रसङ्गादित्यपि द्रष्टव्यम् ।

### गोविन्दीया

अन्यथेति ।। ब्रह्माज्ञानस्य तदाश्रयत्वे इत्यर्थः । यत एवमिति ।। यतः घटाज्ञानं घटाश्रयं न भवति, एवं ब्रह्माज्ञानं तदाश्रयं न भवतीत्यर्थः । तस्मादिति ।। ब्रह्माज्ञानस्य तदाश्रयत्वाभावा-दित्यर्थः । ब्रह्मव्यतिरिक्ताश्रयाज्ञानं निवर्तयद् ज्ञानं ब्रह्मज्ञानं कथं स्यादिति भावः । नन्विति ।। स्वप्रकाशस्यैव भावरूपाज्ञानमावरकं वाच्यम्, घटस्य जडत्वेन स्वप्रकाशत्वाभावाद् आवरकं भावरूपाज्ञानं नास्ति प्रमाणाभावात् । अपि तु ज्ञानोत्पत्तेः प्राक् ज्ञानाभावरूपाज्ञानस्योपपत्ते-रित्यर्थः । उत्पन्नेति ।। ज्ञाने उत्पन्ने सति तत एव उत्पन्नज्ञानत्वात् प्रकाशमाने घटे सुतराम् अज्ञानकल्पकप्रमाणाभावादित्यर्थः । अत इति ।। अतः कारणात् ब्रह्माज्ञानं तदाश्रितं न, अज्ञानत्वात् यदज्ञानं न तद्विषयम् इति सामान्यव्याप्तावित्यर्थः । तत्स्वरूपेति ।। तत्स्वरूपस्याऽ-नन्दादेरनवभासस्य अनन्यनिमित्तत्वाद् अज्ञानव्यतिरिक्तनिमित्तत्वाभावाद् भावरूपमज्ञानं कल्प्यत इत्यर्थः । घटोऽपीति ।। यदा अन्यात्मना पटात्मनेत्यर्थः । अन्यथेति ।। घटाज्ञानानङ्गीकारे शुक्तिकाज्ञानमपि न स्यादित्यर्थः ।

### नारोपन्तीया

अन्यथा शुक्तिकाज्ञानमपीति ।। ननु तत्रापीष्टापादनमेव । परेणाज्ञानस्य शुक्त्यवच्छिन्न-चैतन्याश्रिततयाऽङ्गीकारात् । तथा घटाज्ञानमपि घटावच्छिन्नचैतन्यावरकीभूताज्ञानमेव । तथैव हि परकीयाज्ञाने सति प्रक्रिया । विषयेन्द्रियसंयोगानन्तरं हि अन्तर्घटादिविषयाकारान्तःकरण-वृत्तिर्जायते । सा च दीर्घप्रभाकारेण बहिरिन्द्रियद्वारा बहिर्निःसरति विषयपर्यन्तं व्याप्नोति । तथा च विषयावच्छिन्नचैतन्यावरकीभूताज्ञाने निवृत्ते ब्रह्मचैतन्यं स्फुरति । एवं च विषयावच्छिन्नपराक्चैतन्य-रूपात्मनोऽन्तःकरणावच्छिन्नरूपप्रत्यक्चैतन्यस्य चैक्यं भवति । उभयोरप्यन्तःकरणावच्छिन्नत्वेन प्रत्यक्त्वलाभात् । स एव हि परैरेकलोलीभाव इति व्यवह्रियते । तथा चाऽवरणनिवृत्तौ आत्मनि स्फुरमाणे तत्राध्यस्तघटादिविषयोऽपि स्फुरति । तथा च श्रुतिः- 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।' इति । तस्मात्कथमेतदापादनमिति चेदित्थम्- श्रुत्यर्थस्यान्यथैवोपपन्नत्वेन परकीयप्रक्रियाया निर्मूलत्वात् । अनुमित्यादिस्थले परेणैव वृत्तेर्बहिर्निःसरणस्य एकलोलीभावस्य चानङ्गीकारेऽपि वह्न्यादीनां परोक्षवृत्तिविषयत्ववत् घटादीनामप्यपरोक्षवृत्तिविषयताङ्गीकृतौ बाधका-भावाच्च । यदि च चैतन्यस्य स्वप्रकाशस्य सर्वदा स्फुरणप्रसक्तेस्तत्राज्ञानं स्वीकार्यं, तर्हि जडेऽपीन्द्रियसन्निकृष्टे शुक्त्यादौ रजततया भासमाने शुक्तित्वभानस्य प्रसक्तस्याऽवरणार्थं तुल्यन्यायतया

तत्राप्यज्ञानाङ्गीकारस्याऽवश्यकत्वात् । तदिदमाह- तत्राप्यज्ञानस्य परेणाङ्गीकार्यत्वादिति ।। तथा च परन्यायेनैव परोऽङ्गीकारयितव्यः । तथा चेदं दूषणं सुस्थमिति न कश्चिद्दोष इति भावः ।

### जनार्दनभट्टीया

प्रकृतत्वात् अज्ञानस्य ब्रह्माश्रयत्वे निराकरणीये 'न हि अज्ञानस्य' इति मूले घटाश्रयत्व-निषेधस्य प्रकृतासङ्गतिरित्याशङ्क्य सङ्गततया योजयति – हिशब्द इत्यादिना ।। घटाज्ञानमेवेति ।। 'भावरूपम्' इति शेषः । स्वमतानुरोधेन आह – ब्रह्मणि त्विति ।। अनन्यनिमित्तत्वादिति ।। अज्ञानातिरिक्तनिमित्तशून्यत्वादित्यर्थः । ब्रह्माज्ञानप्रतिबन्धं घटाज्ञानं साधयति– घटोऽपीत्या-दिना ।।

## पुङ्गतमेव हि तमः ..

**अज्ञानस्य ज्ञातृपुरुषगतत्वसमर्थनम्**

### श्रीमज्जयतीर्थटीका

यदि तर्हि न विषयाश्रितमज्ञानम् । क्व तदाश्रितमित्यत आह-

## मूल

***पुङ्गतमेव हि तमः ।***

पुङ्गतं ज्ञातृपुरुषगतम् । तम इव तमोऽज्ञानम् । ज्ञानप्रतिबन्धकत्वात् । तमोग्रहणमुत्तरत्रोप-योक्ष्यते । प्रमाणेन हि विषयाश्रितत्वे निराकृते परिशेषतो ज्ञातृगतत्वं सिद्ध्यति । हिशब्दस्तु 'अहमज्ञः, घटमहं न जानामि' इत्याद्यनुभवमप्यत्र प्रमाणं दर्शयति । प्रमाणान्तरञ्चाऽह–

**मूल**

***ज्ञानेन निवर्तते ।***

तम इति वर्तते । यथा खलु तमः प्रकाशसमानाश्रयमेव तेन निवर्तते । न व्याश्रयम् । तथाऽज्ञानमपि ज्ञानेन निवर्तत इति ज्ञानसमानाश्रयमेव भवितुं युक्तम् । ज्ञानाश्रयश्च ज्ञातैवेत्यज्ञानस्यापि स एवाऽश्रयो युक्तः ।

### श्रीविजयीन्द्रभिक्षु

ननु यद्यज्ञानं न विषयाश्रितं तर्हि निराश्रयमेव स्यात् । न च ज्ञात्राश्रितं तत् । ज्ञातुरपि 'मामन्यञ्च न जानामि' इत्यज्ञानविषयत्वानुभवादिति पृच्छति- यदि तर्हीति ।। ननु पुंशब्दस्य मुमुक्षुज्ञेयपरब्रह्मसाधारणत्वात् 'पुङ्गतमेव हि तमः' इत्युक्ते मुमुक्षुज्ञेयब्रह्मणो नाज्ञानाश्रयत्व-व्यावृत्तिरित्यत आह- ज्ञातृपुरुषगतमिति ।। संसारिगतमित्यर्थः । अज्ञानस्य पुङ्गतत्वे वाच्ये तमसस्तद्गतत्वाभिधानमसङ्गतमित्यत आह- तम इवेति ।। तमःशब्दस्याज्ञाने प्रवृत्तौ गुणयोगं दर्शयति- ज्ञानप्रतिबन्धकत्वादिति ।। स्वायत्ते शब्दे अवाचकपदप्रयोगो न न्याय्यः । प्रतिपत्तिगौरवादित्यत आह- तमोग्रहणमिति ।। 'पुङ्गतमेव हि तमः' इत्येतदुपपादयति- प्रमाणेन हीति ।। 'विमतं ब्रह्मज्ञानं न विषयाऽश्रितं अज्ञानत्वात् घटाज्ञानवत्' इति प्रमाणेन हीत्यर्थः । परिशेषत इति ।। 'विमतमज्ञानं ज्ञात्राश्रितं तदन्यानाश्रितत्वे सति आश्रितत्वादिति एवकारसूचितपरिशेषादित्यर्थः । अज्ञानाऽश्रयचिन्तायां ज्ञाननिवर्त्यत्वप्रतिपादनस्यायुक्तत्व-माशङ्क्यावतारयति- प्रमाणान्तरञ्चेति ।। यथा खल्विति ।। विमतमज्ञानं ज्ञानसमानाऽश्रयं तन्निवर्त्यत्वात् तमोवत् इति सामान्यव्याप्तिमूलकप्रयोगो द्रष्टव्यः ।

### श्रीवेदेशतीर्थ

ज्ञातव्यपरब्रह्माश्रितत्वेऽपि पुङ्गतत्वमक्षतमित्यत उक्तम्- ज्ञातृपुरुषगतमिति ।। हिशब्दाभिप्रायमाह- परिशेषत इति ।। विमतमज्ञानं ज्ञात्राश्रितं तदन्यानाश्रितत्वे सत्याश्रित-त्वादिति एवकार-सूचितपरिशेषादित्यप्याहुः । प्रकारान्तरेणापि तदर्थमाह- हिशब्दस्त्विति ।। अत एवोक्तम्- अनुभवमपीति ।। अज्ञानस्याऽश्रयचिन्तायां ज्ञाननिवर्त्यत्वप्रतिपादनस्यायुक्तत्व-माशङ्क्यावतारयति- प्रमाणान्तरं चेति ।। यथा खल्विति ।। अनेन अज्ञानं ज्ञानसमानाश्रयं ज्ञान-निवर्त्यत्वात् यद्येन निवर्तते तत्तत्समानाश्रयं यथा तमः प्रकाशेनेति सामान्यव्याप्तिमूलकप्रयोग उक्तो भवति ।

नन्वज्ञानस्य ज्ञानसमानाश्रयत्वसिद्धावपि न पुङ्गतत्वसिद्धिः । ज्ञानस्यापि विषय-गतत्वे विषयगताज्ञानस्य तत्समानाश्रयत्वोपपत्त्याऽर्थान्तरत्वादित्यत आह- ज्ञानाश्रयश्चेति ।।

### द्वैतद्युमणि

उत्तरत्रेति ।। उत्तरमूलाभिप्रेतार्थे दृष्टान्ततयोपयुज्यते इत्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

उत्तरत्रेति ।। उत्तरवाक्ये दृष्टान्तत्वेनेति भावः । प्रमाणान्तरं चेति । अज्ञानं ज्ञान-समानाश्रयं सदेव निवर्तते । ज्ञाननिवर्त्यत्वात् । यद्यन्निवर्त्यं तत्तत्समानाश्रयमेव सन्निवर्तते । यथा प्रकाशनिवर्त्यं तम इत्येवं प्रमाणान्तरमित्यर्थः ।

व्याश्रयं व्यधिकरणं भिन्नाधिकरणमिति यावत् ।

### गुरुराजीया

ज्ञातव्यपरब्रह्माश्रितत्वेऽपि पुङ्गतत्वानपायात् तद्भ्रान्तिनिरासाय पुङ्गतमित्येतद्व्याचष्टे- ज्ञातृपुरुषगतमिति ।। परिशेषत इति ।। विमतमज्ञानं ज्ञातृपुरुषाश्रितं तदन्यानाश्रयत्वे सति साश्रितत्वादिति एवकारसूचितपरिशेषादित्यर्थः । यथा खल्विति ।। अनेन, अज्ञानं ज्ञानसमानाश्रयं ज्ञाननिवर्त्यत्वात् । यद्येन निवर्तते तत्तत्समानाश्रयं यथा तमः प्रकाशेन इति सामान्यव्याप्तिमूलक-मनुमानमुक्तं भवति । नन्वज्ञानस्य ज्ञानसमानाश्रयत्वसिद्धावपि न पुरुषगतत्वसिद्धिः । ज्ञानस्यापि ज्ञातव्यगतत्वेन तद्गतस्याज्ञानस्य तत्समानाश्रयत्वोपपत्त्याऽर्थान्तरत्वादित्यत आह- ज्ञानाश्रय-श्चेति ।।

### जनार्दनभट्टीया

‘पुङ्गतमेव’ इत्यत्र पुरुषसामान्यप्रतीतेः अज्ञानस्य प्रकृतज्ञातृपुरुषगतत्वासिद्धिरित्यतः पुंगतशब्दार्थमाह – ज्ञातृपुरुषेति ।। अज्ञाने तमःशब्दस्य उपचारेण प्रकृतौ दृष्टान्तपरतया उपयुज्यत इत्यर्थः । व्याश्रयमिति ।। प्रकाशभिन्नाधिकरणकमित्यर्थः ।

## विषयाऽश्रयं चेदज्ञानं ..

**अज्ञानस्य विषयाश्रितत्वाभावसाधकानुमानस्य सत्प्रतिपक्षत्वशङ्का तन्निरासश्च**

### श्रीमज्जयतीर्थटीका

ननु यथा तमो विषयसम्बद्धमेव सत् ज्ञानप्रतिबन्धकमुपलभ्यते । प्रकाशस्थेनान्धकार-स्थितघटस्यानुपलभ्यमानत्वात् । अन्धकारस्थेनापि प्रकाशस्थितस्योपलब्धेः । तथा ज्ञानप्रति-बन्धकेन अज्ञानेनापि विषयाश्रितेन भवितुं युक्तमिति विषयाश्रितत्वेऽप्यज्ञानस्य प्रमाणमस्ति ।

न चैवमचेतनाश्रयाज्ञानमङ्गीकुर्वतो मायावादिनोऽपसिद्धान्तापत्तिः । शुक्त्याद्यवच्छिन्न-चैतन्याऽश्रयतोररीकरणात् ।

अवश्यञ्चैतदेवम् । शुक्त्याद्यवच्छिन्नचैतन्याश्रयं खल्वज्ञानं तद्रूपमाच्छाद्य रजतादि-रूपान्तरोपादानं भवितुं युक्तम् ।

एवं तर्हि ज्ञानस्यापि प्रकाशवद्विषयसन्निकर्षेणैवाज्ञाननिवर्तकत्वप्रसङ्ग इति चेत् । नेदमनिष्टम् । प्रकाशस्वभावं सावयवमन्तःकरणमदृष्टेन्द्रियादिसहकृतं ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणमत इत्यङ्गीकारात् । अत एव न ह्यज्ञानस्य घटाश्रयत्वमिति दृष्टान्तोऽपि प्रत्यूढः । घटाज्ञान-स्यापि तदाऽश्रयत्वप्रसङ्गश्चेति ।

तदिदमसत् । अनुमानस्य तर्कपराहतत्वात् । तथा हि, यदेतद्घटे पाषाणत्वाद्यारोपनिमित्तमज्ञानं तद्घटयाथात्म्यज्ञानेन निवर्तते न वा । नेति पक्षे भ्रान्तेरनुच्छेदप्रसङ्गः । प्रथमपक्षेऽतिप्रसङ्गमाह-

## मूल

*विषयाऽश्रयं चेदज्ञानं निवर्तते तद्येकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात् ।*

यद्यज्ञानं घटादिविषयाश्रयं तद्याथात्म्यज्ञानेन निवर्तत इत्यङ्गीक्रियते तर्ह्येकस्मिन् घटे बहूनां पाषाणत्वादिना विप्रतिपन्नानामेकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात् । तज्ज्ञानेनाविद्याया निवृत्तत्वात् । इन्द्रियसन्निकर्षादिसामग्रीसद्भावाच्च । न ह्यालोकेन तमसि निवृत्ते समनस्केन्द्रिय-सन्निकृष्टोऽपि घटः केनचिद्दृश्यते केनचिन्नेति युज्यते ।

अज्ञानबहुत्वान्नैवमिति चेत् तर्ह्येकस्मिन्नज्ञाने निवृत्तेऽप्यज्ञानान्तरसद्भावान्न केनापि घटो विज्ञायेत । प्रतिपुरुषनियतानि तानीति चेन्न । अदृष्टकल्पनाप्रसङ्गात् । अज्ञानस्य विषयाश्रयत्वादेवं कल्पनेऽन्योन्याश्रयता स्यात् । विषयाच्छादनं तु नयनपटलादिवत् प्रतिपुरुषमाश्रितैरेवा-ज्ञानैर्युक्तम् । आरोप्यासत्त्वस्य प्रतिपादितत्वात् न तदुपादानापेक्षाऽस्ति । तदेवं न ज्ञातव्यपरब्रह्माश्रयमज्ञानं युक्तमिति नात्माऽश्रयाज्ञाननिवर्तकत्वेन वेदान्तवाक्यजनितविज्ञान-स्याऽत्मज्ञानत्वसिद्धिः ।

### श्रीविजयीन्द्रभिक्षु

विमतमज्ञानं न विषयाऽश्रितं ज्ञानप्रतिबन्धकत्वात् तमोवत् इति अज्ञानस्य विषयाश्रित-त्वाभावसाधकानुमानस्य प्रतिपक्षं शङ्कते- नन्विति ।। युक्तमिति ।। विक्षेपस्याऽवरण-पूर्वकत्वादावरणस्य चाप्रसक्तप्रकाशे जडभूतशुक्त्याद्यावसम्भवात् तदवच्छिन्नचैतन्यावरणपूर्वक एव रजतादिविक्षेपो वाच्यः । न च चैतन्याऽश्रितत्वं विना तदावरकत्वमुपपद्यते । विषयावरकान्धकारादौ तथा दर्शनादिति भावः । अत एवेति ।। अज्ञानस्य घटाद्यवच्छिन्नचैतन्याश्रितत्वाङ्गीकारादेवे-त्यर्थः । तदाश्रयत्वप्रसङ्गश्चेति ।। प्रत्यूढ इत्यनुवर्तते । ज्ञातस्येति ।। यथावज्ज्ञातस्येत्यर्थः । ननु ज्ञानप्रतिबन्धकाविद्यानिवृत्तिमात्रेण कथं ज्ञानापादनम् । प्रतिबन्धकाभावमात्रेण कार्यादर्शनादित्यत आह- इन्द्रियसन्निकर्षादीति ।। गूढाभिसन्धिः शङ्कते- अज्ञानबहुत्वादिति ।। यावन्त्यज्ञानानि तावन्ति ज्ञानानि तन्निवर्तकानीति स्वीकारादेकेन ज्ञानेनैकस्याज्ञानस्य नाशेऽप्यज्ञानान्तरसत्त्वात् कञ्चित्प्रत्यज्ञातत्वमपि युज्यत इति यथाश्रुतं दूषयति- तर्हीति ।। आशयमुद्धाटयति- प्रतिपुरुष-नियतानीति ।। तथा च यदीयमज्ञानं तस्य तदीयज्ञानेनैव निवृत्तिरिति नोक्तातिप्रसङ्ग इति भावः। अदृष्टेति ।। विषयाश्रितावरकस्य प्रतिपुरुषनियतत्वादर्शनात् । न चान्यत्रादर्शनेऽपि उक्तानुभव-स्यैवाभावप्रसङ्गादिति भावः । अन्योन्याश्रयतेति ।। विषयाऽश्रितत्वे सिद्धे अतिप्रसङ्गनिरासाय प्रतिपुरुषनियतत्वसिद्धिः । प्रतिपुरुषनियतत्वसिद्धौ चातिप्रसङ्गाभावेन विषयाऽश्रितत्वसिद्धिः इत्यन्योन्याश्रयतेत्यर्थः । नन्वावरकत्वान्यथानुपपत्त्या विषयाश्रितत्वं सिद्ध्यतीत्याशङ्क्याऽह- विषयाच्छादनन्त्विति ।। ननु शुक्त्यादौ रजतादिविक्षेपान्यथानुपपत्त्या तदुपादानभूताज्ञानस्य विषयाश्रितत्वसिद्धिरित्यत आह- आरोप्येति ।। अज्ञानस्य ब्रह्माश्रितत्वाभावमुपसंहरंस्तदुप-पादनस्य फलमाह- तदेवमिति ।।

### श्रीवेदेशतीर्थ

अज्ञानस्य विषयाश्रितत्वाभावसाधकानुमानस्य प्रतिपक्षमाशङ्कते- नन्विति ।। अज्ञानं विषयाश्रितं ज्ञानप्रतिबन्धकत्वात् । तमोवदिति प्रयोगोऽत्राभिप्रेतः । विषयसम्बद्धस्य तमसो ज्ञान-प्रतिबन्धकत्वमुपपादयति- प्रकाशस्थेनेति ।। ननु पुरुषसम्बद्धस्यापि तमसो ज्ञानप्रतिबन्धकत्व-मुपलब्धमित्यज्ञानमपि पुरुषसम्बद्धं किं न स्यादित्यत आह- अन्धकारस्थेनापीति ।। तद्रूप-माच्छाद्येति ।। अज्ञानस्य ज्ञातृगतत्वे व्यधिकरणत्वेन विषयाच्छादनासम्भवात् । रजताद्युपा-दानतासम्भवाच्चेति भावः ।

केचित्तु 'विक्षेपस्याऽवरणपूर्वकत्वादावरणस्याप्रसक्तप्रकाशे जडभूतशुक्त्यादावसम्भवात्तदवच्छिन्न-चैतन्यावरणपूर्वक एव रजतादिविक्षेपो वाच्यः । न च चैतन्याश्रितत्वं विना तदावरकत्वमुपपद्यते विषयावरकान्धकारादौ तथा दर्शनादिति भावः' इत्याहुः ।

प्रकाशस्वभावमिति ।। यथा तटाकोदकं कुल्यात्मना छिद्रान्निर्गत्य केदारान् प्रविश्य तद्वदेव चतुष्कोणत्वाद्याकारं भवति तथेत्यर्थः । नन्वन्तःकरणरूपमनसो निरवयवत्वात्कथं तस्य बहिर्निःसरणमित्यत आह- सावयवमिति ।। ननु तस्य द्रव्यान्तरत्वात्कथं दीर्घप्रभाकारेण परिणाम इत्यत आह- प्रकाशस्वभावमिति । नन्वेवमन्तःकरणस्य बहिर्निःसरणाङ्गीकारे व्यवहितपदार्थ-ज्ञानमपि स्यादित्यत उक्तम्-अदृष्टेन्द्रियादिसहकृतमिति ।। तदनन्तरमिन्द्रियादिद्वारा बहिर्निर्गत-मित्यपि ग्राह्यम् । तेनान्तःपदार्थस्य कथं बाह्यविषयाकारेण परिणाम इति शङ्कानवकाशः । ननु नानेनानुमानेनाज्ञानस्य विषयाश्रितत्वसिद्धिः । अज्ञानं न विषयाश्रितमज्ञानत्वात् । घटाज्ञानवत् इति प्रागुक्तानुमानविरोधादित्यत आह- अत एवेति ।। यतः शुक्त्याद्यज्ञानस्य तदवच्छिन्न-चैतन्याश्रितत्वमङ्गीक्रियते । अतो घटाज्ञानस्यापि तदवच्छिन्नचैतन्याश्रितत्वाद्दृष्टान्तस्य साध्य-विकलत्वादिति भावः । तदाश्रयत्वप्रसङ्गश्चेति ।। प्रत्यूढ इति सम्बन्धः । इष्टापत्तेरिति भावः । तथा चानुकूलतर्काभावेनाप्रयोजकं पूर्वोक्तानुमानमिति तात्पर्यम् । ज्ञातस्येति ।। यथावज्ज्ञातस्येत्यर्थः । ननु ज्ञानप्रतिबन्धकाविद्यानिवृत्तिमात्रेण कथं ज्ञानापादनम् । प्रतिबन्धकाभावमात्रेण कार्यादर्श-नादित्यत आह- इन्द्रियसन्निकर्षादीति ।। अन्यथा पाषाणत्वाद्यारोपोऽपि न स्यादिति भावः । न केनापीति ।। यथा आच्छादकबहुजवनिकासद्भावे तत्रैकजवनिकापसरणे तदन्तस्थपदार्थानुपलब्धि-स्तथेत्यर्थः । प्रतिपुरुषेति ।। तथा चैकज्ञानेन तदज्ञाननिवृत्तावप्यन्येषामज्ञानसत्त्वादन्यैरज्ञातत्वं घटस्योपपन्नमिति भावः । अदृष्टेति ।। न हि प्रतिपुरुषनियतं तमोऽस्ति । येन तद्वदत्रापि कल्प्येतेति भावः । न चान्यत्रादर्शनेऽप्यज्ञाने तत्स्वीकार्यम् । 'अत्र ममैवाज्ञानं नान्यस्य' इत्याद्यनुभवादिति वाच्यम् । विषयाश्रितत्वे

उक्तानुभवस्यैवाभावप्रसङ्गादिति भावः । ननूक्तप्रमाणेनाज्ञानस्य विषयाश्रितत्वे सिद्धे तदन्यथानुपपत्त्या अज्ञानस्य प्रतिपुरुषनियतत्वं कल्प्यत इति चेत् तर्ह्यज्ञानस्य विषयाऽश्रितत्वसिद्धौ तदन्यथानुपपत्त्या तस्य प्रतिपुरुषनियतत्वसिद्धिः । तत्सिद्धौ च तर्कपराहत्य-भावेनानुमानाद् विषयाऽश्रितत्वसिद्धिरित्यन्योन्याश्रय इत्याह- अज्ञानस्येति ।। नन्वावरकत्वा-न्यथानुपपत्त्या विषयाश्रितत्वं सिद्ध्यतीत्याशङ्क्याऽह- विषयाच्छादनं त्विति ।। ननु शुक्त्यादौ रजतादिविक्षेपान्यथानुपपत्त्या तदुपादानभूताज्ञानस्य विषयाश्रितत्वसिद्धिरित्याह- आरोप्येति ।।

यद्वा ननूक्तानुमानेन विषयाश्रितत्वाङ्गीकारे अन्योन्याऽश्रयः स्यात् । न चैवम् । किं नाम । अज्ञानस्य शुक्त्यादिविषयाच्छादकत्वान्यथानुपपत्त्या रजताद्युपादानत्वान्यथानुपपत्त्या वा विषयाऽश्रितत्वसिद्धौ तस्य प्रतिपुरुषनियतत्वाङ्गीकारादित्यत आह- विषयाच्छादनमिति ।। विज्ञानस्येति ।। आत्माऽश्रिताज्ञाननिवर्तकत्वेनेति शेषः ।

### द्वैतद्युमणि

प्रकाशस्वभावमिति ।। वृत्तेरज्ञाननिवर्तकत्वसामर्थ्यबोधनायेदम् । सावयवमिति परिणाम-विशेषसम्भवोपपादनाय ।

तथा च देहस्थान्तःकरणभागोऽहङ्काराख्यः कर्तेत्युच्यते । तत्प्रतिबिम्बितं तदवच्छिन्नं वा जीवचैतन्यं प्रमातृ । देहविषयमध्यभागस्थपरिणामो वृत्तिर्दण्डाकारा ज्ञानरूपक्रिया । तत्प्रतिबिम्बितं तदवच्छिन्नं वा चैतन्यं प्रमाणम् । विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसम्पादकमभि-व्यक्तियोग्यत्वमित्युच्यते । तत्प्रतिबिम्बितं तदवच्छिदन्नं वा चैतन्यं प्रमितिः । प्रमेयं त्वज्ञानं ब्रह्मचैतन्यं विषयगतम् । तदेव ज्ञातं सत्फलम् । फलं नाम भग्नावरणा चित्, तत्सम्बन्धश्च ।

### श्रीराघवेन्द्रतीर्थ

प्रमाणमस्तीति ।। प्रकाशनिवर्त्यतमोवद्विरोधिज्ञाननिवर्त्यत्वरूपं प्रमाणमित्यर्थः । शुक्त्याद्यवच्छिन्नेति । चैतन्यं ह्यपरिच्छिन्नं सत्सर्वपदार्थाधिष्ठानतया वर्तत इति १शुक्तिरज्ज्वादि-वृत्तिभिरवच्छिन्नं तदाक्रान्तमस्तीति तदाश्रितत्वाङ्गीकारादित्यर्थः । तस्योपयोगमाह- अवश्य-ञ्चेति ।। तद्रूपमिति । शुक्तिरज्ज्वादिरूपमित्यर्थः । नेदमिति । इदमापादनमित्यर्थः । बहिर्निर्गमे हेतुः प्रकाशस्वभावमिति । परिणामे हेतुः सावयवमिति ।। इन्द्रियादीति ।। सन्निकर्षदेश-कालादिरादिपदार्थः । यथा तटाकोदकं छिद्रान्निर्गत्य कुल्याद्वारा केदारान् प्रविश्य चतुष्कोणा-द्याकारं भवति, तथाऽन्तःकरणमपि चक्षुरादिगोलकाद् बहिर्निर्गत्य रश्मिद्वारा ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणतं सत् विषयो यदाकारस्तदाकारतया तं सर्वतोऽभिव्याप्य परिणमते । सेयमन्तःकरणवृत्तिरित्युच्यते । १तदा तदवच्छिन्नचैतन्यगताज्ञाननिवृत्तेरित्यर्थः । अत एवेति ।। अज्ञानस्य घटादिविषयाविच्छन्नाश्रयत्वाङ्गीकारादेवेत्यर्थः । प्रसङ्गश्चेति ।। 'अन्यथा २घटाकार-स्यापि' इत्यादिना प्रागुक्तप्रसङ्गश्चात एव प्रत्यूढ इत्यर्थः । तदिदमिति ।। विषयावच्छिन्न-चैतन्याऽश्रितमज्ञानं, तत् विषयसन्निकृष्टज्ञानेन निवर्तत इत्येतदुभयमित्यर्थः । अनुमानस्येति ।। अज्ञानं विषयाऽश्रितं ज्ञानरूपप्रकाशनिवर्त्यत्वादालोकरूपप्रकाशनिवर्त्यतमोवदिति 'ननु यथा' इत्यादिना प्रागभिप्रेतानुमानस्येत्यर्थः । सामग्र्यभावाद्युक्तमज्ञातत्वमित्यत आह- इन्द्रियेति ।। सामग्रीमतामप्यपूर्ववस्तुस्वरूपं न ज्ञायते । तन्न स्यादित्यर्थः । अन्योन्याऽश्रयतेति ।। सिद्धे च विषयाश्रयत्वे ज्ञातत्वाज्ञातत्वनिर्वाहकप्रतिपुरुषनियताज्ञानकल्पनम् । सिद्धे च तस्मिन् बाधका-भावाद् विषयाऽश्रयत्वकल्पनमित्यन्योन्याऽश्रयतेत्यर्थः । विषयस्य सर्वैरज्ञातत्वान्यथानुपपत्त्या किञ्चिद्विषयाच्छादनं कल्पयता विषयाऽश्रितमज्ञानमवश्यम् उपेयमित्यत आह- विषयेति ।। आरोप्योपादानतया कल्प्यमज्ञानमित्युक्तमित्यत आह- आरोप्येति ।। 'मिथ्याशब्दोऽनिर्वचनीयं वदति' इत्येतद्व्याख्यानावसरे उपपादितत्वादित्यर्थः । तद्रूपम् शुक्त्यादिस्वरूपम् । विषयसन्निकर्षेणैवेति ।। विषयसम्बद्धस्यैवेति यावत् । अज्ञानसमानाश्रयस्यैव ज्ञानस्य तन्निवर्तकत्वेन । व्यधिकरणस्य तदभावादिति भावः । घटाज्ञानस्येति ।। अनुमानेऽप्रयोजकताशङ्कायामुक्तो यो ३विपक्षबाधकतर्कः सोऽपि प्रत्यूढो निराकृत इत्यर्थः । इष्टापत्तेरिति भावः ।

### गुरुराजीया

अज्ञानस्य ४ज्ञातृपुरुषगतत्वाभावसाधकानुमानस्य प्रतिपक्षमाशङ्कते- नन्विति ।। अज्ञानं ज्ञातव्याश्रितं ज्ञानप्रतिबन्धकत्वात् तमोवदित्यनुमानमनेनोक्तं भवति । विषयसम्बद्धस्य तमसो ज्ञानप्रतिबन्धकत्वासिद्धेः कथमत्र दृष्टान्तत्वमित्यतस्तदुपपादयति- प्रकाशस्थेनेति ।। एवमन्वय-मुपपाद्य व्यतिरेकं चोपपादयति- अन्धकारस्थितेनापीति ।। तद्रूपमाच्छाद्येति ।। अज्ञानस्य विषय-गतत्वाभावे तद्रूपाच्छादकत्वायोगात् रजतादिरूपान्तरोपादानत्वासम्भवाच्च विषयगतत्व-मावश्यकमिति भावः । अन्तःकरणस्य क्षणमात्रेण व्यवहितध्रुवाद्याकारेण परिणामः कथ-मित्यतस्तदुपपादनार्थं प्रकाशस्वभावमित्यादिको ग्रन्थः । अन्तःकरणे ध्रुवादिपर्यन्तम् अविच्छिन्न-प्रभाऽऽकारेण परिणमत इति सम्बन्धः । तत्र को हेतुरित्यत आखण्डलाधिष्ठितकाष्ठायां सहस्रांशूदयमात्रेण तत्किरणानां मन्दिरे व्याप्तिदर्शनात् तेजसोऽतिदूरगमनशक्तिमत्त्वात् तदुपपत्तिरिति भावेन तेजसोऽतिदूरगमने अन्तःकरणस्य किमायातमित्यतस्तस्य तैजसतां दर्शयति- प्रकाशस्वभावमिति ।। अत एव चक्षुरादिसूक्ष्मद्वारा बहिर्निःसरणं तस्येति द्रष्टव्यम् । प्रकाश-स्वभावत्वेऽप्यात्मनो न परिणामो दृष्टः । तत्कथमस्य परिणाम इत्यत उक्तम्- सावयवमिति ।। कदाचिदेव कस्मिंश्चिदेव

विषयेऽन्तःकरणस्य परिणामे को हेतुरित्यत उक्तम्- अदृष्टेति ।। आलोक आदिशब्दार्थः । प्रतिपादनफलमाह- परिणमत इति ।। ननु नानेनानुमानेनाज्ञानस्य विषयाश्रितत्व-सिद्धिः । अज्ञानं न विषयाश्रितमज्ञानत्वाद् घटाज्ञानवदिति प्रागुक्तानुमानविरोधादित्यत आह- अत एवेति ।। शुक्त्यज्ञानस्य शुक्त्यवच्छिन्नचैतन्याश्रितत्ववत् घटाज्ञानस्यापि तदवच्छिन्नचैतन्या-श्रितत्वाङ्गीकारेण दृष्टान्तस्य साध्यविकलत्वादेवेत्यर्थः । तदाश्रयत्वप्रसङ्गश्चेति ।। प्रत्यूढ इति सम्बन्धः । इष्टापत्तेरिति भावः । तथा चानुकूलतर्काभावेऽप्रयोजकमनुमानमिति भावः । तर्कपराहति-भावाभावाभ्यां वैषम्येणासमानबलत्वान्नायं प्रतिपक्ष इत्यभिप्रेत्य तमाह- तदिदमसदित्यादिना ।। एकेन ज्ञातस्येति ।। याथात्म्येन ज्ञातस्येत्यर्थः । नन्वसत्यां सामाग्र्यां प्रतिबन्धकाभावमात्रेणान्यत्र कार्यादर्शनेन ज्ञानप्रतिबन्धकाविद्यानिरासेऽपि ज्ञानसामग्रीविरहान्न प्रतिबन्धकाभावमात्रेण कार्यापादनं युक्तमित्यत आह- इन्द्रियेति ।। अन्यथाऽधिष्ठानज्ञानविरहात् तत्र पाषाणत्वा-द्यारोपोऽपि न स्यादिति भावः । ननु प्रतिबन्धकाभावसहकृतज्ञानसामग्रीसद्भावेऽपि ज्ञानानुत्पादः किं न स्यात् । विपक्षे बाधकाभावेनाप्रयोजकत्वादित्यतो बाधकमाह- न हीति ।। अन्यथा तदपि स्यादिति भावः । ननु विषयाश्रिताज्ञानबहुत्वाङ्गीकाराद् एकेन पुरुषेण याथात्म्येन ज्ञात-स्यान्यैरज्ञातत्वं युज्यत एव । तज्ज्ञानेन विषयाश्रितैकाज्ञाननिवृत्तावप्यज्ञानान्तरस्य सद्भावेन तद्बलेनाज्ञातत्वाविरोधादित्यतो विषयाश्रिताज्ञानबहुत्वं वदन् प्रष्टव्यः, किं तानि सर्वाणि सर्वान् प्रति ज्ञानप्रतिबन्धकतयाऽङ्गीक्रियते, उत प्रतिपुरुषनियतानीति विकल्पं मनसि निधायाऽद्यं दूषयति- तर्हीति ।। विषयाच्छादकबहुयवनिकासत्त्वस्थले एकयवनिकापगमेऽपि यवनिकान्तरेण विषयाच्छादनस्यैव दृष्टत्वेन विषयाश्रिताज्ञानबहुत्वपक्षे एकस्याज्ञानस्य नष्टत्वेऽप्यज्ञानान्तरसत्त्वेन तेनैव विषयाच्छादनस्य प्राप्तत्वात् येनापि घटो ज्ञायते तस्यापि घटज्ञानाभावप्रसङ्गादिति भावः । द्वितीयं शङ्कते- प्रतिपुरुषनियतानीति ।। तथा च पुरुषान्तरनियताज्ञानसत्त्वेऽपि तत्पुरुषनियता-ज्ञानस्य निवृत्तत्वान्न तं प्रत्यज्ञातत्वप्रसङ्ग इति भावः । अदृष्टेति ।। प्रतिपुरुषनियत-तमसोऽदर्शनादिति भावः । अज्ञानस्य विषयाश्रितत्वसिद्धिमूलकत्वादुक्तकल्पनाया न तत्कल्पनेऽ-दृष्टकल्पनाप्रसङ्ग इत्यत आह- परस्परेति ।। अज्ञानस्य विषयाश्रितत्वसिद्धौ तदन्यथानुपपत्त्या तस्य प्रतिपुरुषनियतत्वसिद्धिः । तत्सिद्धौ च तर्कपराहत्यभावेनानुमानविषयाच्छादकत्वसिद्धिरिति परस्पराश्रयत्वप्रसङ्गादित्यर्थः । ननु विषयानाश्रितत्वे तदाच्छादकत्वानुपपत्त्या तदाच्छादकत्वयुक्त्यैव तदाश्रितत्वसिद्धेः परस्परसिद्ध्यनपेक्षत्वान्न परस्पराश्रयत्वप्रसङ्ग इत्यत आह - विषयाच्छादनं त्विति ।। विवक्षितार्थेऽनुगुणदृष्टान्तकथनम्- नयनपटलैरिवेति ।। अन्यथा विषयाच्छादकत्वयुक्त्या नयनपटलानामपि विषयाश्रितत्वापत्त्या द्रष्टृपुरुषगतत्वाभावप्रसङ्गादिति भावः । अस्तु तर्हि शुक्त्यादौ रजताद्यारोपानुपपत्त्या तदुपादानभूताज्ञानस्य विषयाश्रितत्वसिद्धिरित्यत आह- आरोप्येति ।। उक्तमर्थं निगमयति- तदेवमिति ।।

### गोविन्दीया

यथेति ।। प्रकाशेन समान एवाऽश्रयो यस्य तत् तमः, तेन प्रकाशेन निवर्तते, न तु विरुद्धाश्रयमित्यर्थः । तथेति ।। प्रतिबन्धकत्वाविशेषात् तमोवत् ज्ञानप्रतिबन्धकेन अज्ञानेनापि विषयाश्रयेण भवितुं युक्तमिति विषयाश्रयत्वेऽपि अज्ञानस्य, अज्ञानं विषयाश्रितं ज्ञान-प्रतिबन्धकत्वात् तमोवत् इत्यनुमानप्रमाणमस्तीत्यर्थः । अवश्यमिति ।। एतच्छुक्त्याद्यवच्छिन्न-चैतन्याश्रयत्वोररीकरणम् अवश्यमेव । एवं सति शुक्त्याद्यवच्छिन्नचैतन्याश्रयं खल्वज्ञानं तद्रूपं शुक्तिरूपम् आच्छाद्य रजतादिरूपान्तरोपादानकारणं भवितुं युक्तमित्यर्थः । एवमिति ।। यद्येवं तमोवत् विषयाश्रितस्यैव अज्ञानस्य ज्ञानप्रतिबन्धकत्वे तर्हि तमोनिवर्तकप्रकाशवत् ज्ञानस्यापि विषयसम्बन्धेनैवाज्ञाननिवर्तकत्वप्रसङ्ग इति चेदित्यर्थः । नेदमिति ।। प्रकाशदृष्टान्तेन विषयसन्निकृष्टस्यैव ज्ञानस्याज्ञाननिवर्तकत्वापादानम् अनिष्टमुभयोर्विशेषादित्यर्थः । विशेषमेवोप-पादयति- प्रकाशस्वभावमिति ।। प्रकाशस्वभावं सावयवम् अन्तःकरणम् अदृष्टेन्द्रियादिसहकृतं सत् ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणमत इत्यङ्गीकारात् प्रकाशस्य अन्तर्बहिर्व्याप्तत्वेन विषयमाश्रित्यैव तमोनिवर्तकत्वोपपत्तेः । ज्ञानस्य तु अन्तर्व्याप्तत्वेन बहिर्व्याप्तत्वाभावाद् विषयं व्याप्यैव अज्ञाननिवर्तकत्वं नोपपद्यत इत्यर्थः । अत एवेति ।। अज्ञानस्य शुक्त्यवच्छिन्न-चैतन्याश्रितत्वादेव जडत्वाविशेषात् तस्य च घटावच्छिन्नचैतन्याश्रितत्वमङ्गीकर्तव्यम् । तथा च न हि अज्ञानस्य घटाश्रयत्वम् इति वाक्येन अज्ञानस्य घटाश्रयत्वाभावरूपः योऽयं दृष्टान्त उपपादितः सः प्रत्युत्तरासमर्थ इत्यर्थः । घटेति ।। शुक्त्यज्ञानस्यापि शुक्त्याश्रितत्वे घटाज्ञानस्यापि घटाश्रयत्वप्रसङ्गश्च प्रत्यूढः । शुक्त्यादिस्थिताज्ञानस्य तत्रस्थचैतन्याश्रितत्वाङ्गीकारादिष्टापादन-त्वाद् असमर्थ इत्यर्थः । तदिति ।। तदिदम् अज्ञानविषयाश्रयत्वोपपादनमसदित्यर्थः । अनुमान-स्येति ।। अज्ञानं विषयाश्रितं ज्ञानप्रतिबन्धकत्वात् तमोवत् इत्यनुमानस्य तर्कपराहतत्वादि-त्यर्थः । तर्कपराहतत्वमेवोपपादयति - तथा हीति ।। घटयाथात्म्यज्ञानेन घटयथास्वरूपज्ञानेने-त्यर्थः । इन्द्रियेति ।। अन्येषामिन्द्रियसन्निकर्षादिसामग्रीसद्भावाच्चेत्यर्थः । अज्ञानेति ।। विषयाश्रिताज्ञानानां बहुत्वाद् एवमन्यैः दर्शनं नेति चेदित्यर्थः । प्रतिपुरुषमिति ।। तानि विषयाश्रितानि अज्ञानानि प्रतिपुरुषं प्रतिनियतानि नियमेन आस्थितानि, इति चेदित्यर्थः । अज्ञानस्येति ।। अज्ञानस्य विषयाश्रितत्वाद् एवं कल्पने प्रतिपुरुषनियतत्वकल्पने अन्योन्या-श्रयता । तथा हि अज्ञानस्य विषयाश्रितत्वसिद्धौ प्रतिपुरुषनियतत्वसिद्धिः, तत्सिद्धौ तत्सिद्धिः, इन्यन्योन्याश्रयता स्यादित्यर्थः । विषयाच्छादकत्वान्यथानुपपत्त्या अज्ञानस्य विषयाश्रितत्वसिद्धौ प्रतिपुरुषनियतत्वमङ्गीक्रियत इत्याशङ्क्योत्तरमाह- विषयाच्छादनं त्विति ।। विषयाश्रितत्वा-भावोऽपि पुरुषाश्रितैरेव अज्ञानैः नयनपटलादिवत् विषयाच्छादनं युक्तमित्यर्थः । रजताद्युपादान-त्वान्यथानुपपत्त्या ज्ञानस्य विषयाश्रितत्वमङ्गीक्रियत इत्याशङ्क्य परिहारमाह- आरोप्येति ।। आरोप्यरजताद्यसत्त्वस्य प्रतिपादितत्वात् तस्य रजतादेः उपादानकारणापेक्षा नास्ति । सत एव कार्यस्योपादानकारणापेक्षेत्यर्थः । तदेवमिति ।। तत् तस्मात् एवम् उक्तरीत्येत्यर्थः ।

### नारोपन्तीया

अदृष्टकल्पनाप्रसङ्गादिति ।। अन्धकाराद्यावरणस्य प्रतिपुरुषनियतत्वादर्शनादिति भावः ।

#### जनार्दनभट्टीया

प्रमाणमस्तीति ।। 'अज्ञानं विषयगतं विषयज्ञानप्रतिबन्धकत्वात् । यद् यदज्ञानप्रतिबन्धकं तत् तद्गतम् । यथा घटज्ञानप्रतिबन्धकं तमः' इत्यनुमानरूपप्रमाणमित्यर्थः । एतदेवमिति ।। एतत् = अज्ञानम्, एवं = विषयावच्छिन्नचैतन्याश्रितमित्यर्थः । भवितुं युक्तमिति ।। भिन्नदेशस्थितस्य देशान्तरीयकार्यं प्रति उपादानत्वायोगादिति भावः । अन्तःकरणस्य ध्रुवादिदेशपर्यन्तं परिणामे सामर्थ्यमुपपादयति – प्रकाशस्वभावमिति ।। दृष्टो हि वाय्वतिशयेन तेजसो वेगातिशयः । यदुदयाचलशिखरावलम्बिन्येव मयूखमालिनि भुवनोदरेषु आलोकः प्रसरतीति भावः । निरवयवत्वे परिणामानुपपत्तेः । सावयवमिति ।।

ननु सर्वेषां अन्तःकरणस्य ध्रुवादिदेशपर्यन्तं परिणामाङ्गीकारे सर्वेषामपि दूरदर्शित्वापत्तिरित्यत आह – अदृष्टेन्द्रियादीति ।। पुरुषविशेषाणां तु अदृष्टेन्द्रियाभावात् न दूरदर्शित्वमिति भावः । अत एवेति ।। अज्ञानस्य विषयावच्छिन्नचैतन्याश्रयत्वस्य अङ्गीकारादेवेत्यर्थः । प्रत्यूढः=निरस्त इत्यर्थः । तदाश्रयत्वप्रसङ्गश्चेति ।। 'प्रत्युत' इति पूर्वेणान्वयः । अनुमानस्येति ।। 'अज्ञानं विषयगतं विषयज्ञानप्रतिबन्धकत्वात्, तमोवत्' इत्यनुमानस्येत्यर्थः । अनुच्छेदप्रसङ्ग इति ।। अधिष्ठानयाथात्म्यज्ञानातिरिक्तस्य अज्ञाननिवर्तकत्वस्य अभावादिति भावः । 'विषयाश्रयं चेदज्ञानम्' इति मूले अज्ञाननिवर्तकस्य अनुक्तेः तत्कथनपूर्वकं मूलं तर्कपरतया योजयति – यदीत्यादिना ।। अन्योन्याश्रयतेति ।। अज्ञानस्य प्रतिपुरुषनियतत्वसिद्धौ विषयाश्रितत्वसिद्धिः । विषयाश्रितत्वसिद्धौ प्रतिपुरुषनियतत्वसिद्धिरिति अन्योन्याश्रयतेति भावः । 'यथा तमो विषयसम्बद्धम्' इत्याद्युक्तं दूषयति– विषयाच्छादनं त्विति ।। 'अवश्यं चैतदेवम्' इत्याद्युक्तं दूषयति – आरोप्यासत्वस्येति ।।

### विषयाऽश्रयं चेदज्ञानं..

**आत्मज्ञानस्याऽत्माविषयकत्वे तेनात्माज्ञानाऽनिवृत्त्यापादनम्**

***विषयाऽश्रयं चेदज्ञानं***

#### श्रीमज्जयतीर्थटीका

किञ्च अस्तु वा आत्माज्ञानम् । तथाऽपि न वेदान्तवाक्यजनितविज्ञानस्याऽत्मज्ञानत्वं सम्भवति । तस्यानात्मविषयत्वेन तन्निवर्तकत्वायोगात् । यद्विषयं हि यद्विज्ञानं तदेव तदज्ञानं निवर्तयदुपलब्धम् ।

#### श्रीविजयीन्द्रभिक्षु

अनात्मविषयत्वेनेति ।। आत्मविषयकत्वरहितत्वेनेत्यर्थः । एवमग्रेऽपि ।

#### श्रीवेदेशतीर्थ

अनात्मविषयत्वेनेति ।। आत्मविषयत्वरहितत्वेनेत्यर्थः । एवमग्रेऽपि ।

#### श्रीराघवेन्द्रतीर्थ

अनात्मेति ।। १आत्माविषयत्वेनेत्यर्थः ।

#### जनार्दनभट्टीया

तस्य अनात्मविषयत्वेनेति ।। वेदान्तवाक्यजन्यज्ञानस्य सत्यज्ञानादिपदप्रवृत्ति-निमित्ततत्तद्गुणादिविशिष्टविषयत्वेन भिन्नविषयतया शुद्धाज्ञाननिवर्तकत्वासम्भवादिति भावः ।

### अतद्विषयज्ञानेन..

**आत्माविषयकस्याऽत्मज्ञानस्याऽत्माज्ञाननिवर्तकत्वे घटज्ञानस्यापि तन्निवर्तकत्वाऽपादनम्**

### श्रीमज्जयतीर्थटीका

अथानात्मविषयमपि तद् आत्माज्ञानं निवर्तयेत् हन्त तर्हि घटज्ञानमपि कस्मान्न निवर्त-येत् । अनात्मविषयत्वाविशेषादित्याह-

### मूल

***अतद्विषयज्ञानेन तदज्ञाननिवृत्तौ घटज्ञानेनापि निवर्तेत ।***

आत्माज्ञानमिति शेषः ।

### अविषयत्वादेव तस्य ..

**आत्मज्ञानस्य निर्विषयत्त्वे ज्ञानत्वाभावाऽपादनम्**

### श्रीमज्जयतीर्थटीका

ननु घटादिज्ञानं घटादिविषयेण ग्रस्तं कथमात्माज्ञानं निवर्तयेदिति चेत्तत्किं इदानीं वेदान्तवाक्यजनितविज्ञानं निर्विषयमेव । बाढमिति चेत्तत्राऽह-

### मूल

***अविषयत्वादेव तस्य ज्ञानत्वञ्च न स्याद्घटवत् ।***

न विद्यते विषयो यस्य तदविषयम् ।

### श्रीविजयीन्द्रभिक्षु

नन्वनात्मविषयकमपि ज्ञानमात्माज्ञाननिवर्तकमेव । ‘तरति शोकमात्मवित्’ इत्यादिश्रुत्या तथा बोधनादित्याशयेन शङ्कते- अथेति ।। श्रुतिप्रतीताज्ञाननिवर्तकत्वनिर्वाहायैव ज्ञानस्य तद्विषयत्वमपि वाच्यम् । लोके तथा क्लृप्तत्वात् । अन्यथा यागव्यापारत्वेनापूर्वकल्पनमपि न स्यादिति भावेन परिहरति- हन्तेति ।। तदविषयकस्य ज्ञानस्य तदज्ञाननिवर्तकत्वे घटादिज्ञानेष्वपि तथात्वप्रसङ्गः । न चेष्टापत्तिः । विशिष्टज्ञानसमूहालम्बनाभ्यां विशेषणाद्यज्ञानानिवृत्तिप्रसङ्गादित्यपि द्रष्टव्यम् ।

श्रीवेदेशतीर्थनन्वात्माज्ञाननिवर्तकत्वे तदन्याविषयकत्वमेव तन्त्रम् । घटादिज्ञानं चान्यविषयमिति न तेन तन्निवृत्तिप्रसङ्ग इति शङ्कते- नन्विति ।।

निर्विषयमेवेति ।। सविषयत्वे किमात्मविषयमुत तदन्यविषयम् । आद्ये दृश्यत्वहेतोर्व्यभिचारः । द्वितीये कथमन्यविषयकमात्माज्ञानं निवर्तयेदिति भावः ।

### श्रीराघवेन्द्रतीर्थ

अविषयत्वादेवेत्यस्य तत्पुरुषत्वभ्रान्तिं निराह - न विद्यत इति ।। तस्य भावस्तस्मादिति व्यक्तत्वान्नोक्तम् ।

अनात्मविषयमपि तदिति । आत्माविषयकमपि तत् वेदान्तवाक्यजन्यं ज्ञानमित्यर्थः । अस्य शशविषाणादिज्ञानस्य । अन्यः शशविषाणात् ।

### गुरुराजीया

ननु दृष्टान्ताभावेनोक्तविधयाऽपाद्यापादकयोः व्याप्त्यसिद्ध्या मूलशैथिल्यात् तर्का-भासत्वमित्यतो विशेषव्याप्तेरभावेऽपि ‘यदविशिष्टस्य यस्य यद्वत्ति तदविशिष्टस्यापरस्यापि तत्’ इत्यविशेषलक्षणसामान्यव्याप्तेरविकलतया तन्मूलकत्वाद्युक्तस्तर्क इत्याशयेनाऽह- अनात्म-विषयत्वाविशेषादिति ।।

नन्वात्माज्ञाननिवर्तकत्वे तदन्याविषयकत्वमेव तन्त्रम् । घटादिज्ञानं चान्यविषयमिति वैषम्या-न्नाविशेषलक्षणा व्याप्तिरित्याशयेन शङ्कते- नन्विति ।। ग्रस्तमिति ।। तद्विषयकमित्यर्थः । निर्विषयमेवेति ।। सविषयत्वे किमात्मविषयमुत तदन्यविषयकम् । आद्ये आत्मनि व्यभिचारः । द्वितीये आत्माज्ञाननिवर्तकत्वानुपपत्तिप्रसङ्गादिति भावः ।

### गोविन्दीया

तत्किमिति ।। दृक्कर्मत्वानुपपत्त्या विषयत्वाभावात् यत्किञ्चिद्विषयमादाय सविषयत्वे तस्य विषयग्रस्तत्वेन आत्माज्ञाननिवर्तकत्वायोगाद् इदानीं तद्वेदान्तवाक्यजनितं विज्ञानं निर्विषय-मेव किमित्यर्थः ।

### जनार्दनभट्टीया

हन्त तर्हीति ।। घटज्ञानम् आत्माज्ञानं कस्मात् न निवर्तयेत्? इति पूर्वेण सम्बन्धः । घटज्ञानस्य आत्माज्ञानानिवर्तकत्वं न भिन्नविषयत्वप्रयुक्तम् । किन्तु मिथ्याभूतविषयावच्छिन्नत्व-प्रयुक्तमित्याशङ्कते – नन्विति ।। इदानीमिति ।। संसारदशायामित्यर्थः । बाढं = सत्यमित्यर्थः ।

विषयो न भवतीत्यविषयमित्यर्थस्य प्रकृतासङ्गतत्वादाह – न विद्यत इति ।।

## अविषयत्वादेव तस्य..

**शशविषाणादिज्ञानस्य सविषयत्वोक्तिपुरःसरं दृश्यत्वहेतुदूषणोपसंहारः**

*अविषयत्वादेव तस्य*

### श्रीमज्जयतीर्थटीका

ननु कथमेतत् । यावता शशविषाणादिपदश्रवणादविषयमेव ज्ञानमुत्पद्यते । न हि शश-विषाणादिकमस्ति । न चास्यान्यो विषयः सम्भवति । मैवम् । न ह्यत्रासद्विषयत्वमविषयत्व-मित्यभिमतम् । किन्नाम निरालम्बनत्वम् । न हि तथा शशविषाणादिज्ञानम् । तथात्वे शशविषाणादिज्ञानमित्येव न स्यात् ।

तदेवं कयाऽपि विधया आत्मनो दृक्कर्मत्वाभावेन वेदान्तवाक्यजनितविज्ञानमात्मज्ञानं भवतीति तत्सिद्धयेऽवश्यमात्मनो दृक्कर्मत्वेऽङ्गीकार्ये तस्यानैकान्तिकत्वं सिद्धम् ।

### श्रीविजयीन्द्रभिक्षु

अविषयत्वादित्यस्यासद्विषयत्वादित्यर्थं मत्वा शङ्कते- नन्विति ।। एतदिति ।। निर्विषयत्वे ज्ञानमेव न स्यादित्येतदित्यर्थः । निरालम्बनत्वं विषयानुल्लेखित्वम् । परमप्रकृतमात्मनि दृश्यत्वहेतोरनैकान्तिकत्वं सहेतुकमुपसंहरति- तदेवमिति ।। फलव्याप्यत्वादिदूषणं तु न्यायामृते अस्मत्कृतटीकायां विस्तृतमिति सङ्ग्रहे आधिक्यान्नेह लिख्यते ।

### श्रीवेदेशतीर्थ

अविषयत्वादित्यस्यासद्विषयत्वादित्यर्थं मत्वा शङ्कते- नन्विति ।। एतदिति ।। निर्विषयत्वे ज्ञानत्वमेव न स्यादित्येतदित्यर्थः। निरालम्बनत्वं विषयानुल्लेखित्वम् ।

### द्वैतद्युमणि

कयाऽपि विधयेति ।। इदं न भवतीत्युत्तरान्वयि । दृक्कर्मत्वाभावेन । दृक्कर्मत्वाभावे इति छेदः । नञो भवतीत्यनेनान्वयः ।

### गुरुराजीया

अविषयत्वं नामासद्विषयत्वमिति सम्भ्रान्तश्चोदयति- नन्विति ।। एतदिति ।। निर्विषयत्वेन ज्ञानत्वाभावापादनमित्यर्थः । तथा सति तज्ज्ञानस्याप्यसद्विषयकत्वेन ज्ञानत्वाभावा-पातादिति भावः । निरालम्बनत्वमिति । विषयानुल्लेखित्वमित्यर्थः । कयाऽपि विधयेति ।। तदाकारत्वतदज्ञाननिवर्तकत्वादिशङ्कितप्रकारेणेत्यर्थः ।

### गोविन्दीया

कथमेतदिति ।। अविषयत्वे ज्ञानत्वाभावः कथमित्यर्थः । यावतेति ।। विभक्ति-परिणामेन श्रवणादिति पञ्चम्यन्तं तत्पदस्य विशेषणम् । अत्रेति ।। अविषयत्वादिति वाक्ये इत्यर्थः। न हीति ।। शशविषाणादिज्ञानं तथा न हि निरालम्बनम् न हि । किन्तु सालम्बनमेवेत्यर्थः । तथात्व इति ।। निरालम्बनत्वे इत्यर्थः । तदेवमिति ।। तत् तस्मात् विपक्षस्याऽत्मनो दृश्यत्वात् तस्य दृश्यत्वस्य हेतोः एवम् उक्तरीत्याऽनैकान्त्यं सिद्धमित्यर्थः ।

### जनार्दनभट्टीया

अविषयमेवेति ।। विषयरहितमित्यर्थः । किन्नाम निरालम्बनत्वमिति ।। निरूपक-शून्यत्वमित्यर्थः । शशविषाणादिज्ञानमित्येवेति ।। निरूपकशून्यत्वे शशविषाणस्य ज्ञानमिति षष्ठीघटितव्यवहारो न स्यादित्यर्थः । 'एव' इत्यनेन आपाद्यस्य अनिष्टतां सूचयति ।

## जडत्वं चाप्रमातृत्वमेव ..

**अप्रमातृत्वस्य जडत्वे आत्मनि व्यभिचारोपपादनम्**

### श्रीमज्जयतीर्थटीका

अथ जडत्वस्यापि हेतोरनैकान्तिकतां विवक्षुराह-

## मूल

*जडत्वं चाप्रमातृत्वमेव ।*

चशब्दो यस्मादित्यर्थे । चेत्यता जडत्वमित्यङ्गीकारे दृश्यत्वजडत्वयोर्भेदो न स्यात् । किमत इत्यत आह-

**मूल**

*न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते ।*

अत्रापि चशब्दो हेत्वर्थः । तैरिति प्रपञ्चमिथ्यात्ववादिभिः । प्रमातृत्वस्य प्रमाणप्रमेयसिद्धि-साहित्यनियतत्वात्तदङ्गीकारे तयोरप्यङ्गीकारप्रसङ्गान्नाऽत्मनः प्रमातृत्वं परैरङ्गीक्रियते । ततोऽपि किमित्यत आह-

**मूल**

*अतस्तदप्यनैकान्तिकम् ।*

यस्मात्प्रमातृत्वाभाव एव जडत्वं यतश्चाऽत्मनः प्रमातृत्वं परेण नाङ्गीक्रियते अतो दृश्यत्व-वज्जडत्वमप्यात्मनि विपक्षे वर्तमानमनैकान्तिकं भवति ।

इयांस्तु विशेषः । यद्दृश्यत्वं वादिप्रतिवादिनोरनैकान्तिकम् । आत्मनो दृश्यत्वस्य परं प्रत्युप-पादितत्वात् । जडत्वं पुनर्मायावादिन एव । तत्त्ववादिना आत्मनः प्रमातृत्वस्याङ्गीकारात् । अत एव तैरित्युक्तम् ।

ननु पारमार्थिकमेव प्रमातृत्वमात्मनो मया नाङ्गीक्रियते । तस्यैवाद्वैतप्रतिपक्षत्वात् । मिथ्याभूतं तूपादीयत एव । अन्यथा संसारानिरूपणात् । तत्कथमात्मनि जडत्वमनैकान्तिकमित्यत आह-

**मूल**

*मिथ्याप्रमातृत्वञ्चानिर्वचनीयनिरासादेव निरस्तम् ।*

मिथ्येति तावदनिर्वचनीयं वक्तुं न शक्यते । तस्याप्रामाणिकत्वादिना निरस्तत्वात् । ततो मिथ्येत्यसत्त्वे वक्तव्ये मिथ्याप्रमातृत्वमिति आत्मनो नास्ति प्रमातृत्वमित्युक्तं स्यात् । ततश्चानैकान्त्यतादवस्थ्यम् । आत्मनि प्रमातृत्वारोपस्तावन्मयाऽङ्गीक्रियत एवेति चेत् । एवं तर्हि साङ्ख्यचार्वाकादीनामन्तःकरणादावसावस्तीति भागासिद्धिः । आरोपितेन हेत्वभावेना-नैकान्त्यपरिहारेऽतिप्रसङ्गश्च ।

### श्रीविजयीन्द्रभिक्षु

मिथ्यात्वहेतुदूषणे प्रवृत्तस्य परोक्तहेतुनिर्वचनमयुक्तमित्याशङ्क्यावतारयति- अथेति ।। पूर्वमन्यस्याप्रमातृत्वेनानिरुक्तेः जडत्वञ्चेति समुच्चयार्थकचशब्दानुपपत्तिमाशङ्क्याऽह- चशब्द इति ।। एवकारव्यवच्छेद्यं दर्शयति- चेत्यतेति ।। दृश्यत्वञ्च दूषितमिति भावः । कुतो नाङ्गीक्रियत इति हेत्वाकाङ्क्षां पूरयन् व्याचष्टे- अत्रापीत्यादिना ।। पूर्ववाक्यद्वयगतचशब्दार्थसम्बन्धं सूचयन् व्याचष्टे- यस्मादिति ।। निरासप्रकारमुपपादयति- मिथ्येति ।। आत्मनीति ।। यद्यप्यारोपितासत्त्व-व्यवस्थापनादयमपि पक्षो मिथ्यात्वपक्षदूषणेनैव निरस्तस्तथाऽपि दूषणान्तराभिधानाय पुनः शङ्केति ध्येयम् । साङ्ख्येति ।। इदमुपलक्षणम् । परस्यापि मते शरीरादौ भागासिद्धिः । 'गौरोऽहं न जानामि' इति प्रतीत्या तत्राऽरोपितप्रमातृत्वसत्त्वादिति द्रष्टव्यम् । न च धर्मिसमसत्त्वस्य प्रमातृत्वस्याभावो हेतुरिति न देहादौ १भागासिद्धिरिति वाच्यम् । तथा सति तव मते भागासिद्धिः । अतिप्रसङ्ग-श्चेति ।। वह्नौ साध्ये धूलीपटलादेरपि हेतुत्वप्रसङ्गश्चेत्यर्थः ।

### श्रीवेदेशतीर्थ

मिथ्यात्वहेतुदूषणे प्रवृत्तस्य परोक्तहेतुनिर्वचनमयुक्तमित्याशङ्क्यावतारयति- अथेति ।। पूर्वमन्यस्याप्रमातृत्वेनानिरुक्तेर्जडत्वं चेति समुच्चयार्थकचशब्दानुपपत्तिमाशङ्क्याऽह- चशब्द इति ।। एवकारव्यवच्छेद्यं दर्शयति- चेत्यतेति ।। दृश्यत्वञ्च दूषितमिति भावः । पूर्ववाक्यद्वयगतचशब्दार्थ-सम्बन्धं सूचयन् व्याचष्टे- यस्मादिति ।। ननु मायावादिना दृश्यत्वहेतोरनैकान्तिकतानङ्गीकारात्कथं वादि-प्रतिवादिनोरित्युक्तमित्यत आह- आत्मनो दृश्यत्वस्य परं प्रत्युपपादितत्वादिति ।। तस्यैवेति ।। पारमार्थिकप्रमातृत्वाङ्गीकारे तन्निर्वाहाय पारमार्थिकप्रमाणप्रमेययोरप्यङ्गीकारप्रसङ्ग इत्यर्थः । साङ्ख्यचार्वाकादीनामिति ।। अस्मन्मतेऽन्तःकरणादावात्मत्वाऽरोपो नास्त्येव ।

जातमात्रा मृगा गावः पक्षिणो हस्तिनो झषाः ।

भयाभयस्वभोगादौ कारणानि विजानते ।१

इत्याद्यनुव्याख्याने तस्य निराकृतत्वादिति भावेनैवमुक्तम् । साङ्ख्य-चार्वाकादीनामपि सत्यत्व-वादित्वेन तान् प्रत्यपि मायावादिनाऽनुमानस्य प्रयोक्तव्यत्वादिति भावः । यद्यारोपितप्रमातृत्व-मात्मन्यस्तीत्यप्रमातृत्वहेतोर्न व्यभिचारः तर्ह्यारोपितप्रमेयत्वाद्यभावस्यापि ह्रदादौ सत्त्वेनाग्निमत्त्वे साध्ये प्रमेयत्वादेरपि व्यभिचारो न स्यादित्याह- आरोपितेति ।।

### द्वैतद्युमणि

संसारेति ।। सदसद्विषयप्रमाभ्यां रागद्वेषाधीनसदसत्प्रवृत्ति१तदधीनपुण्यपापादिमूलकत्वात् संसारप्रवाहस्य तदभावे तस्यासत्वप्रसङ्गात् इत्यर्थः । तत्कथमिति ।। प्रतियोगिव्यधिकरण-प्रमातृत्वाभावस्यैव हेतुत्वानुसरणादिति भावः ।

### श्रीराघवेन्द्रतीर्थ

तदङ्गीकार इति ।। आत्मनः प्रमातृत्वाङ्गीकार इत्यर्थः । चशब्दो हेत्वर्थ इत्युक्तं व्यनक्ति- यस्मादिति ।। औतेति । प्रमाणप्रमेययोरङ्गीकारप्रसङ्गेनेति योज्यम् । अन्यथेति । मिथ्याप्रमातृत्व-स्याप्यभावेन तन्निबन्धनसुखदुःखादिभोगरूपसंसाराभावापातादित्यर्थः । भागासिद्धिरिति ।। तदभावरूपजडत्वहेतोरभावाद् देहेन्द्रियान्तःकरणेषु भागासिद्धिरित्यर्थः । आरोपितेनेति ।। अप्रमातृत्वं हि हेतुः । तदभावः प्रमातृत्वम् । स चाऽत्मन्यारोपितोऽस्तीत्यारोपितो हेत्वभावस्तत्र विपक्षेऽस्तीति नानैकान्त्यमित्युक्तौ पर्वतोऽग्निमान् प्रमेयत्वादित्यत्र ह्रदे प्रमेयत्वाभाव आरोपितोऽस्तीति सोऽपि सद्धेतुः स्यादित्यर्थः । अङ्गीक्रियत एवेति ।। प्रातिभासिकमङ्गीक्रियत एव न सत्यमिति ।

### गुरुराजीया

चेत्यत्वं जडत्वमिति तन्निर्वचनान्तरस्यापि सम्भवात्कथमप्रमातृत्वमेवेत्यवधारणमित्य-तस्तद्ग्रहणे बाधकस्य सत्त्वाद्युक्तमवधारणमिति भावेन तद्ग्रहणे बाधकमाह- चेत्यतेति ।। तथा च दृश्यत्वग्रहणेनैव प्राप्त्या पृथक् परकीयतदुक्त्ययोगादिति भावः । पूर्ववाक्यद्वयगतं हेत्वर्थ-चशब्दद्वयसम्बन्धं दर्शयन्नेव वाक्यं व्याचष्टे- यस्मादिति ।। ननु मायावादिनाऽऽत्मनो दृश्यत्वा-नङ्गीकारात् कथं दृश्यत्वहेतोरनैकान्त्यमिति विशेषकथनमित्यत आह- आत्मन इति ।। अङ्गी-कारानङ्गीकारयोः साधकबाधककथनेनेति शेषः । तस्यैवेति ।। पारमार्थिकप्रमातृत्वस्यैवेत्यर्थः । पारमार्थिकप्रमातृत्वस्य

प्रमाणप्रमेयसिद्धिसाहित्यनियतत्वेन तदङ्गीकारे तयोरप्यङ्गीकारप्रसङ्गेना-द्वैतपक्षभङ्गप्रसङ्गादिति भावः । संसारेति ।। कर्तृत्वभोक्तृत्वप्रमातृत्वाध्यासप्रवाहस्यैव संसारत्वेन तदतिरिक्तसंसाराभावादित्यर्थः । अप्रामाणिकत्वादीत्यादिशब्देन बाधकपरिग्रहः । आरोपित-प्रमातृत्वाभावस्यैव हेतुत्वेन मयाऽङ्गीकृतत्वादात्मनि चाऽरोपितप्रमातृत्वस्यैव च सत्त्वेन नानैकान्त्यमिति शङ्कते- आत्मनीति ।। एवं तर्हि मास्त्वनैकान्त्यम् । भागासिद्ध्या हेतोराभासत्वं दुर्वारमेवेत्याह- एवं तर्हीति ।। अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु नानैकान्त्यपरिहारोऽपि । तथा सति यत्रानैकान्त्यमायाति तत्र सर्वत्र आरोपितहेत्वभावेन तत्परिहारापत्त्या तद्दूषणत्ववार्ताया उच्छेदप्रसक्तेरित्याह- आरोपितेनेति ।।

### गोविन्दीया

चेत्यतेति ।। चेत्यत इदमिति चेत्यम्, तस्य भावः तत्तेत्यर्थः । प्रमातृत्वस्येति ।। प्रमातृत्वस्य धर्मस्य प्रमाणप्रमेययोः सिद्धिः ज्ञानम्, तत्साहित्येन नियमेन स्थितत्वात् तदङ्गीकारे प्रमातृत्वाङ्गीकारे प्रमाणप्रमेययोरङ्गीकारप्रसङ्गात् तयोः मिथ्यात्वत्यागभिया नाऽत्मनः प्रमातृत्वं परैरङ्गीक्रियत इत्यर्थः । इयानिति ।। उभयरीत्या दृश्यत्वमनैकान्तिकम्, जडत्वं तु मायावादि-रीत्यैवेत्यर्थः । तस्यैवेति ।। पारमार्थिकप्रमातृत्वस्यैव औतवादिनो विरुद्धत्वात् मिथ्याभूतमङ्गी-क्रियत इत्यर्थः । अन्यथेति ।। मिथ्याप्रमातृत्वानङ्गीकारे संसारानिरूपणप्रसङ्गाद् अवश्यमङ्गी-कार्यमित्यर्थः । तस्येति ।। अनिर्वचनीयस्य अप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन च निरस्तत्वादि-त्यर्थः । एवं तर्हीति ।। साङ्ख्यचार्वाकादीनाम् अन्तःकरणादौ जगदन्तःपातिनि असौ प्रमातृत्वा-रोपोऽस्तीति अप्रमातृत्वरूपहेतोरभावेन भागासिद्धिरित्यर्थः । आरोपितेनेति ।। अतिप्रसङ्गः सर्वत्र अनैकान्तिकानुमाने आरोपितहेत्वभावमादाय अनैकान्त्यपरिहारेण समीचीनत्वं वक्तुं शक्यमित्यर्थः ।

### जनार्दनभट्टीया

'अप्रमातृत्वमेव' इति एवकारव्यावर्त्यं दर्शयति – चेत्यतेति ।। 'तैः' इत्यस्य स्पष्टार्थत्वेऽपि 'नाङ्गीक्रियते' इति मूलोक्तानङ्गीकारस्फुटीकरणार्थमाह – प्रपञ्चेति ।। अनङ्गीकारहेतुमेव स्पष्टयति– प्रमातृत्वस्येति ।।

ननु 'आत्मनोऽपि दृश्यत्वात्' इति वाक्य एव आत्मनोऽपि दृश्यत्वात् जडत्वात् च अनैकान्तिकौ इति सङ्गृहीतुं शक्यत्वेन 'अतस्तदपि' इति योगविभागानुपपत्तिः इत्यत आह – इयानिति ।। एवञ्च अर्थापत्त्युपमे अनुमानविशेषः । 'सम्भवपरिशेषावनुमा' इत्यादाविव अत्रापि विशेषसूचनार्थं योगविभाग इति भावः । अन्यथेति ।। मिथ्याप्रमातृत्वस्यापि अनङ्गीकार इत्यर्थः । संसारेति ।। सुखदुःखादि-प्रमातृत्वस्य तत्समनियतधर्मस्य वा संसारत्वादिति भावः । आरोपस्तावदिति ।। आरोप एव प्रमातृत्वं तदभावरूपजडत्वाभावात् न आत्मनि अनैकान्तिकता इति भावः । असाविति ।। प्रमातृत्वारोप इत्यर्थः । आरोपितेनेति ।। आरोपितेन हेत्वभावेन अनैकान्त्योद्धारे 'वह्निमान् द्रव्यत्वात्' इत्यत्र विपक्षे ह्रदे आरोपितद्रव्यत्वाभावस्य सत्वात् अनैकान्त्यपरिहारस्य सम्भवेन सद्धेतुत्वप्रसङ्गलक्षण अतिप्रसङ्ग इत्यर्थः ।

### यदि जडत्वं..

**अप्रकाशत्वस्य जडत्वे आत्मनि व्यभिचारोपपादनम्**

### श्रीमज्जयतीर्थटीका

नाप्रमातृत्वं जडत्वम् । किं नाम अप्रकाशत्वम् । न च तदात्मन्यस्ति । तस्य ज्ञानस्वरूपत्वात् । अतः कथमनैकान्तिकमित्यत आह-

### मूल

***यदि जडत्वं नामाप्रकाशत्वं तदाऽप्यात्मनः स्वविषयप्रकाशत्वाभावात् परविषयप्रकाशत्वाभावाच्चानैकान्तिकमेव ।***

यदि जडत्वं नामाप्रकाशत्वं परोऽङ्गीकुर्यात् तदा तदप्यनैकान्तिकमेव प्रतिपत्तव्यम् । आत्मनः प्रकाशत्वायोगात् । तथा हि, योऽयमात्मस्वरूपप्रकाशोऽङ्गीक्रियते स किं सविषयो निर्विषयो वा । आद्येऽपि किं स्वविषयः परविषयो वा । नाऽद्यः । तदभावात् । न द्वितीयः । परस्यैवापरेणानङ्गीकृतत्वात् । पराभावे च परविषयत्वस्य दुर्निरूपत्वात् ।

### श्रीविजयीन्द्रभिक्षु

तदभावादिति ।। स्वस्य स्वविषयत्वानङ्गीकारादित्यर्थः । दुर्निरूपत्वादिति ।। अभावादित्यर्थः । यद्यात्मरूपज्ञानमविद्यमानपरविषयकं स्यात्तदा मोक्षेऽपि परविषयत्वापत्त्या संसाराविशेषः स्यादिति भावः ।

### श्रीवेदेशतीर्थ

तदभावादिति ।। स्वस्य स्वविषयत्वानङ्गीकारादित्यर्थः । दुर्निरूपत्वादिति ।। अभावादित्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

शङ्कते- नाप्रमातृत्वमिति ।। तदभावादिति । कर्तृकर्मभावविरोधादित्यग्रे व्यक्तम् ।

### गुरुराजीया

तदभावादिति ।। स्वस्य स्वविषयत्वाभावादित्यर्थः । १अभावे हेतोर्वक्ष्यमाणत्वादिति भावः । दुर्निरूपत्वादिति ।। सर्वाभावेन तत्सापेक्षसर्वज्ञत्वादीनां परेण ब्रह्मणि सत्त्वानङ्गी-कारादित्यर्थः । अन्यथा तेषामप्यङ्गीकारप्रसङ्गादिति भावः ।

### गोविन्दीया

तदभावादिति ।। अविषयप्रकाशस्यैवाभावात् कर्तृकर्मणोरेकत्वेन विरोधादित्यर्थः ।

### जनार्दनभट्टीया

यदि जडत्वमिति मूलावतारिकायां तस्य ज्ञानस्वरूपत्वादिति प्राप्तचोद्यस्य मूले 'आत्मनो ज्ञानस्वरूपत्वाभावात्' इति १प्रकाशत्वनिषेधाभावेन अप्रतीतेः स्वविषयप्रकाशत्वादिति विशेषनिरासेन सामान्यनिराकरणपरम् इदं मूलमिति वक्तुं मूलं योजयति – यदि जडत्वं नाम अप्रकाशत्वमित्यादिना ।। स किमिति ।। परविषयप्रकाशत्वाभावात् निर्विषयत्वाभावाच्च इत्यनिवेशस्तु निर्विषयप्रकाशत्वपक्षस्य स्फुटदूषणतया आक्षेपाक्षमत्वाद् इति ज्ञातव्यम् ।

## स्वविषयत्वं हि ..

**पररीत्या आत्मनः कर्तृकर्मभावविरोधेन स्वविषयप्रकाशत्वाभावसमर्थनम्**

### श्रीमज्जयतीर्थटीका

ननु कथमात्मनः स्वविषयप्रकाशत्वाभावः । यावता वादिप्रतिवादिभ्यां स्वप्रकाशज्ञानरूप आत्मेत्यङ्गीकृतमित्यत आह-

## मूल

***स्वविषयत्वं हि कर्तृकर्मविरोधात्तैर्नाङ्गीक्रियते ।***

आत्मप्रकाशस्येति शेषः । सत्यमस्माभिः स्वविषयप्रकाशत्वमात्मनोऽङ्गीक्रियते । परैस्तु नाङ्गीक्रियते । एकस्यां क्रियायां हि कर्तृकर्मणोरेकत्वं विरुद्धम् । परसमवेतक्रियाफलशालित्वस्य कर्मलक्षणत्वात् । अतो न स्वविषयमात्मज्ञानम् । स्वप्रकाशत्वं तु परप्रकाश्यताभावमात्रमिति परेषां प्रवादः । तदभिप्रायेण च 'आत्मनः स्वविषयप्रकाशत्वाभावात्' इत्युक्तमित्यदोषः ।२

### श्रीविजयीन्द्रभिक्षु

स्वविषयत्वमेव स्वप्रकाशत्वमिति सिद्धान्तवासनया शिष्यः पृच्छति- नन्विति ।। सत्य-मेवमस्मन्मते । परस्य तु न तथा । पराप्रकाश्यत्वस्यैव स्वप्रकाशत्वरूपताऽङ्गीकारादिति परिहरति- अत आहेति ।। परसमवेतेति ।। कर्मान्यसमवेतेत्यर्थः ।

### श्रीवेदेशतीर्थ

स्वविषयत्वमेव स्वप्रकाशत्वमिति सिद्धान्तवासनया शिष्यः पृच्छति- नन्विति ।। परसम-वेतेति ।। स्वभिन्नकर्तृसमवेतेत्यर्थः । न चैवमात्माश्रयत्वम् । कर्तुरन्यत्वे सति क्रियाजन्यफलशालित्व-मित्यत्र तात्पर्यात् । नन्वस्माभिरात्मज्ञानस्य स्वविषयत्वाङ्गीकारात् कथं प्राक् स्वविषयत्वा-भावादित्युक्तमित्यत आह- तदभिप्रायेणेति ।। परकीयस्वविषयत्वानङ्गीकाराभिप्रायेणेत्यर्थः ।

### द्वैतद्युमणि

नन्विति ।। मूले कर्तृकर्मपदे भावप्रधाने ।

### श्रीराघवेन्द्रतीर्थ

पराभिप्रेतमेव लक्षणमाह - परसमवेतेति ।।

### गुरुराजीया

शिष्यः शङ्कते- नन्विति ।। परसमवेतेति ।। यदत्र वक्तव्यं तत् कर्तुरन्यत्वे सतीत्यादि-पूर्वग्रन्थव्याख्यानावसर एवोक्तमिति तत एव प्रतिपत्तव्यम् । ननु यदि स्वविषयप्रकाशत्वं नाङ्गी-क्रियते तर्हि कथं तन्मते स्वप्रकाशत्वनिर्वाह इत्यत आह- स्वप्रकाशत्वं त्विति ।। तथा सति पराप्रकाश्यतया शशविषाणादेरपि स्वप्रकाशताप्रसङ्गादिति भावेन परेषां प्रवाद इत्युक्तम् । यद्यस्माभिः स्वविषयप्रकाशत्वमङ्गीक्रियते तर्हि कथं ग्रन्थकारीया तदनङ्गीकारोक्तिरित्यत आह- तदभिप्रायेणेति ।। परकीयस्वविषयत्वानङ्गीकाराभिप्रायेणेत्यर्थः । उक्ताभिप्रायकत्वं ग्रन्थकृत्-सम्मतञ्चेत्याह- अत इति ।। अन्यथा नाङ्गीक्रियत इत्येतावतैव पूर्णत्वेन तैरित्यस्य व्यर्थत्वादिति१ भावः ।

### गोविन्दीया

यावतेति ।। समस्तवादिप्रतिवादिभ्यामित्यर्थः । परसमवेतेति ।। कर्मणः सकाशात् यः परः कर्ता तत्र समवेतक्रिया तस्याः यत्फलं तच्छालित्वं तत्स्वरूपत्वं तस्यैव कर्मलक्षणत्वादित्यर्थः। तदभिप्रायेणेति ।। अस्मन्मते एकस्यैवाऽत्मनः विशेषबलात् कर्तृत्वं कर्मत्वं नित्यत्वं चाङ्गीक्रियत एव, पराभिप्रायेण चाऽत्मनः स्वविषयप्रकाशत्वाभावादित्युक्तम् इति अदोषः अपसिद्धान्तादिदोषो नास्तीत्यर्थः ।

### जनार्दनभट्टीया

अत एव आचार्य उत्तरवाक्ये 'प्रकाश एव' इति एवकारेण स्फुटदूषणतां सूचयिष्यति – तैरिति ।। पदव्यावर्त्यमाह- सत्यमित्यादिना ।। कुतो नाङ्गीक्रियते? इत्यत आह – एकस्यामिति ।। विरोधमेव स्पष्टयति – परेति ।। २ननु आत्मज्ञानस्य स्वविषयत्वाभावे कथं तस्य परमते स्वप्रकाशत्वम्? इत्यत आह – स्वप्रकाशत्वमिति ।। परेषामिति ।। नत्वस्माकमिति भावः । तस्य तदुपहितलक्षणत्वा-दिति ।। तस्य कर्मणः, तदुपहितलक्षणत्वात् कर्तृघटितलक्षणत्वादित्यर्थः । 'कर्तुरीप्सिततमं कर्म'१ कर्तुः क्रियया यदाप्तुम् इष्टतमं तत्कर्मसञ्ज्ञं स्यादिति पाणिनिना अनुशासनादिति भावः ।

## स्वविषयत्वं हि..

**मूले कर्तृकर्मभावविरोधादित्युक्तेरयुक्तत्वशङ्का परमतस्वमतरीत्या तत्परिहारश्च**

***स्वविषयत्वं हि***

### श्रीमज्जयतीर्थटीका

ननु ज्ञानस्य स्वविषयत्वे कर्तृकर्मभाव एव नास्ति यो विरुद्ध्येत । न हि ज्ञानं ज्ञानस्य कर्तृ । न च कर्तुरभावे कर्मापि सम्भवति । तस्य तदुपहितलक्षणत्वात् । अतो 'विषयविषयिभावस्य पराक्प्रत्यग्भावरूपत्वाद् एकस्य युगपद्विरोधात् स्वविषयत्वं ज्ञानस्य तैर्नाङ्गीक्रियते' इति वक्तव्यम् । कर्तृकर्मविरोधादिति तु कथम् । मैवम् । ज्ञानस्यापि विषयीकरणलक्षणव्यापारं प्रति कर्तृत्वेन स्वविषयत्वे कर्तृकर्मभावापरिहारात् । इतरथा ज्ञानमर्थं विषयीकरोतीति न स्यात् ।

अथवा स्वमते ज्ञानस्वरूपस्याप्यात्मनो ज्ञानं प्रति कर्तृताऽस्तीति ज्ञापनायेदमुदितम् । कथमेतदिति चेत् । इत्थम् । अस्माभिर्विज्ञानं सविशेषमङ्गीकृतम् । विशेषश्च भेदकार्यं करोति । एवं तर्ह्यतिप्रसङ्गः स्यादिति चेन्न । सति प्रमाणे तन्निर्वाहहेतुभूतभेदाभावे च तत्प्रतिनिधिना तत एव सिद्धेन विशेषेण तन्निर्वाहाभ्युपगमात् । प्रपञ्चितश्चैतदन्यत्राऽचार्यैः ।

### श्रीविजयीन्द्रभिक्षु

न हीति ।। ज्ञानस्य क्रियारूपतया कारकविशेषरूपकर्तृत्वं न सम्भवति । क्रियाकारक-भावस्य भेदनियतत्वादिति भावः । न चेति ।। यद्यपि ज्ञानस्य कर्तृत्वाभावेऽपि कर्त्रन्तरमादाय तद्घटितकर्मत्वं सूपपादनं तथाऽप्यात्मरूपज्ञानं प्रति कर्त्रन्तरस्याप्यसम्भवात्तदुपहितं कर्मत्वमपि न सम्भवतीति भावः । स्वयं क्रियारूपस्यापि ज्ञानस्य क्रियान्तरं प्रति कर्तृत्वसम्भवात् स्वविषयत्वे ज्ञानस्य तदुपहितं कर्मत्वमपि दुष्परिहरमिति कर्तृकर्मविरोधादिति

सुष्ठूक्तमिति परिहरति- मैवमिति ।। अथ वा कर्तृकर्मविरोधात् प्रत्यक्पराग्भावविरोधादित्यर्थः । न चैवमाचार्योक्तिरपि तथैव स्यादिति वाच्यम् । स्वमते कर्तृकर्मभावाविरोधज्ञापनाय तथा तदुक्त्युपपत्तेरित्याह- अथ वेति ।। ननु कर्तृ-कर्मभावस्य भेदनियतत्वात् कथं तदविरोध इति पृच्छति- कथमिति ।। भेदप्रतिनिधिविशेषस्य सत्त्वान्न विरोध इति परिहरति- इत्थमिति ।। एवं तर्हीति ।। सर्वत्र विशेषेणैव भेदकार्योपपत्तौ भेदमात्रोच्छेदः स्यादित्यर्थः । न हि वयं सर्वत्र विशेषमभ्युपगच्छामः । यतो भेदोच्छेदः स्यात् । किं तु यत्र कार्यं प्रमितं भेदाभावश्च प्रमितस्तत्रैव । अतो न विरोध इति परिहरति- नेति ।। ननु विशेषे प्रमाणमेव नास्ति येनाविरोध उपपद्येतेत्यत आह- प्रपञ्चितञ्चैतदिति ।। 'शुक्लः पटः' इति सामानाधिकरण्यधीरेव विशेषे प्रमाणम् । अत्यन्तभेदे अत्यन्ताभेदे च 'घटः पटः' 'घटो घटः' इति सामानाधिकरण्यधियोऽदर्शनात् । न च तावता भेदाभेद एव सिद्ध्येन्न विशेष इति वाच्यम् । भेदाभेदयोरपि विरोधेनैकत्रासम्भवात् । तदविरोधाय १नित्यनियामकान्तरस्वीकारे च मदभ्युपगत-विशेषस्यैव नामान्तरकरणापत्तेः । आवश्यकत्वेन प्रथमत एव तदभ्युपगमस्योचितत्वाच्च । न च विशेषाभ्युपगमे तस्य भेदकार्यकरत्वमेव न स्यादिति वाच्यम् । पूतिकासाध्ययागस्य सोमकार्यत्ववत् सादृश्येन विशेषकार्यस्य भेदकार्यत्वोपपत्तेरित्याद्यस्य अनुव्याख्यानादौ आचार्यैः प्रपञ्चितत्वादि-त्यर्थः । विस्तरस्तु तत्रैवानुसन्धेयः ।

### श्रीवेदेशतीर्थ

न हीति ।। ज्ञानस्य क्रियारूपतया कारकविशेषरूपकर्तृत्वं न सम्भवति । क्रियाकारक-भावस्य भेदनियतत्वादिति भावः । यद्यपि ज्ञानस्य कर्तृत्वाभावेऽपि कर्त्रन्तरमादाय तद्घटितकर्मत्वं सूपपादम् । तथाऽप्यात्मरूपज्ञानं प्रति कर्त्रन्तरस्याप्यसम्भवात्तदुपहितकर्मत्वमपि न सम्भवतीति भावः । स्वयं क्रियारूपस्यापि ज्ञानस्य क्रियान्तरं प्रति कर्तृत्वसम्भवात् स्वविषयत्वे ज्ञानस्य तदुपहितकर्मत्वमपि दुष्परिहरमिति कर्तृकर्मविरोधात् इति सुष्ठूक्तमिति परिहरति- मैवमिति ।। अथवा कर्तृकर्मविरोधात् प्रत्यक्पराग्भावविरोधादित्यर्थः । न चैवमाचार्योक्तिरपि तथैव स्यादिति वाच्यम् । स्वमते ज्ञानरूपस्याप्यात्मनो ज्ञानं प्रति कर्तृत्वञ्चास्तीति ज्ञापनाय तथा तदुक्त्युपपत्ते-रित्याह- अथ वेति ।। ज्ञानरूपत्वे आत्मनः कथं ज्ञानं प्रति कर्तृत्वम् । क्रियाभिन्नस्यैव कर्तृत्वनियमादित्याक्षिपति । कथमेतदिति ।। एवं तर्हीति ।। सर्वत्र विशेषेणैव भेदकार्योपपत्तौ भेदमात्रोच्छेदः स्यादित्यर्थः । सति प्रमाण इति ।। अभेदभेदकार्ययोरिति शेषः । ननु प्रमाणा-भावाद्विशेष एवासिद्ध इत्यत आह- तत एव सिद्धेनेति ।। भेदकार्यतन्निर्वाहकभेदाभावान्यथा-नुपपत्तित एवेत्यर्थः ।

### द्वैतद्युमणि

तदुपहितेति ।। तथा च कर्तुरभावे स्वभिन्नसमवेतक्रियाप्रसिद्ध्या तद्घटितं कर्मत्वमप्रसिद्ध-मिति भावः । परागिति ।। परात्त्वं प्रतियोगित्वं प्रत्यक्त्वमनुयोगित्वं प्रकृते विवक्षितम् । विषयस्य यो विषयी तद्भावस्य विषयितायाः पराक् प्रत्यग्भावौ अनुयोगित्वप्रतियोगित्वे । ताभ्यां रूप्यते सत्त्वेन गृह्यत इति तादृशरूपस्तत्त्वादित्यर्थः । विषयितायाः सम्बन्धरूपतया प्रतियोग्यनुयोग्युभय-सापेक्षतया एकस्मिन्नेकनिरूपितप्रतियोग्यनुयोगिभावस्य१ उपाधिनैरपेक्ष्येण शुद्धात्मरूपज्ञानस्य न स्वविषयकत्वमिति भावः ।

युगपदिति ।। 'उपाधिकृतभेदमन्तरैककाल इत्यर्थः । पराक्प्रत्यग्भावेत्यादेश्चित्त्वजडत्वाधीन-त्वादित्यर्थः । चितो जडतादात्म्यरूपविषयताऽश्रयत्वम् । तत्प्रतियोगित्वरूपं विषयत्वं जडस्यैव । न तु चितः' इत्यर्थोऽत्र न सङ्गच्छते । युगपदित्युत्तरपङ्क्तिविरोधात् । औपाधिकभेदेनापि चेतने जडत्वस्य जडे चेतनत्वस्यायोगेन युगपदित्यस्यालग्नकतापत्तेः । एकस्येति सामान्योक्त्यसङ्गतेश्च । इतरथेति ।। तथा च विषयीकरणं विषयितैव । तत्कर्तृत्वकर्मत्वेप्रतियोगित्वानुयोगित्वरूप एव पर्यवस्येत इत्युक्तविरोधो युक्त एवेति भावः । ननु तर्हि स्फुटतया पराक्प्रत्यग्भावविरोधादित्येव वक्तव्यम् । किमर्थं विषयिताया अप्युक्तरीत्या क्रियात्वविवक्षया तथोक्तिरित्यत आह- अथ वेति ।।

### श्रीराघवेन्द्रतीर्थ

तदुपहितेति ।। कर्तृसमवेतक्रियाफलशालित्वस्य लक्षणत्वादित्यर्थः । परागिति ।। बाह्यत्वान्तरत्वरूपत्वादित्यर्थः । इति न स्यादिति ।। कर्तृप्रयोगो न स्यादित्यर्थः । भेदकार्य-मिति ।। भेदप्रतिनिधित्वाद्विशेषस्य सोमप्रतिनिधिः पूतीकं यथा सोमकार्यं करोति तथेति भावः । अतिप्रसङ्गः स्यादिति ।। प्रमितभेदे जीवेश्वरादावपि विशेष एवाभ्युपेयो न भेद इत्यर्थः । सति प्रमाणे भेदकार्ये प्रमाणे सतीत्यर्थः । तत एवेति ।। प्रमितकार्यस्य निर्वाहकान्तराभावादेवेति वा प्रमाणनिर्वाहकाभावोभयान्यथानुपपत्तित एवेति वा अर्थः । अन्यत्रेति ।।

'भेदहीने त्वपर्यायशब्दान्तरनियामकः ।

विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ।।'२

इत्यादिना अनुव्याख्यानबृहद्भाष्यादावित्यर्थः ।

प्रत्यक्त्वम् आन्तरत्वं पराक्त्वं बहिःष्ठत्वम् । एवं तर्हीति ।। घटपटयोरप्यभेदमङ्गीकृत्य भेदकार्यस्यापर्यायव्यवहारस्य विशेषादेवोपपत्तौ भेदमात्रोच्छेदः स्यादित्यर्थः । सतीति ।। अभेदभेदकार्ययोः सद्भावे 'प्रमाणे सति' इत्यर्थः । तन्निर्वाहकेति ।। भेदकार्यापर्यायव्यवहार-निर्वाहकेत्यर्थः । घटपटयोस्त्वभेदो न प्रमाणप्रमित इति भावः ।

### गुरुराजीया

न हीति ।। क्रियारूपतया कारकविशेषरूपकर्तृत्वं न सम्भवति । क्रियाकारकभावस्य भेदनियतत्वेनाभेदे तदसम्भवादिति भावः । नापीति ।। एतच्चाऽत्मरूपज्ञानस्य कर्त्रन्तराभावाभि-प्रायेणोक्तम् । अन्यथा तद्घटितकर्मलक्षणसम्भवेनोक्तदोषाप्रसरादिति ध्येयम् । स्वयं क्रियारूप-स्यापि ज्ञानस्य विषयीकरणलक्षणव्यापारं प्रति कर्तृत्वेन स्वविषयत्वे ज्ञानस्य तदुपहितकर्मत्वमपि दुष्परिहरमिति कर्तृकर्मविरोधोऽस्त्येवेति परिहरति-ज्ञानस्यापीति ।। भवेदेतद् यदि विषयीकरण-लक्षणव्यापारं प्रति कर्तृत्वमेव सिद्धं स्यात् । तदेव कुत इत्यत आह- इतरथेति ।। इदमिति ।। कर्तृकर्मविरोधादितीदमित्यर्थः । ज्ञानरूपस्याऽत्मनो ज्ञानं प्रति कर्तृत्वं न सम्भवति । क्रियाकर्तृ-भावस्य भेदनियतत्वेन भेदाभावेऽयोगादिति शङ्कते-कथमेतदिति चेदिति ।। भेदाभावेऽपि भेद-प्रतिनिधिरूपविशेषबलादेव तदुपपत्तिरिति परिहरति- इत्थमिति ।। सविशेषमिति ।। आत्मना सविशेषाभिन्नमित्यर्थः । अतिप्रसङ्ग इति ।। घटपटयोरपि भेदाभावेऽपि भेदप्रतिनिधिरूपविशेष-बलेनैव भेदकार्यनिर्वाहाद्भेदो न स्यादित्यतिप्रसङ्ग इत्यर्थः ।

### गोविन्दीया

तस्येति ।। कर्मणः परसमवेतेति तदुपहितलक्षणत्वात् कर्तृसम्बन्धलक्षणत्वादित्यर्थः । अत इति ।। ज्ञानस्य कर्तृकर्मभावाभावात् विषयस्य पराग्भावरूपत्वेन पश्चिमाभिमुखरूपत्वेन एकस्य अज्ञानस्य विषयविषयिभावस्य युगपत् विरोधात् स्वविषयत्वं ज्ञानस्य तैः नाङ्गीक्रियत इति वक्तव्यमित्यर्थः । इतरथेति ।। विषयीकरणलक्षणव्यापारं प्रति ज्ञानस्य कर्तृत्वाभाव इत्यर्थः । कथमिति ।। एतज्ज्ञानरूपस्य आत्मनो ज्ञानं प्रति कर्तृत्वं कथमिति चेदित्यर्थः । उत्तरमाह- इत्थमस्तीति ।। एवमिति ।। यद्येवं विशेषः भेदकार्यं करोति तर्हि विशेषमादाय भेदस्य वक्तुं शक्यत्वात् घटपटयोरपि ऐक्यमङ्गीकार्यं स्यादित्यतिप्रसङ्गः स्यादिति चेदित्यर्थः । सतीति ।। प्रामाणिकैक्यस्थले भेदव्यवहारे प्रमाणे सति भेदव्यवहारनिर्वाहकारणभूतभेदस्याभावे च भेदप्रतिनिधिना तत एव विशेषं विना भेदव्यवहारानुपपत्त्या इत्यर्थापत्तिप्रमाणसिद्धेन विशेषेण भेदव्यवहारनिर्वहणाभ्युपगमादित्यर्थः । प्रपञ्चितमिति ।। अन्यत्र विष्णुतत्त्वनिर्णयादौ विशेषस्य भेदकार्यकरणसामर्थ्यं प्रपञ्चितमित्यर्थः ।

### नारोपन्तीया

अतिप्रसङ्गस्स्यादिति ।। घटादेरपि भेदकार्यकारिविशेषवत्त्वात् मुद्गरप्रहारादिना तन्नाशेऽपि घटान्तरस्येव तस्यैवावस्थानं स्यात् । जीवब्रह्मादौ घटपटादौ चाभेद एवास्तु । विशेषबलादेव सर्वनिर्वाहोऽस्त्वित्यादिरतिप्रसङ्ग इत्यर्थः । आद्यस्योत्तरम्- सति प्रमाण इति ।। यदि तस्मिन्नष्टेऽपि तदवस्थानं प्रमितं स्यात् तदा स्यादेव । तदा प्रकृते च 'मामहं जानामि' इति सार्वजनीनाबाधितप्रत्ययात् युक्तं कल्पनम् । आरोपे सति निमित्तानुसरणम् । न तु निमित्तमस्ती-त्यारोप इति भावः । द्वितीयस्योत्तरम्- भेदाभाव इति ।। प्रतिनिधिर्हि मुख्यालाभ एवाऽद्रियते । सोमाभावे पूतिकावत् । घटपदादौ च जीवब्रह्मणोश्च सर्वजनसिद्धभेदप्रत्ययसत्त्वान्नानुभवापलापो युक्त इति भावः ।

प्रपञ्चितं चैतदन्यत्राऽचार्यैरिति ।। अस्तु तावत्कुण्डबदरप्रतीतिविलक्षणा तन्तुपटादिप्रतीतिः सर्वानुभवसिद्धा । एकत्र स्फुटतरविवेकप्रतिभासोऽपरत्र तदभावश्च । न च तत्र संयोगसमवायकृतं वैलक्षण्यमिति युक्तम् । समवायस्याप्रामाणिकत्वात् । तन्तवः पट इत्यभेदप्रतीतेश्च । एकीकृतजलद्वयवत्, गुरुत्वपरिमाणाधिक्यादृष्टेश्च । एवं च भेदाभावेऽपि अपर्यायशब्दादेर्नियामकं किञ्चिदवश्यं वक्तव्यम् । स एव भगवान्विशेष इति । तदुक्तम्–

'भेदहीने त्वपर्यायशब्दान्तरनियामकः ।

विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ।।'

इत्यादि सङ्क्षेपः ।

### जनार्दनभट्टीया

पराक् प्रत्यग्भावेति ।। प्रत्यङ्मुखप्राङ्मुखभावरूपत्वादित्यर्थः । कालान्तरे प्रत्यक्षस्यापि अन्यस्मिन् काले प्राङ्मुखत्वसम्भवात् 'युगपत्' इत्युक्तम् । इतरथेति ।। ज्ञानस्य विषयीकरणलक्षणव्यापारं प्रति कर्तृत्वाभावादित्यर्थः । इति न स्यादिति ।। ज्ञानमिति कर्तरि विहिता प्रथमा, अर्थमिति

कर्मणि विहिता द्वितीया च न स्यादित्यर्थः । कथमेतदिति ।। एकस्यैव कर्तृत्वं, कर्मत्वं च कथम्? भेदाभावादिति भावः । एवमिति ।। विशेषस्य भेदकार्यकारित्व इत्यर्थः । अतिप्रसङ्ग इति ।। एकस्मिन् सति अपराभावस्यापि भेदकार्यत्वात् ज्ञाने सत्यपि विषयीकारणाभावलक्षणोऽतिप्रसङ्गः स्यादित्यर्थः । तन्निर्वाहेति ।। भेदकार्यनिर्वाहेत्यर्थः । तत एवेति ।। भेदाभावस्थलीयभेदकार्यादित्यर्थः ।

ननु विशेषे मानाभावः । तथाहि न तावत् प्रत्यक्षम् 'अयं घटः' इतिवत् 'अयं विशेषः' इत्यनुप-लम्भात् । नाप्यनुमानम् । तद्व्याप्यलिङ्गाभावात् । न च भेदाभावस्थलीयभेदकार्यमेव तदनुमापकम् । तस्य भेदाभेदाभ्यामुपपत्त्या तदसाधकत्वात् । नाप्यागमः । तस्य अश्रवणात् । मङ्गलकर्तव्यता-बोधकश्रुतेरिव अनुमापकाभावाच्च । किञ्च विशेषस्य भेदकार्यकारित्वे भेदो दत्तजलाञ्जलिः स्यात् । सर्वत्र विशेषेणैव भेदकार्यनिर्वाहसम्भवात् इत्यत आह – प्रपञ्चितमिति ।।

अयमाशयः – न तावत् विशेषे प्रमाणाभावः । 'आनन्दं ब्रह्मणो विद्वान्' इति श्रौतो व्यवहारः सम्बन्धपूर्वकः । सम्बन्धव्यवहारत्वात्१ । 'देवदत्तस्य कम्बलम्' इति व्यवहारवत् । – इत्यनुमानेन तत्सिद्धिः । न च भेदाभेदाभ्यां तदुपपत्तिः । 'एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति' इत्यादिवाक्ये ब्रह्मणः तद्गुणानां च भेदनिषेधात् । नापि भेदो दत्तजलाञ्जलिः । विशेषस्य एकसत्वेऽपि अपरनाशादिभेदसाधारणकार्यातिरिक्तभेदकार्यकारित्वाभ्युपगमेन न दत्तजलाञ्जलितापत्तिः । विशेषस्य भेदप्रतिनिधिताभ्युपगमात् । इदमेव हि लोके प्रतिनिधित्वं नाम यन्मुख्यासाधारणकार्यानिष्पादकत्वे सति तत्कार्यनिष्पादकत्वम् । राजरहिते राष्ट्रे राजयोग्यसिंहासनारोहणाद्यन्यसर्वतत्कार्यकर्तुरिव पुरुषस्य राजप्रतिनिधित्वदर्शनात् । एवं भेदाभावस्थल एव विशेषाश्रयणादिति ।। 'यस्मिन् न सङ्ख्येय-विशेषनामरूपाकृतो कविभिः कल्पितोऽयम्' इति भागवते स्पष्टमुक्तत्वात् तन्मूलश्रुतिसिद्धेश्च विशेषः । पुराणानां वेदव्याख्यानरूपत्वादिति ।। व्याख्यातप्रायमिति ।।

मिथ्यात्वस्य अनिर्वचनीयरूपत्वे प्रमाणाभावः । असत्वस्वरूपत्वे परविषयत्वं नास्तीत्युक्तं स्यादिति व्याख्यातप्रायमित्यर्थः ।

### मिथ्याभूतं ..

**परीत्या आत्मनः परविषयप्रकाशत्वाभावसमर्थनम्**

#### श्रीमज्जयतीर्थटीका

मा भूदात्मप्रकाशः स्वविषयः । परविषयस्तु भविष्यति । न च पराभावो दोषः । मिथ्या-भूतस्य परस्याङ्गीकृतत्वात् । न चैवं सति तद्विषयत्वस्यापि मिथ्यात्वप्रसङ्गो दोषः । इष्टत्वात् । अतो मिथ्यारूपस्य परविषयत्वस्य सद्भावाद्भवेदात्मा प्रकाश इत्यत आह-

### मूल

***मिथ्याभूतं परविषयत्वञ्चानिर्वचनीयनिरासादेव निरस्तम् ।***

व्याख्यातप्रायमेतत् । मुक्तात्मन्यनैकान्त्यतादवस्थ्यञ्च द्रष्टव्यम् ।

ननु शुक्तिरजताद्यभावेऽपि परमार्थत एव विज्ञानं तद्विषयमस्ति । तथा पराभावेऽपि परविषयत्वं सत्यमेव कस्मान्न स्यात् । स्यात्तत् । न त्वेवं परोऽङ्गीकरोति । तेन परोपाधिकानां मिथ्यात्वस्याङ्गीकृतत्वात् । परीत्या चेदमनैकान्त्यव्युत्पादनम् ।

#### श्रीविजयीन्द्रभिक्षु

तद्विषयत्वस्येति ।। मिथ्याभूतपरविषयत्वस्येत्यर्थः । व्याख्यातेति ।। मिथ्येति नानिर्वचनीयमुच्यते । तस्य निरस्तत्वात् । किन्त्वसत्त्वमेव । तथा च परविषयत्वं मिथ्येत्युक्ते स्वरूपतो नास्तीत्येवोक्तं स्यादिति व्याख्यातप्रायमित्यर्थः । मुक्तात्मनीति ।। मोक्षे पराभावेन परविषयत्वस्य कथञ्चिदप्यसम्भवादिति भावः । ननु मुक्तिकाले सविषयत्वाभावेऽपि संसारदशायां सविषयत्वाज्ज्ञानत्वमुपपद्यते । किञ्च तवेश्वरज्ञानवन्मोक्षेऽप्यात्मज्ञानस्यातीतप्रपञ्चविषयत्वेन ज्ञानत्वमुपपद्यत इति चेन्न । विषयोल्लेखित्वरूपसविषयत्वस्य ज्ञानस्वभावतया यावद्धर्मभावित्वेन कादाचित्कत्वानुपपत्तेः । मोक्षेऽप्यतीतविषयोल्लेखित्वरूपोपप्लवापत्तेश्चेति । ननु शुक्तिरजतादेर-सत्त्वेऽपि तज्ज्ञाने तद्विषयत्वस्य सत्त्ववत् परस्य मिथ्यात्वेऽपि आत्मस्वरूपज्ञाने तद्विषयत्वं सत्यं किं न स्यादिति शिष्यः पृच्छति- नन्विति ।। कथं तर्हि व्यभिचारोद्भावनमित्यतः परीत्येति ।।

### श्रीवेदेशतीर्थ

व्याख्यातेति ।। मिथ्येति नानिर्वचनीयमुच्यते । तस्य निरस्तत्वात् । किन्त्वसत्त्वमेव । तथा च परविषयत्वं मिथ्येत्युक्ते स्वरूपतो नास्तीत्येवोक्तं स्यादिति व्याख्यातप्रायमेवेत्यर्थः । मुक्तात्मनीति ।। निवृत्ताविद्यस्य मुक्तरूपज्ञानस्याविद्योपादानकपरविषयत्वासम्भवेनाप्रकाश-त्वापत्त्या तत्राप्रकाशत्वरूपजडत्वस्योक्तमनैकान्त्यं तदवस्थमेवेति भावः । तटस्थः शङ्कते- नन्विति ।। नन्वस्मद्रीत्या पराभावेऽपि परविषयत्वं सत्यमेवाऽत्मस्वरूपज्ञानस्यास्तु । ततश्च तस्य प्रकाशरूपत्वोपपत्त्या नाप्रकाशत्वस्य तत्रानैकान्त्यमित्यत आह- पररीत्येति ।। स्वमते आत्मरूपज्ञानस्य परविषयत्वे दोषाभावेन प्रकाशत्वोपपत्तेरिति भावः ।

### श्रीराघवेन्द्रतीर्थ

व्याख्यातप्रायमिति ।। 'मिथ्येति तावदनिर्वचनीयमिति वक्तुं न शक्यते । तस्या-प्रामाणिकत्वादिना निरस्तत्वात् । ततो मिथ्येत्यसत्त्वे वक्तव्ये मिथ्याभूतं परमित्यस्य नास्ति परमिति मिथ्याभूतं तद्विषयत्वमित्यस्य नास्ति परविषयत्वमित्यर्थः स्यात् । तथा च कथमात्मा प्रकाशः' इति मिथ्याप्रमातृत्वमिति वाक्यव्याख्यानरीत्या व्याख्यातप्रायमित्यर्थः । मुक्तात्मनीति । तस्य परविषयत्वे संसारापातेन तत्प्रकाशस्य स्वपराविषयकत्वेनाप्रकाशत्वरूपस्याप्रमातृत्वरूपस्य च जडत्वस्य तत्रानैकान्त्यमित्यर्थः। अन्यथा मुक्तत्वव्याघातादिति भावः। विश्वसत्यत्ववादिमतरीत्या शङ्कते- ननु शुक्तीति ।। शङ्काया उत्तरमाह- स्यात्तदिति ।।

### गुरुराजीया

व्याख्यातेति ।। 'मिथ्येति नानिर्वचनीयत्वमुच्यते प्रमाणाभावात्' इत्यादिना निरस्त-त्वात् । किन्त्वसत्त्वमेव । तथा च 'पटविषयत्वं मिथ्या' इत्युक्ते स्वरूपतो नास्तीत्येवोक्तं स्यादिति व्याख्यातप्रायमेवेत्यर्थः । न केवलं पूर्ववाक्यव्याख्यानेनैतद्व्याख्यातमित्येव१ । तत्तात्पर्यवदेव एतत्तात्पर्यं च द्रष्टव्यमित्याह- मुक्तात्मनीति ।। निवृत्ताविद्यस्य२ मुक्तरूपज्ञानस्याविद्योपादानक-परविषयत्वासम्भवेनाप्रकाशत्वापत्त्या तत्राप्रकाशत्वरूपजडत्वस्यानैकान्त्यं तदवस्थमिति भावः । ३शिष्यः शङ्कते- नन्विति ।। तेनेति ।। अन्यथा परोपाधीनां सार्वज्ञ्यादीनामपि सत्यत्वप्रसङ्गादिति भावः । नन्वस्मद्रीत्या पराभावेऽपि परविषयत्वं सत्यमेवाऽत्मरूपज्ञानस्यास्तु । तथा चाप्रकाशत्व-रूपजडत्वाभावादेव न तत्रानैकान्त्यमित्याह- पररीत्या चेति ।। स्वमते आत्मरूपज्ञानस्य स्वपरविषयत्वे दोषाभावेन प्रकाशत्वोपपत्तेरिति भावः ।

### गोविन्दीया

इष्टत्वात् ।। निर्धर्मके ब्रह्मणि तद्विषयत्वरूपधर्मस्य मिथ्यात्वाङ्गीकाराद् इष्टापादनत्वेनायं प्रसङ्गो न दोष इत्यर्थः । भवेदिति ।। आत्मनि प्रकाशो भवेत्, अतोऽप्रकाशत्वरूपहेतोरभावात् नानैकान्त्यम्, इत्यत आहेत्यर्थः । व्याख्यातप्रायमिति ।। एतद्वाक्यम् अप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन च मिथ्या इत्यस्य अनिर्वचनीयत्वं वक्तुमशक्यम् । असत्त्वे च परविषयत्वं नास्तीत्युक्तं स्यादिति व्याख्यातप्रायमित्यर्थः । मुक्त आत्मनीति ।। ज्ञानरूपे मुक्त आत्मनि अप्रकाशत्वरूपजडत्वस्य हेतोः अनैकान्त्यम् तदवस्थम् । तथा हि- अविद्याया निवृत्तत्वात् तदुपादानकपरविषयत्वासम्भवेन मुक्तात्मनोऽप्रकाशत्वादित्यर्थः । परविषयत्वमिति ।। परविषयज्ञानस्यापि शुक्तिरजतज्ञानवत् सत्यत्वात् तद्गतं परविषयत्वमपि सत्यमेव कस्मान्न स्यादित्यर्थः । स्यादिति ।। सत्यमेव स्यादित्यर्थः । तेनेति ।। तेन परेण परोपाधिकानां परनिमित्तकानामित्यर्थः । पररीत्या चेति ।। अप्रकाशत्वरूपजडत्वहेतोः पररीत्या चेदमनैकान्त्यव्युत्पादनं न त्वस्मद्रीत्या । मन्मते तु आत्मनि प्रकाशत्वस्याङ्गीकृतत्वादित्यर्थः।

### जनार्दनभट्टीया

मुक्तात्मनीति ।। अत्र 'आत्मनोऽपि दृश्यत्वात् अनैकान्तिकः' इत्यादाविव आत्मनी-त्येतावता पूर्तावपि मुक्तपदग्रहणं मिथ्याभूतपरविषयप्रकाशत्वाभावरूपजडत्वहेतुसाधनार्थम् । तथा पराभावेऽपीति ।। विषयविषयिणो एकविधत्वनियमाभावादिति भावः । एवमिति ।। पारमार्थिक-मित्यर्थः ।

ननु अस्मन्मते आत्मरूपप्रकाशस्य परविषयत्वेन आत्मनि अप्रकाशत्वरूपजडत्वस्य व्यभिचार इत्यत आह – पररीत्या चेति ।। 'कर्तृकर्मविरोधात् तैः नाङ्गीक्रियते' इति मूलानुरोधादिति भावः । तथा च परमते परविषयत्वस्य मिथ्यात्वाद् व्यभिचारः तदवस्थ इति भावः ।

विषयवर्जितः..

**आत्मप्रकाशस्य निर्विषयत्वाभावसमर्थनम्**

### श्रीमज्जयतीर्थटीका

ननु मा भूदात्मप्रकाशः स्वविषयः । मा च भूत्परविषयः । निर्विषय एवायं किन्न स्यादिति तृतीयं पक्षं निराकरोति

मूल

***विषयवर्जितः प्रकाश एव न भवति घटवत् ।***

आत्मा न प्रकाशः प्रकाश्यशून्यत्वात्, घटवत् । अन्यथा घटोऽपि प्रकाशः स्याद् इति जडत्वासिद्धिः । ननु विषयशून्यस्य घटस्य प्रकाशत्वाभावेऽप्यात्मा विषयवर्जितः प्रकाशोऽस्तु को दोषः । न हि सर्वैर्भावैरेकविधैर्भाव्यमिति नियमोऽस्ति । यथा अन्यो ज्ञाता अन्यश्च ज्ञेय इत्यन्यत्र दर्शनेऽप्यात्मन्यैक्यं गृह्यते तथेति चेत् । स्यादप्येवं यद्येवं प्रमाणं स्यात् । न चैतदस्तीत्याह-

**मूल**

***तत्प्रमाणाभावात् ।***

प्रकाशत्वस्यैवानुपपत्तावात्मनः स्वप्रकाशत्वं सुतरां परेषामशक्योपपादनमिति मन्वानो भगवानाचार्यः अस्वप्रकाशत्वं जडत्वमिति परोक्तमपि निराकर्तुं न पृथक्प्रक्रान्तवानिति ।

**श्रीविजयीन्द्रभिक्षु**

प्रकाश्यशून्यत्वादिति ।। इदमुपलक्षणम् । ज्ञातृशून्यत्वादित्यपि ज्ञेयम् । अन्यथेति ।। इदमुपलक्षणम् । अन्यथा भोक्तृहीना भुजिक्रियाऽपि स्यादित्यपि द्रष्टव्यम् । ननु विषयशून्यत्वेऽ-प्यात्मनो ज्ञानस्वरूपत्वमुपपन्नम् । 'सत्यं ज्ञानमनन्तम्' इत्यादिश्रुतेरित्याशयेन शङ्कते- नन्विति ।। यद्येवमिति ।। उदाहृतश्रुतिश्चाऽत्मनो ज्ञानरूपत्वमात्रप्रतिपादनपरा । न तु निर्विषयत्वेऽपि ज्ञानरूपत्वप्रतिपादनपरेति श्रुतिप्रतिपन्नज्ञानरूपत्वनिर्वाहायैव सविषयत्वमङ्गीकार्यम् । ज्ञानस्य सविषयत्वादिति भावः । तत् तत्र निर्विषयत्वेऽप्यात्मनो ज्ञानरूपत्वमित्यत्र प्रमाणाभावादिति मूलार्थः । नन्वस्वप्रकाशत्वं जडत्वमित्यपि पराङ्गीकारात्तत्किमिति न दूषितम्? सत्यम् । अप्रकाशत्वपक्षदूषणेनैव दूषितप्रायत्वादुपेक्षितमित्याह- प्रकाशत्वस्येति ।।

**श्रीवेदेशतीर्थ**

जडत्वासिद्धिरिति ।। प्रकाश्यशून्यस्यापि प्रकाशत्वे घटस्यापि प्रकाशत्वापत्त्याऽ-प्रकाशत्वरूपजडत्वस्य पक्षीकृते घटेऽसिद्धिरित्यर्थः । भावैः पदार्थैः । अन्यत्र घटादौ । ऐक्यं ज्ञातृज्ञेययोरिति शेषः । तत् तत्र । आत्मनो निर्विषयत्वेऽपि ज्ञानत्वमित्यत्र प्रमाणाभावादिति मूलार्थः । श्रुत्यादौ ज्ञानरूपतोक्तिश्च न निर्विषयत्वेऽपि ज्ञानरूपताभिप्रायेति भावः । नन्वस्व-प्रकाशत्वं जडत्वमित्यपि पराङ्गीकारात् तत् किमिति न दूषितमित्याशङ्क्याप्रकाशत्वदूषणेनैव दूषितप्रायत्वादुपेक्षितमित्याह- प्रकाशत्वस्यैवेति ।। अशक्योपपादनमिति ।। अवेद्यत्वं स्वप्रकाशत्व-मित्यङ्गीकारे तदभावो वेद्यत्वमस्वप्रकाशत्वमित्यायातम् । तच्च दृश्यत्वरूपं दूषितमिति भावः ।

**श्रीराघवेन्द्रतीर्थ**

इति तृतीयमिति ।। यदि जडत्वं नामेति वाक्यव्याख्याने विकल्पितमित्यर्थः । जडत्वासिद्धिरिति ।। अप्रकाशत्वरूपेति योज्यम् । तदिति ।। तत्र निर्विषयत्वेऽप्यात्मनः प्रकाशरूपत्वे प्रमाणाभावादित्यर्थः । नन्वस्वप्रकाशत्वं जडत्वमित्येतत्कुतो नाऽशङ्कितमित्यत आह- प्रकाशत्वस्यैवेति ।। ननु विषयशून्यस्य घटस्य प्रकाशत्वाभावादात्मनोऽपि विषयवर्जितस्य प्रकाशत्वाभाव एव युक्तः । दृष्टानुसारिणी हि कल्पनेति न्यायादिति चेत् तत्राऽह- न हि सर्वैरिति ।। भावैः पदार्थैः । गृह्यत इति । मामहं जानामीत्यत्रेत्यर्थः ।

**गुरुराजीया**

जडत्वासिद्धिरिति ।। प्रकाश्यशून्यस्यापि प्रकाशत्वे घटस्यापि प्रकाशत्वापत्त्याऽ-प्रकाशत्वरूपजडत्वस्य पक्षीकृते घटेऽसिद्धिः स्यादित्यर्थः । अन्यत्र घटादौ । अप्रमातृत्वादिवद् अस्वप्रकाशत्वस्यापि जडत्वनिर्वचनतयाऽङ्गीकारात् तस्याप्यवश्यं विकल्प्य निरसनीयत्वेन मूले तदनिरासप्रयुक्तन्यूनतामाशङ्क्य परिहरति- प्रकाशत्वस्यैवेति ।। अशक्योपपादनमिति ।। तस्य तद्घटितमूर्तिकत्वादिति भावः ।

**गोविन्दीया**

प्रकाशशून्यत्वादिति ।। विषयशून्यत्वादित्यर्थः । अन्यथेति ।। विषयशून्यस्याप्यात्मनः प्रकाशशून्यत्वं स्यात्, घटोऽपि प्रकाशः स्यात् । तथा च पक्षीकृतप्रपञ्चे जडत्वहेतोरसिद्धिः स्यात् । अथवा जडरूपघटस्यापि प्रकाशत्वे समस्तजडरूपपदार्थे जडत्वासिद्धिरित्यर्थः । यथेति ।। अन्यो ज्ञाताऽन्यो ज्ञेय इत्यात्मातिरिक्तान्यज्ञातृज्ञेयत्वधर्मयोर्भिन्नाधिकरणत्वेन दर्शनेऽपि तयोर्धर्मयो-रात्मन्यैक्यं गृह्यते यथा तथा विषयवर्जितघटस्यापि प्रकाशत्वाभावेऽप्यात्मविषयवर्जितः प्रकाशोऽस्तु को दोष इत्यर्थः । स्यादपीति ।। ज्ञातृत्वज्ञेयत्वयोरात्मन्यैक्ये यथा प्रमाणमस्ति, एवं तद्वद्विर्विषयस्याऽत्मनः प्रकाशत्वे न प्रमाणं स्यात् । तर्हि एवमपि भवदुक्तरीत्या चोद्यं स्यात् प्रमाणाभावात् । नैवं निर्विषयोऽप्यात्मा न प्रकाश इत्याहेत्यर्थः । तदिति ।। सप्तसु प्रथमेति तदिति तस्मान्निर्विषयात्मप्रकाशत्वे प्रमाणाभावादित्यर्थः । प्रक्रान्तवानिति ।। उपक्रान्तवानित्यर्थः ।

#### जनार्दनभट्टीया

'विषयवर्जित' इति मूले विषयवर्जितमात्रस्य परत्वप्रतीतेः घटादेरपि पक्षत्वापत्तौ अर्थान्त-रता । घटवदिति दृष्टान्तानुपपत्तिश्चेत्यत आह – आत्मेति ।।

जडत्वासिद्धिरिति ।। 'मिथ्यात्वानुमाने पक्षीभूते घटादौ' इति शेषः । अन्यत्र दर्शनेऽपीति ।। घटदेवदत्तादिस्थल इत्यर्थः । आत्मनि अहमिति ज्ञाने ऐक्यं ज्ञातृज्ञेययोः । मामहं जानामीति व्यवहारानुरोधादिति भावः । यद्येवमिति ।। निर्विषयस्य प्रकाशत्व इत्यर्थः ।

### देशतः कालतः ..

**देशतः कालतः परिच्छिन्नत्वहेतोर्भागासिद्ध्युपपादनम्**

#### श्रीमज्जयतीर्थटीका

अथ परिच्छिन्नत्वहेतुमपि विशेषतः प्रत्याचिख्यासुस्तत्किं देशतः किं वा कालतः अथवा वस्तुत इति विकल्पं हृदि निधायाऽद्यद्वितीयौ निराकरोति -

### मूल

***देशतः कालतः परिच्छिन्नत्वं प्रकृतिकालादिष्वभावाद्भागासिद्धम् ।***

प्रकृतिकालाकाशादीनां पक्षैकदेशानां सर्वगतत्वान्नित्यत्वाच्च देशतः कालतः परिच्छिन्नत्वं नास्तीति भागासिद्धं भवति । न च जडत्वादिना तस्यापि परिच्छिन्नत्वसिद्धिः । उक्तविधया अनैकान्त्यात् आगमविरोधाच्च । न च प्रकृत्यादिव्यतिरिक्तस्यैव पक्षत्वम् । तन्मिथ्यात्वस्य निर्निबन्धनत्वापत्तेः । दृश्यत्वादेर्दुष्टत्वात् । आगमानाञ्च निरसिष्यमाणत्वात् । उक्तवक्ष्यमाण-दूषणगणानिस्ताराच्च ।

#### श्रीविजयीन्द्रभिक्षु

मिथ्यात्वे परिच्छिन्नत्वस्यैव हेतूकृतत्वेन कालतः परिच्छिन्नत्वादिदूषणस्यायुक्तत्व-माशङ्क्याऽह- विशेषत इति ।। विकल्पमुखेनेत्यर्थः । 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इत्यनेन सामान्यतो दूषितत्वादिति भावः । किञ्चिद्देशसम्बन्धित्वे सति किञ्चिद्देशासम्बन्धित्वं देशतः परिच्छिन्नत्वं किञ्चित्कालसम्बन्धित्वे सति किञ्चित्कालासम्बन्धित्वं कालतः परिच्छिन्नत्वमिति देशतः कालतः परिच्छिन्नत्वशब्दार्थं हृदि निधाय भागासिद्धिमुपपादयति- प्रकृतीति ।। आका-शेति । अव्याकृताकाशेत्यर्थः । आदिपदान्नित्यलोकपरिग्रहः । प्रकृत्यादयः परिच्छिन्नाः जडत्वाद् घटवत् इत्याद्यनुमानात्परिच्छिन्नत्वसिद्धिरित्यत आह- न चेति ।। उक्तविधयेति ।। 'गौरनाद्यन्त-वती' 'स एषोऽबद्धः सनातनः' 'कालश्च नित्यः प्रकृतिश्च नित्या' 'स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' 'नास्त्यकृतः कृतेन' इत्याद्यागमविरोधाच्चेत्यर्थः । इदमुपलक्षणम् । 'कालः सदाऽस्ति' 'देशः सर्वत्रास्ति' इति प्रतीतिविरोधाच्चेत्यपि द्रष्टव्यम् । निर्निबन्धनत्वेति ।। निष्प्रमाणकत्वेत्यर्थः । ननु परिच्छिन्नत्वहेतुना तदसिद्धावपि दृश्यत्वादिहेतुना प्रकृत्यादि-मिथ्यात्वसिद्धिरित्यत आह- दृश्यत्वादेरिति ।।

#### श्रीवेदेशतीर्थ

दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः इति सामान्यतः परिच्छिन्नत्वहेतोरपि निराकृतत्वाद् विशेषत इत्युक्तम् । मिथ्यात्वे परिच्छिन्नत्वस्यैव हेतूकृतत्वेन कालतः परिच्छिन्नत्वादिदूषण-स्यायुक्तत्वमाशङ्क्याऽह- विशेषत इति ।। 'विकल्पमुखेनेत्यर्थः' इति व्याख्यानं तु पूर्वग्रन्थ-विस्मरणविजृम्भितम् । पूर्वं हि 'एवं सामान्यतोऽनुमानानि निरस्य विशेषतो निराचिकीर्षुर्दृश्यत्वा-नुमानस्य तावद्दोषान्तरमाह' इत्युक्तम् । आकाशादीनामित्यत्राऽदिपदेन वर्णानां परिग्रहः । आगमविरोधाच्चेति ।। 'गौरनाद्यन्तवती' 'कालश्च नित्यः प्रकृतिश्च नित्या' 'स यथाऽन्तोऽ-यमाकाश एवमनन्त आत्मा वेदितव्यः' 'आकाशवत्सर्वगतश्च नित्यः' 'यावद्ब्रह्म विष्ठितं तावती वाक्' इत्याद्यागमविरोधादित्यर्थः ।

### द्वैतद्युमणि

परिच्छिन्नत्वमभावप्रतियोगित्वमित्यर्थमभ्युपेत्य देशतः कालतः इति । सप्तम्यर्थे तसिः । न चैवमव्यावर्तकता । देशकालपदयोः किञ्चिद्देशकालपरत्वेनाभावे देशत्वकालत्वव्यापकतानिवेश-भ्रमनिवर्तनार्थत्वेन वाऽभावस्य संसर्गाभावरूपत्वबोधतात्पर्यकत्वेन वा सार्थक्यात् । आगमाना-मिति ।। वाचारम्भणमित्यादीनामित्यर्थः ।

### श्रीराघवेन्द्रतीर्थ

अथेति ।। दृश्यत्वादिहेतुद्वयनिरासानन्तरमित्यर्थः । मिथ्यात्वरूपसाध्यविकल्पे हेत्वादि-विकल्पेन१ च प्राक् सामान्यतो निरासाद्विशेषत इत्युक्तम् । उक्तविधयेति ।। 'जडत्वञ्चाप्रमातृत्व-मेव । न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते । अतस्तदप्यनैकान्तिकमेव' इति तथा 'आत्मनोऽपि दृश्यत्वादनैकान्तिकता च' इत्यादिनोक्तविधया चेत्यर्थः । आगमेति ।। 'गौरनाद्यन्तवती' 'आकाशवत्सर्वगतश्च नित्यः' 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' इति 'सदेव सोम्येदमग्रे'१ 'अथ मर्त्योऽमृतो भवति'२ इत्याद्यागमेत्यर्थः । दृश्यत्वादिहेतुना 'नेह नानास्ति किञ्चन'३ इत्याद्यागमैर्वा तन्मिथ्यात्वं सेत्स्यतीत्यत आह- दृश्य-त्वादेरिति ।। उक्तेति ।। मिथ्यात्वादि-विकल्पादिनोक्तदूषणगणेत्यर्थः । बाधादिवक्ष्यमाणेत्यर्थः ।

### गुरुराजीया

दृश्यत्वाद्यनुमानेष्वित्यादिना परिच्छिन्नत्वस्यापि सामान्यतो निरस्तत्वाद् विशेषत इत्युक्तम्- आगमेति ।। 'आकाशवत् सर्वगतश्च नित्यः' 'सदेव सौम्येदमग्रे' 'दृष्ट्वैव तं मुच्यते' 'अथ मर्त्योऽमृतो भवति' 'यत्र त्वस्य सर्वमात्मैवाभूत्' 'यावद्ब्रह्म विष्ठितं तावती वाक्' इत्याद्यागमविरोधादित्यर्थः । उपलक्षणञ्चैतत् । अवकाशरूपप्रदेशस्य कालस्य चापरिच्छिन्नत्वेनैव धर्मिग्राहकसाक्षिणा सदा सर्वत्र कार्यदर्शनादियुक्त्या च सिद्धत्वेन तद्विरुद्धत्वादित्यपि द्रष्टव्यम् । दुष्टत्वादिति ।। दूषितत्वेन तदसिद्धेरिति भावः ।

### गोविन्दीया

विशेषत इति ।। 'अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणः पक्षः' इति सामान्यतो दृश्यत्वादिहेतूनामप्रसिद्धविशेषणत्वेन निराकृतत्वाद् विशेषतो निराचिकीर्षुरित्यर्थः । प्रकृतीति ।। आदिपदेन वर्णानां ग्रहणम् । सर्वगतत्वाद्देशतः परिच्छिन्नत्वं नास्ति । नित्यत्वाच्च कालतः परिच्छिन्नत्वं नास्तीति भागासिद्धिर्भवतीत्यर्थः । न चेति ।। जडत्वादिना हेतुना तस्यापि प्रकृत्यादेः परिच्छिन्नत्वसिद्धिरित्यर्थः । उक्तेति ।। आत्मन्युक्तविधया जडत्वादेः सत्त्वाद् देशतः कालतः परिच्छिन्नत्वस्याभावादनैकान्त्यादित्यर्थः । आगमविरोधाच्चेति ।। 'नित्या हि जीवाः प्रकृतिश्च नित्या कालश्च नित्यः' इति प्रकृतिकालयोः 'स यथाऽनन्तोऽयमाकाश' इति आकाशस्य 'यावद् ब्रह्म विष्ठितं तावती वाक्' इति वर्णानां नित्यत्वाभिधायकागमविरोधाच्चेत्यर्थः । तन्मिथ्यात्व-स्येति ।। चतुर्णां प्रकृत्यादीनां मिथ्यात्वस्य साधकहेतुशून्यत्वापत्तेरित्यर्थः । आगमानामिति ।। प्रकृत्यादिमिथ्यात्ववादिनामागमानां चार्थप्रच्यावनेन निरसिष्यमाणत्वादित्यर्थः । उक्तेति ।। दृश्यत्वादीनां ये दोषा उक्तास्तेषां निरासेन तत एव मिथ्यात्वसाधका भविष्यन्तीति शङ्कां हृदि निधाय उक्तवक्ष्यमाणदूषणानामनिस्तारात् कथं तेषां हेतुत्वमित्यर्थः ।

### जनार्दनभट्टीया

विषयवर्जितस्य प्रकाशत्वे प्रमाणाभावादिति स्फुटार्थत्वात् 'प्रमाणाभावात्' इति मूलं न व्याख्यातम् । विशेषत इति ।। दृश्यत्वाद्यनुमानेष्वपि एत एव दोषा इति सामान्येन निरस्तत्वात् एवमुक्तम् । उक्तविधयेति ।। आत्मनोऽपि दृश्यत्वात् । अतः तदपि अनैकान्तिकमित्युक्तविधया परिच्छेदरहिते आत्मनि अनैकान्त्यादित्युक्तविधया इत्यर्थः । आगमेति ।। 'सदेव सोम्य इदमग्र आसीत्'१ इत्याद्यागमविरोधादित्यर्थः । तेन प्रलयेऽपि कालसत्वावगमादिति भावः । प्रकृत्यादि-व्यतिरिक्तस्यैवेति ।। 'परिच्छिन्नत्वसाधकानुमाने' इति शेषः । निर्निबन्धनत्वेति ।। कालादौ मिथ्यात्वसाधकपरिच्छिन्नत्वस्य बाधितत्वादिति भावः । ननु परिच्छिन्नत्वहेतुना तन्मिथ्यात्वस्य असिद्धावपि दृश्यत्वादिहेतुना तत्सिद्धिः अस्तु इत्यत आह – दृश्यत्वादेरिति ।। 'आत्मनि अनैकान्त्येन' इति शेषः ।

ननु 'एकमेवाद्वितीयम्' 'वाचारम्भणं विकारो नामधेयम्' इत्यादिश्रुतिभ्य एव कालादिमिथ्यात्व-सिद्धिरस्त्वित्यत आह – आगमानामिति ।। ऐक्यपरवत् प्रतीयमानानां वाचारम्भणमित्याद्यागमानां 'विश्वं सत्यम्' इत्यादि प्रबलसत्यत्वागमविरोधेन प्रपञ्चमिथ्यात्वपरत्वस्य निरसिष्यमाणत्वादि-त्यर्थः ।

## वस्तुतः..

**वस्तुतः परिच्छिन्नत्वहेतोरनैकान्तिकतोपपादनम्**

### श्रीमज्जयतीर्थटीका

तृतीयं निराचष्टे-

### मूल

***वस्तुतः परिच्छिन्नत्वमात्मनोऽपि भेदाङ्गीकारादनैकान्तिकम् ।***

वस्तुतः परिच्छिन्नत्वं हि वस्त्वन्तराद्व्यवच्छेदो भेद इति यावत् । विपक्षभूतस्याऽत्मनस्तत्व-वादिना भेदोऽङ्गीक्रियत इति मिथ्यात्वे साध्ये वस्तुतः परिच्छिन्नत्वमनैकान्तिकं भवति । न च प्रतियोगिभूतप्रपञ्चस्य मिथ्यात्वादात्मनो भेदानुपपत्तिरिति वाच्यम् । प्रपञ्चमिथ्यात्वसिद्धौ वस्तुतः परिच्छिन्नत्वस्य हेतुत्वसिद्धिः । तत्सिद्धौ च प्रपञ्चमिथ्यात्वसिद्धिरितीतरेतराश्रयप्रसङ्गात् । भेद-मिथ्यात्वानुमानादीनां चोक्तवक्ष्यमाणदोषग्रस्तत्वात् ।

### श्रीविजयीन्द्रभिक्षु

हेतुत्वसिद्धिरिति ।। ब्रह्मणि व्यभिचाराभावेनेति शेषः । इतरेतरेति ।। एतच्चोपलक्षणम् । प्रपञ्चप्रतियोगिकभेदस्य प्रपञ्चवन्मिथ्यात्वेऽपि व्यावहारिकस्य वस्तुतः परिच्छिन्नत्वस्य ब्रह्मणि सत्त्वेन व्यभिचाराच्चेत्यपि द्रष्टव्यम् । ननु भेदमिथ्यात्वं न जगन्मिथ्यात्वसिद्ध्यधीनं येनेतरेतराश्रयः स्यात् । किं तु 'विगीतो भेदो मिथ्या भेदत्वात् चन्द्रभेदवत्' इत्यनुमानात् 'ज्ञाते द्वैतं न विद्यते'१ 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेश्च तत्सिद्धिरित्याशङ्क्याऽह- भेदमिथ्यात्वेति ।। मिथ्ये-त्यनिर्वचनीयमिति वक्तुं न शक्यम् । अप्रसिद्धेः । नाप्यसदिति । अपसिद्धान्तात् । ब्रह्म-निष्ठासद्वैलक्षण्ये व्यभिचाराच्च । न च तदपि मिथ्या । ब्रह्मणोऽसद्रूपत्वप्रसङ्गात् । 'ज्ञाते द्वैतम्' इत्युदाहृतश्रुतेश्च स्वस्वरूपग्राहितया शक्तिग्रहोपयुक्तपदार्थग्राहितया निषेध्यसमर्पकतया चोप-जीव्यबलवत्प्रत्यक्षविरोधेन भेदरूपहेतुनिषेधकत्वासम्भवादित्युक्तवक्ष्यमाणदोषग्रस्तत्वादित्यर्थः ।

### श्रीवेदेशतीर्थ

हेतुत्वसिद्धिरिति ।। ब्रह्मणि व्यभिचाराभावेनेति शेषः । नन्वात्मनि भेदमिथ्यात्वं न जगन्मिथ्यात्वाधीनम् । येनेतरेतराश्रयप्रसङ्गः स्यात् । किन्तु विमतो भेदो मिथ्या भेदत्वाच्चन्द्रभेद-वदित्याद्यनुमानेन 'नान्योऽतोऽस्ति द्रष्टा' इत्यागमाच्च तत्सिद्धिरित्याशङ्क्याऽह-भेदमिथ्यात्वेति ।। अत्र मिथ्यापदेन नासत्त्वमभिप्रेतम् । अपसिद्धान्तात् । किन्त्वनिर्वचनीयत्वमेवेति वक्तव्यम् । तथात्वे च न चानिर्वचनीये किञ्चिन्मानम् इत्याद्युक्तदोषैः प्रत्यक्षबाधितं च इत्यादिवक्ष्यमाणदोषैश्च ग्रस्तत्वमिति भावः ।

### श्रीराघवेन्द्रतीर्थ

अनैकान्तिकत्वाभिव्यक्त्यर्थमात्मन इत्येतद्विशिनष्टि- विपक्षभूतस्येति ।। हेतुत्वसिद्धि-रिति ।। अनैकान्त्याभावादिति भावः । तत्सिद्धौ चेत्यनन्तरं तेन हेतुनेति योज्यम् । नन्वात्मनि गतोऽपि भेदरूपो वस्तुतः परिच्छिन्नत्वहेतुः मिथ्येति चेन्न । मानाभावात् । २भेदो मिथ्या भेदत्वादित्याद्यनुमानादीनां भावादित्यत आह - भेदेति ।। वक्ष्यमाणेति । प्रत्यक्षबाधितं चेत्यादिना वक्ष्यमाणबाधादीत्यर्थः । यद्वा यत्प्रागुक्तमविद्याविलसितो जीवेश्वरजडरूपो भेदप्रपञ्चो न परमार्थ इति तन्निराह- भेदमिथ्यात्वेति ।। आत्मनो भेदानुपपत्तिरिति । मिथ्याभूतप्रपञ्चप्रतियोगिकभेदस्यापि मिथ्यात्वादित्यर्थः । तथा च नानैकान्त्यमिति भावः । प्रपञ्चमिथ्यात्वसिद्धावित्यनन्तरं आत्मनि तत्प्रतियोगिकभेदस्यापि मिथ्यात्वप्राप्त्या व्यभिचाराभावेन वस्तुतः परिच्छिन्नत्वस्य हेतुत्वसिद्धिरित्यर्थः ।

### गुरुराजीया

हेतुत्वसिद्धिरिति ।। आत्मनि व्यभिचारपरिहारेणेति शेषः । नन्वात्मभेदमिथ्यात्वं न जगन्मिथ्यात्वाधीनम् । येनेतरेतराश्रयप्रसङ्गः स्यात् । 'विमतो भेदो मिथ्या भेदत्वात् चन्द्रभेदवत्' इत्याद्यनुमानेन 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्या च तत्सिद्धिरित्यत आह- भेदमिथ्यात्वेति ।। उक्तवक्ष्यमाणेति ।। न चानिर्वचनीये किञ्चिन्मानम्' 'प्रत्यक्षबाधितं च जगन्मिथ्यात्वम्' इत्याद्युक्तवक्ष्यमाणेत्यर्थः ।

### गोविन्दीया

भेदेति ।। 'विमतो भेदः मिथ्या, भेदत्वाच्चन्द्रभेदवत्' इत्याद्यनुमानादीनामप्रसिद्ध-विशेषणत्वाद् उक्तवक्ष्यमाणदोषग्रस्तत्वादित्यर्थः ।

### नारोपन्तीया

ननु यद्यपि वस्तुतः परिच्छिन्नत्वं नाम, वस्तुप्रतियोगिकभेदवत्त्वम् । तथापि नात्मन्य-नैकान्तिकता । आश्रयसमसत्ताकभेदस्य विवक्षितत्वात् । पक्षे आश्रयसमसत्ताकमिथ्याभूतस्य भेदस्य सत्त्वेऽपि विपक्षभूतस्यात्मनः पारमार्थिकत्वात्तत्र तथाविधभेदाभावेन हेतोरेवागमनात् पराभ्युपगतभेदस्य च, विमतो भेदो मिथ्या भेदत्वात् चन्द्रभेदवदिति मिथ्यात्वानुमानादित्यत आह- भेदमिथ्यात्वानुमानादीनामिति ।।

### जनार्दनभट्टीया

परिच्छिन्नशब्दस्य मूर्तपरत्वे१ मूले 'वस्तुतः' इति तसेरनुपपत्तिरित्यत आह – वस्तुतः परिच्छिन्नत्वं हीति ।। 'आत्मनोऽपि'इति 'अपि'शब्दस्य स्वारस्यमाह – विपक्षेति ।।

मिथ्यात्ववादिभिः भेदानङ्गीकारादाह – तत्ववादिनेति ।। आत्मनि हेत्वभावात् न अनैकान्त्यमिति शङ्कते – न चेति ।। तथा च भेदव्यापकप्रतियोग्यभावात् तद्व्याप्यभेदोऽपि आत्मनि नास्तीति न आत्मनि व्यभिचार इति भावः । हेतुत्वसिद्धिरिति ।। आत्मनि व्यभिचाराभावादिति भावः ।

ननु न प्रतियोगिभूतप्रपञ्चमिथ्यात्वेन भेदमिथ्यात्वं साध्यते येन अन्योन्याश्रयः स्यात् । किं नाम 'भेदो मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्' इत्यनुमानेन 'नान्योऽतोऽस्ति द्रष्टा' इत्याद्यागमेन च । अतो न अन्योन्याश्रय इत्यत आह – भेदेति ।। वक्ष्यमाणेति ।। अनिर्वचनीयासिद्धेरेव अनुमानस्यापि असिद्धिरित्यादिना ईश्वरेणापि भेदस्यैव अनुभूयमानत्वाच्च इत्यादिना च वक्ष्यमाणदोषग्रस्तत्वादित्यर्थः ।

वस्तुतः ..

**आत्मत्वहेतुनिराकरणम्**

***वस्तुतः परिच्छिन्नत्वमात्मनोऽपि भेदाङ्गीकारादनैकान्तिकम्***

### श्रीमज्जयतीर्थटीका

एतेनात्मत्वहेतुरपि परास्तः । तत्खल्वदृश्यत्वं वा प्रमातृत्वं वा प्रकाशत्वं वा स्वप्रकाशत्वं वा अपरिच्छिन्नत्वं वा वक्तव्यम् । तत्सर्वमुक्तरीत्याऽसिद्धम् । दृष्टान्तश्च साधनविकलः । जातिविशेष आत्मत्वमिति चेत् न । तस्याप्यात्मनि परेण वस्तुतोऽनभ्युपगमात् । मिथ्याभूतस्य निरस्तत्वात् । आरोपितस्यातिप्रसञ्जकत्वात् ।

### श्रीविजयीन्द्रभिक्षु

आत्मत्वहेतुरपीति ।। 'विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत्' इत्यात्मत्वहेतुरपीत्यर्थः । तत्सर्वमिति ।। वेदान्तानां निर्विषयत्वपरिहाराय दृश्यत्वात्, प्रमातृत्वस्य त्वयैवानङ्गीकारात्, ज्ञातृज्ञेययोरभावेन प्रकाशत्वासम्भवात्, तत एव स्वप्रकाशत्वा-सम्भवात् आत्मनः प्रपञ्चविलक्षणत्वाङ्गीकाराच्चादृश्यत्वादिरूपमात्मत्वं पक्षेऽसिद्धमित्यर्थः । दृष्टान्तश्चेति ।। पक्ष इव दृष्टान्तेऽपि साधनाभावस्योपपादयितुं शक्यत्वादित्यर्थः । अतिप्रसञ्जक-त्वादिति ।। बाष्पारोपितधूमस्यापि वह्निसाधकत्वप्रसङ्गात् । देहादौ व्यभिचारप्रसङ्गाच्चेत्यर्थः ।

### श्रीवेदेशतीर्थ

एवं जगन्मिथ्यात्वसाधकहेतुं निराकृत्य यत्पूर्वं परमतानुवादावसरे 'विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात्' इति भेदमिथ्यात्वसाधकानुमानमनूदितं तदिदानी-मतिदेशेन दूषयति- एतेनेति ।। तत्सर्वमुक्तरीत्येति ।। वेदान्तवाक्यजनितविज्ञानस्यात्म-ज्ञानत्वनिर्वाहायाऽत्मनोऽपि दृश्यत्वात्, प्रपञ्चविलक्षणत्वाङ्गीकाराच्चादृश्यत्वादिरूपमात्मत्वं पक्षेऽसिद्धमित्यर्थः । दृष्टान्तश्चेति ।। पक्ष इव दृष्टान्तेऽपि साधनाभावस्योपपादयितुं शक्यत्वादिति भावः । जातिविशेषरूपमात्मत्वं किं पारमार्थिकमुत व्यावहारिकं प्रातिभासिकं वेति विकल्पं मनसि निधायाऽद्यं दूषयति- तस्यापीति ।। द्वितीयं दूषयति- मिथ्याभूतस्येति ।। व्यावहारिक-स्येत्यर्थः । निरस्तत्वादिति ।। अनिर्वचनीयनिरासेनेति शेषः । तृतीयं प्रत्याह- आरोपित-स्येति ।। बाष्पारोपितधूमस्यापि वह्निसाधकत्वप्रसङ्गादिति भावः ।

### द्वैतद्युमणि

अतिप्रसक्तत्वाद्१ देहादौ व्यभिचरितत्वात् । आत्मतादात्म्यभ्रमे आत्मत्वस्यापि तत्र भ्रमगोचरत्वादिति भावः ।

### श्रीराघवेन्द्रतीर्थ

२यच्चोक्तं प्राक् 'विमता आत्मानः परमात्मनो न भिद्यन्ते आत्मत्वात्' इति तमपि हेतुमतिदेशेन पराचष्टे- एतेनेति ।। 'आत्मत्वहेतुः सत्यो मिथ्या वा । आद्ये तवासिद्धिः । अन्त्ये ममासिद्धिः' इत्यादिरूपेणोक्तवक्ष्यमाणबाधादिदोषग्रस्तत्वेनेत्यर्थः । विशिष्यापि निराह- तत्खल्वित्यादिना ।। उक्तरीत्येति ।। 'आत्मनोऽपि दृश्यत्वात्' इत्यादिना उक्तदिशा, 'न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते' इत्युक्तदिशा, 'तच्चाप्रकाशत्वमात्मनः' इत्युक्तरीत्या 'वस्तुतः परिच्छिन्नत्वमात्मनोऽपि' इत्युक्तरीत्या चासिद्धमित्यर्थः । दृष्टान्तश्चेति ।। परमात्मा हि त्वया दृष्टान्ततयोक्तः । तत्र चोक्तरीत्या अदृश्यत्वादिरूपमात्मत्वमसिद्धमिति साधनविकल इत्यर्थः । निरस्तत्वादिति ।। अनिर्वचनीयस्य निरासान्मिथ्येत्यस्यासदित्यर्थत्वादात्मत्वं नास्तीत्युक्तं स्यात् । ततश्चासिद्धिसाधनवैकल्ये भवत इति भावः । अतिप्रसक्तत्वादिति ।। देहादावप्या-रोपितात्मत्वस्य सत्त्वादित्यर्थः । दृष्टान्तश्चेति ।। परमात्मरूपो दृष्टान्त इत्यर्थः ।

### गुरुराजीया

एवं मिथ्यात्वसाधकहेतून्निराकृत्य भेदाभावसाधकत्वेनोक्तमात्मत्वमपि निराकरोति- एतेनेति ।। उक्तरीत्येति ।। 'न चाऽत्मनो दृक्मर्मत्वं विना तज्ज्ञानत्वम्' इत्युक्तरीत्येत्यर्थः । निरस्तत्वादिति ।। अदृश्यत्वादिरूपस्याऽत्मत्वस्य दृश्यत्वाद्युपपादनेन निरस्तत्वादिति भावः । जातिविशेषरूपमात्मत्वं पारमार्थिकं व्यावहारिकम् उत प्रतिभासिकमिति विकल्पान् मनसि निधायाऽद्यं दूषयति- तस्यापीति ।। लक्षणव्याघातेन एकस्मिन्नुपदेशादिनैव व्युत्पत्त्याद्युपपत्त्या जात्यङ्गीकारवैयर्थ्यप्रसङ्गेन च जातिवादिभिः जातेरनेकाश्रितत्वाङ्गीकारेणाऽत्मत्वस्य जातित्वे आत्मव्यक्तेर्बहुत्वप्रसङ्गेनानङ्गीकारादित्यर्थः । द्वितीयं दूषयति- मिथ्येति ।। मिथ्येति नानिर्वचनीयमुच्यते । प्रमाणाभावादिना तस्य निरस्तत्वात् । अतोऽसत्त्वमेव तदिति वाच्यम् । तथा च 'आत्मन आत्मत्वं मिथ्या' इत्युक्ते 'आत्मन आत्मत्वं नास्ति' इत्येवोक्तं स्यात् । तथा च स्वरूपासिद्ध्यादिप्रसङ्ग इति भावः । तृतीयं निराकरोति- आरोपितस्येति ।। आरोपितस्य साधकत्वे बाष्पारोपितधूमस्यापि वह्निसाधकत्वप्रसङ्गादिति भावः ।

### गोविन्दीया

एतेन वक्ष्यमाणेनेत्यर्थः । तदिति ।। तत्सर्वं हेतुजातमुक्तरीत्या स्वरूपासिद्धं तदभावस्य पक्षे दृश्यमानत्वादित्यर्थः । दृष्टान्तश्चेति ।। परमात्माख्यदृष्टान्तश्च साधनविकलः । तत्रादृश्यत्वा-प्रमातृत्वाभावस्योपपादितत्वादित्यर्थः । जातीति ।। जातिविशेष एव आत्मत्वमतो निर्धर्मके ब्रह्मणि जातिविशेषानङ्गीकारान्न साधनविकलो दृष्टान्त इति चेदित्यर्थः । तस्यापीति ।। सत्यभूतस्यात्मत्व-स्यात्मनि परेणानभ्युपगमान्मिथ्याभूतस्य चानिर्वचनीयमसद्वेति मिथ्याशब्दविकल्पेन निरस्तत्वात् । आरोपितस्य आरोपितात्मत्वस्य । यद्यारोपितात्मत्वं भेदमिथ्यात्वसाधकं स्यात् तर्हि आरोपित-धूमवत्त्वेनाग्निमत्त्वसाधनं स्यादित्यतिप्रसङ्गजनकत्वादित्यर्थः ।

### नारोपन्तीया

ननु तथापि न वस्तुतः परिच्छिन्नत्वहेतुरनैकान्तिकः । विपक्षभूतात्मनि तत्त्ववादिना भेदाङ्गीकारेऽपि मया तत्रात्मत्वहेतुना तदभावस्य साधयितुं शक्यत्वेन हेतोरेवागमनादित्यत आह- एतेनात्मत्वहेतुरपि निरस्त इति ।। किञ्च 'आत्मा न वस्तुतः परिच्छिन्नः आत्मत्वात्' इत्यनु-मातव्यम् । तत्र साध्यवस्तुशब्देन किमात्मस्वरूपमेवोच्यते? प्रपञ्चो वा? । आद्ये सिद्धसाधनम् । तावन्मात्रस्य मिथ्यात्वं प्रति हतुात्वेऽप्रयोजकत्वं च । द्वितीये किमसावन्वयी ? व्यतिरेकी च ? आद्ये आह । दृष्टान्तश्च साधनविकल इति ।। प्रपञ्चे प्रपञ्चभेदाभावात्स दृष्टान्तीकर्तव्यः । तथाविधश्चात्मा । तस्य पक्षत्वात्तत्र चात्मत्वस्यैव सत्त्वात् ।। तदभाववान् प्रपञ्चश्चेत् दृष्टान्त-त्वेनोच्यते । न च सोऽपि भवतीत्याह । दृष्टान्तश्चेति । अत्र साधनशब्देन व्याप्यमुच्यते । व्यतिरेकव्याप्तौ साध्याभावस्य व्याप्यत्वात् । प्रकृते प्रपञ्चाभेदरूपसाध्याभावस्य प्रपञ्च(भेद)रूपस्य व्याप्यस्य प्रपञ्चे अभावाद्दृष्टान्तोऽनुपपन्न इत्यर्थः ।

### जनार्दनभट्टीया

एतेनेति ।। वक्ष्यमाणप्रकारेणेत्यर्थः । आत्मत्वहेतुरिति ।। 'विमत आत्मा तत्वतो न भिद्यते । आत्मत्वात् परमात्मवत्' इति प्रागुक्तहेतुरित्यर्थः । दृष्टान्तश्चेति ।। परमते निर्गुणे परमात्मनि आत्मत्वरूपधर्माभावादित्यर्थः । जातिविशेष इति ।। तथा च तत्खलु दृश्यत्वमित्यादिना उक्त-दोषानवकाश इति भावः । १वस्तुतोऽनभ्युपगमादिति ।। तात्विकस्यानङ्गीकारादित्यर्थः । तथा च भेदाभावसाधकात्मत्वहेतोः पक्षेऽसिद्धिरिति भावः । निरस्तत्वादिति ।। मिथ्याप्रमातृत्वञ्च अनिर्वचनीय-निरासादेव निरस्तमित्युक्तरीत्या प्रमातृत्वअपरपर्यायस्य आत्मत्वस्य निरस्तत्वादित्यर्थः । मिथ्याभूतात्मत्वहेतुम् अङ्गीकृत्यापि दूषणान्तरमाह – आरोपितस्येति ।। आरोपितस्य आत्मत्वस्य भेदाभावसाधकत्वाङ्गीकारे ह्रदादावपि आरोपितधूमेन पारमार्थिकवह्निसाध्यापत्तिरिति भावः ।

## प्रत्यक्षबाधितश्च जगन्मिथ्यात्वम् ..

**प्रत्यक्षस्य सत्त्वग्राहित्वनियमोपपादनम्**

### श्रीमज्जयतीर्थटीका

एवं प्रत्येकं निराकृतान्यनुमानानि साधारणदूषणेनापि दूषयति-

## मूल

***प्रत्यक्षबाधितश्च जगन्मिथ्यात्वम् ।***

अत्र जगन्मिथ्यात्वमित्युपलक्षणम् । आत्मभेदाभावश्चेत्यपि द्रष्टव्यम् ।

### श्रीविजयीन्द्रभिक्षु

प्रत्यक्षबाधोद्भावनस्य सन्निहितपरिच्छिन्नत्वानुमानमात्रविषयत्वशङ्कां व्यावर्तयति- एवमिति ।। उपलक्षणमिति ।। यद्यपि जगच्छब्देन भेदोऽपि सङ्गृहीतस्तथाऽपि परेणाऽकार-भेदेनानुमानोपन्यासात्तदभिप्रायेणैवं व्याख्यानम् ।

### श्रीराघवेन्द्रतीर्थ

एवमिति ।। आत्मनोऽपि दृश्यत्वादित्यादिप्रकारेणेत्यर्थः । साधारणेति ।। सर्वानुमानादि-साधारणदूषणेनेत्यर्थः । आत्मभेदाभावश्चेति । प्रत्यक्षबाधित इत्यन्वयः ।आत्मभेदाभावश्चेति ।।

‘अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ।

सर्वज्ञतादीशगुणविरुद्धाद्यनुभूतिगाः ।।’

इत्युक्तप्रकारेण प्रत्यक्षे धर्मिणि भेदकधर्मसाक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वेन जीवेषु परमात्म-प्रतियोगिकभेदस्यापि प्रत्यक्षसिद्धत्वेन ‘विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते’ इत्यनु-मानेन साध्यमानो भेदाभावः प्रत्यक्षबाधित इत्यर्थः ।

### गुरुराजीया

मिथ्यात्वशब्दस्य मिथ्यात्वमात्रपरत्वे प्रत्यक्षबाधस्य मिथ्यात्वानुमानमात्रनिष्ठत्वापत्त्या भेदाभावसाधकानुमानागमसाधारण्यालाभात् तल्लाभायोपलक्षणतया मिथ्यात्वशब्दं व्याचष्टे- अत्रेति ।।

### नारोपन्तीया

एतेनेत्यनेनातिदिष्टं वक्ष्यमाणं प्रत्यक्षबाधरूपं दोषमात्मत्वहेतौ योजयितुं उपलक्षणीय-माह- आत्मभेदाभावश्चेति ।। आत्मनि भेदाभावः आत्मभेदाभावः । तथा च- ‘विमतं मिथ्या दृश्यत्वात्’ इत्याद्यनुमानवत् ‘आत्मा न वस्तुतः परिच्छिन्नः आत्मत्वात्’ इत्येतदनुमानमपि कालात्ययापदिष्टमिति भावः ।

### जनार्दनभट्टीया

मिथ्यात्वानुमानानां दृश्यत्वाद्यनुमानानां दृश्यत्वाद्यनुमानेष्वपि एत एव दोषाः । आत्मनोऽपि दृश्यत्वात् इत्यादिना सामान्यतो विशेषतश्च अनुमानानां निराकृतत्वात् पौनरुक्त्यमित्याशङ्कां परिहरन् ‘प्रत्यक्षबाधितं च’ इति वाक्यमवतारयति – एवं प्रत्येकमिति ।। आत्मभेदाभावश्चेत्यपि द्रष्टव्य-मिति ।। आत्मभेदाभावस्यापि ‘न च कयाऽपि युक्त्या’ इत्यादिना पूर्वप्रस्तुतत्वाद् उपलक्षण-मावश्यकमिति भावः । न सदित्येवमाकारेति ।। ‘शीघ्रम्’ इति शेषः ।

## सदिति प्रतीयमानत्वात् ..

**विश्वमिथ्यात्वादिसाधकानुमानागमयोः प्रत्यक्षबाध्यत्वसमर्थनम्**

***सदिति प्रतीयमानत्वात्***

### श्रीमज्जयतीर्थटीका

तथापि बाध्यत्वं कुत इति चेत् । इत्थम् । स्तम्भादिकं हि प्रत्यक्षसिद्धमाश्रित्यानुमानं प्रवर्तते । अन्यथाऽश्रयहीनताप्रसङ्गात् । तथा चोपजीव्यत्वेन बलवत्प्रत्यक्षं कथमुपजीवकत्वेन दुर्बलमनुमानं सति विरोधे न बाधेत । एतेन 'वाचारम्भणम्'२, 'नान्योऽतोऽस्ति द्रष्टा'३ इत्यादिश्रुतयोऽपि निरस्ताः । तासामपि हि विषयसमर्पकत्वेन प्रत्यक्षमुपजीव्यमिति ।

### श्रीविजयीन्द्रभिक्षु

तथाऽपीति ।। उक्तरीत्या विरोधिविषयत्वेऽपि अधिकबलवत्त्वे प्रमाणाभावाद्वैपरीत्या-पत्तेश्चेति भावः । अनुमानापेक्षितपक्षादिग्राहकत्वेनोपजीव्यत्वेन प्राबल्यात्प्रत्यक्षस्य बाधकत्व-मुपपद्यत इति परिहरति- इत्थमिति ।। उपजीव्यत्वेनेति ।। साक्षात् परम्परया वा यदुत्थानं विना यदुत्थानं न सम्भवति तत्तस्योपजीव्यमिति भावः । विषयसमर्पकत्वेनेति ।। निषेध्यसमर्पकत्वेने-त्यर्थः । इदमुपलक्षणम् । स्वरूपग्राहित्वस्य जन्यज्ञानप्रामाण्यग्राहित्वादित्यपि द्रष्टव्यम् ।

### श्रीवेदेशतीर्थ

परमतानुवादावसरे जगन्मिथ्यात्वे भेदमिथ्यात्वे चोदाहृताः श्रुतयोऽपि न परेष्टसाधनक्षमाः इत्याह- एतेनेति ।। विषयसमर्पकत्वेनेति ।। धर्मिग्राहकत्वेनेत्यर्थः । प्रत्यक्षसिद्धविकारादिकमनूद्य तस्य वागालम्बनमात्रत्वादिविधानादिति भावः ।

### द्वैतद्युमणि

तथापीति ।। प्रत्यक्षविरोधसद्भावेऽपीत्यर्थः । बाध्यत्वं तद्विरोधेन स्वार्थावगाहिप्रमानु-मित्यजनकत्वम् । बाधकत्वमिति पाठे प्रत्यक्षस्येति शेषः । प्रमाजननशक्तिविघटकत्वमित्यर्थः । कुत इति प्रश्ने, प्रबलप्रमाणस्यैव बाधकत्वात् प्रमाणत्वसामान्येन प्रत्यक्षप्राबल्ये बीजाभावादिति भावः ।

### श्रीराघवेन्द्रतीर्थ

बाध्यत्वं कुत इतीति ।। विरोधितयोक्तप्रत्यक्षस्य प्राबल्यानिरूपणादिति भावः । अनु-मानमिति ।। मिथ्यात्वसाधकानुमानमित्यर्थः। उपजीव्यत्वेनेति ।। धर्मिग्राहकतयेति योज्यम् । 'वाचारम्भणं विकारो नामधेयम्' (छां. ६.४.१) इति श्रुत्या प्रत्यक्षेण गृहीतं विकारशब्दितं घटादिकमनूद्य 'यो विकारःस वाचारम्भणं वागालम्बनमात्रं मिथ्या इति यावत्' इत्यर्थवर्णनात् 'द्रष्टा जीवः अतो ब्रह्मण अन्यो नास्ति' इत्यर्थकथनात् द्रष्ट्रादेश्च भेदेन सत्त्वेन च ग्रहणादुप-जीव्यत्वाच्च तद्बाधितत्वेन निरस्ता इत्यर्थः । कथमुपजीव्यतेत्यत आह- तासामपीति ।। विषयेति ।। अनुवाद्येत्यर्थः ।

### गुरुराजीया

अन्यथेति ।। प्रत्यक्षसिद्धस्तम्भाद्यनाश्रयणे आश्रयहीनताप्रसङ्गादिति न्यायमतमाश्रि-त्योक्तम् । स्वमते तददूषणत्वस्य -

'आश्रयसाध्यव्यधिकरणासिद्ध्योर्न दूषणम् । अतिप्रसङ्गाभावात् ।'

'आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् ।

केषाञ्चिन्न च ते दोषाः............।'

इत्यादिना, प्रमाणलक्षणादावाचार्यैस्तददूषणत्वस्य समर्थितत्वादिति ध्येयम् । विषयसमर्पकत्वे-नेति ।। धर्मिग्राहकत्वेनेत्यर्थः । प्रत्यक्षसिद्धं विकारादिकमनूद्य तस्य वागालम्बनतादेर्विधातव्यत्वा-दिति भावः ।

### गोविन्दीया

अन्यथेति ।। अनुमानस्याश्रयानङ्गीकार इत्यर्थः । सतीति ।। सति विरोधे कथं न बाधेतेत्यर्थः । एतेनेति ।। उपजीव्यतया प्रबलप्रत्यक्षेणोपजीवकत्वेन दुर्बलस्यानुमानस्य निराकरणेनोपजीव्यत्वेन प्रबलप्रत्यक्षसिद्धं जगद्धर्मिणमाश्रित्य तस्य मिथ्यात्वं द्रष्टृत्वाभावं वदन्त्यः वाचारम्भणम्’ ‘नान्यतोऽस्ति’ इत्यादिश्रुतयोऽपि उपजीवकत्वेन दुर्बलत्वान्निरस्ता इत्यर्थः । तासामपीति ।। तासामपि श्रुतीनां धर्मिसमर्पकत्वेन प्रत्यक्षमुपजीव्यमित्यर्थः ।

### जनार्दनभट्टीया

तथाऽपीति ।। प्रत्यक्षविरोधमात्रसद्भावेऽपि इत्यर्थः । १बाध्यत्वं कुतः? इति ।। प्रत्यक्षस्य मिथ्यात्वबाधकत्वमित्यर्थः । अनुमानमिति ।। मिथ्यात्वानुमानमित्यर्थः । आश्रयहीनतेति ।। आश्रयहीनताया मायावादिमते दोषत्वादिति भावः । घटग्राहकप्रत्यक्षस्य वह्न्यनुमानबाधकत्ववारणाय आह – सति विरोध इति ।। ‘एतेन’ इति एतच्छब्दाभिप्रेतमर्थमाह – विषयसमर्पकत्वेनेति ।। धर्मिग्राहकत्वेनेत्यर्थः । उपजीव्यमितीति ।। अत्र ‘इति’शब्दो हेत्वर्थः । उपजीव्यत्वादित्यर्थः ।

अयं भावः – ‘वाचारम्भणम्’ इति श्रुतेः न भवदुक्तरीत्या घटादिविकारमिथ्यात्वमर्थः । विकारत्वग्राहक-प्रत्यक्षबाधितत्वात् किन्तु वक्ष्यमाणरीत्या प्राकृतनाम्नां विविधप्रकारत्वं संस्कृतमृत्तिकादिनाम्नां नित्यत्वं धार्यत्वं चेत्यर्थः । ‘नान्योऽतोऽस्ति द्रष्टा’ इति श्रुतेरपि ‘अतः= परमात्मनो, अन्यः = सदृशः नास्ति’ इति ।

## सदिति प्रतीयमानत्वात् ..

**प्रत्यक्षस्यानुमानादिबाध्यत्वशङ्का**

***सदिति प्रतीयमानत्वात्***

### श्रीमज्जयतीर्थटीका

नन्वस्तु प्रत्यक्षं प्रपञ्चसत्तागोचरम् । तथाप्यनुमानागमाभ्यामेव बाध्यताम् । तयोर्निरव-काशत्वात् । न हि व्याप्तिपक्षधर्मतावदनुमानं शक्यते स्वविषयात् प्रच्यावयितुम् । नाप्यागमोऽ-पौरुषेयत्वात् । उपक्रमादिभिरेवावगततात्पर्यत्वाच्च । प्रत्यक्षं तु सम्भावितदोषमप्रमाणमपि भवितुं युक्तम् ।

न चोपजीव्योपजीवकत्वन्यायविरोधः । अभिसर्पणाद्यभावलिङ्गेन ‘नायं सर्पः’ इत्याद्याप्त-वाक्येन चोपजीवकेनापि निरवकाशेन सावकाशस्योपजीव्यस्यापि सर्पभ्रमस्य बाधदर्शनात् । तत्रेदन्तामात्रमुपजीव्यप्रवर्तनाददोष इति चेत् तर्हि प्रकृतेऽपि तथाऽस्त्वित्यत आह -

### श्रीविजयीन्द्रभिक्षु

ननु भवतु प्रत्यक्षमुपजीव्यम् । तथाऽपि न प्रबलम् । सावकाशत्वात् । अनुमानागमौ तूपजीवकत्वेऽपि प्रबलौ । निरवकाशत्वात् । किञ्चोपजीवकत्वं न बाधकत्वे तन्त्रम् । उपजीव्यस्यापि रज्जुसर्पादिज्ञानस्यानुमानाप्तवाक्यबाध्यत्वदर्शनादिति शङ्कते- अस्त्विति ।। निरवकाशत्वं क्रमेणोपपादयति- न हीत्यादिना ।। स्वार्थात्प्रच्यावनम् अन्यविषयत्वकल्पनम् । न च तदनुमाने आगमे च सम्भवति । व्याप्तिपक्षधर्मतावत्त्वात् अपौरुषेयत्वेन भ्रमप्रमादादिदोषाजन्यत्वात्प्रमित-तात्पर्यकत्वाच्चेत्यर्थः । ननु रज्जुसर्पभ्रमस्योपजीव्यत्वेऽपि अनुमानाप्तवाक्याभ्यां बाध इत्ययुक्तम् । यद्विषयत्वेन तस्योपजीव्यत्वं तदंशे बाधाभावात् । पक्षज्ञानतया अनुवाद्यविषयतया वा इदमंश-विषयत्वावच्छेदेनैव तस्योपजीव्यत्वादिति शङ्कते- तत्रेति ।। प्रकृतेऽपीति ।। ‘नान्योऽतोऽस्ति द्रष्टा’ इति भेदनिषेधकश्रुतावपि ‘नाहमीश्वरः’ इत्यादिप्रत्यक्षस्यानुवाद्याहमर्थविषयत्वावच्छेदेनैवोप-जीव्यत्वम् । न भेदविषयत्वेनेति श्रुतेर्भेदनिषेधकत्वमुपपन्नमिति भावः । यद्यपि निषेध्यरज्जु-सर्पजीवपरभेदविषयत्वेनाप्युपजीव्यत्वं प्रत्यक्षस्याविशिष्टम् । निषेध्याज्ञाने निषेधज्ञानासम्भवात् । तथाऽपि निषेध्यज्ञानं प्रमाणान्तरेणापि सम्भवतीति शङ्कितुर्हृदयम् ।

### श्रीवेदेशतीर्थ

निरवकाशत्वं क्रमेणोपपादयति- न हीत्यादिना ।। बाधदर्शनादिति ।। तथा च प्राबल्ये बाधकत्वे चोपजीव्यत्वं न प्रयोजकम् । अपि तु निरवकाशत्वमेवेति भावः । ननु यदंशे उपजीव्यत्वं न तस्य बाध्यत्वम् । यदंशे च बाध्यत्वं न तस्योपजीव्यत्वम् । धर्मिरूपेदमंशविषयकमेव प्रत्यक्षमुप-जीव्यानुमानागमप्रवृत्तेरित्याशयेन शङ्कते- तत्रेति ।। प्रकृतेऽपीति ।। ‘सन् घटः’ इत्यादिप्रत्यक्षेऽपि धर्म्यंशविषयकत्वावच्छेदेनैव मिथ्यात्वानुमानाऽगमोपजीव्यत्वम् । न तन्निषेध्यसत्तांशविषयत्वाव-च्छेदेनापीति भावः । यद्यपि निषेध्यज्ञाने निषेधज्ञाना-योगादिति

नेश्वरमायाजन्यमितीति ।। नन्वेवमीश्वरमायाकल्पितत्वाभावसिद्धावपि न मायामयत्वाभावसिद्धिः । अन्यमायामयत्वसम्भवादिति चेन्न । परैरन्यमायामयत्वानङ्गीकारेणेश्वर-मायामयत्वाभावसाधनेऽमायामयत्वस्यैव सिद्धेरिति भावः । अवधारणानुपपत्तिरिति ।। अवधार्यता-मित्युक्तनिश्चयरूपावधारणानुपपत्तिरित्यर्थः । मायाया लोकोपमत्व इति ।। स्वाश्रयाव्यामोहक-त्वेनैन्द्रजालिकार्थहेतुभूतमायासादृश्य इत्यर्थः । अदृष्टकल्पनाप्रसङ्गादिति ।। तेन दृश्यमाने तन्मायामयत्वस्य लोकेऽदृष्टस्यैव प्रपञ्चे कल्पनाप्रसङ्गादिति भावः । अलौकिकत्व इति ।। लोक-मायाविलक्षणत्वे स्वाश्रयव्यामोहकत्व इति यावत् । अविद्यामयत्वापातादिति ।। मायायाः स्वाश्रयव्यामोहकत्वे अविद्यात्वापत्त्या विश्वस्याविद्यकत्वप्रसङ्गादित्यर्थः । तथा चाम्बरादिकं मायिकं दुःखादिकं त्वाविद्यकमिति विभागो न स्यादिति भावः । अप्रतिपक्षत्वादिति ।। मायाशब्द-वाच्यप्रकृत्याद्युपादानकत्वादेः प्रपञ्चेऽस्माभिरङ्गीकृतत्वादिति भावः ।

## श्रीराघवेन्द्रतीर्थ

प्रमाणविरोधश्चेति ।। प्रत्यक्षानुमानागमसूत्ररूपप्रमाणविरोधश्चेति 'न च माया' इत्यारभ्य 'न स्वप्नादिवदित्यादिभगवद्वचनेनापि निरस्ताः' इत्यन्तप्रकरणेन दर्शयिष्यन्नित्यर्थः । तावदि-त्युभयत्र सम्बद्ध्यते । मायाजन्यत्वाभावे तावदित्यस्य सुखादेरनाविद्यकत्वे त्वपरोक्षदृश इत्युत्तर-वाक्य इत्यर्थः । १अनुमानान्तराभावादित्यस्य प्रत्यक्षादेरप्युत्तरवाक्यैरित्यर्थः । अनुमानमिति ।। दर्शयतीत्यन्वयः । प्रयोगप्रकारोऽग्रे व्यक्तः । तेनेति श्रवणादाह- चो यस्मादित्यर्थ इति ।। माया नैव दृश्यत इत्यादौ मायाशब्दः मायामयपरः । अत एव तेनेदं न मायेत्यस्य नेश्वरमायाजन्यमिति यावदिति वक्ष्यति । अवधारण इत्युक्तस्यान्वयोक्तिर्नैव दृश्यत इति । व्यावर्त्याभावादाह- स्वरूपकथनमिति ।। व्यभिचारेति ।। तेन दृश्यमानत्वादिति वक्ष्यमाणहेतोरिति योज्यम् । साधनत्वख्यापनेनेति सहयोगे तृतीया । साधनत्वख्यापनेन सहेत्यर्थः । निगमनमिति यावत् ।

उदाहरणोपनयनिगमनानामुक्त्या सिद्धं प्रयोगप्रकारमाह- इयमत्रेत्यादिना ।। सतीति । यद्येन दृश्यते न तत्तन्मायामयम् । यथा कुलालेन दृश्यमानं घटादीत्येवं सतीत्यर्थः । उभयं लभ्यत इति ।। विपक्षे हेतुसाध्ययोः द्वयोरप्यभावोक्त्या द्वयमपि लभ्यते । विपक्षाद्धेतुव्यावृत्तेरव्यभिचाररूपत्वा-दन्वयोक्तावस्यालाभादिति भावः। अर्थवत्त्वादिति ।। व्यतिरेकव्याप्त्युक्तेरिति योज्यम् । तथा चेति ।। एवं शङ्किते सतीत्यर्थः । अवधारणेति । १तेनेदं न मायेत्यवधारणायोगाद् इत्यर्थः । लोकोपमत्व इति ।। वियदादिहेतुभूतायाः २ईश्वरनिष्ठमायायाः लोके मायाविनिष्ठमायासरूपत्वेऽङ्गीकृते सति माया-विकृतमायामये अदृष्टस्य मायाविना दृश्यमानत्वस्य कल्पनाप्रसङ्ग इत्यर्थः । अलौकिकत्व इति ।। लोकमायाविलक्षणत्वे आविद्यकत्वप्रसङ्गः । आविद्यकस्यैव सुखादेः शुक्तिरूप्यादेश्चाविद्यावता दृश्यमानत्वाभ्युपगमात् । मायाऽविद्योभयजन्यत्वस्यैव प्रपञ्चेऽङ्गीकृतत्वेन लोकसरूपमायाजन्यत्वा-भावे आविद्यकत्वावश्यम्भावाच्चेति भावः । अप्रतिपक्षत्वादिति ।। ईश्वरेच्छानिमित्तकत्वरूपेश्वर-मायामयत्त्वस्य प्रपञ्चेऽस्माभिरभ्युपगमेन विश्वसत्यत्वाप्रतिपक्षत्वादवधारणानुपपत्तिः नेत्यन्वयः । तदेवमिति ।। अदृष्टकल्पनादिरूपेत्यर्थः ।

मायाशब्दात् 'अस्मायामेधास्रजोविनिः'३ इति सूत्रेण मायास्यास्तीति मत्वर्थे विन्प्रत्यये मायाविन् प्रातिपदिकं सिद्ध्यति पश्चात्स्वाद्युत्पत्तौ मायावीति भवति । मायामिति ।। माया-कल्पितमित्यर्थः । साक्षात्कार इति ।। तथा च न दृश्यते । न साक्षात्क्रियत इत्यर्थः । 'ख्यापनेन सह साध्यनिर्देशो' निगमनम् । 'हेतुपूर्वं पुनः पक्षवचो निगमनं मतम्' इति वचनादिति भावः । व्याप्तीति ।। व्यतिरेकव्याप्तीत्यर्थः । व्यभिचाराभावेति ।। अन्वयव्याप्तौ व्यभिचारशङ्कायां साध्याभाववति हेत्वभावकथनेन हेतोरेवाभावान्न व्यभिचार इत्युक्तं भवति । नेदमिति ।। तथा चाप्रयोजकतेति भावः ।

## गुरुराजीया

तेनेति तच्छब्दश्रवणाद् यस्मादित्यर्थकतया चशब्दं व्याख्याति- यस्मादित्यर्थ इति ।। अवधारणे वेति ।। अन्यथा व्याप्तिप्रदर्शनासिद्धेरिति भावः । ननु पश्यतीत्यपरोक्षतोक्त्यैव व्यभि-चारपरिहारात् सदेति व्यर्थमित्यत आह- सदेति ।। साधनत्वप्रख्यापनेनेति ।। सहयोगे तृतीया ।

ननु परेण मायात्वस्यानभ्युपगमेन सिद्धसाधनत्वात् कथं न मायेति निगमनम् । न च न माया-जन्यमित्यर्थकत्वाद्युक्तं निगमनमिति वाच्यम् । केनचिद् दृश्यमानस्याप्यन्यमायाजन्यत्वस्य१ सम्भवाद् ईश्वरेण दृश्यमानत्वेन मायामयत्वाभावसाधनायोगादित्यतस्तदुक्तेरभिप्रायमाह- नेश्वर-मायाजन्यमिति यावदिति ।। न चेश्वरमायाजन्यत्वाभावसिद्धावप्यन्यमायामयत्वाभावस्यासिद्ध्या कथममायामयत्वावधारणमिति वाच्यम् । अन्यमायामयत्वस्यानङ्गीकारपराहतत्वेन पराङ्गीकृतेश्वर-मायाकल्पितत्वाभावसिद्धावमायामयत्वस्यैव सिद्धेरित्यत्र तात्पर्यम् ।

अवधारणानुपपत्तिः अवधार्यतामित्युक्तावधारणानुपपत्तिः । लोकोपमत्व इति ।। स्वाश्रया-व्यामोहकत्वेनैन्द्रजालिकार्थहेतुभूतमायातुल्यत्व इत्यर्थः । अदृष्टेति ।। तेन दृश्यमानस्य तन्माया-मयत्वकल्पनस्यादृष्टत्वादिति भावः । अलौकिकत्व इति ।। लोकमायाविलक्षणत्वे स्वाश्रय-व्यामोहकाविद्यात्वापत्त्या विश्वस्याऽविद्यकत्वप्रसङ्गादित्यर्थः । तथा चाम्बरादिकं मायिकं दुःखादिकं त्वाविद्यकमिति पराभिमतविभागो न स्यादिति भावः । अप्रतिपक्षत्वादिति ।। मायाशब्दवाच्येश्वरेच्छानिमित्तकत्वस्य तच्छब्दवाच्यप्रकृत्युपादानकत्वस्यास्माभिरप्यङ्गीकृतत्वा-दिति भावः ।

## गोविन्दीया

सदेति ।। दर्शनस्वरूपकथनमित्यर्थः । कथमिति ।। यद्येन दृश्यं तत्तन्मायाजन्यं न, यथाऽस्मदादिदृश्यब्रह्मवदिति ऋजान्वये सति कथं वक्रा व्यतिरेक आद्रियत इति चेदित्यर्थः । तथा चेति ।। एवमुक्ते सति विपक्षे यदीश्वरमायामयं स्यात्तर्हि तेन दृश्यमानत्वं न स्यादित्यस्येष्टा-पादकत्वेन बाधतर्कत्वाभावान्नेदं मायामयमिति साध्यावधारणानुपपत्तिरिति चेदित्यर्थः । मायाया इति ।। ईश्वरमायाया लोकमायासदृशत्वमङ्गीकृत्य तज्जन्यवस्तुनस्तेन दृश्यमानत्वाङ्गीकारेऽ-दृष्टकल्पना स्यात् । लौकिकमायाजन्यवस्तुन ऐन्द्रजालिकेन पुंसाऽदृश्यमानत्वादित्यर्थः । अलौकिकत्वे इति ।। तज्जन्यस्य

बाह्यप्रपञ्चस्याविद्यामयत्वापातात् । तथा चापसिद्धान्त इत्यर्थः। उभयेति ।। लौकिकत्वालौकिकत्वाभावे इच्छापरत्वेन तज्जन्यत्वसाधने प्रपञ्चस्यास्माकमविरुद्ध-त्वादित्यर्थः । तदिति ।। तदिदं बाधकत्रयमाचार्यैरेवेत्यवधार्यतामिति वाक्येनोक्तमित्यर्थः ।

## नारोपन्तीया

व्याप्तिप्रदर्शनं व्यभिचाराभावोपपादानं चेति ।। अन्वयव्याप्तौ प्रदर्शितायामपि, क्वचिद्धेतुमति साध्याभावः किं न स्यादिति शङ्कायां, यत्र साध्याभावः तत्र साधनाभाव इति व्यतिरेकोऽपि दर्शनीय इत्युभयत्र प्रदर्शने ग्रन्थगौरवं स्यात् । अनेन च साधने साध्याभाव-व्यापकाभावप्रतियोगित्वज्ञाने सति अन्वयव्याप्तिः स्वानुमेयैवेति भावः । लोकोपमत्व इति । ऐन्द्रजालिकमायातुल्यत्वे मायामयवस्तुनः ऐन्द्रजालिकेनादर्शनात् वियदादेरीश्वरेण दृश्यत्वाङ्गीकारे अदृष्टकल्पनमित्यर्थः । अलौकिकत्व इति । यथा देवदत्ताज्ञानकल्पितं रजतं देवदत्तेनाज्ञानिना दृश्यत एव, एवमीश्वरमायाकल्पितमपि तेन दृश्यतामित्यङ्गीकारे, रजतवद्वियदादेरविद्यामयत्वं प्रातिभासिकमापद्येत । ततश्चेश्वर एव पश्येन्नत्वन्ये जीवाः । न हि देवदत्ताज्ञानकल्पितं रजतं यज्ञदत्तः पश्यतीति पुनरनिष्ट एवापद्येतेति भावः ।

अस्माकमप्रतिपक्षत्वादिति । उभयबहिर्भूताचिन्त्येश्वरशक्तेर्मायाशब्दवाच्यायाः, अर्थक्रियासमर्थस्य सत्यभूतप्रपञ्चस्य कारणत्वेनास्माभिरप्यभ्युपगमादिति भावः ।

## जनार्दनभट्टीया

'न च मायाविना' इति श्लोकस्य 'नच जगत' इति वाक्यसान्निध्यवशात् प्राप्तं जगतो अज्ञानजन्यत्वे मानाभावपरत्वं वारयन् अवतारयति – न केवलमित्यादिना ।। अम्बरादिकं नेश्वरमायाजन्यमिति वक्ष्यमाणानुमानेन 'न च मायाविना' इत्यस्य अन्वयव्याप्तिप्रदर्शनपरत्वाभावात् प्रकारान्तरेण उपयोगाप्रतीतेश्चाह – मायाविनेति ।। तथा च अन्वयव्याप्तिप्रदर्शकतया उपयोगाभावेऽपि व्यतिरेकव्याप्तिप्रदर्शकत्वेन उपयोग इति भावः । व्यभिचारपरिहारायेति ।। ईश्वरेण दृश्यमानत्वादिति हेतौ दृश्यपदमपहाय ज्ञायमानत्वादित्येव कृते मायाविना परोक्षतो ज्ञायमाने मायाकल्पितत्वरूपसाध्यरहिते तेन अज्ञायमानत्वरूपहेत्वाभावाभावेन व्यतिरेकव्याप्तौ व्यभिचारवारणायेत्यर्थः । तेन 'इदं न माया' इति निगमने मायात्वाभावस्य साध्यताप्रतीतेः न ईश्वरमायाजन्यमिति करिष्यमाणप्रतिज्ञानानुगुण्यमाशङ्क्य आह – नेश्वरेति ।। तथा च कारण-वाचकमायाशब्दस्य तज्जन्ये उपचार इति भावः । ईश्वरेण दृश्यमानत्वहेतौ दृशिग्रहणस्य सामान्यतो व्यतिरेकव्याप्तावेव ऐन्द्रजालिके व्यभिचारवारकतया तस्याश्च 'न च मायाविना' इति मूले यत्तदादि-पदाभावेन अप्रतीतेः प्रतिज्ञाहेत्वभिधानपूर्वकं सामान्यव्याप्तिमाह – इयमत्रेति ।।

किमियमीश्वरमाया ऐन्द्रजालिकपुरुषमायासदृशी उत तद्विलक्षणा अथवा उभयबहिर्भूता? इति विकल्प्य आद्यं निराह– मायाया इति ।। जगद्व्यामोहकेश्वरमायायाः लोकोपमत्वे लोके विद्यमानमायाविपुरुषमायासदृशत्व इत्यर्थः । अदृष्टेति– मायामयस्य मायिना दृश्यमानत्वम् अदृष्टमेव कल्प्येतेति भावः । द्वितीयं निराकरोति –

अलौकिकत्व इति ।। अलौकिकपुरुषनिष्ठमायाविलक्षणत्व इत्यर्थः । अविद्यमयेति ।। त्वन्मते अनिर्वचनीयत्वस्य मायामयाविद्यामयान्यतरनियमाङ्गीकारादिति भावः । तृतीयं निराह – उभयेति ।। त्वदभिमतमायाविद्याबहिर्भूतेश्वरेच्छारूपत्वे तादृशेच्छाकल्पितत्वस्य सत्यत्वाविरोधित्वेन अस्माकमविरोधित्वादित्यर्थः ।

## अपरोक्षदृशो मिथ्यादर्शनं न ..

**सर्वस्य जगतो मायाजन्यत्वाभावे प्रमाणोक्तिस्तद्भावे प्रमाणविरोधोक्तिश्च**

### श्रीमज्जयतीर्थटीका

एवं वियदादेरमायामयत्वे प्रमाणमभिधाय दुःखादेरनाविद्यकत्वे प्रमाणं विवक्षुस्तस्य वियदाद्यमायामयत्वेऽपि प्रवृत्तेरुभयसाधारणमनुमानमाह-

## मूल

***अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेत् ।***

***सर्वापरोक्षविद्विष्णुर्विश्वदृक् तत्र तन्मृषा ।। इति ब्रह्माण्डे ।***

अत्र पूर्वार्धेन व्याप्तिं दर्शयति । अधिष्ठानमपरोक्षेण पश्यतस्तत्रारोपितमिथ्यार्थदर्शनं न भवेत् । अधिष्ठानापरोक्षज्ञानवता दृश्यमानं तत्रारोपितं न भवेदिति यावत् । अनेनान्वयो दर्शितः । यन्मिथ्या तस्य दर्शनमधिष्ठानापरोक्षदृशो न भवेदिति व्यतिरेको वा । क्वचिदित्यनेन तदुभय-नियमः । यद्यपि दृशिरेवापरोक्षज्ञाने वर्तते तथापि ‘पश्यार्थैश्चानालोचने’ इत्यादौ ज्ञानमात्रेऽपि दर्शनादपरोक्षेत्युक्तम् । अत एव ‘सर्वापरोक्षविद्विष्णुर्विश्वदृक्’ इति सामान्येन हेतोः पक्षधर्मतां दर्शयति ‘सर्वात्मनाऽपरोक्षतोऽधिष्ठानाभिमतं जानन् विष्णुर्विश्वं पश्यति’ इति । अपरोक्षतः शुक्तिकां पश्यन्नेव तदारोपितं रजतं पश्यतीति व्यभिचारपरिहाराय सर्वेत्युक्तम् ।

नन्वेवं सति दृष्टान्ते साधनाभावः प्राप्नोति । न हि लोके कोऽपि किमपि सर्वात्मना पश्यति । मैवम् । सर्वशब्देन व्यावर्तकाकारस्य विवक्षितत्वात् । व्याप्तिकथनेऽप्येतदनुसन्धेयम् ।

आप्तवाक्यादिना शुक्तिकां पश्यन्नपि रजतं पश्यतीति व्यभिचारनिरासायापरोक्षेत्युक्तम् । विष्णुरित्यसिद्धिपरिहाराय स्वरूपकथनम् । तत्तस्मात् तद्वियदादि मायामयत्वेन दुःखादि अविद्यामयत्वेन च मृषा न भवतीति साधनत्वाभिव्यक्तिपूर्वकं साध्यनिर्देशः ।

इयमत्र प्रयोगप्रक्रिया । विवादपदं नाऽरोपितं सर्वात्मनाऽधिष्ठानापरोक्षज्ञानवता दृश्यमान-त्वात् । यदेवं तदेवं यथा उक्तविधया स्तम्भविदा दृश्यमानो न कुम्भस्तत्राऽरोपितः । अथ वा यन्नैवं तन्नैवं यथा

शुक्तिकाऽरोपितरजतमुक्तरीत्या शुक्तिदर्शिना न दृश्यते । अधिष्ठानज्ञानेऽपि भ्रमानुवृत्तौ बन्धनिरासाय ब्रह्मज्ञानान्वेेषणाऽयासवैयर्थ्यप्रसङ्गः ।

एतेनानुमानागमयोः प्रत्यक्षविरोधोपपादनेनैवानुमानविरोधोऽप्युक्तो भवति । उपन्यस्तानुमान-योरागमिकत्वेनातिबलवत्त्वात् । अनेनागमविरोधोऽपि सूचितः ।

## श्रीविजयीन्द्रभिक्षु

उत्तरश्लोके 'न मृषा' इति साध्यनिर्देशस्य हेतोश्च मायिकत्वाविद्यकत्वोभयनिषेध-साधारण्यात् वियदादिमायिकत्वनिषेधमात्रपरत्वशङ्कावारणायावतारयति- एवमिति ।। क्वचिदपरोक्ष-ज्ञानवतोऽपि आरोपितवस्तुदर्शनस्याऽनुभविकत्वेन यथाश्रुतमयुक्तमित्याशङ्क्य व्याकुर्वन् व्याप्ति-स्वरूपं दर्शयति- अधिष्ठानेति ।। शुक्त्याद्यधिष्ठानापरोक्षज्ञानवताऽपि दृश्यमानस्य रजतस्य रङ्गादावारोपितत्वाद्व्यभिचार इत्यत उक्तम्- तत्रेति ।। यदधिष्ठानापरोक्षज्ञानवता यद्दृश्यते तत्तत्राऽरोपितं नेत्यर्थः । अधिष्ठानापरोक्षज्ञानवतेत्यनेनान्वये दर्शितेऽपि व्यभिचाराभावप्रदर्शनाय व्यतिरेकोपदर्शनमावश्यकमित्यभिप्रेत्याऽह- यन्मिथ्येति ।। ननूक्तरीत्या व्यतिरेकप्रदर्शनस्यैवो-भयार्थत्वसम्भवात् अन्वयप्रदर्शनपरत्वे मानाभाव इत्यत आह- क्वचिदिति ।। नियम इत्यस्यानन्तरं दर्शित इत्यनुषज्यते । तथा च व्यतिरेकप्रदर्शनस्योभयार्थत्वसम्भवेऽपि स्मृत्यैवोभयव्याप्तौ स्वतात्पर्यज्ञापनेनोभयपरत्वे मानाभावोऽसिद्ध इति भावः । यद्वा क्वचिच्छब्दरहितस्यैव पूर्वार्धस्य व्याप्तिप्रदर्शकत्वस्योक्तत्वात् क्वचिच्छब्दवैयर्थ्यमित्याशङ्क्याऽह- क्वचिदिति ।। तथा च पूर्वं सहचारमात्रं प्रदर्शितम् । अनेन तु नियमांशः प्रदर्श्यत इति न वैयर्थ्यम् । एतच्च स्वकृत-व्याख्यानद्वयाभिप्रायेण । क्वचिच्छब्दस्तु नियमांशमात्रपर इत्यवधेयम् ।

श्लोके अपरोक्षपदस्य गतार्थस्य शङ्कते- यद्यपीति ।। यद्यपि बहुव्रीहिलाभार्थं पदान्तरमपेक्षितं तथाऽपि दृक्पदस्थाने ज्ञानपदमेव प्रयोक्तुमुचितम् । बहुव्रीह्यभावेऽपि पश्यतीति दृगिति व्युत्पत्त्या अपरोक्षज्ञानवतो लाभादपरोक्षपदस्याऽनर्थक्यमेवेति भावः । दृशेर्ज्ञानमात्रेऽप्यभियुक्तप्रयोगादप-रोक्षपदं तद्विशेषलाभार्थत्वान्न व्यर्थमिति परिहरति- तथाऽपीति ।। अत एवेति ।। यत एव दृशेर्ज्ञानसामान्यमप्यर्थः अत एवेत्यर्थः ।

ननु 'सर्वापरोक्षविद्विष्णुर्विश्वदृक्' इत्येतन्न पक्षधर्मतोपपादकम् । व्यावर्तकधर्मवत्तयाऽ-धिष्ठानापरोक्षज्ञानवता दृश्यमानत्वादिति करिष्यमाणहेतोरप्रतीतेरित्यत आह- सामान्येनेति ।। व्यावर्तकधर्मवत्त्वाकारेणाप्रतिपादनेऽपि सामान्यधर्माकारेण प्रतिपादनान्नोक्तदोष इति भावः । सर्वात्मनेति ।। अशेषविशेषाकारेणेत्यर्थः । उक्तमिति ।। इदन्त्वेन शुक्तिकां पश्यन्नपि न शुक्तित्वाद्याकारेण पश्यतीति विवक्षितहेत्वभावान्न व्यभिचार इति भावः । न हीति ।। स्तम्भत्वादि-योग्यधर्मवत्तया लोके कस्यचिदपरोक्षज्ञानसम्भवेऽपि गुरुत्वाद्ययोग्यधर्मवत्तया तदसम्भवादिति भावः। लोके कोऽपीत्यनेनोभयवादिसम्प्रतिपन्नो जनो विवक्षित इति न काऽप्यनुपपत्तिरिति ध्येयम् । व्यावर्तकेति ।। यद्यपि शुक्ती रजतञ्चेति समुच्चयभ्रमव्यावर्तकशुक्तित्वाकारवत्तया तदपरोक्षज्ञान-वताऽपि दृश्यते तथाऽपि यस्य

धर्मस्य येन रूपेण ज्ञाने इतरव्यावृत्तिर्बुद्ध्यते तेन रूपेण तद्वत्तया अधिष्ठानापरोक्षज्ञानवत्त्वं विवक्षितमिति नोक्तदोषः ।

नन्वधिष्ठानापरोक्षज्ञानवतेत्यनेनाविशिष्टस्य हेतोर्व्याप्तिः प्रदर्शिता । अत एवेत्यादिना तु विशिष्टस्य पक्षधर्मता प्रदर्श्यते । एवञ्च वैयधिकरण्यमित्यत आह- व्याप्तिकथनेऽपीति ।। एतत् व्यावर्तकाकारवत्तयेति विशेषणम् । पश्यन्नपि जानन्नपीत्यर्थः । ननु व्यावर्तकधर्मवत्तयाऽ-धिष्ठानापरोक्षज्ञानवता दृश्यमानत्वं वियदादावसिद्धम् । तस्यास्मदाद्ययोग्यत्वादिति शङ्कोत्तरत्वेन विष्णुपदमवतारयति- विष्णुरितीति ।। विष्णोश्च 'तुरीयं तत्सर्वदृक्सदा' (मां. १.२.४) इत्यादिश्रुत्या सर्वापरोक्षज्ञानवत्त्वावेदनान्नासिद्धिरिति भावः । स्वरूपकथनमिति ।। वियदादौ विष्णुप्रत्यक्षविषयत्वमादायैव हेतूपपादनमिति वस्तुस्थितिकथनमित्यर्थः । स्मृतावाद्यं तत्पदं व्याचष्टे- तदिति ।। द्वितीयं तत्पदं व्याचष्टे- वियदादीति ।। वियदादि दुःखादि च मायिकत्वेनाऽविद्यकत्वेन मृषेति यदुक्तं तन्नेत्यर्थः ।

ननु श्लोकेऽधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वस्य पञ्चम्यन्तेन तृतीयान्तेन वा निर्देशाभावात्तस्य हेतुत्वे प्रमाणमेव नास्तीत्याशङ्क्य सर्वनामप्रतिरूपकमव्ययरूपं तत्पदं व्याचष्टे- तदिति ।। साध्यनिर्देश इति ।। कृत इति शेषः । हेतोरप्रयोजकत्वशङ्कानिरासाय विपक्षे बाधकमाह- अधिष्ठानज्ञानेऽपीति ।। व्यावर्तकधर्मवत्तयाऽधिष्ठानापरोक्षज्ञानेऽपीत्यर्थः । बन्धनिरासायेति ।। कर्तृत्वभोक्तृत्वाद्यध्यासस्यैव परेण बन्धरूपत्वाङ्गीकारादिति भावः । एतेनेत्यस्यैव विवरणं प्रत्यक्षविरोधोपपादनेनैवेति । अनुमानेति ।। दृश्यत्वाद्यनुमानस्य 'नान्योऽतोऽस्ति दृष्टा' 'वाचारम्भणम्' इत्याद्यागमस्येत्यर्थः । अनुमानविरोधोऽपीति ।। 'न च मायाविना माया' इत्यादि-पुराणवाक्यप्राप्तानुमानविरोधोऽपीत्यर्थः । प्रबलप्रत्यक्षमूलत्वेनोक्तानुमानयोः प्राबल्यादिति भावः । किञ्चाऽगमोपनिबद्धत्वादप्यस्मदुक्तानुमानयोरतिबलवत्त्वेन बाधकत्वमित्याह- उपन्यस्तेति ।। अनेनेति ।। आगमोपनिबद्धानुमानबाध्यत्ववर्णनेनेत्यर्थः । उपन्यस्तस्मृत्योरागमतयाऽपि प्रामाण्य-सम्भवादिति भावः । यद्यप्युदाहृतस्मृत्योर्न्यायनिबन्धनरूपतया न्यायांश एवाऽगमतया प्रामाण्यं न त्वनुमेयविषयतयेति तथाऽपि प्रतिवादिवाक्यस्याऽगमतयाऽपि प्रामाण्यं सम्भवतीत्यभिप्रायः ।

## श्रीवेदेशतीर्थ

दृशेः साक्षात्कारार्थत्वादापरोक्ष्येण पश्यता इत्यनुपपन्नम् । तत्राऽरोपितमिथ्यादर्शनं न भवेदित्येतत् न तन्मृषेति निगमनसूचितवक्ष्यमाणप्रमेयाननुगुणं चेत्यत आह- अधिष्ठानापरोक्ष-ज्ञानवतेति ।। अत्र यत्किञ्चिदपरोक्षज्ञानवता दृश्यमाने शुक्तिरजते व्यभिचारवारणायाधिष्ठाने-त्यध्याहृतम् । शुक्तिलक्षणाऽधिष्ठानापरोक्षज्ञानवता दृश्यमाने रङ्गारोपितरजते व्यभिचारवारणाय तत्रेत्युक्तम् । यत्राधिष्ठाने अपरोक्षज्ञानं तत्रेत्यर्थः । अपरोक्षज्ञाने वर्तत इति ।। तथा चापरोक्षपदं मूले गतार्थमिति भावः । ज्ञानमात्रेऽपीति ।। पश्यार्थैरित्यस्य ज्ञानार्थैरिति वृत्तिकारादिभिर्व्याख्यात-त्वादित्यर्थः । दर्शनात् प्रयोगदर्शनादित्यर्थः । अत एवेति ।। यतो दृशिर्ज्ञानसामान्यार्थकोऽत एवेत्यर्थः । सामान्येनेति ।। विदिति ज्ञानसामान्यस्यैवोदितत्वात् । अन्यथा सर्वापरोक्षदृगिति वक्तव्यम् । न ह्येकस्य व्याप्तिरन्यस्य

पक्षधर्मता वक्तुं युक्तेति भावः । एतत् सर्वात्मनेत्येतत् । अन्यथा व्याप्तेर्न्यूनता स्यादिति भावः । आप्तवाक्यादिनेति ।। अपरोक्षभ्रमस्य परोक्षदर्शनानिवर्त्यत्वादिति भावः । असिद्धिपरिहारायेति ।। अस्मदादिषु सर्वात्मना जगदधिष्ठानापरोक्षज्ञानाभावात्पक्षहेत्वो-रसिद्धिरित्याशङ्कायां विष्णुज्ञानमादाय हेतूपपादनार्थं विष्णुग्रहणं कृतम् । न हेतुशरीरप्रविष्टतयेति भावः । उक्तविधयेति ।। सर्वात्मनेत्याद्युक्तविधया । एवमुक्तरीत्येत्यपि व्याख्यातव्यम् ।

अप्रयोजकत्वशङ्कापरिहाराय विपक्षे बाधकतर्कमाह- अधिष्ठानज्ञानेऽपीति ।। उक्तविधयाऽ-धिष्ठानज्ञानेऽपीत्यर्थः । अनुमानागमयोरिति ।। विश्वमिथ्यात्वभेदाभावानुमानागमयोरित्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

अनुमानमित्यनन्तरं व्याप्तिपक्षधर्मतोपपादनायासनिरासाय पुराणवाक्येनेति योज्यम् । व्याप्तिप्रदर्शके पूर्वार्धे किं विषयापरोक्षेणेत्याकाङ्क्षायामाह- अधिष्ठानेति ।। यद्वा भूतलाद्यपरोक्ष-दृशोऽपि शुक्तिरूप्यादिमिथ्यार्थदर्शनात्तत्राव्यभिचाराय व्याप्तिशरीरं व्यनक्ति - अधिष्ठानेत्यादि ।। तन्न तन्मृषेति निगमनम् । अवैयधिकरण्यायाऽह - इति यावदिति ।। अनेनेति ।। एवमुक्तार्थकेन पूर्वार्धेनेत्यर्थः । यत्तच्छब्दयोगे सति तस्य व्यञ्जनादिति भावः । अत्र सर्वात्मनेति विशेषणप्रक्षेपोऽग्रे व्यक्तः ।

पूर्वं मिथ्यादर्शनमित्येकं पदमुपेत्य वक्ष्यमाणहेतोरव्यभिचारव्यक्त्यर्थं यच्छब्दाध्याहारेण योजनान्तरमाह- यन्मिथ्येति ।। यन्मिथ्या तदधिष्ठानापरोक्षदृशा न दृश्यत इति ध्येयम् । अत्रापि सर्वात्मनेति विशेषणमग्रे स्पष्टीभविष्यति । साक्षादनुमित्युपयोगितया त्वपरयोजनेति भावः । तदुभयेति ।। अन्वयव्यतिरेकयोः नियमोऽव्यभिचारसहचारयोरित्यर्थः । दर्शित इति पदं व्यतिरेको वेत्यत्र चानुषज्यते । दृशिरेवेति ।। पूर्वप्रमाणे तथोक्तेरिति भावः । पश्यार्थैरिति ।। अचाक्षुषज्ञाने वर्तमानैः पश्यार्थकैर्धातुभिरित्युक्त्या दृशिधातोर्ज्ञानमात्रेऽपि प्रयोगदर्शनादित्यर्थः। अत एवेति ।। यतो ज्ञानमात्रार्थत्वमपरोक्षज्ञानार्थत्वं चास्ति दृशिधातोरतः प्रथमार्थमुपेत्यापरोक्षविदिति दृक्पदं विना द्वितीयार्थमभिप्रेत्य विश्वदृगित्यपरोक्षविशेषणं विना सामान्येन सर्वापरोक्षविद्दृश्यमानत्व-हेतोः पक्षधर्मतोक्ता । तथा च प्रागप्यपरोक्षज्ञानमात्रमपरोक्षदृक्पदेनाभिमतं दर्शनमित्यनेन चाप-रोक्षदृशिरिति भावः । इति सामान्येन हेतोः पक्षधर्मतां दर्शयतीत्युक्तं व्यनक्ति- सर्वात्मनेति ।। पश्यतीति ।। अपरोक्षतो जानातीत्यर्थः । शुक्तिकां पश्यन्निति ।। इदन्ताकारेणेति भावः । व्यभिचारेणेति वक्ष्यमाणहेतोरिति योज्यम् ।

अव्यभिचाराय सर्वेत्युक्तावन्यद्बाधकमाप्तमित्याशंक्य तस्य विवक्षितमर्थमाह- नन्वेवमिति ।। व्याप्तिकथनेऽपीति ।। अधिष्ठानापरोक्षज्ञानवता दृश्यमानं तत्राऽरोपितं न भवेदित्यादावपि व्यावर्तकशुक्तित्वादिधर्मप्रकारकतयाऽधिष्ठानापरोक्षज्ञानवतेति ग्राह्यमित्यर्थः । शुक्तिकां पश्य-न्निति ।। शुक्तिकां जानन्नित्यर्थः । असिद्धीति ।। व्यावर्तकधर्मप्रकारकतयाऽधिष्ठानापरोक्षवता दृश्यमानत्वं जगति नास्ति । तादृशपुरुषस्याभावादित्यतो विष्णुरित्युक्तम् । व्याप्तिशरीरे प्रवेशे कृत्याभावात् स्वरूपकथनमित्युक्तम्

। सर्वात्मनेति ।। व्यावर्तकाकारवत्तयेत्यर्थः । ईश्वरश्च सर्वज्ञत्वाद्विश्वाधिष्ठानमशेषव्यावर्तकवत्तया पश्यन्नेव विश्वं पश्यतीति भावः । उक्तरीत्या शुक्तिदर्शिनेति ।। व्यावर्तकवत्तया शुक्त्यपरोक्षज्ञानवतेत्यर्थः ।

हेतोरप्रयोजकतानिरासाय विपक्षे बाधकतर्कमाह- अधिष्ठानज्ञानेऽपीति ।। बन्धनिरासायेति ।। परमते बन्धस्य ब्रह्मण्यध्यस्तत्वादधिष्ठानब्रह्मज्ञानेन च निवर्त्यत्वात्तज्ज्ञानाय श्रवणमननाद्यायास-वैयर्थ्यप्रसङ्ग इत्यर्थः । एतेनेति ।। वचनद्वयोदाहरणेन विश्वमीश्वरः सदा पश्यतीति सर्वापरोक्ष-विद्विष्णुर्विश्वदृगिति चाधिष्ठानाभिमतापरोक्षज्ञानवद्दृष्टत्वोक्त्या मिथ्यात्वानुमानागमयोः प्रागुक्तयोः प्रत्यक्षविरोधोपपादनेनोक्तरीत्याऽनुमानविरोध उक्तो भवतीत्यर्थः । एतेनात्र वचनद्वये प्रत्यक्षविरोध एव व्यक्तं प्रतिभातीति परास्तम् । उक्तदिशा त्र्यवयवरूपानुमानमुद्राया अपि प्रतीतेः ।

केचित्त्वनुमानविरोधोपपादनेन प्रत्यक्षविरोधोऽप्युक्तो भवतीति व्यत्यासेन वाक्ययोजना स्वरसेति व्याचक्षते । अनुमानोक्तिपरतयैव प्राक् स्पष्टं योजितत्वादिति । विरोधपदेन बाधोऽत्राभिमत इति भावेनाऽह- उपन्यस्तेति ।। वचनद्वय इति योज्यम् । अनेन स्मृतिद्वयकथनेनेत्यर्थः । तस्य अनुमानरूपप्रमाणस्य । साधारणमिति ।। अम्बराद्यमायामयत्वदुःखाद्यनाविद्यक-त्वोभयसाधारणमित्यर्थः । नञो व्यत्यासेनान्वयमङ्गीकृत्याह- यन्मिथ्येति ।। ज्ञानमात्रेऽपीति ।। दृशेर्धातोः प्रयोगदर्शनादिति शेषः । ननु पश्यार्थैर्ज्ञानार्थैरिति व्याख्यानेन पश्यधातोरेव ज्ञानमात्रे प्रयोगः प्राप्तो न दृशिधातोरिति चेत् । सत्यम् । 'पाघ्राध्मेत्यादि'सूत्रेण दृशेर्धातोः पश्यादेशविधा-नात् । तथा च पश्यतीत्यस्य दृशिर् प्रेक्षण इत्येव धातुव्याख्यानं कार्यमिति द्रष्टव्यम् । अपरोक्षत इति ।। इदंत्वादिसाधारणाकारेणेत्यर्थः । 'सर्वेत्युक्तं' सर्वात्मनेत्युक्तम् । न हीति ।। पल-परिमाणप्रयोजनवत्त्वादिरूपेण सर्वात्मना स्तम्भसाक्षात्काराङ्गीकारे सार्वज्ञ्यं स्यात् । 'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञता नरः । न समर्थो महेन्द्रोऽपि' इति वचनादिति भावः । पश्यन् परोक्षतो जानन् । विवादपदम् अम्बरादिकं दुःखादिकं च । अप्रयोजकतां परिहरति - अधिष्ठानज्ञानेऽ-पीति ।। अधिष्ठानापरोक्षज्ञानवता दृश्यमानस्याप्यारोपितत्वे सर्वात्मना अधिष्ठानापरोक्षज्ञान-वतोऽपि आरोपितदर्शनाङ्गीकार इति यावत् । तत्तात्पर्यं भ्रमानुवृत्ताविति । ब्रह्मेति ।। तस्यैव जगदारोपाधिष्ठानत्वादिति भावः । प्रत्यक्षेति ।। मिथ्यात्वभेदाभावानुमानवाचारंभणाद्यागम-योरीश्वरप्रत्यक्षविरोधोपपादनेनैवेत्यर्थः । ननु अम्बरादिकं नेश्वरमायाजन्यं विवादपदं नारोपित-मित्यनुमानयोः कथमस्मदनुमानागमबाधकत्वम् अपौरुषेयत्वेन तदनुगृहीतत्वेन चास्मदीयानु-मानागमयोः प्रबलत्वादिति चेत्तत्राह । उपन्यस्तेति ।।

## गुरुराजीया

अत्र यत्किञ्चिदपरोक्षज्ञानवता दृश्यमाने शुक्तिरजते व्यभिचारवारणायापेक्षित-मध्याहरति- अधिष्ठानेति ।। शुक्तिकालक्षणाधिष्ठानापरोक्षज्ञानवता दृश्यमाने रङ्गारोपितरजते व्यभिचारवारणाय तत्रेत्युक्तम् । यदधिष्ठानापरोक्षज्ञानं तत्रेत्यर्थः । आपरोक्ष्ये वर्तत इति ।। तथा च मूलेऽपरोक्षपदं व्यर्थमिति भावः । पश्यार्थैरित्यादि ।। 'दर्शनं पश्यः । पाघ्राध्मेति पश्यादेशः । अस्मादेव निपातनाद्भावे शप्रत्ययः । पश्यः अर्थो येषां ते पश्यार्थाः । यदि तु पश्यतीति पश्य इति 'पाघ्राध्माधेट्दृशः शः'१ इति कर्तरि शः क्रियते तदा

द्रष्ट्रर्थैरित्यर्थः स्यात् । ततश्च आलोचनपर्युदासोऽनर्थकः स्यात् । न ह्यालोचनार्था द्रष्ट्रर्था भवन्ति । आलोचनं चाक्षुषं ज्ञानम् । तस्य पर्युदस्तत्वाद्दृशिरिह ज्ञानमात्रे वर्तते' इत्याकरे स्थितत्वादिति भावः । 'पश्यार्थैः' अस्मादेव निपातनाद्भावे शः । दर्शनं पश्यः । तच्चेह ज्ञानमात्रम् । 'अदर्शनं लोपः'२ इत्यत्र यथा । न तु चाक्षुषज्ञानमेव । अनालोचन इति निषेधात्' इति । यदि पश्यार्थत्वं नाम चाक्षुषज्ञानार्थत्वमेव स्यात् तर्हि अनालोचन इति विरुद्ध्येत । चाक्षुषज्ञानस्यैवाऽलोचनशब्दार्थत्वेन पर्युदासानुपपत्तेः । अतो ज्ञानमात्रमत्र दृशेरर्थ इति स्थितम् । अत एवेति ।। यतोऽत्र दृशिः ज्ञानसामान्यार्थकोऽत एवेत्यर्थः । सामान्येनेति ।। विदिति ज्ञानसामान्यस्यैवोदितत्वात् । अन्यथा सर्वापरोक्षदृग्विष्णुरिति ब्रूयात् । न ह्येकस्य व्याप्तिरन्यस्य पक्षधर्मतेति युज्यत इति भावः । एतदिति ।। सर्वात्मनेत्येतदि-त्यर्थः । अन्यथा न्यूनत्वप्रसङ्गादिति भावः । आप्तवाक्यादिनेति ।। अपरोक्षभ्रमस्य परोक्षविशेष-दर्शनानिवर्त्यत्वादिति भावः । हेतुगतविशेषणानां व्यभिचारवारकत्वनियममभ्युपेत्याऽह- स्वरूप-कथनमिति ।। अप्रयोजकत्वपरिहाराय विपक्षे बाधकं तर्कमाह- अधिष्ठानज्ञानेऽपीति ।। व्यावर्तकाकारेण अधिष्ठानज्ञानेऽपीत्यर्थः । वैयर्थ्येति ।। ब्रह्मज्ञानेऽपि तदनुवृत्त्या तदनिवृत्तेरिति भावः । एतेनेत्यस्यैव व्याख्यानम् अनुमानागमयोः प्रत्यक्षविरोधोपपादनेनैवेति । विश्वमिथ्यात्व-भेदाभावानुमानागमयोः प्रत्यक्षविरोधोपपादनेनैवेत्यर्थः । अनुमानविरोध इति ।। 'न च मायाविना माया' इति 'अपरोक्षदृशा' इति च वाक्यद्वयोक्तानुमानद्वयबाध उक्तो भवतीत्यर्थः ।

ननु चोक्तानुमानद्वयस्य मिथ्यात्वाद्यनुमानापेक्षयाऽधिकबलवत्त्वाभावान्न तदनुमानबाधक-त्वम् । अन्यथा तदनुमानाभ्यामेवैतदनुमानद्वयबाधप्रसङ्गादित्यत आह- उपन्यस्तानुमानयोरिति ।। अम्बरादिकं नेश्वरमायाजन्यं तेन दृश्यमानत्वात्, दुःखादिकं नाऽविद्यकं अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वादित्युपन्यस्तानुमानयोः 'न च मायाविना माया' इति 'अपरोक्षदृशा' इत्याद्या-गमोक्तत्वेन१ मिथ्यात्वाद्यनुमानापेक्षयाऽधिकबलवत्त्वेनाविशेषासिद्धेर्न वैपरीत्यप्रसङ्ग इति भावः । अनेनेति ।। विश्वमिथ्यात्वभेदाभावानुमानागमयोः प्रत्यक्षविरोधोपपादकग्रन्थेनैवेत्यर्थः । आगमविरोधेऽपीति ।। 'न च मायाविना' इत्याद्यागमविरोधोऽपीत्यर्थः ।

## गोविन्दीया

तस्येति ।। प्रमाणस्येत्यर्थः । अधिष्ठानेति ।। अधिष्ठानापरोक्षज्ञानवता दृश्यमान-मधिष्ठानम् । न तु तद्वस्तु तत्राधिष्ठाने आरोपितं न भवेत् स्वस्मिन्नारोपितत्वाभावादित्यर्थः । तदुभयेति ।। नियमेनोभयव्याप्तिर्दर्शितेत्यर्थः । पश्यार्थैरिति ।। अनालोचनेऽर्थेऽपरोक्षज्ञानादन्येऽर्थे प्रवृत्तेः, दृशिधातुः तदर्थधातुभिश्चेत्यादौ स्थले ज्ञानमात्रेऽपि दृशेः प्रयोगदर्शनादपरोक्षेत्युक्तमि-त्यर्थः । अत एवेति ।। सर्वापरोक्षविदित्यत्रापि विदधातोरपि ज्ञानमात्रे प्रयोगदर्शनादपरोक्षपदस्य सार्थक्यमित्यर्थः । सामान्येनेति ।। सामान्यत इत्यर्थः । सर्वात्मनेति ।। सर्वप्रकारेणाशेषविशेषेणेति यावत् । एवं सतीति ।। सर्वशब्दस्य सर्वात्मनेत्यर्थे सत्यपरोक्षतोऽधिष्ठानरूपस्तम्भविदा दृश्यमाने स्तम्भाख्यदृष्टान्ते सर्वात्मना दृश्यमानत्वाभावात् साधनाभाव इत्यर्थः । व्यावर्तकेति ।। अन्य-व्यावर्तकत्वाकारमात्रस्य न तु सर्वाकारस्येत्यर्थः । एतदिति ।। व्यावर्तकत्वाकारमित्यर्थः । विष्णु-रिति ।। सर्वात्मनाऽधिष्ठानापरोक्षज्ञानवान् पुरुष एव नास्ति । तेन

दृश्यमानत्वं दूरापास्तमिति हेतोरसिद्धिः, तत्परिहाराय विष्णुरित्यर्थः । तस्मादिति ।। साधनवत्त्वादित्यर्थः । उक्तविधयेति ।। सर्वात्मनाऽपरोक्षतोऽधिष्ठानत्वेनेत्यर्थः । उक्तरीत्येति ।। सर्वात्मनाऽपरोक्षतोऽधिष्ठानत्वेनेत्यर्थः । अधिष्ठानज्ञानेऽपीति ।। भ्रमानुवृत्तौ कदापि भ्रमपरिहाराभावात् तस्य संसारबन्धरूपत्वेन तन्निरास-वैयर्थ्यप्रसङ्ग इत्यर्थः । एतेनेति ।। अनुमानद्वयेन परोदितजगन्मिथ्यात्वानुमानागमयोः प्रत्यक्ष-विरोधोपपादनात् तयोः प्रत्यक्षविरोधवद् उक्तानुमानद्वयविरोधोऽप्युक्तो भवति । उपन्यस्तानुमान-द्वयेनागमिकत्वेनातिबलवत्त्वादित्यर्थः । अनेनेति ।। तयोरनुमानयोरागममूलत्वेनेत्यर्थः ।

## नारोपन्तीया

पश्यार्थैश्चानालोचन इति । यदि तत्र पश्यार्थत्वं नाम चाक्षुषज्ञानार्थत्वमेव स्यात् तर्हि अनालोचन इति विरुध्येत । चाक्षुषज्ञानस्यैवानालोचनशब्दार्थत्वेन पर्युदासानुपपत्तेः । अतो ज्ञानमात्रमत्र दृशेरर्थ इति स्थितम् । अत एवोदाहरणमपि 'भक्तस्तव रूपं ध्यायति' इति । विष्णुरित्यसिद्धिपरिहारार्थमिति ।। वेवेष्टीति विष्णुः । सर्वव्यापके तस्मिन्भगवति अस्मदादा-वविद्यमानमपि सर्वार्थदर्शित्वं युक्तमेवेति भावः ।

## जनार्दनभट्टीया

'अपरोक्षदृशो मिथ्या' इत्युत्तरश्लोकस्य 'न च माया' इति पूर्वमूलार्थोपपादनपरत्वप्रतीतेः उपक्रान्तदुःखाद्यनाविद्यकत्वे प्रमाणानुक्तिदोषं परिहरन् 'अपरोक्षदृश' इति मूलमवतारयति – एवमित्यादिना ।। न स्यादितिवत् न क्वचिद् भवेद् इत्यस्य तर्कपरत्वप्रतीतिं वारयति – पूर्वार्धेनेति ।। घटमपरोक्षेण पश्यताऽपि शुक्तौ रजतारोपदर्शनादाह – अधिष्ठानमिति ।। शुक्तिपदात् शुक्तिपरोक्षज्ञानवतोऽपि शुक्तौ रजतारोपदर्शनादाह – अपरोक्षेणेति ।। शुक्तिं इदन्त्वाकारेण अध्यक्षीकुर्वतोऽपि रजताकारदर्शनेन व्यभिचारवारणाय- सर्वेति ।। व्यावर्तकाकारेणेति शेषः । यद् वक्ष्यति व्याप्तिकथनेऽपि एतदनुसन्धेयमिति । दृशिरेवेति ।। 'दृशिर् प्रेक्षणे' इति धातुव्याख्यानादिति भावः । ज्ञानमात्रेऽपीति ।। 'त्वामौ द्वितीयाया'१ इति सूत्रेण 'श्रीशस्त्वाऽवतु, मापीह' इतिवत्, 'चेतसा त्वामीक्षते' इति भवितव्यमिति प्राप्ते, तदपवादत्वेन 'पश्यार्थैश्चानालोचने'२ इति सूत्रं प्रवृत्तम् । पश्यतेश्च दृश्यादेशत्वात् तत्समानार्थत्वम् । अस्य च सूत्रस्य 'अचाक्षुषज्ञानार्थैः धातुभिः योगे त्वा मा इत्यादेशा न स्युः' इति वृत्तिकृता व्याख्यातत्वात् अचाक्षुषज्ञानमात्रेऽपि दृशिरस्तीति भावः । अत्र च 'अनालोचने' इत्यस्य अचाक्षुषेति प्रतिपदम् । 'पश्यार्थैः' इत्यस्य 'ज्ञानार्थैः' इति । यदि अत्र पश्यादेशस्थानीभूतो दृशिः ज्ञानसामान्यवाची न स्यात् तर्हि 'अचाक्षुषज्ञानार्थैः' इति वृत्तौ ज्ञानार्थैरित्यनेन व्याख्येयस्य पदस्य सूत्रे अभावेन वृत्तेरनुसूत्रत्वं न स्यात् । अतः अन्यत्र अपरोक्षज्ञानवाच्यपि दृश्यादेशः अत्र ज्ञानमात्रवाचीति ज्ञायत इति भावः ।

विष्णुरित्यसिद्धीति ।। 'विषॢ व्याप्तौ' इति धातुव्याख्यानाद् गुणतोऽपरिच्छेदे लब्धे ज्ञानलक्षणगुणस्य सर्वविषयत्वरूप-अपरिच्छेदो लभ्यते । एवञ्च सर्वात्मना अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वहेतोरसिद्धिपरिहारो विष्णुशब्देन सूचित इति भावः । 'विश्वदृक् तन्न तन्मृषा' इत्यत्र

तत्पदद्वयस्य पौनरुक्त्यमाशङ्क्याऽह – तत् तस्मादिति ।। द्वितीयतच्छब्दार्थमाह – वियदादीति ।। साधनत्वाभिव्यक्तिपूर्वकमिति ।। उपनयपूर्वकमित्यर्थः । खण्डशो व्याख्यानेन प्रतिज्ञादेः विक्षेपात् तत्प्रदर्शनपूर्वकं विपक्षे बाधकतर्कं वक्तुमाह – इयमत्रेति ।। विपक्षे बाधकतर्कमाह – अधिष्ठानेति ।। अनुमानागमयोरिति ।। विवादपदं मिथ्या दृश्यत्वादिभ्यः । 'विमता आत्मानः परमात्मना तत्वतो न भिद्यन्त आत्मत्वात् परमात्मवत्'– इत्यनुमानद्वयस्य, 'वाचारम्भणम्' इत्याद्यागमस्य चेत्यर्थः ।

ननु 'न च मायाविना' इत्याद्युक्तानुमानद्वयस्यापि अनुमानत्वाविशेषात् कथं मिथ्यात्वाद्यनु-मानबाधकत्वम्? इत्यत आह – उपन्यस्तेति ।। 'न च मायाविना' इत्यादिना उपन्यस्तयोरनु-मानागमयोरित्यर्थः । आगमिकत्वेनेति ।। 'विश्वं सत्यम्' इत्यादिनिरवकाशागममूलत्वेनेत्यर्थः । 'विश्वं सत्यम्' इत्यादि श्रुतिरेव मिथ्यात्वाद्यनुमानागमपराकरणाय अलम् । किमुत तत्सहकृतानुमानद्वयमिति भावः ।

अत एव तथैवाऽह – अनेनेति ।।

## ईशोऽनीशो जगन्मिथ्या न ..

**जगत्सत्यत्वादिविषये सर्वानुगुणश्रुत्युदाहरणम्**

### श्रीमज्जयतीर्थटीका

स्पष्टं च तं दिदर्शयिषुरागमोदाहरणे तस्य जगत्सत्यतापरत्वोपपादने प्राबल्य-व्युत्पादनेऽनुपपत्त्यन्तरपरिहारे च प्रयासनिरासाय सर्वानुगुणां स्मृतिमुदाहरति -

## मूल

*ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।*

*एक आत्मा परब्रह्मभावो मुक्तिरिति ह्यपि ।।*

इति शब्दः प्रत्येकमभिसम्बद्ध्यते । अत एव द्विर्ग्रहणम् । एवमपिशब्दोऽपि । हिशब्दो हेतौ

**मूल**

*एवमादि विरुद्धानि वचनान्यथ युक्तयः ।*

*प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ।।*

एवमादीति लुप्तविभक्तिकं भिन्नं पदम् । अथेति समुच्चये । यस्मादीशोऽनीश इत्येवमादीनि वचनानि बहुभिर्वैदिकैः प्रमाणैर्विरुद्धाः तस्मादाभासानीति ज्ञेयानि । तथैवमादयो युक्तयोऽपि यस्माद्बहुभिर्वैदिकैः प्रमाणैर्विरुद्धास्तस्मादाभासा इति ज्ञेया इति योज्यम् । वचनापेक्षया विरोधि-प्रमाणानां प्राबल्यसमर्थनाय बहुभिरित्युक्तम् । उपलक्षणमेतत् । निरवकाशत्वादिकमपि ग्राह्यम् । अवैदिकवचनापेक्षया युक्त्यपेक्षया च प्राबल्योपपादनाय बहुभिरिति वैदिकैरिति चोक्तम् ।

## श्रीविजयीन्द्रभिक्षु

तम् आगमविरोधम् । आगमोदाहरण इति ।। पृथगागमोदाहरण इत्यर्थः । तस्येति ।। उपक्रमादिलिङ्गैरिति शेषः । प्राबल्येति ।। निरवकाशत्वादिना परोक्तागमान्तरापेक्षया प्राबल्योप-पादन इत्यर्थः । अनुपपत्त्यन्तरेति ।। परोक्तार्थान्तरशङ्कारूपानुपपत्त्यन्तरेत्यर्थः । सर्वानुगुणा-मिति ।। उक्तप्रयासरहितां स्वाभिप्रेतार्थसाधिकामित्यर्थः । अनीशो जीवः । ईशश्चाऽत्मा । मुह्यते भोक्तृत्वादिनेति मूलार्थः । प्रत्येकमिति ।। इशोऽनीश इति जगन्मिथ्येति गुरुः पूज्यो नेति एक आत्मेति परब्रह्मभावो मुक्तिरिति प्रत्येकमित्यर्थः । इतिशब्दाऽवृत्तौ प्रमाणमाह- अत एवेति ।। एवमिति ।। इतिशब्दवदपिशब्दोऽपि प्रत्येकं सम्बद्ध्यत इत्यर्थः । हिशब्द इति ।। 'न ह्यत्रानुयाजा इज्यन्ते' इत्यादौ हिशब्दस्य हेत्वर्थकत्वदर्शनादिति भावः ।

एवमादिविरुद्धानीति पदैक्यश्रवणेऽपि विवक्षितार्थलाभाय पदच्छेदपूर्वकं व्याचष्टे-एवमादीति ।। लुप्तविभक्तिकमिति ।। 'सुपां सुलुक्'१ इत्यादिना पाणिनिस्मरणादिति भावः । यद्यपि 'सुपां सुलुक्' इति छन्दोविषयं तथाऽपि छन्दोवत्पुराणानि भवन्तीत्युक्तेः पुराणानामपि छन्दस्त्वा-त्तद्विषयत्वमुपपद्यत इति भावः । समुच्चय इति ।। अव्ययानामनेकार्थत्वादिति भावः । पदार्थमुक्त्वा वाक्यार्थमाह- यस्मादिति ।। वचनापेक्षयेति ।। ईशोऽनीश इत्याद्यर्थकवैदिकवचनापेक्षया । विरोधिप्रमाणानामिति ।। बाधकप्रमाणानामित्यर्थः । बहुभिरित्युक्तमिति ।। प्रमाणैरिति बहुवचनेनैव प्रमाणबाहुल्यलाभात् पुनर्बहुभिरित्युक्तिरत्यन्तबहुत्वं ज्ञापयतीति भावः । निरवकाश-त्वादीत्यादिपदेन विशेषविषयत्वादिपरिग्रहः । युक्त्यपेक्षयेति सामान्योक्त्या शुष्कयुक्त्यपेक्षया तु नितरां प्राबल्यं द्योतितम् ।

## श्रीवेदेशतीर्थ

तं आगमविरोधम् । आगमोदाहरणे पृथग्जगत्सत्यताप्रतिपादकागमोदाहरणे । तस्य जगत्सत्यतापरत्वोपपादन इति ।। उपक्रमादिभिरिति शेषः । प्राबल्यव्युत्पादने निरवकाशत्वादिनेति शेषः । अनुपपत्त्यन्तरपरिहार इति ।। परोक्तार्थान्तरपरत्वशङ्कारूपानुपपत्त्यन्तरपरिहार इति भावः । परोक्तार्थे उपक्रमाद्यनानुकूल्यप्रदर्शन इति यावत् । एवमपिशब्दोऽपीति ।। प्रत्येकभिसम्बद्ध्यत इत्यन्वयः । एवमादीत्यस्य न विरुद्धानीत्यनेन समासः । विवक्षितार्थालाभात् । वचनानी-त्येतद्विशेषणत्वे त्वेवमादीनीति स्यादित्यत आह- एवमादीतीति ।। 'सुपां सुलुक्' इति स्मरणादिति भावः । समुच्चय इति ।। अव्ययानामनेकार्थत्वादिति भावः ।

पदार्थमुक्त्वा वाक्यार्थमाह- यस्मादित्यादिना ।। वचनापेक्षयेति ।। परपक्षसाधकवैदिकवचना-पेक्षयेत्यर्थः । बहुभिरित्युक्तमिति ।। प्रमाणैरिति बहुवचनेनैव बहुत्वलाभे पुनर्बहुभिरित्युक्त्याऽ-त्यन्तं बहुत्वं सूचितमिति भावः । अत्र वैदिकैरित्येतत्स्वरूपकथनार्थम् । न वक्ष्यमाणरीत्या प्राबल्यव्युत्पादकम् । तदीयवचनेष्वपि वाचारम्भणमित्यादिषु वैदिकत्वस्य सत्त्वादित्यवधेयम् । अवैदिकवचनापेक्षयेति ।। तदाचार्यवचनापेक्षयेत्यर्थः । युक्त्यपेक्षयेति ।। मिथ्यात्वादिसाधक-दृश्यत्वादियुक्त्यपेक्षयेत्यर्थः ।।

## श्रीराघवेन्द्रतीर्थ

१स्फुटं तमिति ।। आगमविरोधमित्यर्थः । दिदर्शयिषुः दर्शयितुमिच्छावान् । आगमोदाहरणेत्यादिसप्तम्यन्तानां निरासायेत्यनेनान्वयः२ । ‘विश्वं सत्यम्’ इति ।। ‘यच्चिकेत सत्यम्’ इति ‘प्रधान्वस्य’ इति ‘द्वासुपर्णा’ (ऋ. २.३.१७) इत्याद्यागमोदाहरणे ३प्रयासः । तस्य सत्यतापरत्वं प्रामाण्यस्वतस्त्वादिनोपपादनीयमिति तदुपपादनमायासः । तेषां च मिथ्यात्वागमाद्य-पेक्षया बहुत्वनिरवकाशत्वादिना प्राबल्योपपादनमायासः । अर्थवादत्वानुवादत्वादिपरोक्तार्थान्तर-परत्वरूपानुपपत्त्यन्तरपरिहारश्चायासः । तत्सर्वायासनिरासायेत्यर्थः । सर्वानुगुणामिति ।। आगमोदाहरणाद्यनुगुणामित्यर्थः । स्मृतिमिति ।। तत्र प्रमाणैर्बहुभिरित्युक्त्या आगमादि-प्रमाणानामुक्तबहुत्व४प्रयुक्तप्राबल्यस्य ‘आभासाः’ इत्युक्त्या ‘अन्यार्थकल्पना’ इत्याद्युक्त्या चानुपपत्त्यन्तरपरिहारस्य च लाभादिति भावः । प्रत्येकमिति ।। ईशोऽनीश इति जगन्मिथ्येति गुरुः पूज्यो नेति एक आत्मेति परब्रह्मभावो मुक्तिरिति प्रत्येकमित्यर्थः । अत एवेति ।। प्रत्येकमभिसम्बन्धनीयत्वादेवेत्यर्थः । इतिशब्दस्येति शेषः । अपिशब्दोऽपीति ।। प्रत्येकमभि-सम्बद्ध्यत इत्यर्थः । हिशब्दो हेताविति ।। तस्योत्तरत्रान्वय इति भावः ।

स्मृतिशेषं पठित्वा व्याचष्टे- एवमादीति ।। विरुद्धपदेन योग्यताविरहाद्वचनादिपदेनान्वया-याऽह-लुप्तविभक्तिकं भिन्नं पदमिति ।। ‘सुपां सुलुक्’५ इत्यादिना छान्दसः सुपो लुगित्यर्थः। लुब्लुपोरेकार्थत्वाल्लुप्तेति । ६आभासानीति ।। आ ईषत् भासः सद्वचनवत्प्रतिभासा येषान्तानीति बहुव्रीहिः । तेन नपुंसकत्वं साध्विति ज्ञेयम् । तथेति ।। समुच्चय इत्युक्तं व्यनक्ति - तथैवमादयो युक्तय इति ।। ईशादेरनीशत्वादिसाधकयुक्तय इत्यर्थः । एवमादीति पदमत्राप्यन्वेतीति भावः । निरवकाशत्वादिकमिति ।। उपजीव्यत्वमादिपदार्थः ।

‘द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।

तयोः स्वभावो बलवानुपजीव्यादिकश्च सः ।।’१

इत्युक्तेरिति भावः । बहुभिः प्रमाणैरित्येव पूर्तौ वैदिकैरित्युक्तेः कृत्यमाह- अवैदिकेत्यादिना ।। स्पष्टं चेति ।। जगत्सत्यत्वप्रतिपादकागमविरोधम् । आगमोदाहरणे अम्बरादिसत्यत्व-साधकागमोदाहरणेऽस्माभिः कृते सतीत्यर्थः । तस्य आगमस्य सर्वानुगुणां परोक्तसमस्तविरुद्ध-प्रमेयबाधकतयानुगुणामित्यर्थः । मूले ईशः

विष्णुः अनीशः जीववत् दुःखीत्यर्थः । द्विर्ग्रहण-मिति ।। प्रत्येकं सम्बन्धसूचनार्थमेव द्विवारमितिशब्दो गृहीत इत्यर्थः ।

## गुरुराजीया

ननु चाऽगमविरोधस्य 'न च मायाविना' इत्यादिनैवोक्तत्वात् पुनस्तत्प्रदर्शने कथं न पौनरुक्त्यम् इत्यत उक्तम्- स्पष्टमिति ।। पूर्वत्रेवोत्तरत्राप्यस्पष्टागमविरोधस्योत्तरत्रेव पूर्वत्रापि स्पष्टागमविरोधस्यैवाभिधाने पौनरुक्त्यप्रसङ्गेऽपि पूर्वत्रास्पष्टागमविरोधस्योत्तरत्र स्पष्टागमविरोधस्य प्रदर्शने न तत्प्रसङ्ग इति भावः । तर्हि स एव प्रदर्शनीय इत्यत आह- आगमोदाहरण इति ।। पृथग्जगत्सत्यत्वादिप्रतिपादकागमोदाहरण इत्यर्थः । तस्येति ।। उपक्रमादिभिरिति शेषः । प्राबल्येति ।। निरवकाशत्वादिनेति शेषः । अनुपपत्त्यन्तरेति ।। परोक्तार्थान्तरपरताशङ्का-रूपानुपपत्त्यन्तरपरिहार इत्यर्थः । परोक्तार्थे उपक्रमाद्यनानुकूल्यप्रदर्शन इति यावत् । प्रत्येक-मिति ।। ईशोऽनीश इति जगन्मिथ्येतीत्यादिरूपेण प्रत्येकमभिसम्बद्ध्यत इत्यर्थः ।

ननु किं तस्य प्रत्येकमभिसम्बन्धकल्पनया । यत्र श्रूयते तत्रैव सम्बन्धः किं न स्यादित्यत आह- अत एवेति ।। प्रत्येकं सम्बन्धस्याभिप्रेतत्वादेवेत्यर्थः । अन्यथा एकेनैवेतिशब्देन पूर्त्या द्विस्तदुपादानवैयर्थ्यप्रसङ्गादिति भावः । २एवमपिशब्दोऽपीति ।। ईशोऽप्यनीशेति जगदपि मिथ्येतीत्यादिरूपेणापिशब्दोऽपि प्रत्येकभिसम्बध्यत इत्यर्थः । अन्यथैकेनैवापिशब्देन पूर्त्या द्विस्तदुपादानवैयर्थ्यप्रसङ्गादिति भावः । एवमादीत्यस्य विरुद्धानीत्यनेनान्वये वैयर्थ्यं विवक्षितार्था-लाभश्चेत्यतो वचनविशेषणत्वं युक्तिविशेषणत्वं वा वाच्यम् । तत्र वचनविशेषणत्वे एवमादीनीति युक्तिविशेषणत्वे च एवमादय इति प्रसक्त्या एवमादीति निर्देशानुपपत्तिरित्यतस्तदुपपत्त्यर्थमाह- एवमादीति ।। ततश्च तस्य न विरुद्धानीत्येतद्विशेषणत्वम् । अतो न वैयर्थ्यादिप्रसङ्गो दोषः । 'सुपां सुलुक्' इति विभक्तिलोपविधायकशास्त्रानुसारेण लुप्तविभक्तिकत्वाच्च एवमादीनीति एवमादय इति चाप्रसक्त्या एवमादीति निर्देशोपपत्तिश्चेत्यर्थः । समुच्चय इति ।। अव्ययाना-मनेकार्थत्वादिति भावः । एवमादीत्यस्योभयविशेषणतामाश्रित्य वाक्ययोजनाप्रकारमाह- यस्मादित्यादिना ।। वचनापेक्षयेति ।। परपक्षसाधकवैदिकवचनापेक्षयेत्यर्थः । बहुभिरित्युक्त-मिति ।। प्रमाणैरिति बहुवचनेन बहुत्वे लब्धेऽपि बहुभिरित्युक्त्याऽतिबहुत्वस्यैव सूचितत्वादिति भावः । अत्र च वैदिकैरिति स्वरूपकथनमेव । न प्राबल्यव्युत्पादकम् । वाचारम्भणमित्यादिपर-पक्षसाधकवाक्येष्वपि वैदिकत्वस्य सत्त्वेन तस्य प्राबल्योपपादकत्वासम्भवादिति ध्येयम् । अवैदिक-वचनापेक्षयेति ।। बहुत्वस्येव वैदिकत्वस्यापि परपक्षसाधकदृश्यत्वाद्यनुमानार्वाचीनवचनेष्वसत्त्वेन विरोधकप्रमाणेष्वेव च सत्त्वेन तयोः प्राबल्योपपादकत्वादिति भावः ।

## गोविन्दीया

स्पष्टं चेति ।। तम् आगमविरोधं दिदर्शयिषुः पृथक् जगत्सत्यत्वादिप्रति-पादकागमोदाहरणे तस्यागमस्योपक्रमादिलिङ्गैर्जगत्सत्यतापरत्वोपपादने निरवकाशत्वादिना प्राबल्यव्युत्पादने परोक्तार्थान्तरपरताशङ्कारूपानुपपत्त्यन्तरपरिहारे च प्रयासनिरासाय सर्वानुगुणाम् उक्तप्रकारत्रयेणानुगुणां

स्मृतिमुदाहरतीत्यर्थः । अत इति ।। प्रत्येकमभिसम्बन्धार्थम् इतिशब्दस्य द्विग्रहणमित्यर्थः । वचनापेक्षयेति ।। अनीशत्वादिप्रतिपादकवचनापेक्षयेत्यर्थः ।

## नारोपन्तीया

लुप्तविभक्तिकमिति । 'सुपां सुलुक्' इति जसो लुप्तत्वाद्बचनानीत्यनेन सामानाधिकरण्यं युज्यत इति भावः ।

## जनार्दनभट्टीया

'इशोऽनीशः' इत्यादेः एकमतत्वं निवारयति- इति शब्द इति ।। अत एवेति ।। प्रत्येकसम्बन्धसूचनार्थमेवेत्यर्थः । 'एवमादिविरुद्धानि' इत्यस्य एकपदत्वे विरुद्धानीत्यस्य अन्यान्वितत्वेन 'प्रमाणैः' इत्येतदनन्वितं स्यादित्यत आह – एवमादीति ।। ननु भिन्नपदत्वे एवमादीत्यस्य वचनविशेषणत्वाद् बहुवचनेन भाव्यमित्यत आह – लुप्तेति ।। 'हि'शब्दार्थहेतुं व्यञ्जयन् वाक्यं योजयति – यस्मादित्यादिना ।। तस्मादिति ।। वेदवेदानुसारीतरवाक्यजन्यज्ञानस्यापि ज्ञानकारणशब्दजन्यत्वेन प्रमाणत्वादित्यर्थः ।

# वेदवेदानुसारेषु ..

**वेदवेदानुसारिप्रमाणानां श्रुत्यादिप्रमाणान्तरविरोधे सर्वथा हेयत्वाभावः**

## श्रीमज्जयतीर्थटीका

यथा प्रमाणविरुद्धानां युक्तीनामविषयवृत्तित्वेन व्याप्तिशून्यत्वेन चाऽभासत्वात्सर्वथा हेयत्वं किं तथा वचनानामपीत्यपेक्षायामाह-

# मूल

***वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।***

***इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि ।। इति व्याससमृतिः ।***

वेदमनुसरन्तीति वेदानुसाराणि वेदवेदानुसारेषु प्रबलप्रमाणविरोधे सति तेषां विरुद्धमर्थं परित्यज्याविरुद्धोऽर्थः कल्पनीयः । न तु सर्वथा हेयानि । वेदवेदानुसारीतराणि प्रमाणविरुद्धानि चेत्प्रलम्भभ्रमजान्यतरत्वेन सर्वथाऽप्रमाणानीति ज्ञातव्यानि ।

ननु शब्दस्तावज्ज्ञानकरणम् । प्रमायाश्च ज्ञानकरणमात्राधीनत्वमङ्गीकृतम् । तस्मादितर-प्रमाणानामन्यार्थकल्पनैवोचितेति चेत् सत्यम् । तथाऽपि स्वतः प्रामाण्यस्यौत्सर्गिकत्वेन दोषाद् अप्रामाण्यस्यापि जननात् । प्रकृतवचनानि च विप्रलम्भादिमूलानीत्यप्रमाणान्येव । अत एवेतराण्यप्रमाणानीति वक्तव्ये तदुपपादनाय प्रलम्भभ्रमजानीत्युक्तम् । प्रलम्भादिमूलत्वं च

प्रबलप्रमाणविरोधानुमेयम् । अत एव विरुद्धानीत्युक्तम् । तर्हि वेदादिषु तत्कल्प्यं स्यादिति चेत् । अपौरुषेयत्वादिबाधकाभावे सत्येवमेव तत् । अत एव 'वेदवेदानुसारेषु' इत्युक्तम् । अन्यार्थकल्पनाप्रकारश्च लेशतो दर्शयिष्यते ।

## श्रीविजयीन्द्रभिक्षु

अविषयवृत्तित्वेनेति ।। युक्तीनामाभासत्वज्ञापकं युक्ताङ्गहीनत्वमयुक्ताङ्गाधिकत्व-मविषयवृत्तित्वञ्चेति त्रितयम् । तत्र यथा प्रमाणविरुद्धयुक्तीनामविषयवृत्तित्वेन वा व्याप्तिशून्यत्वेन वा प्रामाण्यासम्भवात् सर्वथा हेयत्वमेव किं तथा वेदवेदानुसारिवचनानामपि हेयत्वम् अप्रमाणत्वेन प्रेक्षावदनुपादेयत्वमित्याशङ्कायामित्यर्थः । वेदानुसाराणीति ।। वेदाविरुद्धार्थपराणीत्यर्थः । वेदवेदानुसारिणां बाह्यागमशुष्कयुक्त्यादिविरोधे तस्यैव बाध्यतया कथमन्यार्थकल्पनमित्यत आह- प्रबलेति ।। अर्थमिति ।। अर्थत्वेन प्रतीतं तात्पर्यागोचरमिति यावत् । प्रलम्भेति ।। विप्रलम्भेत्यर्थः । ननु वेदवेदानुसारीतरवचनानामपि ज्ञानसामग्रीत्वात्तज्जन्यज्ञानेऽपि प्रामाण्यं दुर्वारम् । ज्ञान-प्रामाण्यस्योत्पत्तिज्ञप्त्योः स्वतस्त्वाङ्गीकारात् । न हि प्रामाण्यस्य ज्ञानसामान्यसामग्रीमात्र-प्रयोज्यत्वादन्यत्स्वतस्त्वमस्ति । न हि सामग्रीबलात् प्राप्तं प्रामाण्यं हातुं युक्तम् । तथा च वेदवेदानुसारिवचनवत्तदितरवचनानामपि मानान्तरविरोधेऽन्यार्थत्वमेवोचितम् । न तु सर्वात्मनाऽ-प्रामाण्यस्वीकार इत्यभिप्रेत्य शङ्कते- नन्विति ।। भवेदेतदेवं तदा यदि ज्ञानसामान्य-सामग्र्यास्तत्प्रयोजकत्वनियमो मयाऽभ्युपगम्येत । न चैतदस्ति । किन्तु ज्ञानसामान्यसामग्र्याः प्रामाण्यप्रयोजकत्वमौत्सर्गिकम् । उत्सर्गश्च बाधकैकापोह्यत्वनियत इति । यत्र सामान्य-सामग्र्यामधिकदोषो न प्रविशति तज्जन्यज्ञान एव प्रामाण्यनियमः । यत्र तत्प्रवेशस्तज्जन्य-ज्ञानस्याप्रमात्वमेव । न तु प्रमात्वं क्वचिदपीत्यङ्गीकाराद् वेदवेदानुसारीतरवचनानां ज्ञान-सामग्रीत्वेऽपि पौरुषेयत्वेन भ्रमप्रमादादिदोषपूर्वकत्वेन तज्जन्यज्ञानस्याप्रामाण्यमेव । न प्रबल-प्रमाणविरोधेऽर्थान्तरपरत्वेन प्रामाण्यस्वीकार इत्यभिप्रेत्य परिहरति- सत्यमिति ।। ननु तदप्रामाण्यं दोषैककल्प्यम् । दोषाश्चाप्रामाण्यरूपफलैककल्प्या इत्यन्योन्याश्रयात् तदप्रामाण्यकल्पनमेवा-युक्तमित्यत आह- प्रबलेति ।। प्रबलप्रमाणविरोधित्वेनानुमेयमित्यर्थः । तथा च नान्योन्याश्रय इति भावः । अत एवेति ।। प्रबलप्रमाणविरोधस्य तदनुमापकत्वाभावे विरुद्धानीति न वदेदित्यर्थः ।

विरुद्धानीत्यस्य विप्रलम्भादिमूलकत्वानुमापकत्वमात्रपरत्वं मन्वानः शङ्कते- तर्हीति ।। इतर-वचनवद्वेदस्यापि वाक्यत्वानुमितपौरुषेयत्वेन विप्रलम्भादिमूलकत्वकल्पनं किं न स्यादित्यर्थः । वाक्यत्वस्य पौरुषेयत्वं विनाऽप्याकाङ्क्षादिमच्छब्दत्वेनोपपत्त्या पौरुषेयत्वासाधकत्वात् महाप्रबन्धस्य लोके स्मर्यमाणकर्तृकत्वस्य बहुलमुपलम्भाद्वेदस्य च महाप्रबन्धत्वेऽपि तदनुपलम्भेन स्वतन्त्र-पुरुषप्रणीतत्वरूपपौरुषेयत्वाभावनिर्णयात् यत्र वाक्ये स्वतन्त्रपुरुषप्रणीतत्वरूपबाधकसम्भवः तत्रैव पौरुषेयत्वेन विप्रलम्भादिमूलकत्वकल्पनम् । न त्वतादृशे वेदेऽपीत्याह- अपौरुषेयत्वादीति ।। ननु प्रमाणविरोधस्थले वेदवेदानुसारिवचनानां विरुद्धमर्थं परित्यज्याविरुद्धान्यार्थकल्पनमेवोचित-मित्युक्तम् । अविरुद्धार्थानामनेकेषां कल्पनासम्भवेन तेषां

नियतार्थकत्वाभावप्रसङ्गादित्यतआह- अन्यार्थेति ।। बुद्धिशालिनां दिङ्मात्रप्रदर्शनेनाप्यलमिति दर्शयति- लेशत इति ।।

## श्रीवेदेशतीर्थ

व्याप्तिशून्यत्वेन चेति ।। प्रमाणबाधिते पक्ष एव व्यभिचारादिति भावः । वचनाना-मपीति ।। प्रमाणविरुद्धानामित्यनुवर्तते । मूलेऽपिशब्दस्तुशब्दार्थ इतराणीत्यनेन सम्बद्ध्यत इत्यभिप्रेत्य ‘इतराणि तु’१ इत्युक्तमिति ज्ञातव्यम् ।

## श्रीराघवेन्द्रतीर्थ

अविषयवृत्तित्वेनेति ।। बाधितविषयत्वेनेत्यर्थः । भावार्थभ्रान्तिं निराह- वेदमनु-सरन्तीति ।। ‘घञ्यमनुष्ये बहुलम्’ इति बहुलग्रहणात्कर्तर्यपि घञिति भावः । प्रामाण्यस्येति ।। शब्दजन्यज्ञानप्रामाण्यस्येत्यर्थः । ज्ञानकारणमात्रेति ।। आप्तोक्तत्वादिगुणाधीनत्वं मात्रपदेन व्यावर्त्यते । तस्मादिति प्रामाण्यस्य ज्ञानकारणमात्राधीनत्वाद्वेदाननुसारिशब्दजन्यज्ञानप्रामाण्य-स्यापि तादृशत्वात् प्रमाणज्ञानजनकशब्दस्य प्रमाणत्वादित्यर्थः । स्वतःप्रामाण्यस्येति ।। ज्ञानजनकादेव प्रमाजननस्यौत्सर्गिकत्वेनानियतत्वेनेत्यर्थः । प्रकृतेति ।। वेदानुसारीतर-वचनानीत्यर्थः । प्रबलप्रमाणेति ।।

‘बलवत्प्रमाणतश्चैव ज्ञेया दोषा न चान्यथा ।’

इति तत्वनिर्णयोक्तेरिति भावः । एतत्कल्प्यमिति ।। विप्रलम्भभ्रममूलत्वं वाऽप्रामाण्यं वा कल्प्यं स्यादित्यर्थः । अत एवेति ।। १अपौरुषेयत्वादिसूचनादेवेत्यर्थः । दर्शयिष्यत इति ।। वाचारम्भणं विकारो नामधेयम्’ इत्यादिनेति भावः । अविषयवृत्तित्वेनेति ।। बाधितविषयत्वेनेत्यर्थः । प्रमायाश्चेति ।। ज्ञानप्रामाण्यस्येत्यर्थः । अधीनत्वं२ स्वतस्त्वमिति यावत् । प्रकृतेति ।। ईशादेरनीशत्वादिप्रतिपादकानि मायावाद्याचार्य-वचनानीत्यर्थः । तदुपपादनाय अप्रामाण्योपपादनाय । अनुमेयमिति ।। ‘बलवत्प्रमाणतश्चैव ज्ञेया दोषा न चान्यथा’ इति ब्रह्मर्कवचनादिति भावः । तत् विप्रलम्भादिमूलत्वम् । एवं ‘अपौरुषेयत्वादि’ इत्यादिपदेन वेदानुसारित्वग्रहणम् । ३एवमेतदिति ।। कल्पयामो वेदवेदानुसारिषु विप्रलम्भादिमूलत्वं यदि ४तद्बाधकापौरुषेयत्वादिकं न स्यादिति भावः । अत एव ।। अपौरुषेयत्वादिबाधक-सूचनार्थमेवेत्यर्थः । वेदेत्युक्त्याऽपौरुषेयत्वं सूचितम् ।

## गुरुराजीया

व्याप्तिशून्यत्वेन चेति ।। प्रमाणबाधिते पक्ष एव हेतुसत्त्वेऽपि साध्यासत्त्वादिति भावः । वचनानामपीति ।। प्रमाणविरुद्धानां वचनानामपीत्यर्थः । मूलेऽपिशब्दस्तुशब्दार्थ इत्यभिप्रेत्याऽह- इतराणि त्विति ।। मूलेऽप्रमाणानीत्येव वक्तव्यत्वात् तथाऽनुक्त्वा प्रलम्भभ्रमजानीत्युक्तिर्व्यर्थे-त्यतोऽप्रामाण्योपपादनार्थत्वात् तदुक्तेर्न वैयर्थ्यमिति भावेन तदुपपादकतया तदुक्तिं योजयितुं तदनुपपत्तिशङ्कामुत्थापयति- नन्विति ।।

अङ्गीकृतमिति ।। प्रामाण्यस्य स्वतस्त्वेन प्रमाया उत्पत्तौ ज्ञानकारणमात्राधीनत्वसिद्ध्याऽतिरिक्तकारणापेक्षत्वे तद्भङ्गेन स्वतस्त्वाभावप्रसङ्गादिति भावः । औत्सर्गिकत्वेनेति ।। यो धूमवानसावग्निमानिति धूमवह्निसम्बन्धस्य नियतत्ववत् न प्रमाया ज्ञानकारणमात्राधीनत्वं नियतम् । किन्त्वपवादाभाव एवेत्येवमौत्सर्गिकमेवेति भावः । दोषादिति ।। सहकारिणां सहजशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वस्य बहुलमुपलब्धत्वेन दोषसहकृत-शब्दस्याप्रमाजनकत्वस्य सम्भवादिति भावः । विप्रलम्भादीत्यादिपदेन भ्रमपरिग्रहः । कानिचिद्विप्रलम्भमूलकानीतराणि भ्रमजानीत्येवं विप्रलम्भादिमूलानीत्यर्थः ।

'अन्येषां तु विरुद्धानां विप्रलम्भोऽथ वा भ्रमः ।'

इत्यन्यत्र भगवत्पादोक्तेरिति भावः । तत्प्रकारश्च तद्वाक्यव्याख्यानावसरे तत्वनिर्णयटीकायां टीकाकृदुक्तरीत्याऽनुसन्धेयः । अत एवेति ।। ततः मूले न विरुद्धानीत्यस्य वैयर्थ्यमिति भावः । तत्कल्प्यमिति ।। कल्पकस्य विरोधस्य तत्राप्यविशिष्टत्वेन दोषजन्यत्वं कल्प्यं स्यादित्यर्थः । अत एवेति ।। अपौरुषेयत्वादिबाधकाभावे सत्येव विरोधस्य दोषजन्यत्वकल्पकत्वेन वेदादिषु तदसिद्धेरेवेत्यर्थः । लेशत इति ।। आद्यादिभ्य उपसङ्ख्यानात् तृतीयान्तात् तसिः । ततश्च लेशेनेत्यर्थः । दर्शयिष्यत इति ।। वाचाराम्भणं विविधप्रकार इत्यादिनेति शेषः ।

## गोविन्दीया

अविषयवृत्तित्वेनेति ।। १साध्यवृत्तित्वेन साध्यसाधकत्वेनेति यावदित्यर्थः । सर्वथेति ।। २सर्वथा प्रामाण्यमित्यर्थः । तथेति ।। ३अविषयवृत्तित्वेनार्थप्रतिपादकत्वेनाऽभासत्वाद् वचनानि 'तथा किम्' प्रमाणानि किमित्यर्थः४ । नन्विति ।। शब्दस्तावत् ज्ञानकरणम् । ज्ञानगत-प्रामाण्यस्यापि करणमिति वक्ष्याम इति तावच्छब्दप्रयोगः । तत्प्रमायाश्च तस्य ज्ञानस्य यत्प्रमात्वं यथार्थज्ञानत्वरूपप्रामाण्यं तस्य च ज्ञानमात्रस्य यत्करणं तदधीनत्वमङ्गीकृतम् । ज्ञानगतप्रामाण्यस्य स्वतस्त्वेन तज्जनकशब्दरूपकरणप्रामाण्यस्यापि स्वतस्त्वमङ्गीकृतमित्यर्थः । तस्मादिति ।। इतरेषां वचनानां शब्दत्वेन स्वतःप्रामाण्याद् अन्यार्थकल्पनैवोचितेति चेदित्यर्थः । सत्यमिति ।। स्वतःप्रामाण्यमित्यङ्गीकारांशोऽन्यार्थकल्पनेनेत्यनङ्गीकारांश इत्यर्थः । तथाऽपीति ।। यद्यपि शब्दमात्रस्य स्वतःप्रामाण्यं तथाऽपि तत्प्रामाण्यस्यौत्सर्गिकत्वेन स्वाभाविकत्वेन, दोषात् तत्रा-प्रामाण्यस्यापि जननात् । शब्दत्वादेव प्रकृतवचनानि विप्रलम्भादिदोषयुक्तत्वाद् अप्रमाणा-न्येवेत्यर्थः । अत एवेति ।। दोषाप्रामाण्यज्ञानाभिप्रायादेवेत्यर्थः । प्रबलेति ।। प्रकृतवचनानि विप्रलम्भादिमूलानि प्रबलप्रमाणविरुद्धत्वादित्यनुमानेन विप्रलम्भादिमूलत्वं साध्यमित्यर्थः । अत एवेति ।। प्रबलप्रमाणविरोधानुमेयत्वादेव विरुद्धानीत्युक्तमित्यर्थः । तत्कल्प्यमिति ।। प्रबल-प्रमाणविरुद्धत्वेन विप्रलम्भादिमूलत्वं तेन चाप्रामाण्यं कल्प्यं स्यादिति चेदित्यर्थः । अपौरुषे-येति ।। अपौरुषेयत्वआप्तोक्तत्वरूपबाधकाभावे सति एतद् अप्रामाण्यं विप्रलम्भादिमूलत्वं वा एवम् उक्तप्रकारेण स्यादित्यर्थः । अत एवेति ।। अपौरुषेयत्वाद्यभिप्रायादेवेत्यर्थः ।

## जनार्दनभट्टीया

१इतरप्रमाणानामिति ।। वेदवेदानुसारिणामित्यर्थः । प्रमाणत्वाविशेषादिति भावः ।

ननु परकीयविप्रलम्भादेः अप्रत्यक्षत्वाद् वेदवेदानुसारीतरवचनानां विप्रलम्भादिजन्यत्वं कुतोऽवसीयते? इत्यत आह – प्रलम्भादीति ।। अत एवेति ।। 'वेदास्ते नित्यविन्नत्वात्' इत्यादिप्रमाणानुसारेण वेदशब्देनैव अपौरुषेयत्वसूचनार्थमित्यर्थः । लेशत इति ।। 'वाचारम्भणश्रुत्यर्थकथनावसरे' इति शेषः ।

# नासतोऽदृष्टत्वात्..

**विश्वमिथ्यात्वसाधकाभिमतानुमानागमयोरागमविशेषविरोधसमर्थनम्**

## श्रीमज्जयतीर्थटीका

एवं सामान्यतोऽनुमानागमयोरागमविरोधमभिधाय विशेषतोऽपि तं दर्शयति -

# मूल

***'नासतोऽदृष्टत्वात्'२,***

***'नाभाव उपलब्धेः'३,***

***'वैधर्म्याच्च न स्वप्नादिवत्'४***

***इत्यादिभगवद्वचनेनापि निरस्ताः ।***

आदिपदेन पृथगुपदेशात् (ब्र.सू. २.३.२७) इत्यादिकमात्मभेदप्रतिपादकं सूत्रं गृह्यते । यद्यपि प्रागुदाहृतानि भगवद्वचनान्येव तथाऽपि विशेषतो विरोधित्वं निर्णायकत्वेन प्राबल्यं वा सूचयितुं भगवद्वचनेनापीत्युक्तम् । निरस्ताः प्रपञ्चमिथ्यात्वादिपरा अनुमानागमा इति शेषः । तद्वादिन इति वा ।

## श्रीविजयीन्द्रभिक्षु

इत्यादिकमित्यादिपदेन 'भेदव्यपदेशाच्चान्यः'१ 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते'२ 'भेदव्यपदेशात्'३ 'स्थित्यदनाभ्यां च'४ 'सुषुप्त्युत्क्रान्त्योर्भेदेन'५ इत्यादिसूत्रं गृह्यते । भगवत्पद-मव्यावर्तकमिति शङ्कते-यद्यपीति ।। सूत्राणां श्रौतन्यायनिबन्धनरूपत्वेन परमाप्तप्रणीतत्वेन च निर्णायकत्वात् प्राबल्यमित्यर्थः । प्रपञ्चमिथ्यात्वादिपरा इति ।। तत्साधकत्वेन परोक्ता इत्यर्थः । तद्वादिन इति वेति ।। यद्यपि तद्वादिनिरासोऽपि तदुक्तप्रमाणनिरास एव पर्यवस्यति तथाऽपि तद्वादिन इति बहुवचनेन

तद्वादिमात्रनिरासप्रतिपादनेन 'पराजयो वादिदौर्बल्यप्रयुक्त एव । न तु शास्त्रदौर्बल्यप्रयुक्तः' इति परोक्त्यवकाशनिरासं ज्ञापयितुं पक्षान्तरोक्तिः ।

## श्रीवेदेशतीर्थ

इत्यादिकमिति ।। अत्र आदिपदेन 'भेदव्यपदेशाच्चान्यः' इत्यादिकं गृह्यत इति द्रष्टव्यम् । भगवद्वचनेनापीत्युक्तमिति ।। पूर्वं भगवद्वचनमित्यनुक्त्वाऽत्र भगवद्वचनतोक्त्योदाहृत-वचनेष्वतिशयो दर्शितः । स चोक्तरूप एवेति ज्ञायत इति भावः । प्रपञ्चमिथ्यात्वादिपराः तत्साधकत्वेन परोदाहृताः ।

## श्रीराघवेन्द्रतीर्थ

अनुमानेति ।। मिथ्यात्वानुमानागमयोरित्यर्थः । इत्यादिकमात्मभेदेति ।। 'अंशो नानाव्यपदेशात्'६ । 'अत एव चोपमा सूर्यकादिवत्'७ । 'भोक्त्रापत्तेरविभागश्चेत्'८ इत्यादिरादि-पदार्थः । भगवद्वाक्यान्येवेति । व्यासस्मृतिरित्युक्तत्वादिति भावः । विशेषत इति ।। मायावादिमतनिरासार्थमेव प्रवृत्तत्वादिति भावः ।

## गुरुराजीया

स्पष्टास्पष्टागमविरोधस्य 'न च मायाविना' इत्यादिनैवोक्तत्वात् पुनस्तदभिधाने पुनरुक्ति-रित्यत उक्तम्-सामान्यत इति ।। इत्यादिकमिति ।। भाव्या दिशा 'अत एव चोपमा'९ इत्यादेरुत्तरस्य विपरीतक्रमेण 'भेदव्यपदेशात्'१० इत्यादेश्च भेदप्रतिपादकसूत्रान्तरस्य परिग्रहः । भगवद्वचनान्येवेति ।। तथा च व्यावर्त्याभावात् तदुक्तिरनर्थिकेति भावः । अतिशयं दर्शयति- तथाऽपीति ।। प्रपञ्चमिथ्यात्वादिपरा इति ।। आदिशब्देन भेदाभावपरिग्रहः । यद्यप्युदाहृतश्रुतयो वस्तुतो न प्रपञ्चमिथ्यात्वपराः । तथाऽपि तत्साधकतया परेणोपन्यस्तत्वमेव तत्परत्वमित्यभि-प्रेत्यैवमुक्तमिति ध्येयम् । अत एवापरितोषात् पक्षान्तरमाह- तद्वादिन इति वेति ।।

## गोविन्दीया

नासतोऽदृष्टत्वात्१ इति ।। निर्विशेषस्य ब्रह्मणः जगत्कारणत्वं नास्ति, कुतः ? अदृष्टत्वादित्यर्थः । नाभाव उपलब्धेः२ इति ।। जगद् अभावः असद् न । अबाधितत्वे सति सत्त्वेन प्रतीयमानत्वात् । शुक्तिरजतादौ व्यभिचारवारणायाबाधितेति विशेषणमित्यर्थः । 'जगद् असत् सत्त्वेन प्रतीयमानत्वात्, स्वप्नादिवत्' इत्यनुमानेन जगतोऽसत्त्वोपपत्तेरित्याशङ्क्याऽह- वैधर्म्याच्च न स्वप्नादिवत्३ इति ।। स्वप्नमनोरथजन्यवस्तुवत् सत्त्वेन प्रतीयमानमपि जगद् असत् न, स्वप्नादिवस्त्वपेक्षया जगति बाधाभावलक्षणविरुद्धधर्मस्य सत्त्वात् । न केवलं प्रत्यक्षविरोधाज्जगदसत् न, अपि तु वैधर्म्याच्चेति दूषणान्तरसमुच्चयार्थः चशब्द इत्यर्थः । एतानि सूत्राणि मूलारूढानि । मूलस्थादिपदसङ्गृहीतं सूत्रमाह- पृथगुपदेशात्४ इति ।। ब्रह्म जीवात्मनः सकाशात् पृथक् भिन्नं कुतः ? उपदेशात् । श्रुत्यादिषूक्तत्वादित्यर्थः । व्याख्यानस्थादिपदसङ्गृहीतसूत्रं ५चाह-'भेदव्यपदेशाच्चान्यः' इति ।। जीवात्मा अन्यः श्रुत्यादिषु भेदेन व्यपदेशाद् उक्तत्वाच्चेत्यर्थः ।

## जनार्दनभट्टीया

अनुमानागमयोरिति ।। मिथ्यात्वानुमानागमयोरित्यर्थः । पृथगुपदेशादित्यादिकमिति ।। आदिशब्देन ‘शारीरश्च उभयेऽपि हि भेदेनैनमधीयते’६, ‘भेदव्यपदेशाच्च’७ इति सूत्रे गृह्येते ।

# नासतोऽदृष्टत्वात्’..

**‘नासतः’ इत्यादिसूत्राणां शून्यवादिमतनिरासपरतया न प्रपञ्चमिथ्यात्वविरोधित्वमिति शङ्का**

*नासतोऽदृष्टत्वात्’*

## श्रीमज्जयतीर्थटीका

नन्वेतानि सूत्राणि शून्यवादिमतनिराकरणपरतया सिद्धान्ते व्याख्यायन्ते । तथा हि । शून्यमेव जगत्कारणमस्तु किमीश्वरेणेति प्राप्ते प्रत्याख्यातं ‘नासतः’ इति । नासतः शून्यस्य जगत्कारणत्वं मन्तव्यम् । कुतः ? अदृष्टत्वात् । न हि किमपि शून्यादुत्पद्यमानं दृष्टम् । येन जगदपि तथा प्रतिपद्येमहि ।

भवेदिदं यदि जगत्पारमार्थिकं स्यात् । असत्त्वे तु शुक्तिरजतस्येव शून्यादुत्पत्तौ काऽनुपपत्तिरित्यतोऽभिहितम् ‘नाभावः’ इति । न जगत् अभावः असत् प्रतिपत्तव्यम् । कस्मात्? उपलब्धेः । सदिति प्रतीयमानत्वात् । सत्त्वेन प्रतीयमानमपि जगत्स्वप्नादिवदसत्किं न स्यात् इत्यत उक्तम् ‘वैधर्म्याच्च’ इति । स्वप्नादिवत् असदेव जगत्सत्त्वेन प्रतीयत इति न वाच्यम् । कुतः? वैधर्म्यात् । भवति हि स्वप्नादिवैधर्म्यं विश्वस्य बाधाभावलक्षणम् । उपलब्धिश्च प्रागबाधितैव हेतुतयोपन्यस्तेति भावः। दूषणान्तरसमुच्चयार्थश्चकार इति । तथा च कथमेषां सूत्राणां मायावादि-मतनिरासायोदाहरणे सिद्धान्तविरोधो न स्यात् ? न च योजनाभेदेनोभयपरता तददर्शनादित्यत आह -

## श्रीविजयीन्द्रभिक्षु

ननु मायावादिमतनिरासे प्रवृत्तेन तन्निरासक्षममेव प्रमाणमुदाहर्तव्यम् । न तु बाह्यमत-निरासार्थं प्रवृत्तं प्रमाणम् । सङ्गत्यभावादिति शङ्कते- नन्विति ।। नन्वस्य तन्मतनिराकरणपरतया व्याख्यानं सिद्धान्तिनोऽसङ्गतत्वापादकं कथमित्यत उक्तम्- सिद्धान्त इति ।। न प्रतिज्ञा-मात्रेणार्थसिद्धिरित्यत सिद्धान्तव्याख्यानप्रकारं दर्शयति- तथा हीति ।। सत्त्वेन प्रतीतिमात्रमत्र साधकम् । चकार इति ।। ‘वैधर्म्याच्च’ इति सूत्रस्थ इत्यर्थः । चकार इतीतिशब्दस्य व्याख्यायन्त इत्यनेन सम्बन्धः । एतावता कथमसङ्गतिरित्यत आह- तथा चेति ।। न केवलमसङ्गतिमात्रम् । किन्तु शून्यवादिमतनिरासार्थत्वेन स्वयमङ्गीकृतानामुदाहृतसूत्राणां तत्त्यागेन मायावादिमतनिरा-सार्थत्वाङ्गीकारे सिद्धान्तविरोधश्च स्यादिति भावः

अयमित्यनेनोक्तैतद्देशकालसम्बन्धवर्तमानत्वरूपवर्तमानैतद्देशकाल-सम्बन्धत्वेनोच्यते । न त्वन्यः । एतद्देशकालसम्बन्धप्रागभावस्य तदा सत्त्वञ्च नैतद्देशकालयोस्तदा सत्त्वापादकमित्यविरुद्धमेवेत्यर्थः । तेनेत्यस्य तु पूर्वकल्प एवाभिप्राय२ इति योजना ।

तृतीयपक्षे प्रागुक्तामनुपपत्तिं परिहर्तुं शङ्कते- विशिष्टद्वयैक्य इति ।। विशिष्टस्य विशेषणविशेष्यतत्सम्बन्धात्मकत्वपक्षे विशेषणभेदेन पदार्थान्तरत्वपक्षे च विशेष्यभेदेनेव विशेषण-भेदेनापि तद्भेदस्याऽवश्यकत्वादिति भावः । व्यभिचारेण यत्र विशिष्टद्वयैक्यं तत्र विशेषणैक्यमिति तर्काङ्गभूतव्याप्तेरसिद्धेस्तर्काभासोऽयमित्याशयेन परिहरति- धूमवदग्निमतोरिति ।। विशेष्य-स्यैक्येऽपि विशिष्टद्वयस्यैक्याभावेनाऽपादकस्यैव तत्रागमनान्न व्यभिचार इत्याशङ्कते-तयोरिति ।।

माऽस्तु तर्हि व्यभिचारेण व्याप्त्यसिद्ध्या तर्कस्याऽभासत्वसिद्धिः । दृष्टान्ताभावेन व्याप्त्यसिद्ध्या तु भविष्यत्येव तत्सिद्धिरित्याशयेन परिहरति- तर्हीति ।। न चाग्निमतः अग्निमता साकमैक्य-स्थलेऽग्निमद्रूपविशिष्टद्वयैक्यस्याग्निरूपविशेषणद्वयैक्यस्य च सत्त्वात्तस्यैवोक्तव्याप्तौ दृष्टान्तत्व-सम्भवान्न दृष्टान्ताभावप्रयुक्तव्याप्त्यसिद्धिरपीति वाच्यम् । तावता दृष्टान्ताभावप्रयुक्तव्याप्त्य-सिद्ध्यप्राप्तावपि धूमवदग्निमतोः सत्यप्यैक्ये धूमाग्न्योरैक्याभावात्तत्र व्यभिचारेण व्याप्त्यसिद्धेराव-श्यकत्वात् । न च तत्र तयोरैक्यमेव नास्तीति न व्यभिचार इति वाच्यम् । विशिष्टमपदार्थान्तरमिति मते विशेष्यस्यैवोक्ताधिकरणत्वेऽपि१ धर्मयोरप्युद्देश्यतावच्छेदकत्वेन विशेषणत्वात् तस्यैव च विशिष्टद्वयाभेदशब्दार्थत्वात् । पदार्थान्तरमित्यावयोर्मते तु धूमाग्न्योर्भेदेऽपि धूमवानग्निमानित्य-बाधितसामानाधिकरण्यधीबलेन विशिष्टयोरभेदस्यापि सत्त्वात् । अन्यथा इदं रूप्यमित्युक्ते पुरोवर्तिनि२ रूप्यभेदाप्रतीते रूप्यार्थिनः पुरोवर्तिनि प्रवृत्तिश्च न स्यात् । तत्तेदन्तोप-लक्षितत्वरूपविशेषणभेदाद्विशिष्टभेदावश्यम्भावादित्याशयात् ।

यत्तु, अतीतत्वमपीत्यस्य ध्वंसप्रतियोगित्वमित्यर्थवर्णनं तदसत् । अतीतत्वशरीरान्तर्गत-ध्वंसमात्रस्य स इत्येतदन्तर्भावाश्रयणमात्रेणोक्तदोषपरिहारसम्भवेन ध्वंसप्रतियोगित्वरूपातीतत्वस्य तदर्थान्तर्भावाश्रयणानर्थक्यात् ।

यच्च वर्तमानताऽपीत्यस्य स्वप्रागभावप्रध्वंसरूपता चेत्यर्थवर्णनं तदप्यसत् । वर्तमानत्व-शरीरान्तर्गतप्रागभावमात्रस्य अयमित्येतदर्थान्तर्भावाश्रयणेनोक्तदोषपरिहारस्योपदर्शितत्वे-नोक्तरूपवर्तमानत्वस्य तदर्थान्तर्भावाश्रयणानर्थक्यात् । स्वकार्यप्रागभावसमयसम्बन्धित्वस्यापि वर्तमानत्वलक्षणेन३ तत्परित्यागेन स्वप्रागभावप्रध्वंसत्वरूपतद्विवक्षाया निर्निबन्धनत्वाच्च । न च स्वप्रागभावप्रध्वंसत्वस्योपपन्नत्वात् परिग्रहः४ । अन्यस्य त्वनुपपन्नत्वात्त्याग इति वाच्यम् । शेषा-नन्तपण्डितेन स्वकार्यप्रागभावसमयसम्बन्धित्वस्योपपन्नतायाः प्राक्सम्बद्धस्वाभावविरहस्य५ चानु-पपन्नतायाश्च व्युत्पादितत्वेन तस्यैव स्वीकर्तव्यत्वप्रसङ्गात् । नापि प्रकृतानुपयोगात्तत्परित्यागः । तदुपयोगाच्चैतस्य स्वीकार इति युक्तम् । आशयखण्डनावसरे एतस्यापि प्रकृतानुपयोगस्य वक्ष्यमाणत्वेनास्वीकार्यत्वप्रसङ्गात् ।

यच्च स्वप्रागभावप्रध्वंसत्वस्य वर्तमानत्वलक्षणतायाः शिवादित्यमिश्रसम्मतत्ववर्णनं तदप्य-सत् । प्राक्सम्बद्धस्वाभावविरहत्वस्य तल्लक्षणताया एव मिश्रसम्मतत्वेन स्वप्रागभावप्रध्वंसत्वस्य नित्यवर्तमानतायामव्याप्तस्य वर्तमानत्वलक्षणतायास्तदसम्मतत्वात् । न चानित्यवर्तमानताया एवात्र लक्ष्यत्वान्नित्यवर्तमानतायामेतदसत्त्वं नैतदलक्षणत्वापादकमिति वाच्यम् । 'प्राक्सम्बद्धः स्वाभावः प्रागभावः तद्विरहस्तत्संसर्गाभावः । स च प्रागभावस्य प्रागभावाभावात् प्रध्वंसोऽ-त्यन्ताभावश्च । तदन्यतररूपत्वमित्यर्थः । एवञ्च नित्यानित्योभयवर्तमानत्वं सङ्गृहीतं भवति । अनित्यानां प्रागभावध्वंसरूपत्वान्नित्यानां तदत्यन्ताभावरूपत्वात्' इति तद्व्याख्यानरूपग्रन्थ-पर्यालोचनया नित्यानित्यसाधारण्येन वर्तमानत्वस्यैव लक्ष्यत्वसिद्ध्या अनित्यवर्तमानतामात्रस्य लक्ष्यत्ववर्णनस्य तद्विरुद्धत्वात् । तदुक्तलक्षणे वर्तमानतामात्रस्य लक्ष्यतायामपि स्वप्रागभाव-प्रध्वंसत्वरूपलक्षणे अनित्यवर्तमानताया एव लक्ष्यत्वमित्यभिप्राये च स्वप्रागभावप्रध्वंसत्वस्य तेन तत्त्वेनानुक्ततया तदुक्तमिति प्रतिज्ञायाः 'तच्च प्राक्सम्बद्धस्वाभावविरहत्वम्' इति तद्वाक्यमुपन्यस्य 'प्राक्सम्बद्धः स्वाभावः प्रागभावस्तद्विरहस्तत्प्रध्वंसस्तत्स्वरूपत्वम्' इति तदर्थकथनस्य च गजस्नानवद्वैयर्थ्यापातात् ।।

अत एव 'एवञ्च यस्यैतद्देशकालसम्बन्धप्रागभावो ध्वस्तः सोऽयमित्यनेनोच्यते इत्यपि ग्राह्यम्' इत्युक्तं निरस्तम् । वर्तमानत्वशरीरान्तर्गतप्रागभावमात्रस्यायमित्येतदर्थान्तर्भावकथनमात्रेणोक्त-दोषपरिहारस्योक्तरूपवर्तमानताया अनुपपन्नत्वप्रकृतानुपयुक्तत्वोपपादनेन १तदर्थान्तर्भावस्य च दर्शितत्वेन विशिष्टस्य तदर्थत्वाभावात् ।

यच्च गूढाभिसन्धिराहेति 'न चैवं सति' इत्यादिग्रन्थप्रवृत्त्युपवर्णनं तदसत् । भावानव-बोधादित्युत्तरग्रन्थानुसारेण सर्वस्यापि न हीत्यादिपूर्वग्रन्थस्य गूढाभिसन्धिकत्वस्य सूचितत्वात् सर्वस्यापि गूढाभिसन्धिकत्वस्योपपादयितुं शक्यत्वाच्च तत्परित्यागेन न चेत्यादिग्रन्थमात्रस्यैव गूढाभिप्रायकत्ववर्णनस्य निर्निबन्धनत्वात् । व्याख्यात्रा गूढमभिप्रायमुपदर्श्यैव न चेत्यादिग्रन्थस्य गूढाभिसन्धिताया वक्तव्यत्वेन तमनुपदर्श्य गूढाभिसन्धिकत्ववचनस्य २शिष्यदन्धन-मात्रार्थकत्वेनायुक्तत्वाच्च ।

यच्च 'आशयमविद्वान् शङ्कते' इति नन्वित्यादिग्रन्थप्रवृत्त्युपवर्णनं तदसत् । आशयोद्घाटनपूर्वकं 'तमविद्वान् शङ्कते' इत्येव ग्रन्थावतारस्य तत्र तत्र दृष्टत्वेन तमनुद्घाट्योक्तरीत्या तदवतारस्य १शिष्यदन्धनमात्रार्थत्वात् ।

यच्च 'न चातीतस्येदानीं सत्त्वे विरोधः' इत्याशङ्कानिवर्तकतया प्रध्वंसो हीति वाक्यमवतार्य 'यथा शशविषाणमसदित्यत्र प्रतियोगिप्राधान्यविवक्षायाम् अत्यन्ताभावप्रतियोगित्वमर्थः निषेध-प्राधान्यविवक्षायां तु तत्प्रतियोगिकोऽत्यन्ताभावोऽर्थः उभयथाऽपि प्रतीतेः, तथाऽत्राप्यतीत-सम्बन्धवाचितच्छब्दस्य प्रतियोगिप्राधान्यविवक्षायां ध्वस्तदेशकालसम्बन्धः निषेधप्राधान्य-विवक्षायाञ्चानुभवदेशकालसम्बन्धध्वंस एव वाच्यो भवति । एवं वर्तमानदेशकालसम्बन्ध-वाचीदंपदस्यापि यदि प्रतियोगिप्राधान्यविवक्षा तदा ध्वस्तप्रागभावप्रतियोगिदेशकालसम्बन्धः, यदा तु निषेधप्राधान्यविवक्षा तदा ध्वस्तसम्बन्धप्रागभाव एव वाच्यो भवति ।

एवञ्च यदाऽऽद्यपक्षपरिग्रहस्तदा स इति तच्छब्दस्य निषेधप्राधान्यविवक्षया अनुभवदेशकाल-सम्बन्धध्वंसवाचकत्वेनेदानीं तद्ध्वंसस्य सत्त्वान्न विरोधः । अस्मिन् पक्षेऽयमितीदंशब्देन वक्तुः प्रतियोगिप्राधान्यविवक्षैव । अन्यथा अनवधेयवचनत्वप्रसङ्गात् । तद्देशकालविशिष्टे एतद्देशकाल-वैशिष्ट्यबुभुत्सायामिदमुच्यते । बुभुत्सापूर्तिश्च नायमित्यत्र प्रतियोगिप्राधान्यविवक्षामन्तरेणोत्पद्यत इति हृदयम् ।

यदप्यत्राबोध्यत्वादिति दूषणं तन्न । एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षत्वेऽपि तद्देशकालविशिष्टे तस्याप्रत्यक्षत्वादित्यग्रे वक्ष्यमाणत्वात् ।

यदा तु द्वितीयपक्षपरिग्रहस्तदा स इति तच्छब्दस्य प्रतियोगिप्राधान्ये वक्तृविवक्षयाऽतीत-सम्बन्धवाचित्वेऽपि अयमितीदंशब्दस्य निषेधप्राधान्यविवक्षया ध्वस्तसम्बन्धप्रागभाववाचित्वमेव वक्तुरभिप्रेतम् । तथा च पूर्वानुभवकाले इदानीं ध्वस्तैतद्देशकालसम्बन्धप्रागभावस्य२ सत्त्वान्न विरोधः । तदिदमाह- तथाऽयमिति प्रागभाव इति ।। अत्रापि स इति तच्छब्दार्थे बुभुत्सानुसारेण प्रतियोगिप्राधान्यविवक्षा आवश्यकी । अत एव 'श्रोतृबुभुत्सानुसारेण' इति वक्ष्यति ।

यदा तु तृतीयपक्षाङ्गीकारस्तदा तदिदंशब्दयोरन्यतरस्यैव निषेधप्राधान्ये वक्तृविवक्षया विशेषणयोरविरोधेन विशिष्टैक्यमुपपद्यते । नन्वविरुद्धयोरपि विशेषणयोर्भेदे कथं विशिष्ट-द्वयैक्यमुपपद्यत इति चेत् 'विवादास्पदं विशिष्टद्वयं नाभिन्नं भिन्नविशेषणकत्वात्' इति त्वदीयानुमानस्याप्रयोजकत्वात् । तदेतत्सर्वमभिप्रेत्य पूर्वं 'न चैवं सति पक्षत्रयेऽपि काचिदनुप-पत्तिरस्ति' इत्युक्तम्, इति भाववर्णनं१ तदप्यसत् ।

विकल्पासहत्वात् । तथा हि, किमेतद्भाववर्णनं 'प्रध्वंसो हि' इति वाक्यस्याभिमतं किं वा सर्वस्य । नाऽद्यः । तथा सति असच्छशविषाणमित्यत्रेव स इति तच्छब्दस्यापि निषेधप्राधान्य-विवक्षया देशकालसम्बन्धध्वंसार्थकत्वेन तद्ध्वंसस्य चेदानीं सत्त्वान्न विरोध इत्येतावतैव तत्सिद्ध्या शिष्टवैयर्थ्यापातात् । नान्त्यः । तथा सति अतीतदेशादिसम्बन्धस्येदानीं सत्त्वे स्फुटो विरोध इत्याशङ्कापरिहारकतया 'प्रध्वंसो हि' इति ग्रन्थं, ननु वर्तमानदेशादिसम्बन्धस्य तदानीं सत्त्वे स्फुटो विरोध इत्याशङ्कापरिहारकतया 'तथा' इत्यादिग्रन्थमवतार्य२ वा अतीतदेशादिसम्बन्धस्येदानीं सत्त्वे वर्तमानदेशादिसम्बन्धस्य तदानीं सत्त्वे स्फुटो विरोध इत्याशङ्कापरिहारकतया 'प्रध्वंसो हि' इत्यादिसमग्रं ग्रन्थमवतार्य वा उक्तरीत्या आशयवर्णनस्य सङ्गततया कर्तव्यत्वेन तथा ग्रन्थावतारमकृत्वा उक्तरीत्या आशयवर्णनस्यासङ्गतत्वापातात् ।

अयुक्तञ्चेदमाशयवर्णनम् । तथा हि, यत्तावदुक्तं 'यथा शशविषाणमसदित्यत्रासच्छब्द-स्योभयथा प्रतीत्यनुरोधेन निषेधप्रतियोगिप्राधान्यविवक्षाभेदेन निषेधप्रतियोगिरूपोभयार्थकत्वं तथा अतीतदेशादिसम्बन्धवाचितच्छब्दस्य प्रतियोगिप्राधान्यविवक्षाभेदेन३ ध्वस्तदेशादिसम्बन्धवाचित्वं निषेधप्राधान्यविवक्षया देशादिसम्बन्धध्वंसवाचित्वम् एवं वर्तमानदेशादिसम्बन्धवाचिनोऽयमितीदं-शब्दस्य प्रतियोगिप्राधान्यविवक्षया ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धार्थकत्वं निषेधप्राधान्य-विवक्षया ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभावार्थकत्वं' इत्याशयेन पीठरचनं तदसारम् ।

४नञ्समभिव्याहृतशब्दस्यापि प्रतियोगिनिषेधप्राधान्यविवक्षाभेदेन प्रतियोगिनिषेधरूपोभयार्थत्वे घटादिशब्दानामपि तत्प्रसङ्गेन नञ्समभिव्याहृतशब्दस्यैवोक्तविवक्षाभेदेनोभयार्थस्यावश्याऽ-श्रयणीयत्वस्थित्या असदिति नञ्समभिव्याहृतासच्छब्दस्य प्रतियोगिनिषेधप्राधान्यविवक्षया प्रतियोगितदत्यन्ताभावरूपोभयार्थतायाः सम्भवदुक्तिकत्वेऽपि स इति तच्छब्दस्य अयमितीदं-शब्दस्य च नञ्समभिव्याहृतत्वाभावेन तच्छब्दे प्रतियोगिप्राधान्यविवक्षया ध्वस्तदेशादि-सम्बन्धार्थकताया निषेधप्राधान्यविवक्षया देशादिसम्बन्धध्वंसार्थकताया इदंशब्दे च प्रतियोगि-प्राधान्यविवक्षया ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचिताया निषेधप्राधान्यविवक्षया च ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाववाचितायाश्चासम्भवदुक्तिकत्वात् । प्रतियोगिनिषेध-प्राधान्यविवक्षाभेदेन तच्छब्दे ध्वस्तदेशादिसम्बन्धवाचिताया इव देशादिसम्बन्धध्वंसवाचिताया इव इदंशब्देऽपि प्रतियोगिप्राधान्यविवक्षया ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचिताया इव च निषेधप्राधान्यविवक्षया देशादिसम्बन्धप्रतियोगिकप्रागभावध्वंसवाचिताया एव प्राप्त्या ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाववाचित्वाभावेन तद्वाचित्वोक्तेरज्ञानमूलकत्वापाताच्च ।

यच्च एवञ्चेत्यादिना आद्यपक्षेऽविरोधोपपादनं तदप्यसत् । स इत्यस्य नञसमभिव्याहृततया तत्र निषेधप्राधान्यविवक्षाप्रयुक्तनिषेधार्थकत्वासम्भवस्योक्तत्वात् । तावतैवाऽद्यपक्षेऽविरोधोपपादन-सिद्ध्या तत्पक्षेऽयमितीदंशब्दे प्रतियोगिप्राधान्यविवक्षावर्णनस्याऽनर्थक्याच्च । प्रतियोगि-प्राधान्यविवक्षायाः स्वरसतः प्राप्ततयोपपादनानपेक्षत्वेनाऽद्यपक्षे तच्छब्दे स्वरसतोऽप्राप्तनिषेधान्य-विवक्षाया१ एवोक्तयुक्त्योपपादनीयत्वेन तामनुपपाद्येदंशब्दे स्वरसतः प्राप्तप्रतियोगिप्राधान्य-विवक्षोपपादनस्यासङ्गतत्वापाताच्च ।

यदपि द्वितीयपक्षपरिग्रहे स इति तच्छब्दस्य प्रतियोगिप्राधान्ये वक्तृविवक्षयाऽतीतदेशादि-सम्बन्धवाचित्वेऽप्ययमितीदंशब्दस्य निषेधप्राधान्यविवक्षया ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाव-वाचित्वात् पूर्वानुभवकाले इदानीं ध्वस्तैतद्देशादिसम्बन्धप्रागभावसत्त्वान्न विरोध इत्यविरोधोपपादनं तदप्यसत् । नञसमभिव्याहृततया तच्छब्दे इदंशब्दे च प्रतियोगिनिषेधप्राधान्यविवक्षाऽसम्भवेन २ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचित्वोक्तेः ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाव-वाचित्वोक्तेश्चासामञ्जस्यात् । तद्विवक्षायामपि प्रतियोगिप्राधान्यविवक्षया तच्छब्दे ध्वस्तप्रागभाव-प्रतियोगिदेशादिसम्बन्धवाचित्वप्राप्त्या स इत्यस्य तदवाचित्वेऽपि निषेधप्राधान्यविवक्षया देशादि-सम्बन्धप्रतियागिकप्रागभावप्रध्वंसस्यैवेदंशब्दवाच्यत्वप्राप्त्या ध्वस्तसम्बन्धप्रागभाववाचित्वाभावेन पूर्वानुभवकाले इदानीं ध्वस्तैतद्देशकालसम्बन्धप्रागभावस्य सत्त्वमादायाविरोधोक्तेरज्ञानमूलक-त्वात्१ । आशयकथनावसरे तन्मात्रोक्तेरेव सङ्गतत्वेन ग्रन्थावतारस्यावक्तव्यतया २तदिदमयमिति तथाऽयमिति प्रागभाव इति मध्ये ग्रन्थावतारस्यासङ्गतत्वापाताच्च ।

यदपि 'अत्रापि स इति तच्छब्दार्थे श्रोतृबुभुत्सानुसारेण प्रतियोगिप्राधान्यविवक्षा आवश्यिकीति तदावश्यकत्ववर्णनं तदप्यसत् । इदंशब्दे स्वरसतोऽप्राप्तनिषेधप्राधान्यविवक्षाया

एवोक्तदोषपरिहारोपपादकतयाऽवश्यवक्तव्यत्वेन तच्छब्दे प्रतियोगिप्राधान्यविवक्षायाः स्वरसतः प्राप्ततयाऽवक्तव्यत्वेन वक्तव्यानुक्त्यवक्तव्योक्तिप्रसङ्गात् ।

यदपि श्रोतृबुभुत्सानुसारेणेति वक्ष्यतीत्युपष्टम्भकमुक्तं तदपि न । 'किमत्र तत्वम् । पक्षत्रयमपीति ब्रूमः' इत्यादिपूर्वोत्तरग्रन्थपर्यालोचनया पक्षत्रयस्य तात्विकतामात्रोपपादकत्वेनैकैकस्मिन्नपि पक्षे निषेधप्राधान्यविवक्षाऽऽवश्यकत्वानुपपादकत्वेन तस्य तत्रोपष्टम्भकत्वायोगात् ।

यदपि तृतीयपक्षाङ्गीकारेऽपि तदिदंशब्दयोरन्यतरस्यैव निषेधप्राधान्ये वक्तृविवक्षया विशेषणयोरविरोधेन विशिष्टैक्यमुपपद्यत इति वर्णनं तदप्यसत् । विशेषणयोः विरोधेनैक्यानुपपत्तेः प्रागनाशङ्कितत्वेनापरिहर्तव्यत्वात् । अनाशङ्कितत्वेऽपि सम्भावितत्वात्तस्याः परिहार्यत्वाभिप्राये३ आशङ्कासमाधानाभ्यां तृतीयपक्षोक्तदोषानुपपत्तिपरिहारकनन्वित्याद्युत्तरग्रन्थ एवैतदनुपपत्ति-परिहारस्य सङ्गतत्वेन पूर्वग्रन्थाशयवर्णनदशायां तत्परिहारवर्णनस्यासङ्गतत्वाच्च । तदिदं-शब्दयोरन्यतरस्य नञसमभिव्याहततया तत्रोक्तविवक्षाया असम्भवदुक्तिकत्वाच्च । विवक्षायामपि वा अन्यतरस्य निषेधप्राधान्यविवक्षावत् प्रतियोगिप्राधान्यविवक्षाया अप्यवश्यवक्तव्यत्वेन निषेधप्राधान्यमात्रोक्तेर्निर्निबन्धनत्वाच्च ।

यदपि विवादास्पदं विशिष्टद्वयं नाभिन्नं भिन्नविशेषणकत्वादित्यनुमानमाशङ्क्याप्रयोजकत्वेन निराकृतं तदप्यसत् । साक्षादनुमानस्यानाशङ्कितत्वेनाप्रयोजकत्वेनादूषणीयत्वात् । सूचितत्वेन दूषणाभिधानाभिप्राये च तत्पक्षोक्तदोषपरिहारकनन्वित्याद्युत्तरग्रन्थ एवैतद्दूषणस्य सङ्गतत्वेन आशयकथनावसरे तद्दूषणाभिधानस्यासङ्गतत्वात् ।

यदपि अस्याप्याशयतया वर्णनीयत्वे उपष्टम्भकतया 'न चैवं सति पक्षत्रयेऽपि काचिदनुप-पत्तिरस्ति' इति पूर्वग्रन्थोपदर्शनं तदप्यसत् । तृतीयपक्षोक्तानुपपत्तेरुत्तरत्र परिहरिष्यमाणतया १पूर्वत्रापरिहृतत्वेऽपि तत्परिहारस्याल्पप्रयत्नसाध्यत्वेन वा पक्षद्वयोक्तानुपपत्तिपरिहारवद्बहु-प्रयत्नसाध्यत्वाभावेन वाऽस्मदुक्तरीत्या तत्पक्षे सम्भावितानुपपत्त्यन्तरपरिहाराभिप्रायेण वा पक्षत्रयेऽपि उत्तरत्र तत्पक्षोक्तदोषपरिहारं वक्तुं न हीत्यादिनोपोद्घातमुक्त्वा पक्षत्रयेऽप्युक्त-दोषाभावप्रतिज्ञारूपत्वेन वा सावकाशतयाऽप्रयोजकत्वस्याऽशयतया वर्णनीयत्वानुपपादकतया तत्रोपोद्बलकत्वायोगात् ।

यच्च भिन्नविशेषणकत्वानुमानम् अनुकूलतर्कसद्भावान्नाप्रयोजकमित्याहेति विशिष्टैक्य इति शङ्काग्रन्थप्रवृत्त्युपवर्णनं तदप्यसत् । तृतीयपक्षोक्तानुपपत्तिं परिहर्तुं तामाशङ्कत इत्येवं तदवतारस्य स्फुटप्रतिभासस्य परित्यागेन त्वया पूर्वग्रन्थाशयतया वर्णितस्येह टीकायां पूर्वोत्तरग्रन्थे तदनुवादरूपन्यायामृतग्रन्थे च सर्वथैवास्पष्टस्य भिन्नविशेषणकत्वानुमानप्रयोजकत्वस्योप-मर्दकतयैतद्ग्रन्थप्रवृत्त्युपवर्णनस्यासङ्गतत्वात् । कथञ्चित्सङ्गतत्वेऽपि भिन्नविशेषणकत्वाद्विशिष्टद्वयं नाभिन्नम् । न चाप्रयोजकत्वम् । अनुकूलतर्कसनाथत्वेन तदयोगादिति पूर्वपक्षाशयवर्णनेनापि प्रकृतग्रन्थस्य भिन्नविशेषणकत्वानुमानाप्रयोजकत्वोपमर्दकत्वस्य लाभान्मदुक्तरीत्यैवैतद्ग्रन्थ-स्योत्थापनीयत्वेन त्वदुक्तरीत्या

तदवतारायोगाच्च । न चैवं पक्षत्रयेऽपीत्यादेरुक्तरीत्या सावकाशत्वेन भिन्नविशेषणकत्वानुमानाप्रयोजकत्वस्य सिद्धान्ताशयागमकत्वेन तस्य सिद्धान्ता-शयत्वासिद्ध्या तदुपमर्दकत्वेनैतद्ग्रन्थप्रवृत्त्युपवर्णनस्य निर्निबन्धनत्वाच्च ।

यच्च 'अग्निमतोऽग्निमतैक्ये अग्नेरग्निनैक्यदर्शनान्न दृष्टान्ताभावः' इत्याशङ्क्य 'स्यादेवं दृष्टान्तोपपादनं यत्र विशिष्टैक्यमात्रमापादकं विशेषणैक्यमात्रमापाद्यमिति स्यात् । न चैवम् । तथात्वे तर्कस्यानिष्टापादनरूपत्वाभावप्रसङ्गात् । प्रकृतेऽपि तत्तादिविशिष्टेन तत्तादिविशिष्टस्यैक्ये तत्तादि-रूपविशेषणैक्यस्यापि विद्यमानत्वात् । तस्माद् विशिष्टद्वयैक्ये विशेषणद्वयैक्यं स्यादित्यापाद-नीयम् । अत्र च धूमवदग्निमतोरैक्याभावेऽङ्गीकृते दृष्टान्ताभावेन व्याप्तिग्रहासम्भवः' इत्यभिप्राय-वर्णनं 'तर्हि दृष्टान्ताभावेन' इत्यादिग्रन्थस्य तदप्यसत् । 'धूमवदग्निमतोरैक्यापादक-विशिष्ट-मपदार्थान्तरम्' इति न्यायामृतस्थोत्तरग्रन्थानुसारेण 'अग्निमतोऽग्निमतैक्ये अग्नेरग्निनैक्यदर्शनात्' इति तच्छङ्काग्रन्थस्थेनेह१ टीकायां व्यभिचारेण व्याप्त्यसिद्ध्या आपादनानुपपत्तिवद् दृष्टान्ताभावेन व्याप्त्यसिद्ध्या आपादनानुपपत्तेरुपपत्तेरुक्तत्वेऽपि न तत्र तात्पर्यम् । वह्निमतो वह्निमतैक्ये वह्नेर्वह्नि-नैक्यदर्शनेन दृष्टान्ताभावप्रयुक्तव्याप्त्यसिद्ध्यनुपपत्त्या तत्प्रयुक्तापादनानुपपत्तेः निर्दलत्वात् । किं तु व्यभिचारेण व्याप्त्यसिद्ध्या तदापादनानुपपत्तावेव धूमवदग्निमद्रूपविशिष्टद्वयैक्यस्य धूमाग्निरूपविशेषणभेदस्य च विशिष्टमपदार्थान्तरमिति पदार्थान्तरमिति मतद्वयसाधारणत्वेन व्यभिचारस्य दृढतया तत्प्रयुक्तव्याप्त्यसिद्धेरवर्जनीयत्वेन तत्प्रयुक्तापादनानुपपत्तेः सदलत्वादित्य-भिप्रायसूचनेन दृष्टान्ताभावप्रयुक्तव्याप्त्यसिद्ध्या तदापादनानुपपत्तौ ग्रन्थकृदतात्पर्यस्य द्योतितत्वेन तदनुसारेण भवताऽपि 'मास्तु तर्हि दृष्टान्ताभावेन व्याप्त्यसिद्ध्या तदापादनानुपपत्तिः । व्यभिचारेण व्याप्त्यसिद्ध्या तदापादनानुपपत्तिस्तु स्यादेव' इत्येवं वह्निमतैक्येऽपीत्यादिन्यायामृतग्रन्थ-मूलकत्वादुक्ताक्षेपस्य परिहर्तव्यत्वेन तथाऽपरिहृत्य प्रकारान्तरेण तत्परिहारस्य तत्तात्पर्यापरि-ज्ञानमात्रमूलकत्वात् । विशिष्टद्वयैक्यं वेति २विकल्पग्रन्थानुसारेण 'न तृतीयः विशेषणभूतदेश-कालैक्येन विना विशिष्टद्वयैक्यानुपपत्तेः । विशेषणैक्यस्य च प्रमाणबाधितत्वात्' इति दूषण-ग्रन्थानुरोधेन च विशिष्टद्वयैक्यस्याऽऽपादकताया विशेषणद्वयैक्यस्याऽऽपाद्यतायाश्च सिद्धत्वेन विशिष्टैक्यादेरापादकत्वादौ बाधकोपदर्शनाय३ विशिष्टद्वयैक्यादेरापादकत्वादिना त्वदीयव्युत्पा-दनस्यानर्थकत्वाच्च धूमवदग्निमतोरैक्याभावेऽङ्गीकृते तस्य दृष्टान्तत्वासम्भवेऽपि अग्निमतोऽग्नि-मतैक्यस्याग्नेरग्निनैक्यस्य च दृष्टत्वेन तस्यैव यत्र विशिष्टद्वयैक्यं तत्र विशेषणद्वयैक्यमिति व्याप्तौ दृष्टान्तत्वेन तदभावप्रयुक्तव्याप्त्यसिद्ध्यनुपपत्त्या तत्प्रयुक्तापादनानुपपत्तेरसामञ्जस्यात् । धूमवदग्नि-मद्रूपविशिष्टद्वयस्यैक्यानङ्गीकारे आपादकाभावेनेव तदङ्गी-कारपक्षेऽपि आपाद्याभावेन दृष्टान्तत्वा-नुपपत्त्या ऐक्याङ्गीकारानङ्गीकारयोः दृष्टान्ताभावतद्भावानुपपादकत्वेनैक्याभावेऽङ्गीकृते दृष्टान्ता-भावेन व्याप्त्यसिद्धिप्रसङ्गोपपादनस्य प्रशिथिलमूलत्वाच्च ।

ननु त्रयाणामप्येतेषां पक्षाणामाचार्यसिद्धान्तत्वासम्भवात् कश्चिदेव तत्सिद्धान्त इति वाच्यम् । तथा च१ तत्पक्षमेव परिगृह्य तत्रोक्तदोषपरिहारेण तदुपपादनमात्रेणैव चरितार्थत्वात् पक्षत्रयदोषपरिहारेण

तदुपपादनमनर्थकमित्यभिप्रेत्य त्रिषु पक्षेषु कः पक्ष आचार्यसिद्धान्त इति पृच्छति- तथाऽपीति ।। त्रयाणामप्याचार्यसिद्धान्तत्वासम्भवः किं तेषां विरुद्धत्वम् किं वा तदङ्गीकृतत्वज्ञापकाभावादिति विकल्पद्वयं मनसि निधाय 'नाऽद्यः । त्रयाणामेतेषां पक्षाणामव्यव-स्थितानां विरुद्धत्वेऽपि श्रोतुस्तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यबुभुत्सायां सः अयमिति तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं विधेयमित्याद्यः, एतद्देशकालविशिष्टे तद्देशकाल-वैशिष्ट्यबुभुत्सायां अयं सः इत्युद्देश्यविधेयभावव्यत्यासेन एतद्देशकालविशिष्टे तद्देशकालवैशिष्ट्यं विधेयमिति द्वितीयः, तस्य विशिष्टद्वयैक्यबुभुत्सायां तद्बोध्यमिति तृतीय इति श्रोतृबुभुत्सानुसारेण व्यवस्थितानामेतेषां त्रयाणामुक्तरीत्या अविरुद्धत्वेन विरुद्धत्वप्रयुक्तसिद्धान्तत्वासम्भवस्य वक्तुमशक्यत्वात्' इत्याह- श्रोतृबुभुत्सानुसारेणेति ।। पक्षत्रयस्य तदङ्गीकृतत्वज्ञापकाभावान्नाऽ-चार्यसिद्धान्तत्वमिति द्वितीयपक्षमङ्गीकृतत्वज्ञापकोक्त्या दूषयितुमुत्थापयति- कुत एतदवगम्यत इति चेदिति ।। परकीयैतद्ग्रन्थव्यख्यानखण्डनं प्राग्वत् । तर्हीति ।। देशकालसम्बन्धित्वस्येव विशिष्टद्वयैक्यस्यापि वक्तव्यत्वेन तन्मात्रोक्तेरश्लिष्टत्वादिति भावः । देशकालसम्बन्धित्वस्येत्यस्य विशिष्टद्वयैक्योपलक्षणत्वेन देशकालसम्बन्धित्वमात्रपरत्वाभावान्नानुपपत्तिरित्याशयेन परिहरति- उपलक्षणमिति ।। एतदनुपपत्तिपरिहारेणेति ।। अत एव एतद्ग्रन्थव्याख्यानावसर एव 'ननु कथमत्र' इत्यादिना एतदनुपपत्तिमुद्भाव्य तत्परिहारो दर्शित इति द्रष्टव्यम् ।

## गोविन्दीया

तस्येति ।। न सम्बन्धस्यातीतत्वं पूर्वत्वमित्यर्थः । तस्येति ।। सम्बन्धस्य वर्तमानता इदानीमस्तित्वमित्यर्थः । न चेति ।। यस्य तद्देशकालसम्बन्धो भूतस्यैतद्देशकालसम्बन्धोऽस्ति । यस्यैतद्देशकालसम्बन्धोऽस्ति तस्य तद्देशकालसम्बन्धोऽभूत् । यश्च पूर्वं तद्देशकालसम्बन्धवान् स इदानीमेतद्देशकालसम्बन्धवान् इत्येवमर्थेऽपि पक्षत्रयेऽपि काचिदनुपपत्तिर्नास्तीत्यर्थः । तदिद-मिति ।। यन्मयोपपादितं तदिदमाचार्येणोक्तमनित्येतीत्यर्थः । नन्विति ।। अत एव तद्देशकालसम्बन्धस्यातीतत्वाद् एतद्देशकालसम्बन्धस्य स्वरूपतोऽभावाद् विशेषणैक्यप्रसङ्गेन विशिष्टैक्याभावात् पक्षत्रयेऽपि वाच्यार्थानुपपत्तिरित्युक्तमित्यर्थः । भावेति ।। अभिप्राया-नवबोधादित्यर्थः ।। भावानवबोधत्वमेवोपपादयति- अविरुद्धविशेषणानामिति ।। तद्देशकाल-सम्बन्धित्वे तद्देशकालसम्बन्धित्वविशिष्टैक्यरूपविशेषणानां यथा विरोधो नास्ति तथाऽनेनाऽ-चार्यवाक्येनोक्तत्वादित्यर्थः । अविरुद्धत्वमेवोपपादयति- न हीति ।। सामान्यतो विरोधाभावमभि-धाय कथमित्यापेक्षायामाह- प्रध्वंस इति ।। तद्देशकालसम्बन्धप्रध्वंसो हि प्रतियोगिप्राधान्यापेक्षया सम्बन्ध इति सशब्देनोच्यते । अविरोधेन प्रध्वंसस्य सत्त्वादित्यर्थः । तथेति ।। एतद्देशकाल-सम्बन्धप्रागभावः प्रतियोगिप्राधान्यापेक्षया सम्बन्ध इति, अयंशब्देनोच्यते । तद्देशकालसम्बन्ध-विशिष्टेऽविरोधेनैतद्देशकालसम्बन्धप्रागभावस्य सत्त्वादित्यर्थः । एतेनेति ।। विरोधाभावोपपादनेन स्वयूथ्यानाम् अनुपपत्तित्रयाक्षिप्तानामन्यतरलक्षणाश्रयणं निरस्तमित्यर्थः । कुत इति ।। एतत्त्रयम् आचार्याभिप्रेतमिति कुतः वाक्यादवगतमिति चेदित्यर्थः । अनित्येति ।। 'अनित्यदेशकाल-सम्बन्धित्वस्य' इति वचनात् । तद्देशकालादिविशिष्ट इत्युत्तरवचनाच्च पक्षद्वयाङ्गीकारो ज्ञायत इत्यर्थः । अनुस्मृतेश्चेति ।। 'अनुस्मृतेश्च'१ इति ब्रह्मसूत्रेण तदिदमिति भाष्येण विशिष्टैक्यरूप-तृतीयपक्षाङ्गीकारो ज्ञायत इत्यर्थः । तर्हीति ।।

विशिष्टैक्यस्येति पदमभिधाय देशकालसम्बन्धित्व-स्येति पदं कथमभिहितमित्यर्थः । उपलक्षणमिति ।। लक्षणया सम्बन्धित्वस्येति पदेन विशिष्टैक्यमपि सङ्गृहीतमित्यदोष इत्यर्थः । अयमपीति ।। सोऽयं देवदत्त इत्यपीत्यर्थः । न्यायसाम्यादिति ।। स्वरूपमात्रपरत्वाभावरूपसाध्यविकलत्वसाम्यादित्यर्थः । एतदिति ।। यद्यपि न्यायसाम्याद् दृष्टान्तस्य दूषितत्वेनानित्येत्यादिग्रन्थस्य प्रयोजनाभावेऽपि सोऽयं देवदत्त इत्यादौ वाच्यार्थानुप-पत्तिपरिहारेण सार्थक्यादित्यर्थः ।

## नारोपन्तीया

नन्वतीतदेशकालसम्बन्धस्येदानीं सत्त्वे कथं न विरोध इत्यतोऽविरुद्धविशेेषणानामेव वाच्यतयाऽनेनोक्तत्वादिति सामान्येनोक्तं विशिष्यकथनेन विवृणोति । ध्वंसो हि तथोच्यत इति ।। तथा तच्छब्दार्थतया तद्देशकालसम्बन्धध्वंस उच्यत इत्यर्थः । इदमुक्तं भवति । अतीत-देशादिसम्बन्धस्तच्छब्दार्थः । तत्र प्रतिषेधप्राधान्येन वा प्रतियोगिप्राधान्येन वा निर्देशो वाच्यः । तत्र प्रतिषेधप्राधान्ये तद्देशकालसम्बन्धध्वंसवानयं वर्तमानकालसम्बन्धवानित्यर्थः । प्रतियोगि-प्राधान्ये तु-वर्तमानध्वंसप्रतियोगिकालविशिष्टस्तच्छब्दार्थस्स्यात् । तदायमिति प्रागभावः । इदं शब्दार्थो वर्तमानकालप्रागभावविशिष्ट इत्यर्थः । एवं चाविरुद्धविशेषणविशिष्टयोर्द्वयोरैक्यं सूपपन्नमेव । आद्यपक्षे पदद्वये लक्षणा नास्त्येव । द्वितीयपक्षे इदंशब्दस्य वर्तमानकालसम्बन्ध-वाचकस्य तत्प्रागभावविशिष्टे लक्षणा । न चैवं स्वयूथ्यानाम् अन्यतरलक्षणाश्रयणं निरस्त-मित्युत्तरग्रन्थविरोध इति वाच्यम् । स्वार्थपरित्यागरूपभागत्यागलक्षणामाश्रित्य स्वरूपमात्रे पर्यवसानमिति पराभिमतलक्षणायाः स्वयूथ्यैरन्यतरपदे स्वीकृतायाः निरसिष्यमाणत्वात् । आद्यपक्षे लक्षणायाः सर्वथाऽप्यनभ्युपगमाच्च । प्रकृते चाधिकः प्रागभावरूपपदार्थः प्रविष्टो न तु वाच्यार्थस्य हानिः । इयं च लक्षणा पराभिमतलक्षणातो ज्यायसी । 'अधिकं प्रविष्टं न तु तद्धानिः' इति न्यायात् ।

यद्वा- प्रागभावोऽपीदंपदार्थ एव अयमित्यस्य वर्तमानार्थकतायाः प्रागुक्तत्वात् । वर्तमानत्वं च ध्वंसप्रागभावानधिकरणकालवृत्तित्वम् । गगनादावप्यप्रसिद्धप्रतियोगिकात्यन्ताभाववादिनां इदमेव वर्तमानत्वम् । एवं च यथा तत्पदस्य प्रतिषेधप्रधानत्वे ध्वंसस्तच्छब्देनोच्यते, तथा इदंपदस्यापि प्रतिषेधपरत्वे प्रागभाव इदंपदेनोच्यते । तथा च यदा तच्छब्दस्य प्रतिषेधप्राधान्यमाश्रित्य अतीत-कालसम्बन्धध्वंसविशिष्ट इत्यर्थः तदा इदंशब्दस्य प्रतियोगिप्राधान्यमाश्रित्य ध्वंसप्रागभावा-नाधारकालवैशिष्ट्यमर्थ इति विशिष्टद्वयैक्यमविरुद्धमेव । यदा पुनस्तच्छब्दस्य प्रतियोगिप्राधान्यमाश्रित्य वर्तमानध्वंसप्रतियोगिकालविशिष्टोऽर्थः तदा इदंशब्दस्य प्रतिषेधप्राधान्यमाश्रित्य ध्वंसानाधार-कालवृत्तिप्रागभावविशिष्टोऽर्थ इति विशिष्टद्वयैक्यमविरुद्धमिति ज्ञातव्यम् । तथा च कुत्रापि लक्षणागन्ध एव नास्तीति नोत्तरग्रन्थविरोधः । नापि अविरुद्धविशेषणानामेव वाच्यतयेत्यस्य पूर्वग्रन्थस्य, प्रध्वंसो हि तथोच्यत इत्यस्य च ग्रन्थस्य स्वरसभङ्गः । एतावत्त्वनुमन्यामहे- यद्विशिष्टवाचकयोस्तदिदं-शब्दयोर्विशेषणविशेष्यभावव्यत्यासेन शाब्दबोधजनकत्वम् । यथा- प्रत्यक्षमित्यस्य पदस्य सन्निकृष्टेन्द्रियाभिधायकत्वं, इन्द्रियसन्निकर्षाभिधायकत्वं च । भार्यापित्रादिवाचकश्वशुरादिशब्देभ्यस्तु

व्यत्यासेन भार्यादिविशेष्यको बोधो भवत्येवेत्यत्र तु शब्दविशेषस्वभाव एव शरणम् । अतो नातिप्रसङ्ग इति सर्वमवदातम् ।

श्रोतृबुभुत्सानुसारेणेति ।। यदा श्रोतुः प्रत्यक्षेणायंपदार्थः सामान्येन सिद्धः, पूर्वावस्था च तस्य विशिष्यानुभूताऽपि न स्मर्यते, ततः पृच्छति – अयं कः ? इति । तमितरस्तदीयं पूर्वं स्मारयन्नाह । अयं सः इति । तदा एतद्देशकालविशिष्टस्य तद्देशकालवैशिष्ट्यं बोध्यते । यदा पुनः पूर्वावस्थां स्मरन्नपि, पुरोवर्तिनं पश्यन्नपि, न प्रत्यभिजानात्यतः पृच्छति - स कः ? इति । तमितर आह । सोऽयमिति । तदा तद्देशेकालविशिष्टस्यैतद्देशकालवैशिष्ट्यं बोध्यते । यदा पुनः पूर्वावस्थां स्मरति, पुरोवर्तिनं च पश्यति, विशेषजिज्ञासायां च पृच्छति - सः कः ? अयं च कः ? इति तमितरः प्रत्युत्तरयति - सः अयं च एक एवेत्याशयेन- सोऽयमिति ।। तदा विशिष्टद्वयैक्यमिति विवेकः । अत्रोद्देश्यविधेयभावभेदेन वाक्यार्थभेदः । स च ज्ञातत्वाज्ञातत्वनिबन्धनः । तत्र च श्रोतृबुभुत्सा नियामिकेति । अनुस्मृतेश्चेति ।। इदं च सूत्रं आत्मक्षणिकत्ववादं निराकर्तुं समयपादे पठितम् । तद्भाष्यं च- ‘तदेवेदमिति प्रत्यभिज्ञानाच्च’ इति । तेन तदेतद्देशकालविशिष्टद्वयैक्यं प्रत्यभिज्ञावाक्यार्थ इति आचार्याभिमतिर्ज्ञायत इति भावः । तर्हि देशकाल इति । अत्र प्रतियोगिप्राधान्यमात्रावगमादिति भावः । उपलक्षणमिति । प्रतिषेधप्राधान्यस्यापीति शेषः । तेन ध्वंसो हि तथोच्यत इत्याद्युक्तविरोधो नेति भावः । एतदनुपपत्तिपरिहारेणेति । प्रकृष्टप्रकाशश्चन्द्र इत्यत्र प्रकृष्टत्वप्रकाशत्वयोः विरुद्धविशेषणत्वाभावात् विशिष्टैक्यमस्तु नाम । तथाऽपि- सोऽयमित्यत्र विरुद्धविशेषणत्वात्कथं विशिष्टैक्यं युज्यत इत्यापाततो मन्दानामनुपपत्तिशङ्कोन्मिषति । तत्परिहारार्थमयं ग्रन्थ इत्यर्थः ।

## जनार्दनभट्टीया

एवं परेण सोऽयमिति पदद्वयस्य कालमात्रपरत्वाभिप्रायेण पक्षत्रयानुपपत्तौ चोदितायामपि आचार्यः कालमात्रपरत्वम् अनङ्गीकृत्य वस्तुस्थितिमनुसृत्य प्रकारान्तरेणाखण्डार्थत्वं समर्थयति – मैवमित्यादिना ।। अत एवोक्तं न्यायामृते- ‘टीकायां तु तद्देशकालसम्बन्धमात्रं न तत्ता । किन्तु तद्ध्वंसः । स चेदानीमस्ति । एवञ्च पक्षत्रयेऽपि न दोष इत्यत उक्तम् – ‘वस्तुस्थितिप्रदर्शनमात्रं तत्तेदन्तयोः न केवलं बाल्ययौवनयोरिव सामानाधिकरण्यमात्रम् । किन्तु नीलत्व-उत्पलत्ववत् समानकालत्वमपीति प्रदर्शनार्थं च । न तु अखण्डार्थत्वार्थम् । तत्तोपलक्षितस्य इदन्त्वोपलक्षितेन इदन्तोपलक्षितस्य तत्तोपलक्षितेन वा ऐक्यबोधकत्वेनापि अस्य सखण्डार्थत्वोपपत्तेरपि इति अन्यथाऽपि सखण्डार्थत्वसिद्धेः । परेण तद्देशकालसम्बन्ध एतद्देशकालसम्बन्ध इत्यस्मिन् उदाहृते टीकोक्त-प्रकाराप्रसाराच्च’ इति । ‘स’ इत्यस्य कालादिसम्बन्धमात्रं नार्थश्चेत् तर्हि अधिकोऽर्थ कः? इति पृच्छति सति उत्तरमाह – तस्येति ।। १देशकालसम्बन्धस्येत्यर्थः । ‘स’ इत्यस्य अतीतार्थत्वे किं प्रमाणम्? इत्यत आह – तथेति ।। १प्रतियोग्यनुयोगिभावेन कालतद्ध्वंसयोः प्रधानोपसर्जनभावेनैव प्रतीतेरिति भावः । अतीतत्वमेव अभिधाय दर्शयति – एवञ्चेति ।। तस्य वर्तमानता चेति ।। तस्य कालसम्बन्धस्येत्यर्थः । एवञ्च अयमित्यस्य वर्तमानकालसम्बन्धः प्राङ् मा भूदित्यर्थः । अनित्यभावपदार्थस्य वर्तमानता नाम पूर्वकाले

विद्यमानप्रागभावप्रतियोगित्वमेवेति भावः । अत्रापि ‘वर्तमानता च’ इति चशब्दात् कालस्तत्प्रागभावश्चेत्युभयार्थकोऽयं शब्द इत्यर्थः ।

ननु एवं सति अक्षादिशब्दवत् सोऽयमिति पदद्वयस्य नानार्थत्वं स्यादिति चेन्न । अक्षशब्दाद् वृक्षविशेषरथावयवयोरिव समप्राधान्यं विनाऽपि धीरोदारादिशब्दात् धैर्यादिविशिष्टस्येव प्रतियोग्यनु-योगिभावसम्बन्धेन प्रधानोपसर्जनभावापन्नानामेव पूर्वकालतद्ध्वंसवर्तमानकालतत्प्रागभावानां प्रतीतेरित्याचार्याशयात् ।

ननु ‘अनित्यदेशकालसम्बन्धित्वस्य’ इति मूले द्वितीयतृतीयपक्षीङ्गीकारसूचकं किमपि नास्ति? इत्यत आह – उपलक्षणमिति ।। कस्योपलक्षणम्? इत्यत आह– वर्तमानेत्यपीति ।। आशयमविद्वान् शङ्कते– नन्वत एवेति ।। मूलगतानित्यदेशकालसम्बन्धित्वपदस्य वर्तमानदेशकालसम्बन्धित्वोप-लक्षकत्वादेव उभयविशेषणसम्बन्धित्वस्य एकदेशे एकस्मिन् वस्तुनि अनुपपत्तिरिति शङ्कितु-राशयः । आशयानवबोधमेव आविष्करोति– भावेति ।। आशयमाविष्करोति– अविरुद्धेति ।। ‘सोऽयं देवदत्तः’ इति वाक्यस्यैव परेण दृष्टान्तीकृतत्वाद् देवदत्तत्वस्यापि विशेषणत्वेन विशेषणानामिति बहुवचनोपपत्तिः ।

ननु मायावादिमत इव किं भागत्यागलक्षणया अविरुद्धविशेषणानाम् अनेनोक्तिः नेत्याह – वाच्यतयेति ।। मुख्यवृत्तिविषयेनेत्यर्थः । अविरोधमेव प्रकटीकरोति – नहीति ।। इदानीमिति ।। ‘सोऽयं देवदत्तः’ इत्युपदेशकाल इत्यर्थः । किं तदविरुद्धं विशेषणं सोऽयमितिपदाभ्याम् अभिधीयते? इत्यत आह – प्रध्वंसो हीति ।। पूर्वकालध्वंससम्बन्ध इत्यर्थः । तथेति ।। स इति पदेनेत्यर्थः । स इति पदस्य ‘स नहुषः, अयं ययातिः’ इत्यादौ कालादिव्यवहितपरत्वात् कालादिव्यवधानं च कालादिध्वंस एवेति भावः ।

अयमत्र आशयविस्तारो बोध्यः – धीरोदारादिशब्दाद् धैर्यादिविशिष्टस्यैव स इति पदेन प्रतियोग्यनुयोगिभावसम्बन्धेन प्रधानोपसर्जनाभावापन्नयोरेव पूर्वदेशकालसम्बन्धतद्ध्वंसयोः प्रतीतेः तस्य पूर्वदेशकालसम्बन्धतद्ध्वंसौ अर्थः । तस्य पूर्वदेशकालसम्बन्धमात्रार्थकत्वे पूर्वकालविषयेन भेदेऽपि तत्तोल्लेखापत्या स्मृत्यनुभवजनितयोः व्यवहारयोः वैलक्षण्यं न स्यात् । स्मृत्यनुभवयोः संस्कारजन्यत्वाजन्यत्वाभ्याम् अनुभवकालस्य स्मृतिकाले वस्तुगत्या अतीतत्वेऽपि विषयकृतवैलक्षण्याभावाद् इति । तथाऽयमिति प्रागभाव इति ।। वर्तमानकालप्रागभाव इत्यर्थः । ‘स नहुषः, अयं ययातिः’ इत्यादौ अयमिति पदस्य कालाव्यवहितपरत्वात् कालाव्यवधानं च वर्तमानकालप्रागभाव इति भावः ।

अयमत्र आशयविस्तारो बोध्यः – धीरोदारादिशब्दात् धैर्यादिविशिष्टस्यैव अयमिति पदेन प्रतियोग्यनुयोगिभावसम्बन्धेन प्रधानोपसर्जनाभावापन्नयोरेव एतद्देशकालसम्बन्ध-तत्प्रागभावयोः प्रतीतेः तस्य वर्तमानदेशकालसम्बन्ध-तत्प्रागभावौ अर्थः । अत एवोक्तम् – अधस्तात् अयमित्यस्यापि न कालादिसम्बन्धमात्रमर्थः । किन्तु तस्य वर्तमानता चेति । यदत्र प्राचीनानां ‘तथाऽयमिति प्रागभाव इति वाक्ये अयमिति पदस्य भविष्यत्कालप्रागभावः’ इत्यर्थ इति व्याख्यानं तत् न शोभां बिभर्ति । न्यायामृते मायावादिना पूर्वकालध्वंसविशिष्टस्य इदानीं सत्वेऽपि एतत्कालप्रागभावाभावौ तत्कालविशिष्टस्य

इदन्तावैशिष्ट्यं न 'सोऽयं देवदत्तः' वाक्यार्थ इति चोदिते तं प्रति भविष्यत्कालप्रागभाव एव इदन्ता इति प्राचीनव्याख्यानानुसारेण इदन्तावैशिष्ट्यार्थकत्वस्य सुप्रतिपादनत्वेन तदुपेक्ष्य 'अनुवृत्तव्यावृत्तयोः' इत्यादिग्रन्थेन समाधानान्तरकथनप्रयासानुपपत्त्या तद्विरोधप्रसङ्गात् । प्रपञ्चितं हि न्यायामृते चोद्यपूर्वकमिदमेव ।

ननु पूर्वकालध्वंसविशिष्टो मध्येऽप्यस्ति । इदन्ताविशिष्टस्तु मध्ये नेति कथं तयोरभेदः? न च इदन्ता नैतत्कालसम्बन्धः । किन्तु तत्प्रागभावः । तद्विशिष्टश्च मध्येऽपि अस्तीति वाच्यम् । पूर्वकालध्वंसविशिष्टस्य इदानीं सत्वेऽपि तत्कालप्रागभावविशिष्टस्य अभावादिति चेत्, न । अनुवृत्तव्यावृत्तयोः अभेदस्य विशेषमात्रस्य ऐक्येऽपि तत्तादेः विशेषणत्वस्य समर्थितत्वादिति । किञ्च घटमात्रशून्येऽपि भूतलादौ 'अयं घटः' इति व्यवहारप्रसङ्गः । भविष्यद्घटप्रागभावस्य वर्तमानकालेऽपि भूतलादावपि सत्त्वादित्यलं प्रपञ्चेन । इदञ्च प्रागभावार्थकत्वकथनं वस्तुस्थित्यनुसारेण । न तु 'सोऽयं देवदत्तः' इत्यस्य सखण्डार्थत्वार्थम् । 'इदन्तोपलक्षितस्य तत्तावैशिष्ट्यं, तत्ताविशिष्टाभेदो वा, तत्तोपलक्षितस्य इदन्तावैशिष्ट्यं वा' इत्यादि न्यायामृतोक्तरीत्या अन्यथाऽपि सखण्डार्थत्वस्य सुप्रतिपादनात् ।१

एतेनेति ।। 'सोऽयम्' इति पदाभ्याम् अविरुद्धविशेषणानां वाच्यताभिधानेनेत्यर्थः । किमत्रेति ।। पक्षद्वयमध्ये इत्यर्थः । बुभुत्सानुसारेणेति ।। श्रोतुरतीतकालसम्बन्धध्वंसादिवैशिष्ट्यबुभुत्सानुसारेणे-त्यर्थः । अनुस्मृतेश्चेत्यादिनेति ।। जगतः क्षणिकत्वनिराकरणार्थं भगवता बादरायणेन समयचरणे 'अनुस्मृतेश्च' इति सूत्रितम् । तस्यायमर्थः । तदेवेदमिति प्रत्यभिज्ञानाच्च न सत्वाद्यनुमानात् क्षणिकं जगदिति । तथा च विशिष्टद्वयैक्यं सूत्रकारस्य अभिमतम् । एवञ्च बादरायणमतस्यैव आचार्यमतत्वात् आचार्यस्यापि तृतीयपक्षाङ्गीकारः सम्मत इति ज्ञायते । ज्ञापयतीति भावः ।१ 'इत्यादिना' इत्यादिशब्देन 'आकाशे चाविशेषात्'२ इति पूर्वसूत्रग्रहणम् । तर्हीति ।। सम्बन्धित्वस्येति ।। कथमिति ।।तृतीयपक्षे सम्बन्धिन इति वक्तव्यमिति भावः । अयमपि दृष्टान्त इति ।। 'सोऽयं देवदत्तः' इति वाक्यदृष्टान्त इत्यर्थः । अनेन ग्रन्थेनेति ।। 'अनित्यदेशकाले' इति वाक्येनेत्यर्थः । एतदनुपपत्तीति ।। पक्षत्रयानुपपत्ती-त्यर्थः ।

## देवदत्तादिस्वरूपमात्रस्य ..

**वक्तुर्विशिष्टार्थविवक्षाभावेन लक्षणाश्रयणमिति शङ्का तन्निरासश्च**

### श्रीमज्जयतीर्थटीका

ननु मा भूद्वाच्यार्थानुपपत्तिर्लक्षणाऽऽक्षेपिका । वक्तुर्विशिष्टार्थविवक्षाऽभावस्तु गरल-मभ्यवहरेत्यादाविव भविष्यति । स च स्वरूपमात्रप्रश्नोत्तरत्वात् सिद्ध्यति । अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति कोऽयमिति च चन्द्रदेवदत्तस्वरूपमात्रं ह्यनेन पृष्टम् । वक्ता च विशिष्टार्थं वदन् आम्रान्पृष्टः कोविदारानाचक्षाण इवानवधेयवचनः प्रसज्ज्येतेति चेत् । स्यादेवम् । यदि स्वरूपमात्रे प्रश्नः स्यात् । न चैवम् । स्वरूपमात्रस्य सिद्धत्वात् । न हि कश्चित्सिद्धं पृच्छतीत्याह-

## मूल

*देवदत्तादिस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः ।*

ननु प्राक्प्रकृष्टप्रकाशश्चन्द्र इत्येतदुदाहरणं प्रथमं निराकृत्य पश्चात्सोऽयं देवदत्त इत्येतन्निरा-कृतम् । अतश्चन्द्रादिमात्रस्येति वक्तव्यम् । किमर्थं क्रमभङ्गः । उच्यते । परेण स्वग्रन्थे प्रकृष्टादि-वाक्यविषय एव प्रश्नानुपपत्तिर्व्युत्पादिता । सोऽयमित्यत्र तु वाच्यार्थानुपपत्तिरेव । अतश्चन्द्रादि-स्वरूपस्येत्युच्यमाने प्रकृष्टादिवाक्यविषयानुपपत्तिपरिहार एवायमिति विज्ञायेत । तदुभय-विषयतां तु ज्ञापयितुं क्रमभङ्गः ।

एवमपि सोऽयमित्येतद्विषयतैव ज्ञास्यत इति चेन्न । प्रकृष्टादिवाक्यविषयत्वस्य परसिद्धत्वेन सुज्ञानत्वात् । परानुक्तं कस्माच्छङ्कनीयमिति चेन्न । न्यायप्राप्तस्यापि परिहार्यत्वात् ।

## श्रीविजयीन्द्रभिक्षु

वक्तुरिति ।। वक्तुस्तात्पर्यविषयार्थानुपपत्तिस्त्वित्यर्थः । प्रकृष्टादिवाक्ये सोऽयमित्यादि-वाक्ये च विशिष्टार्थविवक्षैव नास्तीति पराभिमानज्ञापनायैवमुक्तिः । अन्यथा 'गरलमभ्यवहर' इत्यादाविवेति विशिष्टार्थपरत्वाभावोपपादनाभावप्रसङ्गात् । यद्वा वक्तुर्विशिष्टार्थविवक्षाभावप्रमाण-वाक्यत्वे लक्षणाऽऽक्षेपिके इत्यर्थः । अज्ञातस्य तदाक्षेपकत्वानुपपत्तेर्ज्ञात एव स तदाक्षेपक इति वाच्यम् । तज्ज्ञानञ्च न प्रत्यक्षेण । अयोग्यत्वादित्याशङ्क्य तज्ज्ञानोपायं दर्शयति- स चेति ।। तत्सिद्धिप्रकारमेवोपपादयति- अस्मिन्निति ।। अनेनेति ।। चन्द्रदेवदत्तादिस्वरूपमात्रे जिज्ञासा-वतेत्यर्थः । स्वरूपमात्रप्रश्नोत्तरत्वेन लिङ्गेनानुमितो विशिष्टार्थविवक्षाऽभावः स्वयमनुपपन्न-स्तत्स्वरूपमात्रलक्षणाऽऽक्षेपक इत्ययुक्तम् । प्रकृष्टादिवाक्यस्य स्वरूमात्रप्रश्नोत्तरत्वासिद्धेः । ज्योतिर्मण्डलं साक्षात्कुर्वतैव 'अस्मिन् ज्योतिर्मण्डले कश्चन्द्रः' इत्यादिप्रश्नकरणात् । न हि तत्साक्षात्कारे चन्द्रादिस्वरूपं विषयः । न हि निश्चितार्थस्वरूपं कोऽपि पृच्छतीत्याह- स्यादेवमिति ।। चन्द्रादिस्वरूपमात्रस्येतीति ।। 'देवदत्तस्वरूपमात्रस्य सिद्धत्वात्' इति वाक्ये देवदत्तस्वरूमात्रस्येत्यस्य स्थाने चन्द्राऽदिस्वरूपमात्रस्येति वक्तव्यमित्यर्थः । प्रश्नानुपपत्तिरिति ।। उत्तरस्य विशिष्टार्थविषयत्वे स्वरूपमात्रविषयकप्रश्नो नोपपद्यत इति तदनुपपत्तिरित्यर्थः । तदुभयविषयतामिति ।। प्रश्नानुपपत्तिपरिहारयोरुदाहरणद्वयविषयतामित्यर्थः ।

## श्रीवेदेशतीर्थ

विशिष्टार्थेति प्रकृताभिप्रायेणोक्तम् । मुख्यार्थेत्यर्थः । अतो गरलमिति दृष्टान्तः सङ्ग-च्छते । विवक्षाऽभाव इति ।। वक्तृतात्पर्यानुपपत्तिरित्यर्थः । गरलमिति ।। अत्र यथा वाक्यार्थस्य गरलकर्मकाभ्यवहारक्रियाकसंसर्गस्याग्निना सिञ्चेत्यादिवद्बाधाभावेन मुख्यार्थानुपपत्त्यभावेऽ-प्याप्तस्य वक्तुस्तत्र तात्पर्यानुपपत्त्या प्रस्तुतद्विषदन्नरूपमनिष्टसाधनं गरलपदेन विधिप्रत्ययेन च निषेधं लक्षयित्वा धातुना अनिष्टसाधनभोजनप्रतीतावनिष्टसाधनरूपप्रस्तुतद्विषदन्नकर्मकभोजनं न कार्यमिति वक्तृतात्पर्याविषयीभूतमर्थं

प्रत्येति श्रोता । तथा प्रकृतेऽपि विशिष्टार्थरूपमुख्यार्थानुप-पत्त्यभावेऽपि तत्र वक्तृतात्पर्यानुपपत्त्या तत्तात्पर्यविषयीभूतं स्वरूपमात्रं लक्षणया प्रत्येतीत्यर्थः ।

ननु विशिष्टरूपवाक्यार्थे वक्तृविवक्षाभाव एव कुतः सिद्ध इत्यत आह- स चेति ।। स्वरूपमात्रप्रश्नोत्तरत्वलक्षणं हेतुं प्रकृष्टादिवाक्ये सोऽयमित्यादिवाक्ये चोपपादयंस्तस्य विशिष्टार्थ-विवक्षाभावसाधकत्वेऽप्रयोजकतां च परिहरति- अस्मिन्नित्यादिना ।। अनुपपत्तिपरिहार इति ।। मुख्यार्थे तात्पर्यानुपपत्तिपरिहार इत्यर्थः । तदुभयविषयतामिति ।। तात्पर्यानुपपत्ति-परिहारस्योदाहरणद्वयविषयतामित्यर्थः ।

## द्वैतद्युमणि

आम्रान् चूतवृक्षान् कोविदारान् निम्बवृक्षान् ।

## श्रीराघवेन्द्रतीर्थ

तात्पर्यानुपपत्तिरूपलक्षणाबीजं शङ्कते- ननु मा भूदित्यादिना ।। गरलमिति ।। शत्रुगृहे बुभुक्षुं प्रति कश्चिदाप्तो वक्ति 'गरलं विषम् अभ्यवहर भक्षय' इति तस्य 'यद् द्विषदन्नं तन्न भोक्तव्यम्' इत्यर्थः । लक्षणायां विषभक्षणे वक्तुर्विवक्षाऽभावो हेतुस्तथेत्यर्थः । स चेति ।। विशिष्टे वक्तुर्विवक्षाभाव इत्यर्थः । कोऽयमितीति ।। अयं क इति देवदत्तस्वरूपप्रश्ने सोऽयं देवदत्त इत्युक्तेरित्यर्थः । विशिष्टेति ।। प्रकृष्टत्वादिविशिष्टार्थं तद्देशकालादिविशिष्टार्थं वा वदन्नित्यर्थः । आम्रकोविदारशब्दौ १देशविशेषवाचकौ । अनवधेयेति ।। अश्रद्धेयवचन इति बहुव्रीहिः । प्रश्नानुप-पत्तिर्व्युत्पादितेति ।। उत्तरस्य विशिष्टार्थकत्वे स्वरूपमात्रविषयकप्रश्नोऽनुपपन्नः स्यादिति व्युत्पादि-तेत्यर्थः । वाच्यार्थेति ।। विशिष्टाभेदरूपवाच्यार्थानुपपत्तिरेव व्युत्पादितेत्यनुषङ्गः उभयविषयता-मिति ।। प्रश्नानुपपत्तिपरिहारस्योदाहरणद्वयविषयतामित्यर्थः । परानुक्तमिति ।। सोऽयमिति वाक्यस्य विशिष्टार्थकत्वे कोऽयमिति स्वरूपमात्रप्रश्नो नोपपद्यत इत्येतदित्यर्थः । येन देवदत्तादी-त्यादिमूलवाक्यं सङ्गतं स्यादिति वाक्यशेषः । न्यायेति ।। उत्तरस्य विशिष्टार्थकत्वे स्वरूपमात्रप्रश्नो न युक्त इति न्यायार्थस्य प्रकृष्टादिवाक्य इव सोऽयमिति वाक्येऽपि प्राप्तत्वादिति भावः । विशिष्टार्थेति ।। मुख्यार्थेत्यर्थः । विवक्षाभावस्त्विति ।। विवक्षा वक्तुमिच्छा । तत्प्रतीतीच्छयोच्चरितत्वरूपं तात्पर्यमित्यर्थः । तथा च तात्पर्यानुपपत्तिर्लक्षणा ज्ञापिकाऽस्त्विति भावः । गरलं विषम् । अभ्यवहर भुङ्क्ष्व । कस्यचिद् द्विषदन्नभोजनप्रसक्तिं दृष्ट्वा आप्तेनोच्यते विषं भुङ्क्ष्वेति । अस्य वाक्यस्य द्विषदन्नभोजनवर्जने लक्षणा । तद्बीजं चात्र न मुख्यार्थानुपपत्तिः । विषकर्मकभोजनक्रियायाः कर्तुं शक्यत्वेन अग्निना सिञ्चेदित्यादाविव बाधाभावात् । अतोऽत्र तात्पर्यानुपपत्तिरेव लक्षणाज्ञापिका । आप्तस्य विषभोजनविधाने तात्पर्याभावात् अतस्तदनुपपत्तिरेव द्विषदन्नभोजनवर्जने लक्षणाज्ञापिका । सन्निहितद्विषदन्नभोजने तवापेक्षा चेत्तर्हि विषं भुङ्क्ष्व । तदपेक्षया विषभोजनमेव वरम् । २उभयत्राविशिष्टत्वादतस्तन्न कर्तव्यमिति । एवमत्रापि पूवर्ोक्तरीत्या विशिष्टैक्यरूपमुख्यार्थानुपपत्त्यभावेऽपि वक्तुरुद्दालकस्य विशिष्टैक्ये तात्पर्यस्याभावेन तदनुपपत्त्या स्वरूपमात्रे लक्षणा क्रियत इति भावः । ननु कुतोऽत्र विशिष्टैक्यरूपवाक्यार्थे वक्तुस्तात्पर्याभाव इत्यत आह- स चेति ।।

सत्यज्ञानादिवाक्यं तत्त्वमसीत्यादिवाक्यं च, स्वरूपमात्रपरं, तन्मात्रप्रश्नोत्तरत्वात्, 'प्रकृष्टप्रकाशश्चन्द्रः' 'सोऽयं देवदत्तः' इत्यादिवाक्यवदित्यनुमानमभिप्रेत्य दृष्टान्तद्वये हेतुमुपपादयति- अस्मिन्निति ।। आम्रान् चूतवृक्षान् । कोविदारान् निम्बबृक्षान् । आचक्षाण इति ।। वदन्नित्यर्थः । अनवधेयवचनः । प्रथममिति ।। प्रकृष्टप्रकाशश्चन्द्र इति वाक्येनेत्यर्थः । पश्चादिति ।। अनित्येति वाक्येनेत्यर्थः । इति वक्तव्यमिति । देवदत्तादिस्वरूप-मात्रस्येति कथमुक्तमित्यर्थः । प्रश्नानुपपत्तिरिति ।। प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य प्रकृष्टत्वादि-गुणविशिष्टे तात्पर्याङ्गीकारे कश्चन्द्र इति प्रश्नोऽनुपपन्नः स्यात् । कश्चन्द्र इति चन्द्रस्वरूप-मात्रजिज्ञासायां ह्येतदुच्यते अतः स्वरूपमात्र एव तात्पर्यमङ्गीकार्यं प्रकृष्टत्वादिविशिष्टे तात्पर्याङ्गी-कारे च किंलक्षणक इति प्रश्नापत्त्या कश्चन्द्र इति चन्द्रस्वरूपप्रश्नोऽनुपपन्नः स्यात् क्रियते१ चन्द्रस्वरूपप्रश्नस्तेन ज्ञायते प्रकृष्टत्वादिगुणयोगे न तात्पर्यमिति । अन्यथा आम्रान् पृष्ट इति न्यायेन प्रश्नोत्तरयोर्वैयधिकरण्यं स्यादित्येव व्युत्पादितेत्यर्थः । २वाच्यार्थानुपपत्तिरेवेति । न प्रश्नानुपपत्ति-रिति 'एव'कारार्थः । सोऽयं देवदत्त इति वाक्यस्य योऽर्थः तद्देशकालविशिष्टस्यैतद्देशकालविशिष्टस्य चैक्यरूपस्तदनुपपत्तिर्व्युत्पादिता । तथाहि- तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्यं तद्बोधने तद्देशकालयोरिदानीं सत्त्वप्रसङ्गः । एतद्देशकालयोस्तदानीं सत्वप्रसङ्गः-विशिष्टद्वयैक्यबोधने विशेषणयोरैक्यप्रसङ्ग इत्येवं व्युत्पादितेत्यर्थः । अनुपपत्तिपरिहार इति ।।

प्रकृष्टादिवाक्यस्य प्रकृष्टत्वादौ मुख्यार्थे या तात्पर्यानुपपत्तिस्तस्याः स्वरूपमात्रस्य सिद्धत्वेन तत्प्रश्नत्वानङ्गीकारादिति परिहार एवायमिति विज्ञायेतेत्यर्थः । उभयविषयतामिति । मुख्यार्थे तात्पर्यानुपपत्तिपरिहारस्य 'प्रकृष्टप्रकाशश्चन्द्रः', 'सोऽयं देवदत्तः' इति दृष्टान्तद्वयविषयतां ज्ञाप-यितुमित्यर्थः । एवमपीति क्रमभङ्गेऽपीत्यर्थः । विषयतैवेत्यत्रानुपपत्तिपरिहारस्येति वर्तते । देवदत्तादिस्वरूपमात्रस्येत्युक्त्या सोऽयमिति वाक्य एव मुख्यार्थे तात्पर्यविषयकानुपपत्तिपरिहार एव क्रियत इति ज्ञास्यते, न तु प्रकृष्टादिवाक्यविषयकानुपपत्तिपरिहारः क्रियत इति अत उभयविषयता-ज्ञापनमनुपपन्नमित्यर्थः ।। प्रकृष्टादिवाक्येति । प्रकृष्टादिवाक्यस्य मुख्यार्थे तात्पयर्यानुपपत्त्या स्वरूपमात्रविषयतायाः परमते प्रसिद्धत्वेन मुख्यार्थे तात्पर्यानुपपत्तिपरिहारोऽपि चन्द्रस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्न इति सुज्ञानं इत्यर्थः । परानुक्तमिति । सोऽयमिति वाक्ये वाक्यार्थानुपपत्तेरेव२ परेणोक्तत्वात् । प्रश्नोत्तरयोर्वैयधिकरण्यान्यथानुपपत्त्या स्वरूपमात्रपरत्वमिति परेणानुक्तत्वात् सोऽयमितिवाक्यं स्वरूपमात्रप्रश्नोत्तरत्वेन स्वरूपमात्रपरमित्यत्र दृष्टान्ततया कस्माच्छङ्कनीयमित्यर्थः । तथा च परानुक्तत्वात्तदाशङ्कनं देवदत्तादीति वाक्ये तत्परिहारकरणं चायुक्तमिति भावः । न्यायप्राप्तस्यापीति । प्रकृष्टादिवाक्ये स्वरूपमात्रपरत्वे यो न्यायः स्वरूपमात्र-प्रश्नोत्तरत्वरूपस्तेनैव न्यायेन प्राप्तं यत् सोऽयमिति वाक्यस्य स्वरूपमात्रपरत्वं तस्यापि परिहारः कार्य इत्यभिप्रेत्य परानुक्तमपि वाक्यमाशङ्क्य परिहृतमित्यर्थः ।

## गुरुराजीया

ननु वाच्यार्थानुपपत्तिरेव लक्षणाऽऽक्षेपिकेति न नियमः । तथा सति गरलमभ्यवहरेत्यादौ अभ्यवहरेत्यादिपदवाच्यस्याभ्यवहारकर्मत्वादेः गरलादौ विद्यमानत्वेन लक्षणाऽऽक्षेपकवाच्यार्थानुप-पत्तेरभावेन

लक्षणाऽभावप्रसङ्गात् । किं तु वक्तुर्विशिष्टार्थविवक्षाऽभावोऽपि । ततश्च गरल-मभ्यवहरेत्यादौ वाच्यार्थानुपपत्त्यभावेऽपि वक्तुर्विशिष्टार्थविवक्षाऽभावस्य सत्त्वात् तेनैव लक्षणाऽक्षेपवत् प्रकृष्टादिवाक्ये सोऽयमित्यादिवाक्ये च वाच्यार्थानुपपत्तेरभावेऽपि वक्तुर्विशिष्टार्थ-विवक्षाऽभावस्य सत्त्वात्तेनैव लक्षणाऽक्षेपसिद्धेर्न लक्षणाया अभावो वक्तुं शक्य इत्यभिप्रायेण शङ्कते- मा भूदिति ।। गरलमभ्यवहरेत्यत्र वक्तुः परमप्रेमास्पदतयाऽनिष्टसाधनकर्तव्यत्व-बोधकत्वानुपपत्त्या विशिष्टार्थविवक्षाऽभावसिद्धिवत् प्रकृष्टादिवाक्ये सोऽयमित्यादिवाक्ये च वक्तुर्विशिष्टार्थविवक्षाऽभावस्य साधकाभावेनासिद्धेर्न वक्तुर्विशिष्टार्थविवक्षाऽभावेन लक्षणा-सिद्धिरिति वैषम्यमाशङ्क्य प्रकृतेऽपि स्वरूपमात्रप्रश्नोत्तरत्वेनैव वक्तुर्विशिष्टार्थविवक्षाऽभावस्य सिद्धत्वान्न दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्याशयेन तत्सिद्धिप्रकारं दर्शयति- स चेति ।। भवेदेतद्यदि स्वरूपमात्रप्रश्नोत्तरत्वं सिद्धं स्यात् । तदेव तु न सिद्धमिति कथं तेन विशिष्टार्थविवक्षाऽभाव-सिद्धिरित्यतस्तत्सिद्धिमुपपादयति- अस्मिन्निति ।। प्रकृष्टादिवाक्यस्य सोऽयमित्यादिवाक्यस्य च स्वरूपमात्रप्रश्नोत्तरत्वेऽपि वक्तुर्विशिष्टार्थविवक्षाङ्गीकारे बाधकाभावादप्रयोजकमेतदित्याशङ्कां विपक्षे बाधकोपदर्शनेन परिहरति- वक्ता चेति ।। न हि कश्चिदिति ।। सिद्धार्थतायाः प्रश्नदूषणत्वस्याऽकरे स्थितत्वादिति भावः । किमर्थः क्रमभङ्ग इति ।। निष्प्रयोजनत्वान्न क्रमभङ्गो युक्त इत्यर्थः । निष्प्रयोजनत्वमसिद्धमित्याशयेन प्रयोजनमुपदर्शयति- उच्यत इति ।। अनुपपत्ति-रिति ।। वाच्यार्थे तात्पर्यानुपपत्तिरित्यर्थः । तदुभयेति ।। तात्पर्यानुपपत्तिपरिहारस्योदाहरण-द्वयविषयतामित्यर्थः । क्रमभङ्गेऽपि उभयविषयत्व१ज्ञानासम्भवान्नैतत्क्रमभङ्गप्रयोजनमिति निष्प्रयोजनत्वतादवस्थ्यमिति शङ्कते- एवमपीति ।।

## गोविन्दीया

वक्तुरिति ।। गरमभ्यवहरेत्यादौ शरीरनाशप्रसङ्गात् सिद्धे न तत्र विवक्षाभावेन द्विषदन्नं नाभ्यवहार्यमिति तात्पर्यार्थद्योतकलक्षणा यथाऽक्षिप्ता, 'सोऽयं देवदत्तः' इत्यादौ वक्तुर्विशिष्टार्थविवक्षाभावः लक्षणाक्षेपको भविष्यतीत्यर्थः । अनवधेयवचन इति ।। वक्ता अनिर्धारितवचनः प्रसज्येतेत्यर्थः । प्रकृष्ट इति ।। प्रकृष्टादिवाक्यविषयप्रश्नोत्तरानुपपत्तिपरिहार एवायं ग्रन्थः प्रवर्तत इति ज्ञायेतेत्यर्थः । उभयविषयतामिति ।। प्रश्नोत्तरानुपपत्तेः प्रकृष्टादिवाक्यं सोऽयमित्यादिवाक्यं चेत्युभयवाक्यविषयतां ज्ञापयितुं क्रमभङ्ग इत्यर्थः । एवमपीति ।। देवदत्तादि-स्वरूपमात्रपरस्येत्येवमुच्यमानेऽप्यनुपपत्तेः सोऽयमित्येतद्वाक्यविषयतैव ज्ञास्यत इति चेदित्यर्थः । प्रकृष्टादिवाक्येति ।। प्रकृष्टादिवाक्यविषयत्वस्य परसिद्धत्वेन सुज्ञानत्वादित्यर्थः । परेति ।। सोऽयं देवदत्त इत्यत्र परानुक्ता प्रश्नानुपपत्तिः कस्माच्छङ्कनीया परिहारो वा कस्माद्वाच्य इति चेदि-त्यर्थः । न्यायेति ।। न्यायप्राप्तस्य प्रश्नोत्तरानुपपत्तिरूपस्य परिहार्यत्वात् तत्परिहारोऽप्यावश्यक इत्यर्थः ।

## नारोपन्तीया

गरमभ्यवहरेति । कुपथ्यशीलं पुत्रादिकं प्रति पित्रादेरिदं वाक्यम् । तत्र यथा, यथाश्रुते वक्तृविवक्षाभावात् कुपथ्यं न कर्तव्यमित्यत्र तात्पर्यं तद्वदत्र ।

## जनार्दनभट्टीया

ननु परबुद्धिवत् परविवक्षाभावस्यापि अप्रत्यक्षत्वात् कथं विशिष्टार्थविवक्षाभावनिश्चयः श्रोतुः? इत्यत आह – स चेति ।। दृष्टान्तद्वयेऽपि स्वरूपमात्रप्रश्नोत्तरत्वस्य असिद्धिमाशङ्क्य परि-हरति–अस्मिन्निति ।। स्वरूपमात्रप्रश्नोत्तरत्वहेतोः अप्रयोजकत्वमाशङ्क्य विपक्षे बाधकतर्कमाह-१

## नक्षत्राऽदिव्यतिरेकमात्रस्यापि..

**प्रकृष्टादिवाक्यस्य चन्द्रादिस्वरूपमात्रबोधकत्वे कश्चन्द्र इत्यादिप्रश्नानुपपत्तिसमर्थनम्**

## श्रीमज्जयतीर्थटीका

ननु चन्द्रदेवदत्ताऽदिस्वरूपं सिद्धमपि सङ्कीर्णतयैव । न तु व्यावृत्तत्वाऽदिना । अतः स्वरूप एव प्रश्नो युज्यते । अत एव प्रकाश इत्येवोक्ते नक्षत्रादौ प्रसङ्गात् प्रकृष्ट इत्येव चाभिहिते सन्तमसेऽपि प्रसङ्गात् नक्षत्रादिव्यावृत्त्या चन्द्रस्वलक्षणप्रतिपादनाय प्रकृष्टप्रकाशश्चन्द्र इत्याह । एवं स इति वाऽयमिति वा वचने भेदभ्रमानिरासात्तन्निरासेन देवदत्तस्वरूपमात्रप्रतिपादनाय सोऽयं देवदत्त इत्याहेति गम्यत इति चेन्न । विकल्पानुपपत्तेः । तथा हि । किं व्यावृत्त्यादिमत्स्वरूपं प्रश्नप्रतिवचनविषय इत्यभिप्रायः । उत स्वतन्त्रमेव नक्षत्रादिव्यावृत्त्यादिकम् । आद्ये विशिष्टार्थताऽनिस्तारः । अर्थाक्षिप्तमेव व्यावृत्त्यादि । न शब्दार्थ इति चेन्न । विशेषणार्पणेन विनाऽर्थाक्षेपासिद्धेः । द्वितीयं निराकरोति -

## मूल

***नक्षत्राऽदिव्यतिरेकमात्रस्यापि सिद्धत्वान्न व्यतिरेकमात्रे***

अत्रापि प्रश्न इत्यनुवर्तते । व्यतिरेक इत्युपलक्षणम् । भेदाभावोऽपि ग्राह्यः । मात्रशब्देन व्यतिरेकादेः स्वातन्त्र्यं सूचयति । सिद्धत्वाद् घटादाविति शेषः । न हि प्रष्टा घटादौ नक्षत्रादिव्यतिरेकं भेदाभावं वा न जानातीति युज्यते । स्वरूपमात्रस्य सिद्धत्वात् इत्युक्तम् । तत्कुत इत्यत आह-

**मूल**

***अन्यथा प्रश्नस्यैवासम्भवात्***

यदि प्रष्टा चन्द्रादिस्वरूपमात्रं न जानीयात्तदा चन्द्र इति अयमिति चानूद्य क इति कथं पृच्छेत् । न ह्यविदितं वस्त्वनुवदितुं शक्यते । तेन ज्ञायते चन्द्रादिस्वरूपं तस्य सिद्धमिति ।

## श्रीविजयीन्द्रभिक्षु

चन्द्रादिस्वरूपस्येतरव्यावृत्ततया भेदाभाववत्तया च सिद्ध्यभावात् स्वरूपमात्रविषयक-प्रश्नोपपत्तिरिति शङ्कते- ननु चन्द्रेति ।। सङ्कीर्णतयेति ।। सिद्धमित्यनुषज्यते । प्रतिवचनानु-गुण्यादपीतरव्यावृत्तभेदाभाववच्चन्द्रदेवदत्तादिस्वरूपमेव प्रश्नविषय इत्याशयेनाऽह- अत एवेति ।। व्यावृत्त्यादिमदित्यादिपदेन भेदाभावपरिग्रहः । स्वतन्त्रमेवेति ।। चन्द्रादिस्वरूपाविषयमेवेत्यर्थः । आद्य इति ।। चन्द्रस्वरूपनक्षत्रादिव्यावृत्त्योर्भेदाभावदेवदत्तस्वरूपयोश्च संसर्गप्रत्यायनादिति भावः । अर्थाक्षिप्तमेवेति ।। तथा च शाब्दप्रतीतेः संसर्गागोचरत्वेन न शब्दस्याखण्डार्थत्वहानिरिति भावः । विशेषणार्पणेनेति ।। वस्तुतो व्यावर्तकधर्मवैशिष्ट्याबोधने, तत्तेदन्तयोः सामानाधिकरण्याबोधने चानुपपत्त्यभावेन व्यावृत्तेर्भेदाभावस्य चाऽक्षेप्यत्वानुपपत्तेरित्यर्थः । तथा च चन्द्रादिस्वरूपे व्यावृत्तिबोधमिच्छता देवदत्तादिस्वरूपे भेदाभावबोधमिच्छता च प्रकृष्टादिलक्षणवाक्येन तत्र व्यावर्तकधर्मवैशिष्ट्यप्रत्यायनं तत्तेदन्तयोः सामानाधिकरण्यप्रत्यायनञ्चावश्यमङ्गीकार्यमिति सखण्डार्थत्वं वज्रलेपायितमिति भावः । मूले व्यतिरेकपदं भेदार्थकम् । उक्तदूषणस्योदाहरण-द्वयसाधारण्यायाऽह- व्यतिरेक इतीति ।। स्वातन्त्र्यमिति ।। चन्द्रादिस्वरूपान्विततयाऽनुपस्थित-त्वमित्यर्थः । अन्यथेत्युत्तरवाक्यस्याव्यवहितपूर्ववाक्येनान्वयस्यानुपपन्नत्वादवतारयति- स्वरूप-मात्रस्येति ।। असम्भवमुपपादयति- यदीति ।।

## श्रीवेदेशतीर्थ

व्यावृत्तत्वादिनेति ।। आदिपदेन भेदाभाववत्तयेति ग्राह्यम् । तथा च चन्द्रस्वरूपं नेतरव्यावृत्तत्वेन सिद्धम् । देवदत्तस्वरूपन्तु भेदाभाववत्तया न सिद्धमित्यर्थः । स्वरूप एवेति ।। असङ्कीर्णाभिन्नस्वरूप एवेत्यर्थः । अत एवेति ।। असङ्कीर्णाभिन्नस्वरूपस्य पृष्टत्वादेवेत्यर्थः । व्यावृत्त्यादिमदित्यादिपदेन भेदाभावपरिग्रहः । एवमुत्तरत्रापि ।। स्वतन्त्रमेवेति ।। चन्द्रादि-स्वरूपाविशेषणमेवेत्यर्थः । आद्य इति ।। व्यावृत्तत्वादिविशिष्टस्वरूपबोधनादिति भावः । अर्था-क्षिप्तमेवेति ।। तथा च शाब्दप्रतीतेर्विशिष्टागोचरत्वेन न शब्दार्थस्याखण्डत्वक्षतिरिति भावः । विशेषणार्पणेनेति ।। वस्तुतो व्यावर्तकधर्मवैशिष्ट्याबोधने तत्तेदन्तयोः सामानाधिकरण्याबोधने चानुपपत्त्यभावेन व्यावृत्तेर्भेदाभावस्य चाऽक्षेप्यत्वानुपपत्तेरित्यर्थः । तथा च चन्द्रादिस्वरूपे व्यावृत्तिबोधमिच्छता भेदाभावबोधमिच्छता च प्रकृष्टादिलक्षणवाक्येन तत्र व्यावर्तकधर्मवैशिष्ट्य-प्रतिपादनं सोऽयमिति वाक्येन तत्तेदन्तयोः सामानाधिकरण्यप्रतिपादनञ्चावश्यमङ्गीकार्यमिति सखण्डार्थत्वं वज्रलेपायितमिति भावः ।

## श्रीराघवेन्द्रतीर्थ

व्यावृत्तत्वादिनेत्यादिपदेन भेदशून्यतयेति ग्राह्यम् । अत एवेति ।। व्यावृत्तत्वादिना सिद्धत्वाभावादेवेत्यर्थः । अस्य नक्षत्रादिव्यावृत्त्येत्युत्तरवाक्येनान्वयः । सन्तमस इति । ‘अव-समन्धेभ्यस्तमसः’१ । इति समासान्तः । स्वलक्षणेति ।। स्वरूपमात्रेत्यर्थः । व्यावृत्त्यादिमत्स्वरूप-मित्यत्र भेदाभाववत्स्वरूपमिति वा अभेदवत् स्वरूपमिति वाऽदिपदेन ग्राह्यम् । एवमग्रेऽपि । अर्थाक्षिप्तमेवेति ।। तथा च व्यावृत्त्यादेः शब्दार्थत्वाभावान्नाखण्डार्थत्वप्रच्युतिः शब्दस्येति भावः । विशेषणेति ।। प्रकृष्टप्रकाशत्वादिविशेषणार्पणेन

विना नक्षत्रादिव्यावृत्त्यादेराक्षेपा-सिद्धेरित्यर्थः । द्वितीयमिति ।। विशेष्यासंस्पृष्टस्वतन्त्रव्यावृत्तिभेदाभावौ प्रश्नप्रतिवचनयोर्विषया-विति पक्षमित्यर्थः । व्यतिरेक इतीति ।। व्यावृत्तिरित्यर्थः । सोऽयमित्युदाहरणाभिप्रायेणाऽह- भेदाभावोऽपि ग्राह्य इति ।। स्वातन्त्र्यमिति । चन्द्रादिधर्म्यसंस्पृष्टत्वेन भानमित्यर्थः । भेदाभाव-मिति ।। यत्र क्व च विद्यमानं वा घटादौ स्वप्रतियोगिकभेदाभावं वेत्यर्थः । सिंहावलोकनन्यायेन प्रागुक्तस्य विवरणमुत्तरवाक्यमिति भावेनावतारयति- स्वरूपमात्रस्येति ।। सङ्कीर्णतयेति । नक्षत्रादिसाधारण्येनेत्यर्थः । सन्तमसेऽपीति ।। अन्धकारेऽपीत्यर्थः । तस्यापि बहुतरत्वेन प्रकृष्टत्वादिति भावः । स्वलक्षणेति ।। शुद्धं वस्तु स्वलक्षणमिति वचनात् १इतर-व्यावृत्तशुद्धचन्द्रस्वरूपप्रतिपादनायेत्यर्थः । देवदत्तेति ।। असङ्कीर्णदेवदत्तस्वरूपमात्रेत्यर्थः । अर्थाक्षेपासिद्धेरिति ।। व्यावृत्त्यादेरर्थादाक्षिप्तत्वस्याप्यसिद्धेरित्यर्थः । ग्राह्य इति ।। सोऽयमिति वाक्यबोध्यस्य भेदाभावमात्रस्यासिद्धत्वान्न भेदाभावमात्रे प्रश्न इति ग्राह्यमित्यर्थः ।

## गुरुराजीया

व्यावृत्तत्वादिनेत्यादिपदेन भेदाभाववत्त्वपरिग्रहः । ततश्चन्द्रस्वरूपमसङ्कीर्णत्वेन देवदत्तस्वरूपं भेदाभाववत्त्वेन न सिद्धमिति योजना । स्वरूपमात्रेति ।। असङ्कीर्णाभिन्नचन्द्र-देवदत्तस्वरूपमात्रेत्यर्थः । अत एवेति ।। असङ्कीर्णचन्द्रस्वरूपस्य पृष्टत्वात् तत्प्रतिपादयितुं प्रसङ्गद्वयपरिहारकपदद्वयोपादानमर्थवत् । अन्यथा तन्न स्यादिति भावः । अत एवेति ।। भिन्न-देवदत्तस्वरूपस्य पृष्टत्वात्तत्प्रतिपादयितुं पदद्वयोपादनमर्थवत् । अन्यथा तन्न स्यादिति भावः । व्यावृत्यादीत्यादिपदेन भेदाभावपरिग्रहः । स्वतन्त्रमेवेति ।। चन्द्राद्यविशेषणभूतमेवेत्यर्थः । आद्य इति ।। व्यावृत्यादिविशिष्टस्वरूपबोधनादिति भावः । अर्थाक्षिप्तमेवेति ।। अर्थाक्षिप्तस्य शब्दार्थत्वाभावेन शब्दार्थस्य नाखण्डत्वक्षतिरिति भावः । विशेषणार्पणेनेति ।। अन्यथा तीरस्या-गङ्गात्वाबोधनेऽपि गङ्गाव्यावृत्तिसिद्धिप्रसङ्गादिति भावः । ततश्च विशेषणार्पणस्यावश्यम्भावाद् वाक्यद्वयस्य सखण्डार्थत्वमवर्जनीयमिति भावः । तेनेति । अनुवादादिनेत्यर्थः ।

## गोविन्दीया

नन्विति ।। चन्द्रदेवदत्तादिस्वरूपसं(सिद्धत्वासिद्धत्वाभ्यां)कीर्णतया भेदवत्तया सिद्धमपि सर्वव्यावृत्तत्वभेदाभाववत्त्वेन न सिद्धमित्यर्थः । विकल्पेति ।। चन्द्रदेवदत्तादिस्वरूपस्य सिद्धत्वासिद्धत्वाभ्यां विकल्पाऽनुपपत्तेरित्यर्थः । तथा हीति ।। व्यावृत्तिमच्चन्द्रस्वरूपभेदाभाव-वद्देवदत्तस्वरूपं प्रश्नप्रतिवचनविषयः किमुत नक्षत्रादिव्यावृत्तिः भेदाभावश्च स्वतन्त्रमेव तन्मात्रमेव विषयः किम् ? इत्यर्थः । न शब्दार्थ इति ।। चन्द्रदेवदत्तशब्दार्थौ नेत्यर्थः । विशेषणेति ।। प्रकृष्टप्रकाशः, सोऽयमिति च विशेषणार्पणेन विना वृत्तिभेदाभावरूपार्थाक्षेपस्य चन्द्रदेवदत्तादा-वसिद्धेरित्यर्थः । तथा च तद्विशेषणयुक्तत्वाद्विशिष्टार्थतानिस्तार इति भावः । व्यतिरेकमिति ।। व्यावृत्तिरित्यर्थः । तदिति ।। चन्द्रदेवदत्तादिस्वरूपस्य सिद्धत्वं कुतो ज्ञायत इत्यर्थः । अन्य-थेति ।। स्वरूपस्य सिद्धत्वाभाव इत्यर्थः ।। स्वरूपमर्थापत्तिप्रमाणसिद्धमिति भावः ।

## जनार्दनभट्टीया

सङ्कीर्णतयैवेति ।। इतरविलक्षणत्वाविलक्षणत्वौदासीन्येनेत्यर्थः । सन्तमस इति ।। सन्तमसेऽपि स्पष्टचाक्षुषसाक्षात्कारविरोध्यक्षिपटलाद्यपेक्षया तादृशप्रकर्षवत्त्वादिति भावः । व्यावृत्त्यादिमदिति ।। व्यावृत्त्यादिविशिष्टमित्यर्थः । स्वतन्त्रमेवेति ।। अन्याविशेषणीभूतमित्यर्थः । अर्थाक्षिप्तमिति ।। 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ अप्रकाशव्यावृत्त्यादिकम् अर्थेन= प्रकाशपदबोधितेन प्रकाशरूपार्थेन, आक्षिप्तम्= अनुमितं, न तु शब्दार्थः । शब्दवृत्तिज्ञानजन्यज्ञानविषयो नेत्यर्थः । वाक्यार्थज्ञानानन्तरम् आक्षेपः । स च विशिष्टार्थप्रतिपादनमन्तरेण नोपपद्यत इत्याह – विशेषार्पणे-नेति ।। 'पर्वते धूमोऽस्ति' इति वाक्यश्रवणानन्तरं वह्न्याक्षेपस्थले आधाराधेयभावरूप-संसर्गबोधनानन्तरमेव वह्न्याक्षेपस्य दर्शनात् । अन्यथा 'पर्वतधूमौ' इति ज्ञानानन्तरमपि वह्न्याक्षेपापत्तेरिति भावः । नहि 'पर्वते धूमः' इति ज्ञानानन्तरं वह्न्याक्षेपो दृश्यत इति भावः । भेदाभावं वेति ।। घटादिभेदाभावं वेत्यर्थः ।

## अतः कैर्विशेषणैर्विशिष्ट ..

**प्रकृष्टादिवाक्ये प्रश्नप्रतिवचनयोर्विशिष्टविषयकत्वसमर्थनेनाखण्डार्थत्वभङ्गः**

## श्रीमज्जयतीर्थटीका

यदि तर्हि प्रश्नपरिहारयोर्न स्वरूपमात्रं विषयः किं विषयौ तावित्यत आह-

## मूल

***अतः कैर्विशेषणैर्विशिष्ट इति प्रश्ने***

***प्रकृष्टप्रकाशतद्देशकालादिविशिष्ट एव वाक्यार्थः ।***

उपपद्यत इति वाक्यशेषः । तेन प्रश्न इति सप्तम्युपपत्तिः । प्रकृष्टप्रकाश इति भावप्रधानो निर्देशः ।

आदिपदं पूर्वोक्तपक्षद्वयसङ्ग्रहार्थम् । तदयमर्थः । यत एवं चन्द्रादिस्वरूपमात्रे प्रश्नो न युज्यते । अतः कश्चन्द्रः कोऽयमित्यनया वाचोभङ्ग्या कैर्विशेषणैर्विशिष्ट इति विशिष्टविषय एव प्रश्नोऽङ्गी-कार्यः । प्रश्ने च विशिष्टविषये सति परिहारवाक्यस्यापि विशिष्ट एवार्थो युज्यते । तत्र प्रकृष्ट-प्रकाशश्चन्द्र इत्यादिवाक्यं प्रकृष्टप्रकाशत्वादिविशिष्टं चन्द्रादिकं प्रतिपादयति । नक्षत्राऽदि-व्यावृत्तिस्त्वर्थलभ्या । सोऽयं देवदत्त इत्यादिवाक्यं कदाचित्तद्देशकालविशिष्टस्यैतद्देशकाल-वैशिष्ट्यं प्रतिपादयति । एतद्देशकालवैशिष्ट्यस्य सिद्धत्वेऽपि तद्देशकालविशिष्टस्येति विशेषणात् । कदाचिदेतद्देशकालविशिष्टस्य तद्देशकालवैशिष्ट्यम् । ऐक्यं त्वर्थलभ्यम् । कदाचिद्विशिष्ट-द्वयैक्यञ्चेति ।

एवमेव ‘ब्रह्मविदाप्नोति परम्’ इत्युक्त्या सामान्यतोऽवगतं ब्रह्म कैर्विशेषणैर्विशिष्टमिति विशेषणविवित्सया पृष्टे ‘सत्यं ज्ञानमनन्तम्’ इति सत्यत्वादिविशिष्टमेव बोध्यते । जीवात्मा च प्रत्यक्षेण सामान्यतोऽवगतो विशेषापेक्षया पृष्टः सिंहो देवदत्त इतिवत् ‘तत्त्वमसि’ इति वाक्येन परमात्मसादृश्यविशिष्टः प्रतिपाद्यते । अभेदस्य प्रमाणबाधितत्वात् ।

## श्रीविजयीन्द्रभिक्षु

प्रश्न इति सप्तम्यनुपपत्तिमाशङ्क्याऽह- उपपद्यत इतीति ।। ननु प्रकृष्टः प्रकाशो यस्येति बहुव्रीह्याश्रयणेन प्रकृष्टप्रकाशशब्देन चन्द्रस्य प्रत्यायनान्न तद्विशिष्टो वाक्यार्थ इत्यनुपपत्तेराह- भावप्रधान इति ।। पूर्वोक्तेति ।। तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं विशिष्टद्वयैक्यञ्चेति पूर्वोक्तपक्षद्वयेत्यर्थः । ननु यदि प्रश्नोत्तरे विशिष्टविषयके तदा किंविशेषणविशिष्टश्चन्द्रादिरिति प्रश्नः प्रकृष्टत्वादिविशेषणविशिष्टश्चन्द्रादिरित्युत्तरञ्च स्यात् । न तूक्तरीत्येत्यत आह- तदयमर्थ इति ।। तत्रेति ।।

ननु ‘अस्मिन् ज्योतिर्मण्डले कश्चन्द्रः’ इति प्रश्नो न प्रकृष्टत्वादिविशेषणवैशिष्ट्यविषयकः । प्रकृष्टत्वादीनामपि योग्यत्वेन तद्वैशिष्ट्यस्य तत्र निश्चितत्वात् । अत एव न तद्वैशिष्ट्यबोधकं प्रतिवचनमपि । अत एव च न व्यावृत्तिरर्थसिद्धा । प्रत्यक्षेण व्यावर्तकधर्मग्रहे सति व्यावृत्तेरपि तेनैव निश्चयात् । नापि चन्द्रवाचकशब्दवाच्यत्वं तयोर्विषयः । चन्द्रशब्दवाच्यं किञ्चिदस्तीति जानतोऽपि प्रश्नदर्शनादिति चेन्न । प्रश्नमूलभूतसंशयजनकदोषेण प्रतिबन्धान्न प्रकृष्टादिवैशिष्ट्या-निश्चय इति तद्वैशिष्ट्यमेव प्रश्नप्रतिवचनयोर्विषयः । न हीन्द्रियसन्निकर्षमात्रेणार्थनिश्चयः । भ्रमसंशयोच्छेदापत्तेरिति ।

सोऽयं देवदत्त इत्यादिवाक्यमिति ।। यद्यपि पूर्वानुभवजनिततत्तादिवैशिष्ट्यगोचरसंस्कार-सहकृतेन्द्रियेण देवदत्ते तद्देशकालवैशिष्ट्यस्य तद्विशिष्टाभेदस्य चैतद्देशतत्कालविशिष्टे निश्चयात् प्रश्नप्रतिवचने न सम्भवतस्तथाऽपि संस्कारस्यानुद्बोधे प्रमोषे वा प्रत्यक्षेण निश्चयाभावेन प्रश्न-प्रतिवचने भवत इति भावः । तदैक्यञ्चार्थलभ्यमिति ।। नन्वेतद्देशकालवैशिष्ट्यं न प्रतिपादनीयं प्रत्यक्षसिद्धत्वादित्याशङ्क्य देवदत्तस्वरूपमात्रे सिद्धत्वेऽपि तद्देशकालविशिष्टे तस्मिंस्तस्या-सिद्धेस्तत्प्रतिपादनोपपत्तिरित्याह- एतद्देशकालवैशिष्ट्यस्येति ।। विशेषणादिति ।। अत्र तद्विशिष्टस्य तस्यासिद्धत्वादिति शेषः । एवं दृष्टान्तयोर्विशिष्टविषयत्वमुपपाद्य दार्ष्टान्तिकेऽपि तदुपपादयति- एवमेवेति ।। पृष्ट इति ।। यद्यपि प्रश्नो न दृश्यते तथाऽप्युत्तरानुरोधेन कल्प्यप्रश्नमादाय पृष्ट इत्युक्तम् । नन्वभेद एव किं न बोध्यत इत्यत आह- अभेदस्येति ।। नाहमीश्वरः नाहं सर्वज्ञः नाहं चिन्मात्रमित्यादिप्रत्यक्षेण विरुद्धधर्माधिकरणत्वरूपलिङ्गेन ‘कर्मक्षये याति स तत्त्वतोऽन्यः’ इत्यादिश्रुत्या च जीवेश्वराभेदस्य बाध्यत्वादित्यर्थः ।

## श्रीवेदेशतीर्थ

तेनेति ।। उपपद्यत इति शेषानुक्तौ प्रश्नस्य वाक्यार्थाधारत्वविषयत्वयोरभावात् सप्तम्यनुपपन्ना स्यात् । तदुक्तौ तु प्रश्ने सतीत्यर्थलाभात्सप्तम्युपपत्तिरिति भावः । ननु प्रकृष्टः प्रकाशो यस्येति बहुव्रीह्याश्रयणेन

प्रकृष्टप्रकाशशब्देन चन्द्रस्य प्रत्यायनान्न तद्विशिष्टो वाक्यार्थ इत्यत आह- भावप्रधान इति ।। तथा च प्रकाशवैशिष्ट्यं वाक्यार्थत्वेन प्राप्तमिति भावः । पूर्वोक्तेति ।। तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं वा विशिष्टद्वयैक्यं वेति पूर्वोक्तपक्षद्वयेत्यर्थः ।

ननु यदि प्रश्नोत्तरे विशिष्टविषयके तदा किंविशेषणविशिष्टश्चन्द्रादिरिति प्रश्नः प्रकृष्टत्वादि-विशेषणविशिष्टश्चन्द्रादिरित्युत्तरं च स्यात् । न तूक्तरीत्येत्यत आह- तदयमिति ।। सतिसप्तमीत्व-मुपपादयति- प्रश्न इति ।। प्रकृष्टप्रकाशत्वविशिष्ट एव वाक्यार्थ इतीममंशं व्याख्याति- तत्रेति ।। प्रकृष्टादिवाक्य-सोऽयमित्यादिवाक्ययोर्मध्य इत्यर्थः । ननु प्रकाशवैशिष्ट्यस्य वाक्यार्थत्वे नक्षत्रादि-व्यावृत्तिबोधः कथं स्यादित्यत आह- नक्षत्रेति ।। तद्देशकालादिविशिष्ट एव वाक्यार्थ इत्यंशं व्याख्याति- सोऽयमित्यादिना ।। एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेनाबोध्यत्वादिति प्रागुक्तदोषं परिहरति- एतद्देशकालवैशिष्ट्यस्येति ।। विशेषणादिति ।। तद्विशिष्टे च तस्यासिद्धत्वादिति भावः । एवं दृष्टान्तयोर्विशिष्टविषयत्वमुपपाद्याऽदिशब्दमहिम्ना दार्ष्टान्तिकद्वयेऽपि तदुपपादयति- एवमेवेत्यादिना ।।

## द्वैतद्युमणि

तद्देशेत्यादि ।। पूर्वोक्तरीत्या ध्वंसप्रागभावावनुसन्धेयौ । अर्थलभ्यमिति ।। अनुषङ्गप्राप्तम् । न मुख्यतात्पर्यविषयीभूतमित्यर्थः । यथाश्रुतं त्वसङ्गतम् । ऐक्यस्य साक्षाच्छब्दवेद्यत्वस्यैव सत्त्वात् । विशिष्टद्वयैकयमिति ।। वस्तुतस्त्वित्यादिना पूर्वप्रदर्शितपक्षे विशिष्टपदमाश्रयमात्रपरम् । तद्देशकाल-सम्बन्धैतद्देशकालसम्बन्धाश्रयैक्यमित्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

तेनेति उपपद्यत इति शेषकथनेनेत्यर्थः । अन्यथा 'यस्य च भावेन भावलक्षणम्'१ इति सूत्रे वृत्त्यादौ 'यस्य च क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः' इत्याद्युक्तत्वेन प्रकृते लक्ष्यभूतक्रियाया अदर्शनात् सप्तम्यनुपपत्तिरिति भावः । प्रकृष्टप्रकाशपदस्य बहुव्रीहितया १धर्मिवाचित्वे तद्वैशिष्ट्यायोगादाह- भावप्रधान इति ।। पूर्वोक्तेति ।। तद्देशतत्काल-विशिष्ट इत्युक्त्या वर्तमानदेशकालविशिष्टे तद्देशतत्कालवैशिष्ट्यं बोध्यते इति पक्षस्य प्राप्तत्वात् तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यमिति पक्षस्य विशिष्टद्वयैक्यमिति पक्षस्य च संग्रहायाऽदि-पदमित्यर्थः ।

अथ पदार्थं विवृण्वन् मूलवाक्यं व्याचष्टे - तदयमर्थ इति ।। तस्यायं तदयमिति । अत इति ।। स्वरूपमात्रे प्रश्नस्यायोगादित्यर्थः । वाचोभङ्ग्येति ।। प्रश्नवाक्यरीत्येत्यर्थः । भिन्नपदमेतत् । सोऽयमिति वाक्यमपि विशिष्टविषयमिति । नन्वेतद्देशकालवैशिष्ट्यं न प्रतिपादनीयम् । प्रत्यक्ष-सिद्धत्वात् इत्याशङ्क्य तद्देशकालविशिष्टे न सिद्धमित्याह- एतद्देशकालेति ।। कदाचिदिति ।। श्रोतृबुभुत्साऽनुरोधेनेति भावः । विशेषणविवित्सयेति ।। विविदिषयेत्यर्थः । आगमशासन-स्यानित्यत्वादिडभावेन निर्देशः । एवं प्रकृष्टप्रकाशाऽदिवाक्यदृष्टान्तेनोक्तमखण्डार्थत्वं लक्षण-वाक्यस्य निरस्येदानीं

सोऽयमित्यादिवाक्यदृष्टान्तेनोक्तमखण्डार्थत्वं तत्त्वमस्यादिवाक्यस्य निराह- जीवात्मा चेत्यादिना ।। प्रत्यक्षेणेति ।। अहमिति मानसप्रत्यक्षेण वा साक्षिणा वा जडात्मत्वज्ञानाद्यात्मत्वाद्यौदासीन्येनावगतः 'कोऽहम्' इति पृष्टः प्रश्नकर्ता श्वेतकेतुः प्रति-पाद्यते । कथम् ? 'तत्त्वमसि' तद्वत्= ब्रह्मवत् त्वमसि= ज्ञानानन्दरूपोऽसि इत्येवमित्यर्थः । तदाह सूत्रे 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'२ इतीति भावः । प्रमाणेति ।। 'द्वा सुपर्णा' इत्यादिप्रमाणेति वा वक्ष्यमाणभेदप्रमाणेति वाऽर्थः । किंविषयौ प्रश्नपरिहारौ । वाचोभङ्ग्या वाग्विन्यासविशेषेण । विशेषणादिति ।। तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यस्यासिद्धत्वेन बोध्यत्वं युक्तमित्यर्थः । ननु पक्षद्वयेऽप्यैक्यस्य शब्दबोध्यत्वाभावात्कथं तथा ३बोधनेन भेदभ्रमनिवृत्तिरित्यत आह- ऐक्यं चेति ।। सत्य-ज्ञानादिवाक्ये सखण्डार्थतामुपपाद्य तत्त्वमसीत्यादिवाक्येऽपि तामुपपादयति- जीवात्मा चेति ।। प्रत्यक्षेण अहमिति साक्षिप्रत्यक्षेण । सामान्यतः विशेषणाविशिष्टतया । षृष्ट इति । कोऽहमिति श्वेतकेतुना पृष्ट उद्दालक इत्यर्थः । प्रतिपाद्यते गौण्या वृत्त्येति भावः । तथा च तत्त्वमसीत्यस्य तत्सदृशोऽसीत्यर्थो द्रष्टव्यः । ननु गौण्या वृत्त्या परमात्मसादृश्यविशिष्टतया प्रतिपादनं कस्मादङ्गी-क्रियते । भिन्नप्रवृत्तिनिमित्ततयाऽस्तु तत्त्वंपदयोरेकस्मिन्नर्थे १वृत्तिरूपसामानाधिकरण्यस्य२ असीत्यनेन बोधितत्वान्मुख्यवृत्त्याऽभेद एवात्र प्रतिपाद्यः किं न स्यादित्यत आह- अभेदस्येति ।।

## गुरुराजीया

वाक्यार्थं प्रत्याधारत्वविषयत्वयोरभावात् सप्तम्यनुपपत्तिमाशङ्क्य तदुपपत्त्यर्थमाह- उप-पद्यत इतीति ।। ततश्च वक्ष्यमाणप्रकारेण प्रश्ने सतीति सतिसप्तमीत्वलाभेन तदुपपत्तिरित्याशयः ।

ननु प्रकृष्टप्रकाशपदेन प्रकृष्टः प्रकाशो यस्येति बहुव्रीहिणा चन्द्रस्यैव प्रतिपादनात् तद्विशिष्टस्य परिहारवाक्यार्थत्वप्राप्तावपि विशेषणविशिष्टस्य चन्द्रस्य तदप्राप्तेर्न तस्य प्रकृष्टादिवाक्यार्थत्वमित्यत आह- भावप्रधान इति ।। लक्षणया भावप्रधान इत्यर्थः । तथा चोक्तरीत्या चन्द्रस्य प्रकृष्ट-प्रकाशरूपत्वेऽपि प्रकृष्टप्रकाशत्वरूपत्वाभावेन तद्विशिष्टचन्द्रस्य युक्तं वाक्यार्थत्वमिति भावः । पूर्वोक्तेति ।। तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं विशिष्टद्वयैक्यञ्चेत्यवशिष्टपक्षद्वयेत्यर्थः ।

ननु प्रश्नस्य विशिष्टविषयकत्वे 'कैर्विशेषणैर्विशिष्टः' इत्येव प्रश्नाकारेण भवितव्यम् । 'कः' इत्याकारत्वं तु कथमित्यत आह- अनयेति ।। वाचोभङ्ग्येति षष्ठ्या अलुक् । प्रकृष्टप्रकाशत्वविशिष्ट एव वाक्यार्थ इत्यंशं योजयति- तत्रेति ।। वाक्यद्वयमध्य इत्यर्थः ।

ननु प्रकाशत्ववैशिष्ट्यस्य शब्दबोध्यत्वे नक्षत्रादिव्यावृत्तेः शब्दाल्लाभो न स्यादित्यतोऽर्थ-लभ्यत्वान्नक्षत्रादिव्यावृत्तेरशाब्दत्वमिष्टमेवेत्याह- नक्षत्रेति ।। तद्देशकालादिविशिष्ट एव वाक्यार्थ इत्यंशं योजयति- सोऽयमित्यादिना ।। विशेषणादिति ।। तद्विशिष्टे च तस्यासिद्धत्वाद्युक्तं शब्दबोध्यत्वमिति भावः । एवं दृष्टान्तवाक्ये प्रश्नपरिहारयोः विशिष्टविषयकत्वोपपादनेन सूचितं दार्ष्टान्तिकेऽपि तयोर्विशिष्टविषयकत्वं स्वयमुपदर्शयति- एवमेवेति ।।

## गोविन्दीया

तेनेति ।। वाक्यशेषेणेत्यर्थः । आदीति ।। आदिपदं पूर्वोक्तस्यैतद्देशकालविशिष्टः विशिष्टद्वयं चेति पक्षद्वयस्य सङ्ग्रहार्थमित्यर्थः। वाचोभङ्ग्येति ।। वाचो व्यक्तेरित्यर्थः । एतद्देशेति ।। एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेऽपि तद्देशकालविशिष्टस्येति विशेषणादसिद्धत्वं विशेषण-स्यासिद्धत्वे तस्याप्यसिद्धत्वेन शब्दबोध्यत्वं युक्तमित्यर्थः ।

## जनार्दनभट्टीया

सप्तम्युपपत्तिरिति ।। 'उपपद्यते' इति विशेषाकरणे प्रश्ने वाक्यार्थ इति सप्तमीबोधिताधारत्वं नोपपद्यते प्रश्नस्य इति भावः ।१ मूले अतःशब्दार्थम् आदिशब्दलब्धार्थं च प्रतिजानीते– तदय-मिति ।। 'सम्पन्नः' इति शेषः ।

## तत्त्वमसीत्यादिवाक्ये..

**तत्त्वमसीत्यादिवाक्ये गौणप्रयोगप्रयोजनसमर्थनम्**

## श्रीमज्जयतीर्थटीका

ननु वक्त्रायत्ते शब्दप्रयोगे कस्माद्गौणप्रयोगः । अस्त्यत्र प्रयोजनम् । इह हि महत्त्वादि-गुणवन्तं स्वातन्त्र्येणाऽत्मानं मत्वा स्तब्धं श्वेतकेतुं निमित्तीकृत्य स्वातन्त्र्याभिमानिनो जीवजात-स्याहङ्कारशान्तये तत्त्वमसीत्युच्यते । तत्र यदि विज्ञान(नानन्द)घनस्त्वमसीति ब्रूयान्नास्याहङ्कार-शान्तिः स्यात् । अभेदोक्तौ तु प्रतिपत्तुर्मीमांसा जायते । न तावदत्र मुख्यार्थः सम्भवति । प्रमाणविरोधात् । अतः स इव त्वमसीत्यस्यार्थः । न चायमपि सम्भवति । अप्रसिद्धप्रतिपत्तये खलु प्रसिद्धमुपमानमुपादीयते । 'यथा गौस्तथा गवयः' इत्यादौ दृष्टत्वात् । न चैवं प्रकृते । उभयोरप्यप्रसिद्धत्वात् । अतो नास्योपमानमात्रे तात्पर्यमिति पश्यन् सूर्यसूर्यकयोरिवेश्वरस्य मम चास्ति सादृश्यविशेष इति प्रतिपद्यते । स च नियम्यनियामकभावोपेत इति पश्यन्नहङ्कारं जहाति । प्रतिबिम्बे चाऽत्मनि बिम्बसमानधर्माननिषिद्धान् सम्भावयतीत्यतो लाघवेन बहोरर्थस्य प्रतिपत्तये तत्त्वमसीत्युच्यते । पारतन्त्र्यमात्रोक्तौ च राजपुरुषादिवदेव प्रतिपत्तिः स्यादिति ।

## श्रीविजयीन्द्रभिक्षु

वक्त्रायत्त इति ।। यद्यप्यपौरुषेये वेदे नायमनुयोगः सम्भवति तथाऽपि न्याय-नियन्त्रितत्वाभिप्रायेणाभिमानिविवक्षया वा तथोक्तमिति ध्येयम् । प्रयोजनवशाद्गौणप्रयोग इत्याह- अस्त्यत्रेति ।। गौणः प्रयोगः किमर्थ इति वदन् प्रष्टव्यः । किं विज्ञानानन्दघनस्त्वमसीति प्रतिवचनं कर्तव्यमिति, किं वा परमात्मपरतन्त्रस्त्वमिति । आद्य आह- तत्रेति ।। नास्येति ।। अपकर्षानुप-न्यासादिति भावः । अभेदोक्ताविति ।। तत्त्वमसीत्यभेदोक्तावित्यर्थः । मीमांसा जायत इति ।। निर्दोषवाक्यत्वेन प्रामाण्यनिश्चयादिति भावः । मीमांसाप्रकारमेव दर्शयति- न तावदिति ।। उभयोरपीति ।। यद्यपि जीवात्मा

‘अहं दुःखी’ इत्यादिप्रतीत्या सिद्धस्तथाऽपि श्रुत्युक्त-विज्ञानघनत्वादिना न प्रसिद्ध इत्यर्थः । मीमांसासिद्धमर्थं दर्शयति- सूर्येति ।। सूर्यप्रतिसूर्य-योरिवेत्यर्थः । स चेति ।। प्रतिबिम्बस्य बिम्बाधीनत्वादिति भावः । अहङ्कारशान्तिमात्रं न गौणप्रयोगस्य प्रयोजनम् । किन्तु प्रतिबिम्बभूते स्वात्मनि प्रमाणाबाधितबिम्बसमानधर्म-सम्भावनाऽपीत्याह- प्रतिबिम्बे चेति ।। लाघवेनेति ।। ‘तत्त्वमसि’ इत्युक्तिमात्रेणोक्तानेकार्थ-प्रतिपत्तेरिति भावः । परमात्मपरतन्त्रस्त्वमिति प्रतिवचनं कर्तव्यमिति द्वितीयपक्षे यद्यप्यहङ्कार-शान्तिर्भवति तथाऽपि बिम्बसमानधर्मसम्भावनारूपप्रयोजनालाभात्तथाऽनुक्तिरित्याह- पारतन्त्र्य-मात्रोक्ताविति ।। राजपुरुषोऽयमित्युक्ते राजाधीनोऽयमितिवत् परमात्मपरतन्त्रस्त्वमित्युक्ते परमात्माधीनत्वमात्रं प्रतीयात् । न त्वनिषिद्धपरमात्मधर्मसमानधर्मवत्त्वमित्यर्थः ।

## श्रीवेदेशतीर्थ

अभेदोक्ताविति ।। तत्त्वमसीत्यभेदोक्तावित्यर्थः । उभयोरपीति ।। दृष्टान्तदार्ष्टान्तिक-योरित्यर्थः । यद्यपि जीवात्मा प्रसिद्धस्तथाऽपि श्रुतिप्रतिपाद्यज्ञानानन्दघनत्वादिना प्रसिद्ध इत्यर्थः । उपमान मात्र इति ।। नियम्यनियामकभावशून्यगोगवयादिसाधारणसादृश्य इत्यर्थः । सूर्य-सूर्यकयोरिवेति ।। सूर्यप्रतिसूर्ययोरिवेत्यर्थः । सादृश्यविशेष इति ।। बिम्बप्रतिबिम्बभाव इत्यर्थः । तदधीनत्वे सति तत्सदृशत्वस्यैव तत्प्रतिबिम्बत्वादिति भावः । मीमांसया प्रतिबिम्बत्वज्ञापनाय गौणप्रयोग इत्युक्तम् । तज्ज्ञापनेनापि किं प्रयोजनमित्यपेक्षायां प्रतिबिम्बत्वान्तर्गततदधीनत्व-तत्सादृश्ययोर्ज्ञापनप्रयोजनं क्रमेणाऽह- स चेत्यादिना ।। स च सादृश्यविशेषोऽपि । इति पश्यन्नित्यन्वयः । लाघवेनेति ।। तत्त्वमसीत्युक्तिमात्रेणोक्तानेकार्थप्रतीतेरिति भावः । ननु ‘तस्य त्वमसि’ इति मुख्य एव प्रयोगः कस्मान्न कृतः । अहङ्कारशान्तिरूपप्रयोजनस्यैवं सति झडिति लाभादित्यत आह- पारतन्त्र्यमात्रोक्ताविति ।। सत्यमेवमहङ्कारशान्तिर्भवतीति । तथाऽपि तत्र बिम्बसमानधर्मसम्भावनारूपप्रयोजनान्तरालाभान्न तथा प्रयोग इति भावः ।

## द्वैतद्युमणि

वक्रायत्त इति ।। अपौरुषेयस्यापि वेदस्य पुरुषाभिप्रायनिवेशेनैव प्रवृत्तत्वाद् उक्त-पर्यनुयोगसङ्गतिः ।

## श्रीराघवेन्द्रतीर्थ

अपौरुषेये वक्तुरभावेन शङ्कानुदयेऽपि लोकन्यायमनुसृत्य शङ्कते- नन्विति ।। इह हीति ।। छन्दोगोपनिषदीत्यर्थः । इत्युच्यत इत्यन्वयः । स्तब्धम् अगममित्यर्थः । इति ब्रूयादिति ।। मुख्यार्थवचनोक्तिपक्षे एवंरूपवचनेन भाव्यमिति भावः । नास्येति ।। अपकर्षानुक्तेरिति भावः । तत्त्वमसीत्यैक्योक्तावहङ्कारशान्तिप्रकारं व्यनक्ति - अभेदोक्ताविति ।। स इवेति ।। अस्य तत्त्वमसीतिवाक्यस्य स इव त्वमसीत्यर्थ इति योजना । उभयोरपीति ।। जीवात्मनोऽहमिति प्रसिद्धत्वेऽपि पराधीनत्वज्ञानानन्दात्मकत्वादिना न प्रसिद्ध इति भावः । मीमांसितार्थमाह- सूर्येति ।।

साद्दश्यविशेष इति ।। ज्ञानसुखरूप इत्यर्थः । स चेति ।। प्रतिबिम्बस्य बिम्बाधीनत्वादिति भावः । बहोरर्थस्येति ।। तत्प्रतिबिम्बत्वस्य तन्नियम्यत्वस्यानिषिद्धकिञ्चिज्ज्ञानसुखसाद्दश्य-विशेषस्येत्येवंरूपबह्वर्थस्येत्यर्थः । पारतन्त्र्येति ।। तदधीनोऽसीत्युक्तौ त्वित्यर्थः । राजेति ।। राजपुरुष इत्युक्ते राजाधीनत्वमिव पराधीनतैव प्रतीयते । न साद्दश्यविशेषादीत्यर्थः ।

## द्वैतद्युमणि

वक्त्रायत्त इति ।। अपौरुषेयस्यापि वेदस्य पुरुषाभिप्रायनिवेशेनैव प्रवृत्तत्वाद् उक्त-पर्यनुयोगसङ्गतिः ।

अप्रसिद्धत्वादिति ।। अप्रत्यक्षत्वादित्यर्थः । यद्यपि जीवात्मा प्रत्यक्षसिद्धस्तथाऽपि निरूपणीय-विज्ञानस्वभावत्वप्रयोजकधर्मादिनेदानीं न प्रत्यक्षविषय इत्यर्थः । अयं भावः । गवयपदवाच्यत्वादि-प्रतिपत्त्यर्थं तत्प्रतिपत्तिप्रयोजकग्रहविषयीभूतगोसाद्दश्यस्य लिङ्गतया प्रतिपत्त्यर्थं 'गोसद्दशो गवय-पदवाच्यः' इत्युपदिशति । तमुक्तसाद्दश्यवत्तया पश्यन् गवयपदवाच्यत्वादिना निश्चिनोति । तथा जीवस्वभावभूतविज्ञानघनत्वादिप्रतिपत्त्यर्थं परमात्मनिरूपितं जीवनिष्ठसाद्दश्यमुपदेष्टुमयुक्तम् । प्रमेयत्वादिना तत्साद्दश्यस्याव्यावर्तकत्वात् । आकारविशेषेण साद्दश्यस्य तु न प्रतिपत्तिसम्भवः । परमात्मनः सर्वथा प्रत्यक्षत्वाभावात्, जीवस्य त्वाकारविशेषादिना प्रत्यक्षत्वाभावात् । लिङ्गविधया साद्दश्यबोधनमात्रे न तात्पर्यम् । किन्तु प्रतिबिम्बताघटकसाद्दश्यविशेषे तात्पर्यमवगच्छतीति । वक्त्रायत्ते इति वक्त्रधीन इत्यर्थः । अधीनो निघ्न आयत्त इत्यमरः । कस्मादिति ।। तत्सद्दशोऽसीति स्पष्टमेव कस्मान्नोक्तमित्यर्थः । स्तब्धम् आर्येष्वनतम् । उभयोरपीति ।। अहमिति जीवस्य प्रसिद्धत्वेऽपि व्यासज्यवृत्तिप्रतियोगिकाभावाभिप्रायेणेदम् । एकसत्त्वे द्वयमिह नास्तीति-वत् । सामान्यतः प्रसिद्धत्वेऽपि विशेषतो अप्रसिद्धत्वादिति वा व्याख्येयम् । उपमानं द्दष्टान्तः । उपमानमात्र इति ।। नियम्यनियामकभावरहितगोगवयादिसाधारणसाद्दश्यमात्र इत्यर्थः । तदधीनत्वरहितसाद्दश्यमात्र इति यावत् । सूर्यसूर्यकयोरिव सूर्यतत्प्रतिबिम्बयोरिव साद्दश्यविशेष इति ।। नोक्तरीत्या साद्दश्यमात्रम् । किन्तु बिम्बप्रतिबिम्बभावरूपस्साद्दश्यविशेष इत्यर्थः । स चेति ।। साद्दश्यविशेष इत्यर्थः । नियम्येति ।। तदधीनत्वसहित इत्यर्थः । पश्यन्निति ।। तदधीनत्वे सति तत्सद्दशत्वरूपप्रतिबिम्बत्वं पश्यन्नित्यर्थः । बिम्बभूतेश्वरनिष्ठाऽपरिच्छिन्नत्वादिधर्मसम्भा-वनाया अयोगादनिषिद्धानित्युक्तम् । अविरुद्धानित्यर्थः । तर्हि तदधीनत्वे सति तत्सद्दशोऽसीत्येवं कस्मान्नोक्तमित्यत उक्तम् ।। लाघवेनेति ।। १शब्दलाघवेनेत्यर्थः । बहोरिति ।। बह्वित्यनेक-त्वोपलक्षणम् । तदधीनत्वे सति तत्सद्दशत्वरूपानेकार्थस्येत्यर्थः । ननु तथाऽपि तत्त्वमसीति गौणप्रयोगमकृत्वा तस्य त्वमसीति मुख्यप्रयोग एव कस्मान्न कृतः । त्वं तस्याधीनोऽसीति हि तदर्थः । एवमुक्ते अहङ्कारशान्तिरूपप्रयोजनस्य झडिति लाभादित्यत आह- पारतन्त्र्यमात्रोक्ता-विति ।। सत्यमेवमप्यहङ्कारशान्तिर्भवतीति तथाऽपि, यथा राज्ञः पुरुष इत्युक्ते पुरुषस्य भृत्यस्य राजाधीनत्वमेव लभ्यते न तु तत्साद्दश्यरूपं प्रतिबिम्बत्वं तद्वत् तदधीनत्वरूपपारतन्त्र्यप्रतीतिरेव स्यान्न तु तत्साद्दश्यरूपं प्रतिबिम्बत्वं तद्वत् तदधीनत्वरूपपारतन्त्र्यप्रतीतिरेव स्यान्न तु तत्साद्दश्यरूपप्रतिबिम्बत्वप्रतीतिरतस्तल्लाभाय तत्त्वमसीति गौणप्रयोगः कृत इति भावः ।

## गुरुराजीया

स्वायत्तन्यायविरोधमाशङ्कते- नन्विति ।। शान्तिः स्यादिति ।। २एवमुक्तेऽनुपपत्त्य-प्रतिभासेन वक्ष्यमाणप्रकारेण बहोरर्थस्य सूचनाऽलाभादिति भावः । अभेदोक्तावपि कथमहङ्कार-शान्तिरित्यतस्तं प्रकारं दर्शयति- अभेदोक्ताविति ।। अनुपपत्तिप्रतिभासादिति शेषः । प्रतिपत्तुर्मीमांसा जायत इत्युक्तम् । मीमांसाप्रकारमेव दर्शयति- न तावदिति ।। प्रमाणविरोधा-दिति ।। तद्बाधितस्यापि वाक्यमुख्यार्थत्वे यजमानप्रस्तराद्यैक्यस्यापि तथात्वापत्त्या 'यजमानः प्रस्तरः' इत्यादेरपि गौणत्वाभावप्रसङ्गादिति भावः । उभयोः जीवब्रह्मणोः । न च जीवस्य 'अहम्' इति प्रत्यक्षसिद्धत्वान्नाप्रसिद्धत्वमिति उभयोरप्यप्रसिद्धत्वोक्त्यनुपपत्तिरिति वाच्यम् । स्वरूपेण प्रसिद्धत्वेऽपि ज्ञानानन्दघनत्वेनाप्रसिद्धतया तथोक्त्युपपत्तेः । उपमामात्र इति ।। नियम्यनियामक-भावशून्यगोगवयादिसाधारणसादृश्य इत्यर्थः । सूर्यसूर्यकयोरिवेति ।। सूर्यस्य प्रतिकृतिः सूर्यकः । 'इवे प्रतिकृतौ'३ इति कप्रत्ययः । सूर्यतत्प्रतिबिम्बयोरित्यर्थः । नियम्यनियामकभावेति ।। यदत्र वक्तव्यं तत्प्रागेवोक्तं तत एव प्रतिपत्तव्यम् । तदधीनत्वे सति तत्सदृशत्वस्यैव तत्प्रतिबिम्बत्वादिति भावः । लक्ष्मीपतित्वाद्यसाधारणधर्माणामपि सम्भावनीयत्वशङ्कानिरासायाऽह- अनिषिद्धा-निति ।। लाघवेनेति ।। तत्त्वमसीति शब्दलाघवेनेत्यर्थः । ननु तस्य त्वमसीति निर्देशेन पारतन्त्र्य-लाभादहङ्कारशान्तिः सम्भवतीति तथैव किं नोक्तमित्यत आह- पारतन्त्र्यमात्रोक्ताविति ।। तथा निर्देशानिषिद्धबिम्बसमानधर्मसम्भावनारूपप्रयोजनान्तरालाभात् तल्लाभाय गौणनिर्देश इति भावः ।

## गोविन्दीया

नन्विति ।। शब्दप्रमायोगे वक्रभिप्रेतार्थाधीने सति कस्मात् सादृश्यगुणानादाय तत्वमसीत्यमुख्यप्रयोग इत्यर्थः । स्तब्धमिति ।। मूढमित्यर्थः । सूर्यसूर्यकयोरिति सूर्यसूर्यप्रतिबिम्ब-योरित्यर्थः । लाघवेनेति ।। शब्दलाघवेनेत्यर्थः । पारतन्त्र्येति ।। तदधीनस्त्वमसीति पारतन्त्र्य-मात्रोक्तौ च राजपुरुषादिवदेव प्रतिपत्तिः स्यात् । न तु सादृश्यविशिष्टार्थलाभ इत्यर्थः ।

## नारोपन्तीया

सूर्यसूर्यकयोरिवेति । सूर्यस्य प्रतिकृतिः सूर्यकः । 'इवे प्रतिकृतौ' इति कप्रत्ययः ।

## जनार्दनभट्टीया

ननु 'तत्त्वमसि' इति अभेदोक्तौ श्वेतकेतोः सुतराम् अहङ्कारशान्तिः न स्यादित्यत आह– अभेदोक्ताविति ।। प्रतिपत्तुः श्वेतकेतोः विवेकित्वादिति भावः । उभयोरिति ।। श्वेतकेतुपरमात्मनोरुभयोः विशिष्य अज्ञातत्वादिति भावः । ननु गोगवययोरिव श्वेतकेतुपरमात्मनोः सादृश्यज्ञानमात्रेण कथं श्वेतकेतौ अहङ्कारशान्तिः स्यादित्यत आह – स चेति ।। सादृश्यविशेष इत्यर्थः ।

## अङ्गीक्रियमाणत्वाद्विशिष्टादे..

**सत्यज्ञानादिवाक्यानां हेत्वन्तरेण विशिष्टार्थतासमर्थनम्**

### श्रीमज्जयतीर्थटीका

एवं सत्यज्ञानादिवाक्यानामखण्डार्थतां निराकृत्य विशिष्टार्थता समर्थिता । हेत्वन्तरेण तामुपपादयति-

## मूल

***अङ्गीक्रियमाणत्वाद्विशिष्टादेरनिर्वचनीयाभावाच्च सत्यत्वञ्च सिद्धम् ।***

आदिपदेन विशेषणभेदादेर्विशिष्टापेक्षितस्य ग्रहणम् । सत्यज्ञानादिवाक्यानि लक्षणया ब्रह्म-स्वरूपमात्रपराणीति वदताऽवश्यं वाच्यार्थोऽङ्गीकार्यः । वाच्यार्थद्वारेण लक्षणाया दृष्टत्वात् । न च गङ्गायां घोष इतिवदन्यदेव वाच्यम् । अन्यत्रानन्तत्वादीनामसम्भवात् । अतो ब्रह्मण्येव सत्यत्वादिविशेषणानि तदुपयुक्तं (विशेषण) भेदादिकं विशिष्टाकारश्चाङ्गीकर्तव्यः । तथा च मुख्यार्थस्य ब्रह्मण्यङ्गीक्रियमाणत्वाद् अनुपपत्त्यभावेन किं स्वरूपमात्रलक्षणाश्रयणेन ।

### श्रीविजयीन्द्रभिक्षु

उत्तरवाक्ये अखण्डार्थतानिरासस्याप्रतीतेरनिर्वचनीयतानिरासेन विशिष्टस्य सत्त्व-प्रतिपादनस्य प्रकृतानुपयुक्तत्वादयुक्तत्वमाशङ्क्योक्तार्थमुपसंहरन्नवतारयति- एवमिति ।। विशेषणभेदादेरादिपदग्राह्यत्वे नियामकमाह- विशिष्टापेक्षितस्येति ।। 'अङ्गीक्रियमाणत्वात्' इति मूलोक्तहेतुमुपपादयति- वाच्यार्थद्वारेणेति ।। वाच्यार्थप्रतीतिव्यवधानेनेत्यर्थः । गङ्गायामिति ।। यथा 'गङ्गायां घोषः' इति वाक्ये गङ्गापदस्य लक्ष्यत्वाभिमततीरादन्यदेव प्रवाहरूपं वाच्यमस्ति तथा सत्यज्ञानादिवाक्येऽपि सत्यज्ञानादिपदस्य लक्षणीयचिन्मात्रादन्यदेव वाच्यमिति न सत्य-ज्ञानादिपदमुख्यार्थसम्भवाय ब्रह्मणो विशिष्टाकारप्रसक्तिरित्यर्थः । अन्यत्रेति ।। ब्रह्मणोऽ-न्यत्रेत्यर्थः । सत्यत्वादीनामिति वक्तव्ये अनन्तत्वादीनामिति क्रमोल्लङ्घनं तु अन्यत्र सत्यत्वादेः कथञ्चित्सम्भवेऽपि परिच्छेदत्रयशून्यत्वरूपानन्तत्वस्य ब्रह्मणोऽन्यत्र सर्वथाऽसम्भव इति ज्ञापनाय । भेदादिकमित्यादिपदेन विशेषणसम्बन्धादिपरिग्रहः । उपपादकमुक्त्वोपपाद्यमाह- तथा चेति ।। मुख्यार्थस्येति ।। मुख्यार्थत्वस्येत्यर्थः । अनुपपत्त्यभावेनेति ।। अनुपपत्त्यभावेन चेत्यर्थः ।

### श्रीवेदेशतीर्थ

विशेषणभेदादेरादिपदग्राह्यत्वे नियामकमाह- विशिष्टापेक्षितस्येति ।। अङ्गीक्रियमाण-त्वादिति मूलोक्तहेतुमुपपादयति- सत्येति ।। वाच्यार्थद्वारेण वाच्यार्थप्रतीतिव्यवधानेन । सत्यत्वादेरन्यत्र कथञ्चित्सम्भवात्क्रममुल्लङ्घ्याऽह- अनन्तत्वादीनामिति ।। मुख्यार्थस्येति ।। मुख्यार्थत्वस्येत्यर्थः । अनुपपत्त्यभावेनेति ।। अनुपपत्त्यभावेन चेत्यर्थः । किं स्वरूपमात्रेत्यादिसाध्यं मूलेऽध्याहृतमिति ज्ञेयम् ।

## द्वैतद्युमणि

अनन्तत्वादीनामिति ।। सत्यत्वादेर्घटादौ कथञ्चिद् वक्तुं शक्यत्वात् त्रिविधपरिच्छेद-राहित्यरूपानन्तत्वस्यैव ग्रहणं कृतम् ।

## श्रीराघवेन्द्रतीर्थ

एवमिति ।। 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिष्वित्यादिनोक्तप्रकारेणेत्यर्थः । विशेषण-भेदादेर्ग्रहणे हेतुर्विशिष्टापेक्षितस्येति । तथा चेत्यादिना मूलं व्याचिख्यासुरुपोद्घातमाह- सत्य-ज्ञानादीत्यादिना ।। वाच्यार्थद्वारेणेति ।। वाच्यार्थधीद्वारेणेत्यर्थः । अन्यदेवेति ।। लक्ष्यार्था-दन्यदेवेत्यर्थः । विशेषणभेदादिकमिति ।। विशेषणविशेष्ययोः भेदस्तथा विशेषणतत्सम्बन्ध-श्चेत्यर्थः । मूलार्थमाह- तथा चेत्यादिना ।। द्वारेण तद्बोधद्वारेण । घोषः पल्ली, ग्राम इत्यर्थः । अन्यदेवेति ।। यथा गङ्गायां घोष इत्यत्र लक्ष्यार्थभूततीरव्यतिरिक्तप्रवाहो वाच्यार्थोऽस्ति, एवं ब्रह्मरूपलक्ष्यार्थव्यतिरिक्तम् अन्यदेव सत्यादिपदवाच्यं न हीत्यर्थः । कुतो न हीत्यत आह- अन्यत्रेति ।। लक्ष्यार्थभूते ब्रह्मव्यतिरिक्ते अन्यस्मिन् वस्तुनीत्यर्थः । सत्यत्वादेः कथञ्चिदन्यत्र सम्भवादनन्तत्वादीनामित्युक्तम् । ब्रह्मण्ये-वेति ।। लक्ष्यार्थभूते ब्रह्मण्येवेत्यर्थः । तदुपयुक्तं भेदादिकम् इति विशिष्टापेक्षितं विशेषणभेदादिकमित्यर्थः । विशिष्टाकारः सत्यत्वादिविशेषणविशिष्टाकारः ।

## गुरुराजीया

विशिष्टादेरित्यादिपदसङ्ग्राह्यमाह- आदिपदेनेति ।। अवच्छेदकानुक्तौ १विशिष्टादे-रित्यादिना सर्वग्रहणापत्त्या अतिप्रसङ्गात् सङ्कुचितवृत्तित्वेऽवश्यमङ्गीकर्तव्ये तत्सङ्ग्राह्यतावच्छेदक-धर्मानुक्तौ तदनिर्वाहात् सङ्कुचितवृत्तित्वनिर्वाहार्थं विशिष्टापेक्षितत्वमेव आदिपदसङ्ग्राह्यतावच्छेदको धर्म इति भावेन तमाह- विशिष्टापेक्षितस्येति ।। अङ्गीक्रियमाणत्वाद् इति मूलोक्तं हेतुमुपपादयति- सत्येति ।। वाच्यार्थद्वारेण तत्प्रतीतिद्वारेण । अनन्तत्वादीनामिति ।। सत्यत्वज्ञानत्वा-नन्तत्वादीनामित्यर्थः । मुख्यार्थस्येति ।। सत्यादिपदवाच्यस्येत्यर्थः२ । अनुपपत्त्यभावेनेति ।। अनुपपत्त्यभावेन चेत्यर्थः । फलकथनम्- किमित्यादि ।।

## गोविन्दीया

विशेषणभेदादेरिति ।। विशेषणम्, विशेषणविशेष्ययोर्भेदः, आदिपदेन सङ्गृहीतः विशेषणानां परस्परं भेदश्चेति त्रयस्येत्यर्थः । अन्यदेवेति ।। ब्रह्मस्वरूपादन्यदेवेत्यर्थः । अन्यत्रेति ।। ब्रह्मस्वरूपादन्यत्रेत्यर्थः ।

## जनार्दनभट्टीया

उत्तरवाक्ये सत्यत्वं च सिद्धमिति विशिष्टादेः सत्यत्वमसङ्गतम् । तस्याप्रस्तुतत्वाद् इत्यतः तदवतारयति – एवमित्यादिना ।। पूर्ववाक्यस्यातःशब्दार्थमनुवदति– निराकृत्येत्यन्तेन ।। उत्तरदलार्थम् अनुवदति –

विशिष्टार्थता चेति३ ।। मूले 'अङ्गीक्रियमाणत्वात्' इति हेतोः सत्यत्वं च सिद्धमित्यंशस्य च सत्यादिपदानां विशिष्टार्थतायां साक्षाद्धेतुत्वाभावेन स्वरूपमात्रलक्षणाप्रयोजकानुपपत्तिविघटकत्वेन परम्परया हेतुत्वमुपपादयति– सत्यज्ञानेत्यादिना सत्यज्ञानादिवाक्यार्थ इत्यन्तेन ।। परमार्थब्रह्मतया विशिष्टाकारोपदेशे आरोपितविशिष्टाकारस्याब्रह्मत्वेन तदुपदेष्टुः विप्रलम्भकत्वं स्यादिति भावः ।

## अङ्गीक्रियमाणत्वाद्विशिष्टादे..

**विशिष्टस्य सत्यत्वसमर्थनम्**

***अङ्गीक्रियमाणत्वाद्विशिष्टादे***

### श्रीमज्जयतीर्थटीका

अथोच्येत 'अङ्गीक्रियमाणोऽपि ब्रह्मणि विशिष्टादिर्न सत्य इति न परमार्थब्रह्मतया प्रतिपादयितुं युक्त इत्येवानुपपत्तिः' इति । मैवम् । अङ्गीक्रियमाणोऽपि विशिष्टाकारो न तावदसन्नेव । तथा सत्युपलक्षणत्वानुपपत्तेः । न च ४नीलं नभ इतिवदुपपत्तिः । तत्रापि प्रतिपत्तेरुपलक्षणत्वात् । न चानिर्वचनीयः । तत्र प्रमाणाभावात् । विशिष्टाकारादिरनिर्वाच्यो विशिष्टाकारादित्वात् नीलं नभ इतिवदिति चेन्न । तत्र अनिर्वचनीयाभावेनाप्रसिद्धविशेषण-त्वात् । तदेवमसत्त्वानिर्वचनीयत्वाभावेन विशिष्टादेः सत्यत्वञ्च सिद्धमित्यनुपपत्त्यभावाद् विशिष्ट एव सत्यज्ञानादिवाक्यार्थः ।

### श्रीविजयीन्द्रभिक्षु

ननु सत्यज्ञानादिवाक्यानां परमार्थब्रह्मस्वरूपप्रतिपादनपरत्वे च तदयोगात् तात्पर्यानुप-पत्त्यैव स्वरूपमात्रे लक्षणाऽऽवश्यिकीति शङ्कते- अथोच्येतेति ।। विशिष्टादिर्न सत्य इति वदन् प्रष्टव्यः । किमसत्यः किं वाऽनिर्वचनीय इति विकल्प्य क्रमेण दूषयति- मैवमिति ।। सत्त्वाद्युप-लक्षितब्रह्मस्वरूपस्यैव त्वया ज्ञेयत्वाङ्गीकारादत्यन्तासतश्चोपलक्षणत्वस्य क्वाप्यदर्शनादिति भावः । यद्यपि व्यावृत्तिधीकाले असतोऽपि काकादेरुपलक्षणत्वमस्ति, यदा कदाचित्सत्त्वञ्चानुपयुक्तं तथाऽपि तत्कृतस्योत्तृणत्वादेः सत्त्वाद्युक्तं काकादेरुपलक्षणत्वम् । सर्वत्र व्यावृत्तिधीकाले उप-लक्षणत्वाभिमतस्य तत्कृतस्य वा सत्त्वमुपलक्षणत्वे तन्त्रम् । न चासति तत्सम्भवतीति भावः । नीलं नभ इतिवदिति ।। नभोनैल्यवदित्यर्थः । विशिष्टाकारस्यापि सत्त्वात् सत्यज्ञानादिवाक्यानां तत्प्रतिपादकत्वेऽपि परमार्थसद्ब्रह्मप्रतिपादनपरत्वस्योपपन्नत्वेनानुपपत्त्यभावान्न लक्षणया स्वरूपमात्रार्थकत्वम् । किन्तु विशिष्टार्थकत्वमेवेत्युपसंहरति- तदेवमिति ।।

### श्रीवेदेशतीर्थ

अङ्गीक्रियमाण इति ।। सत्यादिपदमुख्यार्थतयाऽङ्गीक्रियमाणोऽपि विशिष्टाकारोऽ-परमार्थसन्निति न तात्पर्यविषयीभूतपरमार्थसद्ब्रह्मस्वरूपान्तर्गतः । किं नाम तटस्थः सन्नुप-लक्षकः ।

अन्यथा व्यावृत्तिबोधासम्भवात् । एवञ्च तटस्थतया व्यावर्तके स्वरूपानन्तर्गते उपलक्षणे तात्पर्यायोगात् तात्पर्यानुपपत्तिरेव स्वरूपमात्रलक्षणोपपादिका भविष्यतीति शङ्कितुर्हृदयम् । अत एवाऽह- उपलक्षणत्वानुपपत्तेरिति ।। न ह्यत्यन्तासत उपलक्षणतया व्यावर्तकत्वं क्वचिद् दृष्टमिति भावः । असतोऽपि नभोनैल्यस्योपलक्षणत्वं दृष्टमित्याशङ्क्य निराकरोति- न चेति ।। प्रतिपत्ते-रिति ।। तस्याश्च सत्त्वात्प्रकृते च त्वया तस्या अपि मिथ्यात्वाङ्गीकारादिति भावः । यद्यपि व्यावृत्ति-धीकालेऽसतोऽपि काकादेरुपलक्षकत्वमस्ति कदाचित्सत्त्वञ्चानुपयुक्तम् । तथाऽपि तत्कृतस्यो-तृणत्वादेः सत्त्वाद्युक्तं काकस्योपलक्षणत्वम् । सर्वत्र व्यावृत्तिधीकाले उपलक्षणत्वाभिमतस्य तत्कृतस्य वा सत्त्वमुपलक्षणत्वे तन्त्रम् । न चासति तत्सम्भवतीति द्रष्टव्यम् । यद्यपि प्रतिपत्ति-रात्मधर्मस्तथाऽपि विषयविषयिभावसम्बन्धेन नभोधर्मोऽपि भवतीत्युपलक्षणत्वं तस्या इति ध्येयम् । उपसंहारव्याजेनावशिष्टं मूलं योजयन्नेव तत्फलितमाह- तदेवमित्यादिना ।। अनुपपत्त्यभावादिति ।। विशिष्टादेरपरमार्थत्वे खलु तस्योपलक्षणत्वेन तत्र तात्पर्याभावः । यदा तु सत्यत्वं सिद्धं तदा तात्पर्यविषयीभूतब्रह्मस्वरूपान्तर्गतविशेषणत्वसम्भवेन विशिष्टाकारेऽपि तात्पर्यसम्भवादनुपपत्त्य-भावादिति भावः ।

## श्रीराघवेन्द्रतीर्थ

उपलक्षणत्वानुपपत्तिरिति ।। सत्यादिपदबोधितसत्यत्वादिविशिष्टाकारोऽसत्यश्चित उपलक्षणमुपेयते । न चात्यन्तासतस्तत्सम्भवतीत्यर्थः । यन्नीलमिति ।। यत् नीलतया प्रतीतं तन्नभ इतिवत् सत्यादिवाक्येन यद्विशिष्टाकारतया प्रतीतं तद्ब्रह्मेत्युपपत्तिः । नैल्यस्य तत्रासत एवोप-लक्षणत्वदृष्टेरित्यर्थः । प्रतिपत्तेरिति ।। नैल्यप्रतीतेरित्यर्थः । अनिर्वचनीय इति ।। विशिष्टाकार इत्यनुषङ्गः। तस्य चासद्विलक्षणत्वादुपलक्षणता युक्तेति भावः । मूलशेषार्थमाह- तदेवमिति ।। अनुपपत्त्यभावेनेत्युक्तमसदित्याशङ्कते- अथोच्येतेति ।। ब्रह्मतयेति ।। ब्रह्माभेदेनेत्यर्थः । तत्स्वरूपान्तर्गतविशेषणत्वेनेति यावत् । न युक्त इत्यन्वयः । किन्तु सत्यत्वादिर्विशिष्टाकारो ब्रह्मणि तटस्थतयोपलक्षणत्वेनैव प्रतिपाद्यत इति वाक्यशेषः । इत्येवेति ।। एवंरूपमुख्यार्थेऽ-नुपपत्तिरस्तीत्यर्थः । उपलक्षणत्वानुपपत्तेरिति ।। सर्वथाऽसत उपलक्षणत्वायोगात् काकादेरपि कदाचित्सत्त्वादिति भावः । नीलमिति ।। नभः कीदृशमिति प्रश्ने नीलं नभ इति वदति तत्र असतोऽपि नैल्यस्योपलक्षणत्वं दृष्टम् । अतोऽत्राप्यसतोऽपि विशिष्टाकारादेरुपलक्षणत्व-मस्त्वित्यर्थः । प्रतिपत्तेरिति ।। ज्ञानस्येत्यर्थः । तथाच नभसि नैल्यं नोपलक्षकं किन्तु तज्ज्ञानमेव यन्नीलत्वेन प्रतीतं तन्नभ इति तदर्थत्वात् । ज्ञानं च सत्यमेवेति सत्यस्यैवोपलक्षकत्वमिति भावः । इति वदति विशिष्टाकारवदित्यर्थः । अनुपपत्त्यभावादिति ।। मुख्यार्थ इति शेषः ।

## गुरुराजीया

अनुपपत्तिरितीति ।। तथा चानुपपत्त्यभावस्यासिद्धत्वादावश्यकमेव तद्वशात्स्वरूप-लक्षणाश्रयणमिति भावः । उपलक्षणत्वानुपपत्तेरिति ।। व्यावर्तकत्वानुपपत्तेरित्यर्थः । असतो व्यावर्तकत्वस्य कुत्राप्यदृष्टत्वादिति भावः । नन्वसतोऽपि नभोनैल्याकारस्य तद्व्यावर्तकत्वदर्शनात् तद्वदेव विशिष्टाकारस्यासतोऽपि व्यावर्तकत्वं किं न स्यादिति शङ्कते- न चेति ।। असतो नैल्याकारस्य व्यावर्तकत्वमेव नास्ति येनासत एव विशिष्टाकारस्य

व्यावर्तकत्वं स्यात् । किन्तु तत्प्रतीतेरेव । तस्याश्च सत्त्वान्न व्यावर्तकत्वानुपपत्तिरित्याशयेन परिहरति- तत्रापीति ।। न च 'नीलं नभः' इत्यादौ नीलाकारस्यासत्त्वेऽपि तत्प्रतीतेः सत्त्वेन तस्या एवानीलाकाराद्व्यावर्तकत्व-वत्प्रकृते च विशिष्टाकारस्यासत्त्वेऽपि तत्प्रतीतेः सत्त्वाद्व्यावर्तकत्वं किं न स्यादिति वाच्यम् । नैल्यादेरसत्त्वेऽपि मया तत्प्रतीतेः सत्त्वाङ्गीकारेण तस्या व्यावर्तकत्वोपपत्तावपि त्वया विशिष्टा-कारस्यैव तत्प्रतीतेरपि सत्त्वानङ्गीकारेण तस्या अपि व्यावर्तकत्वानुपपत्तेरित्याशयात् । प्रमाणा-भावादिति ।। विशिष्टाकारस्यानिर्वचनीयत्वे प्रमाणाभावादित्यर्थः । प्रत्यक्षादेरभावेऽप्यनुमानस्यैव प्रमाणत्वात् प्रमाणाभावोऽसिद्ध इति शङ्कते- विशिष्टाकारादिरिति ।। अनुमानस्य चाप्रसिद्ध-विशेषणः पक्ष इति प्राचीनमूलं मनसि निधायाऽह- अनिर्ववचनीयाभावेनेति ।। उपसंहार-व्याजेनावशिष्टं मूलं व्याकुर्वन्नेव तत्फलमाह- तदेवमिति ।।

## गोविन्दीया

तथा सतीति ।। लक्षणं द्विविधं स्वरूपं तटस्थं चेति । तत्र स्वरूपं वस्त्वन्तर्गतम्, तटस्थं वस्त्वनन्तर्गतम् ; उपलक्षणमित्युच्यते । तथा सति विशिष्टाकारादिः असंश्वेत्तस्य ब्रह्मोपलक्षणत्वा-नुपपत्तेः । सत एव विशेषणादेरुपलक्षणत्वमित्यर्थः । काकवद्देवदत्तगृहमित्यत्र काकादेः सर्वदा विद्यमानत्वाभावेऽपि कदाचिदपि सत्त्वादुपलक्षणत्वमिति भावः । न चेति ।। नीलं नभ इत्यत्रा-सतोऽपि नभोनैल्यस्य यथोपलक्षणत्वं तथाऽसतोऽपि विशिष्टाकारादेरुपलक्षणत्वोपपत्तिरिति न वाच्यमित्यर्थः । तत्रापीति ।। तत्र स्थलेऽसतो नैल्यस्योपलक्षणत्वमेव नास्ति तत्प्रतीतेः सत्त्वेनोपलक्षणत्वाङ्गीकारादित्यर्थः । प्रकृते विशिष्टाकारादिप्रतीतेर्मिथ्यात्वेनोपलक्षणत्वं नास्तीति भावः । दण्डपुरुषसम्बन्धमिति जात्येकवचनमादाय दण्डपुरुषसम्बन्धान् विना अथवा दण्डपुरुषयोः सम्बन्धमन्तरेण वेत्यर्थः ।

## जनार्दनभट्टीया

प्रतिपत्तेरुपलक्षणत्वादिति ।। नैल्यप्रतिपत्तेः नभं प्रत्युपलक्षणत्वादित्यर्थः । यद्विषयानन्तर्गतत्वे सति व्यावर्तकं तदुपलक्षणमिति तल्लक्षणयोगादिति भावः । न च अज्ञाताया नैल्यप्रतिपत्तेः कथं उपलक्षणत्वम्? इति वाच्यम् । पृथिवीपदशक्यतायां गन्धवत्त्वस्येव अज्ञाताया एव प्रतिपत्तेरुप-लक्षणसम्भवात् । 'अङ्गीक्रियमाणत्वात्' इत्यस्य सत्यत्वं च सिद्धमित्यंशस्य च विशिष्टार्थतायां परम्परया उपयोगं दर्शयन् उपसंहरति – तदेवमित्यादिना ।।

# दृष्टस्य वस्तुनो ..

**विशिष्टादीनां तर्केण दुर्घटत्वादनिर्वचनीयत्वशङ्का तत्परिहारश्च**

## श्रीमज्जयतीर्थटीका

ननु विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं भिन्नाभिन्नं वा । नाऽद्यः । दण्डपुरुषसम्बन्धमन्तरेण दण्डिनोऽन्यस्याप्रतीतेः । दण्डिनमानयेत्युक्तेऽन्यस्यैवाऽनयनप्रसङ्गाच्च । द्वितीये तु प्रत्येकं दण्डिव्यवहारप्रसङ्गः ; विशेषाभावात् । तृतीये तु दोषद्वयम् । व्याघातश्चा-धिकः । तथा भेदो भेदिभ्यां भिन्नश्चेदनवस्था । अभिन्नश्चेद्भेदभेदिनोरन्यतरमात्रावशेषः । एवं विशेषणमपि विशेष्याद्भिन्नत्वादिना विकल्प्य दूषणीयम् । तदेवं तर्केण भिन्नत्वादिना दुर्घटत्वाद् विशिष्टादयोऽनिर्वचनीयाः सिद्धा इति कथं नानुपपत्तिरित्यत आह-

## मूल

***दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकमिति दुर्घटत्वे सुघटत्वे वा नानिर्वचनीयसिद्धिः ।***

इतिशब्दो हेतौ । दुर्घटत्वे सुघटत्वे वेति । तर्केणेति शेषः । तर्केऽनादरं सूचयितुं सुघटत्वे वेत्युक्तम् । अनिर्वचनीयेति भावप्रधानो निर्देशः । विशिष्टादेरित्यनुवर्तते । इदमत्र वक्तव्यम् । भिन्नत्वादिना दुर्घटत्वेन विशिष्टादिकमनिर्वचनीयमभिलषता तत्प्रतीतिरङ्गीक्रियते न वा । नेति वदन्ननुभवापलापित्वेनोपेक्षणीयः । आद्ये न विशिष्टादेर्दुर्घटत्वेऽप्यनिर्वचनीयत्वसिद्धिः । दृष्टि-विरुद्धा(द्धेऽ)र्थे तर्कस्य विपर्ययापर्यवसा(नादा)नेनाभासस्यानादरणीयत्वात् । न च दृष्टमपि विशिष्टादिकं तर्केण बाधिष्यत इति वाच्यम् । दृष्टार्थं प्रति तर्कस्य बाधकत्वासामर्थ्यात् । न च वक्तव्यं शुक्तिरजतादिकं देहात्मत्वादिकं वा दृष्टमपि तर्केण बाध्यं दृष्टमिति । तत्रापि बलवद्विरोधिदृष्ट्यैव बाधाङ्गीकारादिति ।

## श्रीविजयीन्द्रभिक्षु

दुर्निरूपत्वाद् विशिष्टादिकमनिर्वचनीयमिति शङ्कते- ननु विशिष्टमिति ।। दण्डिनमिति ।। न च विशिष्टस्य विशेष्याभिन्नतया तस्याऽनयनमेवास्याऽनयनमिति वाच्यम् । एवं सति तृतीय-पक्षान्तर्भावापत्तेरिति भावः । प्रत्येकमिति ।। प्रत्येकं विशेषणविशेष्यतत्सम्बन्धानामिति शेषः । दोषद्वयमिति ।। अन्यस्यैवाऽनयनप्रसङ्गः प्रत्येकं दण्डिव्यवहारप्रसङ्गश्चेति दोषद्वयमित्यर्थः । व्याघातश्चेति ।। भेदाभेदयोरेकत्र विरोधश्चेत्यर्थः । अवशेष इति ।। अत्र स्यादिति शेषः । एव-मिति ।। विशेषणं विशेष्याद्भिन्नमभिन्नं भिन्नाभिन्नं वा । नाऽद्यः । मेरुमन्दरयोर्विशेषण-विशेष्यभावादर्शनात् । न द्वितीयः । देवदत्तमानयेत्युक्ते दण्डविशिष्टस्याप्यानयनप्रसङ्गात् । न तृतीयः ।। उक्तदूषणद्वयापाताच्चेति विकल्प्य दूषणीयमित्यर्थः । कथमिति ।। सत्यज्ञानादिवाक्यस्य विशिष्टार्थपरत्वे परमार्थसद्ब्रह्मस्वरूपप्रतिपादनपरत्वानुपपत्तिः कथं नेत्यर्थः । शङ्कोत्तरत्वेन मूलमवतारयति- अत आहेति ।। केन दुर्घटत्वं सुघटत्वं वेत्यत आह- तर्केणेति ।। ननु सुघटत्वेऽनिर्वचनीयत्वप्रसक्तेरेवाभावात् सुघटत्वे वेत्यस्याऽनर्थक्यमाशङ्क्याऽह- तर्क इति ।। ननु विशिष्टादेरनिर्वचनीयत्वासिद्धौ 'दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकम्' इति हेतुरुक्तः । तस्य वैयधिकरण्यमाशङ्क्याऽह- इदमत्रेति ।। दृष्टिविरुद्ध इति ।। 'अहमस्मि' 'परोऽस्ति' इति सत्त्वेनैव ग्रहणादनिर्वचनीयत्वस्य च तद्भिन्नत्वघटितमूर्तिकत्वान्न प्रत्यक्षसिद्धार्थे तर्केणानिर्वच-नीयत्वसिद्धिः । तस्य विपर्यये पर्यवसानासम्भवेनाऽभासत्वादित्यर्थः । ननु तर्केण प्रत्यक्षस्यैव बाधाद् विपर्यये पर्यवसानं भविष्यतीत्याशङ्क्य निराकरोति-न च दृष्टमपीति ।। दृष्टार्थं प्रतीति ।।

प्रत्यक्षस्य प्रमाणान्तरबाध्यत्वं क्वापि न दृष्टमिति भावः । तर्केण बाध्यं दृष्टमितीति ।। 'यदीदं रजतं स्यात् स्वोचितार्थक्रियाकारि स्यात्' 'यदि देह एवाऽत्मा स्यात् तदा कृतहानादिप्रसङ्गः' इति तर्केणेत्यर्थः । बलवदिति । कालपृष्ठत्वत्रिकोणत्वादिविशेषदर्शनजन्येन 'नेदं रूप्यम्' इति प्रत्यक्षेणेत्यर्थः । तथा बालस्थविरशरीरयोः परिमाणभेदेन भेदोपलम्भेऽपि 'योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरो न तावनुभवामि' इति प्रत्यभिज्ञाप्रत्यक्षसहितेन 'ममायं देहः' इति बलवत्तरप्रत्यक्षेणेत्यर्थः ।

## श्रीवेदेशतीर्थ

व्याघातः विरोधः । एवमिति ।। यद्यपि विशेषणस्याभिन्नत्वे भिन्नाभिन्नत्वे वा उक्तदोषातिदेशः सम्भवति न भिन्नत्वपक्षे, तथाऽपि विशेषणं विशेष्याद्भिन्नमित्यस्य भेदविशिष्ट-मित्यर्थो वाच्यः । तथा च तत्र भेदो विशेषणम् । तच्च भेदरूपं विशेषणं भिन्नमित्युच्यमाने तस्य च भेदविशिष्टमित्यर्थे अनवस्था स्यादेवेत्यतिदेशोऽत्रापि युक्त एवेति भावः ।

केचित्तु- भिन्नत्वे मेरुमन्दरयोरपि विशेषणविशेष्यभावः स्यादिति बहिरेव भिन्नत्वपक्षो दूषणीय इत्याहुः- तर्केणेति ।। 'यदि विशिष्टादिकं तत्त्वं स्यात्तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात्, तथात्वे चानवस्थादिकं स्यात् । न चानवस्थादिदोषदुष्टं भिन्नत्वाद्यन्यतमप्रकारोपेतत्वमङ्गीकर्तुं शक्यम् । अतो न तत्त्वम् । किं त्वनिर्वचनीयमेव' इति तर्केणेत्यर्थः । कथं नानुपपत्तिरिति ।। उक्तरीत्या पुनस्तात्पर्यानुपपत्तिः प्राप्तैवेति भावः । सुघटत्व इत्यस्याऽनर्थक्यादाह- तर्क इति ।। मूले उक्तशङ्का-परिहारस्य स्फुटमप्रतीतेराह- इदमत्रेति ।। दृष्टस्य वस्तुन इत्यस्य ह्युपपादनलब्धं हेतुं स्वयमेवाऽह- दृष्टिविरुद्धार्थ इति ।। एवं विशिष्टादेस्तर्केण दुर्घटत्वेऽपि नानिर्वचनीयत्वसिद्धिरित्यंशं व्याख्याय दृष्टस्येत्यंशं तात्पर्यतो व्याख्यातुमाह- न च दृष्टमिति ।। बलवद्दृष्टिं विनेत्येतत्सङ्गमयितुमाह- न च वक्तव्यमिति ।।

## द्वैतद्युमणि

तत्रेति ।। शुक्तिरूप्ये देहात्म्यैक्ये चेत्यर्थो न सङ्गच्छते । देहात्म्यैक्यविषयकप्रत्यक्षप्रतीतेः सिद्धान्तेऽनङ्गीकारेण तद्बाधप्रसक्तेरभावात् । शङ्कामात्रं परीत्या कृतम् । किन्तु शुक्तिरूप्य इत्येवार्थः । देहात्म्यैक्यारोपस्तु नास्त्येवेति बहिरेवानुसन्धेयम् ।।

## श्रीराघवेन्द्रतीर्थ

अनुपपत्त्यभावादित्येतदसिद्धमिति शङ्कते- नन्विति ।। दोषद्वयमिति ।। अन्यस्यैवानयन-प्रसङ्गः१ प्रत्येकं दण्डिव्यवहारप्रसङ्गश्चेति दोषद्वयमित्यर्थः । एवमिति । विशेषणं विशेष्याद्भिन्नं चेद्विशेषणादिभावानुपपत्तिः । मेरुमन्दरयोस्तद्भावादर्शनात्२ । अभेदेऽपि तथा । एकस्य तद्भावा-दर्शनात् । 'चैत्रमानय' इत्युक्ते दण्डवत आनयनापत्तेश्च । न तृतीयः । दोषद्वयं व्याघातश्चेत्येवं विकल्प्य दूषणीयमित्यर्थः । सुघटत्वे अनिर्वचनीयत्वाप्रसक्तेः दुर्घटत्वस्यैव वक्तव्यत्वेन सुघटत्वोक्तिः किमर्थेत्यत आह- तर्केऽनादरमिति ।। परिष्कारपूर्वं मूलवाक्यं व्याचष्टे- इदमत्रेति ।। न वेत्यनन्तर-मितिशब्दो योज्यः ।३ विपर्ययापर्यवसानादिति

।। विशिष्टाकारस्य विशेषणादिभ्यो भेदेऽभेदे भेदाभेदे च दोषदर्शनाद् विशिष्टाकारोऽसन्ननिर्वचनीयो ४वा न सत्य इति विपर्यये पर्यवसानं ५विशिष्टाकारसत्त्वग्राहिप्रत्यक्षविरोधान्न६ सम्भवतीत्याभासः तर्कोऽनादरणीय इत्यर्थः । ७न चेत्यनन्तरमितिशब्दो योज्यः । तर्केण बाध्यं दृष्टमिति । 'यदीदं रजतं सत्स्यात् स्वोचितार्थक्रियाकारि स्यात्', 'यदि देह एवाऽत्मा स्यात् कृतहानादिप्रसङ्गः' इत्यादितर्केण बाध्यं दृष्टमित्यर्थः । तत्रापीति ।। 'नेदं रूप्यम्', 'मम देहः' इति बलवद्विरोधिदृष्ट्यैवेत्यर्थः । कालपृष्ठत्रिकोणत्वादिविशेषदर्शनजन्यत्वाद् बलवत्त्वमिति भावः । विशेषाभावादिति । दण्डसम्बन्धवत्त्वं दण्डित्वं तद्यदि प्रत्येकं दण्डादिस्वरूपं स्यात्तदा वास्तवदण्ड्यपेक्षया दण्डादेर्विशेषाभावात्प्रत्येकं दण्डे पुरुषे तत्सम्बन्धे च दण्डिव्यवहारप्रसङ्ग इत्यर्थः । दोषद्वयम् भेदाभेदपक्षोक्तं दोषद्वयम् । विशिष्टादेरिति ।। सत्यत्वेन प्रत्यक्षप्रतीतिसिद्धस्य विशिष्टादेरित्यर्थः । विपर्ययापर्यवसानेनेति । यदि विशिष्टादिकं प्रतीयेत तर्हि भिन्नत्वाद्यन्यतम-प्रकारोपेतं स्यात् । न चान्यतमः प्रकार उक्तदूषणेनाङ्गीकर्तुं शक्यते, तस्मात् विशिष्टादिकं न प्रतीयत इति विपर्ययपर्यवसानं न सम्भवति प्रत्यक्षविरुद्धत्वादित्यर्थः । दृष्टार्थम् प्रत्यक्षसिद्धमर्थम् । देहेति ।। अहं कृष्ण इत्यादि देहधर्माध्यासस्तावदस्ति स च देहात्मतादात्म्यारोपं विनाऽनुपपत्तेर्देहा-त्मत्वप्रतीतिसिद्धमित्यर्थः । तर्केणेति ।। इदं, न रजतं, दाहच्छेदादिमत्त्वात् । देहो, नात्मा, जडत्वादित्यनुमानेनेत्यर्थः ।। दृष्टैवेति । अनुमानमूलभूतरजताभावावगाहिप्रत्यक्षेण, मम देह इति देहात्मभेदग्राहिबलवत्प्रत्यक्षेणैवेत्यर्थः ।।

## गुरुराजीया

व्याघात इति ।। भेदाभेदयोरेकत्र विरुद्धत्वेनावस्थानासम्भवादिति भावः । अनवस्थेति ।। तस्यापि भेदस्य भेदिभ्यां भिन्नत्वेऽविश्रान्तभेदपरम्पराप्रसङ्गादिति भावः । अन्यतरावशेष इत्युप-लक्षणम् । भिन्नाभिन्नत्वे दोषद्वयं व्याघातश्चाधिक इत्यपि द्रष्टव्यम् । दूषणीयमिति ।। विशेषणस्य विशेष्याद्भिन्नत्वे भेदपरम्परयाऽनवस्था । अभेदे विशेषणविशेष्ययोरन्यतरमात्रावशेषप्रसङ्गः । भिन्नाभिन्नत्वे दोषद्वयं व्याघातश्चाधिक इति दूषणीयमित्यर्थः ।

तर्केण भिन्नत्वादिना दुर्घटत्वशङ्काया१ मूलारूढत्वलाभायानुरूपं शेषमाह- तर्केणेति शेष इति ।। तर्केण दुर्घटताया एव पूर्वं शङ्कितत्वेन तन्मात्रस्यैव वक्तव्यतयोभयोक्तेर्वैयर्थ्यमित्यतस्तत्प्रयोजन-माह- तर्केऽनादरमिति ।। तर्कदौर्घट्येन विशिष्टादेरनिर्वचनीयत्वस्यैव शङ्कितत्वेनानिर्वचनीयत्व-सिद्धिरित्येव वक्तव्यतयाऽनिर्वचनीयसिद्धिरित्ययुक्तमित्यतो लक्षणयाऽनिर्वचनीयत्वपरत्वान्न इति भावेनाऽह- अनिर्वचनीयेतीति ।। 'बलवद्दृष्टिं विना' इत्यस्य वैयर्थ्यमाशङ्क्य तद्व्यावर्त्यशङ्का-प्रदर्शनेन परिहरति- न चेति ।। तत्रापीति ।। यद्यपि सिद्धान्ते देहात्मैक्यप्रत्यक्षमेव नास्ति । यदाह ग्रन्थकारः ।

'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः' इत्यादि, तथाऽप्यङ्गीकृत्य तद्भ्रमम्, अयं ग्रन्थः ।

## गोविन्दीया

व्याघात इति ।। विरुद्धयोर्भिन्नत्वाभिन्नत्वयोरङ्गीकराद्व्याघातश्चाधिको दोष इत्यर्थः । तथा भेदोऽपीति ।। भेदोऽपि भेदिभ्यां भिन्नश्चेत् तस्य च भेदाधिकरणत्वं विना भिन्नत्वं नोपपद्यत इति भेदान्तरमङ्गीकर्तव्यम् । सोऽपि भेदो भेदान्तरमपेक्षत इत्यनवस्थेत्यर्थः । एवमिति ।। विशेषणं विशेष्याद्भिन्नं चेत्तस्य च भेदाधिकरणत्वं विना भिन्नत्वं नोपपद्यत इति भेदरूपविशेषणान्तर-मङ्गीकर्तव्यम्, पुनरप्येवमित्यनवस्था । अभिन्नं चेद् विशेषणविशेष्ययोरन्यतरमात्रावशेषः । भिन्नाभिन्नं चेद् दोषद्वयं व्याघातश्चेति दूषणीयमित्यर्थः । तदेवमिति ।। यदि विशिष्टादिकं तत्त्वं स्यात्तर्हि भिन्नत्वाद्याकारोपेतं स्यात्, भिन्नत्वाद्याकारोपेतं चानवस्थादिदोषदुष्टं च तत् तत्त्वं भवितुं नार्हत्यतोऽनिर्वचनीयमेवेति तर्केण भिन्नत्वादिना धर्मेण वक्तुं दुर्घटत्वाद् विशिष्टत्वा-दयोऽनिर्वचनीयाः सिद्धा इति कथं नानुपपत्तिरित्यर्थः । आद्ये इति ।। विशिष्टप्रतीतिरङ्गीक्रियत इति पक्षे तस्य च प्रत्यक्षसिद्धत्वेन सत्यत्वात्, भिन्नत्वादिना दुर्घटत्वेऽपि नानिर्वचनीयत्व-सिद्धिरित्यर्थः । दृष्टिविरुद्धार्थे इति ।। दृष्टिसिद्धार्थे विपर्यये पर्यवसानं वक्तव्यम् । अनिर्वचनीयं च दृष्टिविरुद्धार्थो भवति । तत्र अपर्यवसानं पर्यवसानमेव न भवति । अतो विपर्यये पर्यवसानाभावेन आभासस्यानादरणीयत्वादित्यर्थः । न चेति ।। शुक्तिरजतादिकं यदि तत्त्वं स्यात् तर्हि वस्तु-क्रियाकारि स्यात् । न च तद्भवति तस्मादतत्त्वम् । देहात्मत्वादिकं यदि तत्त्वं तर्हि नित्यत्वादि-धर्मोपेतं स्यात्, न च तद्भवति । अतोऽतत्त्वमेवेति वा तर्केण दृष्टमपि प्रत्यक्षसिद्धमपि तद्द्वयं बाध्यं दृष्टमिति न च वक्तव्यमित्यर्थः ।

## नारोपन्तीया

तत्रापि बलद्दृष्ट्यैव बाधाङ्गीकारादिति ।। मम शरीरमित्यादि सार्वजनीनानुभवादिति भावः । अत्र देहात्मत्वं परसिद्धमेवानूदितम् । सिद्धान्ते तु- अहं मनुष्य इत्यादिव्यपदेशस्य गौणत्वात्, मम देह इत्यादिप्रतीतेश्च देहात्मभ्रमानभ्युपगमात् । अत एवोभयसिद्धस्य शुक्तिरजतभ्रमस्य पृथगुपादानमिति बोध्यम् ।

## जनार्दनभट्टीया

दोषद्वयमिति ।। भेदपक्षोक्तदोषः, अभेदपक्षोक्तदोषश्चेति दोषद्वयमित्यर्थः । व्याघातश्चेति ।।

भेदश्चेद् अभेदसम्भवः । अभेदश्चेद् भेदसम्भवः । परस्परविरहरूपत्वात् तयोरिति व्याघात इत्यर्थः । कथं नानुपपत्तिरिति ।। उक्तरीत्या सत्यत्वादिविशिष्टस्यापि अनिर्वचनीयत्वेन 'सत्यं ज्ञानम्' इत्यादिना एतादृशब्रह्मोपदेष्टुः विप्रलम्भकत्वापत्त्या विशिष्टार्थानुपपत्तिरिति भावः । 'दृष्टस्य' इति सामान्योक्तेः प्रकृते उपयोगाप्रतीतेः तर्कस्य प्रमाणदृष्टार्थबाधकत्वहेत्वप्रतीतेः बलवद्दृष्टिं विनेत्यस्य उपयोगाप्रतीतेश्च सर्वमाह – १इदमत्रेति ।। अत्र चोद्ये इदम् एतद्वाक्यसूचितम् उत्तरं वक्तव्यमि-त्यर्थः । बलवद्विरोधिदृष्ट्यैवेति ।। 'नेदं रजतम्', 'नाहं देहः' इति दृष्ट्येत्यर्थः ।

## दृष्टस्य वस्तुनो..

**न च प्रत्यक्षेत्यनेन दृष्टस्य वस्तुन इत्यस्य पौनरुक्त्यशङ्का तत्परिहारश्च**

*दृष्टस्य वस्तुनो*

## श्रीमज्जयतीर्थटीका

ननु न च प्रत्यक्षसिद्धमित्यादिनैवास्यार्थस्यावगतत्वात् किमनेनेति । मैवम् । तत्र प्रत्यक्ष-स्यानुमानागमाबाध्यत्वं प्रतिपादितम् । इह तु प्रमाणसिद्धस्य तर्काबाध्यत्वमिति प्रमेयभेदात् । अत एव प्रमाणादङ्गीक्रियत एवेति सामान्येन वक्ष्यति । किञ्च प्राक्प्रत्यक्षस्यानुमानाद्य-बाध्यत्वोपपादने तात्पर्यम् । चन्द्रप्रादेशत्वादौ व्यभिचारपरिहारात् । इह तु तर्कस्य दृष्टि-बाधकत्वनिराकरणे । तत्रातिप्रसङ्गादेर्वक्ष्यमाणत्वादिति ।

## श्रीविजयीन्द्रभिक्षु

न च प्रत्यक्षसिद्धमितीति ।। 'न च प्रत्यक्षदृष्टमन्येन केनापि बाध्यं दृष्टम्' इत्यादिनैवे-त्यर्थः । इह त्विति ।। 'दृष्टस्य वस्तुनः' इति वाक्ये दृष्टिपदस्य प्रमाणसामान्यपरत्वमिति भावः। किमत्र प्रमाणमित्यत आह- अत एवेति ।। सामान्यशब्दस्य विशेषपरत्ववद् विशेषशब्दस्य सामान्यपरत्वं प्रायिकमित्यत आह- किञ्चेति ।। 'यत्प्रत्यक्षसिद्धं न तत्प्रमाणान्तरबाध्यम्' इत्यस्य चन्द्रप्रादेशत्वादौ व्यभिचारमाशङ्क्यैतत्परिहारग्रन्थस्य 'प्रत्यक्षस्यानुमानागमाबाध्यत्वम्' इत्यर्थोपपादनपरतया चावगम्यत इत्यर्थः । तत्रेति ।। तर्कस्य प्रत्यक्षाबाधकत्वे ।

## श्रीवेदेशतीर्थ

पूर्वं प्रत्यक्षसिद्धस्याबाध्यत्वमुक्तम् । इदानीं सामान्येन प्रमाणमात्रसिद्धस्याबाध्यत्वमुच्यत इति भेदो निरूपितः । इदानीं प्रागनुमानागमयोर्बाधकत्वं निराकृतम् । सम्प्रति च तर्कमात्रस्य बाधकत्वं निराक्रियते इत्यतोऽपि पूर्वोत्तरग्रन्थभेदोऽस्तीत्याह- किञ्चेत्यादिना ।।

ननु प्रागागमस्यापि बाधकत्वं न निराकृतम् । किन्त्वनुमानस्यैवेति किं न स्यादित्यत आह- चन्द्रेति ।। चन्द्रप्रादेशत्वादिप्रत्यक्षं त्वित्यादिवाक्येनेति शेषः । यद्यनुमानमात्रस्य बाधकत्वनिरा-करणं पूर्वमभिप्रेतं स्यात्तर्हि चन्द्रप्रादेशत्वादौ व्यभिचारपरिहारोऽसङ्गतः स्यात् । न हि तत्रानुमानेन बाधः प्रसक्तः । अथ आगमबाधकतानिराकरणमपि पूर्वमभिप्रेतमिति भावः । तत्रेति ।। तर्कस्य बाधकत्वेऽतिप्रसङ्गस्य 'उभयविलक्षणत्वञ्चेत्' इत्यादिना वक्ष्यमाणत्वादित्यर्थः । आदिपदेन 'न हि दृष्टेर्बलवत्किञ्चित्प्रमाणमस्ति' इत्यादिना वक्ष्यमाणबलवत्त्वाभावपरिग्रहः ।

## द्वैतद्युमणि

प्रमेयभेदादिति ।। नन्विदमनुपपन्नम् । मूले 'दृष्टस्य वस्तुनः' इति प्रत्यक्षसिद्धस्यैव गृहीत-त्वादित्यत उत्तरमूले प्रमाणसामान्यस्यैव गृहीतत्वेन तदनुसारादत्रापि दृष्टपदं प्रमाणसामान्य-निश्चितपरमित्याशयेनाऽह- अत एवेति ।।

## श्रीराघवेन्द्रतीर्थ

न च प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टमित्यनेन पौनरुक्त्यमाशङ्क्य विशेषसामान्य-विषयतया निराह- न च प्रत्यक्षेत्यादिना ।। ज्ञापकमाह- तत्रेति ।। प्रत्यक्षस्य (तर्कस्य) दृष्टि-बाधकत्वनिराकरणे । न हि दृष्टेर्बलवत्किञ्चित्प्रमाणमित्यादिनाऽतिप्रसङ्गव्याघातयोः वक्ष्यमाण-त्वादित्यर्थः । प्रमाणसिद्धस्येति ।। सामान्यतः प्रमाणमात्रसिद्धस्येत्यर्थः । ननु प्रत्यक्षस्यानुमाना-बाध्यत्वोपपादनं कृतमित्यस्तु आगमाबाध्यत्वोपपादने तात्पर्यमित्यादिपदेनोक्तं तत्र किं ज्ञापक-मित्यत आह- चन्द्रेति ।। प्रत्यक्षसिद्धमन्येन केनाप्यागमेन न बाध्यमित्युक्तनियमस्य प्रादेश-परिमितश्चन्द्रमा इति प्रत्यक्षमागमबाधितमुपलब्धमिति व्यभिचारमाशङ्क्य चन्द्रप्रादेशविषयं त्वित्यादिना वाक्येन परिहारादित्यर्थः । वक्ष्यमाणत्वादिति ।। प्रत्यक्षसिद्धस्य तर्क १बाध्यत्वे 'न हि युक्तिपराजितोऽपि क्षुधित' इत्यादिनाऽतिप्रङ्गस्य वक्ष्यमाणत्वादित्यर्थः ।

## गुरुराजीया

चन्द्रेति ।। 'चन्द्रप्रादेशविषयं तु'२ इत्यादिनेति शेषः । तत्र तर्कबाधकत्वे । अतिप्रसङ्गादेरित्यादिपदेन प्राबल्याभावपरिग्रहः । वक्ष्यमाणत्वादिति ।। 'जगतो भिन्नमभिन्नं भिन्नाभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते' इत्यादिनेति शेषः ।

## गोविन्दीया

तत्रेति ।। प्रत्यक्षस्य प्रत्यक्षसिद्धस्येत्यर्थः । किञ्चेति ।। प्रागुक्तस्य वाक्यस्येत्यर्थः । इहेति ।। दृष्टस्य वस्तुन इत्यस्य वाक्यस्य तर्कस्य दृष्टिबाधकत्वनिराकरणे तात्पर्यम् । तत्र तर्कस्य बाधकत्वेऽतिप्रसङ्गस्योभयविलक्षणत्वं चेत्यादिना वक्ष्यमाणत्वादित्यर्थः । आदिपदेन दृष्टेर्बाध्यत्वाभावः परिगृहीतस्तस्य च न हि दृष्टेरित्यादिना वाक्येन वक्ष्यमाणत्वादिति भावः ।

## जनार्दनभट्टीया

प्रमेयभेदेन पौनरुक्त्यं परिहृत्य तात्पर्यभेदेनापि तत्परिहरति– किञ्चेत्यादिना ।। दृष्टिबाधकत्वेति ।। प्रमाणबाधकत्वे इत्यर्थः । अतिप्रसङ्गादेरिति ।। ब्रह्मणोऽपि अनिर्वचनीयत्वं स्यादित्याद्यतिप्रसङ्गादेरित्यर्थः । यद्यपि प्रमाणज्ञानस्य तर्काबाध्यत्वे प्रतिपादिततर्कस्य प्रमाणबाधकत्वमपि निरस्तप्रायमेवेति परिहारैक्यात् परिहारभेदाधीनः तात्पर्यभेदोऽपि दुर्वचः । तथाऽपि उद्देश्यविधेयभेदात् तात्पर्यभेद इति मन्तव्यम् । तथा हि प्राक् प्रत्यक्षमुद्दिश्य 'अन्येन केनापि न बाध्यत्वम्' इति अबाध्यत्वं तावत् विवक्षितम् । इह तु 'अन्यत्' इति तर्कमुद्दिश्य न बाधकमिति बाधकत्वाभावो विधीयत इति ।।

# सर्ववैलक्षण्याङ्गीकाराद्दुर्घटमपि..

**प्रमाणदृष्टस्य तर्कबाध्यत्वाभावसमर्थनम्**

## श्रीमज्जयतीर्थटीका

ननु प्रमाणदृष्टार्थे तर्कबाधोऽकिञ्चित्कर इत्येतत्कुत इति । तत्राऽह-

## मूल

***सर्ववैलक्षण्याङ्गीकाराद्दुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव ।***

ब्रह्म खलु सदेव सोम्येत्यादिप्रमाणैः सत्यमवगतं तर्कविरोधेन दुर्घटञ्च । तत्र न तावत्तर्कं पुरस्कृत्य प्रमाणमनादृत्य परेणानिर्वचनमङ्गीक्रियते । किन्तु दुर्धटमपि प्रमाणाद् सत्यमेवाङ्गी-क्रियते । तेन परस्यापि सिद्धमेतत् यत्प्रमाणसिद्धेऽर्थे तर्कोऽकिञ्चित्करः । प्रमाणविरुद्धस्य तर्कस्य विपर्ययापर्यवसानेनाऽभासत्वादिति । अन्यथा ब्रह्मापि मिथ्याङ्गीकरणीयं स्यात् ।

## श्रीविजयीन्द्रभिक्षु

तर्कविरोधेनेति ।। वक्ष्यमाणतर्कविरोधेनेत्यर्थः । परेणेति ।। ब्रह्मेत्यनुषज्यते । अन्य-थेति ।। प्रमाणविरोधेऽपि तर्कस्य विपर्यये पर्यवसानाङ्गीकार इत्यर्थः ।

## श्रीवेदेशतीर्थ

तर्कविरोधेनेति ।। वक्ष्यमाणतर्कविरोधेनेत्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

'१अनिर्वचनमङ्गीक्रियते' इत्यत्र ब्रह्मेत्यनुषज्यते । आभासत्वादिति ।। इत्येतत्परस्यापि सिद्धमिति पूर्वेणान्वयः । अन्यथेति ।। तर्कविरोधेन प्रमाणस्यानादर इत्यर्थः । प्रमाणं ब्रह्मणः सत्यत्वत्वप्रतिपादकं सदेवेत्यादि प्रमाणम् । दुर्घटमपि ब्रह्मेति शेषः ।

## गुरुराजीया

तर्कविरोधेनेति ।। 'ते तु तर्कयन्ति' इति वक्ष्यमाणतर्कविरोधेनेत्यर्थः ।

## गोविन्दीया

अन्यथेति ।। एतत्प्रमेयं परस्यासिद्धं चेदित्यर्थः ।

## सर्ववैलक्षण्याङ्गीकाराद्दुर्घटमपि..

**विशिष्टनिरासकतर्कस्य विपर्यये पर्यवसानाभावसमर्थनम्**

*सर्ववैलक्षण्याङ्गीकाराद्दुर्घटमपि*

## श्रीमज्जयतीर्थटीका

अथ ब्रह्म कथं परस्य दुर्घटं प्रसक्तमिति चेत् । सर्ववैलक्षण्याङ्गीकारात् । चेतना-चेतनादिभावस्य परेण ब्रह्मण्यनङ्गीकारात् । इह हि नित्यशुद्धबुद्धमुक्तमखण्डैकरसं ब्रह्मानङ्गी-कुर्वाणाः केचिच्चेतनाचेतनतया भावाभावतया वा तत्वं द्विविधमभ्युपयन्ति । अपरे तु प्रमाणप्रमेयप्रमातृभेदेन त्रिविधम् । अन्ये तु द्रव्यगुणकर्मसामान्यभेदेन चतुर्विधमित्यादि । ते तु तर्कयन्ति । यद्युक्तलक्षणं ब्रह्म तत्वं स्यात्तर्हि चेतनाचेतनाद्युक्तविधास्वन्तर्भवेत् । न च ब्रह्मवादिना अस्त्वेवमिति शक्यते वक्तुम् । तेन तस्य चेतनाद्युक्तविधावैलक्षण्याङ्गीकारात् । अन्यथा ज्ञानाश्रयत्वादितत्तल्लक्षणवत्त्वापत्त्या निर्विशेषत्वभङ्गाद्यापत्तेः । चेतनाद्युक्तविधानन्तर्भूतं न तत्वं यथा शशविषाणमिति । एवं तर्केण ब्रह्मणि दुर्घटे सति ब्रह्मवादिनैतावदेव वक्तव्यम् । प्रमाणसिद्धं खलूक्तलक्षणं ब्रह्म न पुरुषमतिवैश्वरूप्यजन्मना१ तर्केण शक्यं निराकर्तुम् । किन्तु तर्क एव प्रमाणविरुद्धार्थे प्रवर्तमानोऽयमाभासो युक्तः । ततो यदि नामैतदुक्तविधासु नान्तर्भवति । विधान्तरेण तत्वं भविष्यति । चेतनादिलक्षणं वा अन्यत्प्रकल्प्यान्तर्भावयिष्यत इत्यादि । तथा शक्यते प्रकृतेऽपि वक्तुम् । 'दण्डी देवदत्तः' 'पर्वतोऽग्निमान्' 'यः सर्वज्ञः' इत्यादि प्रमाणसिद्धं तावद्विशिष्टादि । न तदुक्तविकल्पपांसुभिः शक्यमाच्छादयितुम् । तेषामेव प्रमाणविरुद्धाना-माभासत्वात् । ततो यदि नाम नोक्तप्रकारसम्भवस्तथाऽपि प्रकारान्तरेण सत्यं भविष्यति । एतेष्वेव वा प्रकारेषु कश्चिन्निर्वाहः२ कल्पनीय इति ।

## श्रीविजयीन्द्रभिक्षु

सर्ववैलक्षण्याङ्गीकाराद् ब्रह्म दुर्घटमित्युक्तम् । तदुपपादयितुमाकाङ्क्षामुत्थापयति- अथ ब्रह्म कथमिति ।। चेतनेति ।। चेतनत्वाचेतनत्वादिधर्मस्येत्यर्थः । इत्यादीत्यादिपदेन षड्पदार्थ-वादिनः परिगृह्यन्ते । चेतनाचेतनेति ।। चेतनत्वाचेतनत्वाद्युक्तविभाजकोपाधिमत्तया गृहीतं स्यादित्यर्थः । ब्रह्मवादिना निर्विशेषब्रह्मवादिना । उक्तेति ।। उक्तविभाजकोपाध्यवच्छिन्नत्वा-नङ्गीकारादित्यर्थः । ज्ञानाश्रयत्वादीत्यादिपदेनाऽत्मयाथात्म्यानुभवत्वतद्विषयत्वतदाश्रयत्वगुणा-श्रयत्वाद्यचेतनादिलक्षणपरिग्रहः । निर्विशेषत्वेति ।। अत्राऽदिपदेन स्वप्रकाशत्वभङ्गादिपरिग्रहः ।

तर्कस्य विपर्यये पर्यवसानं दर्शयति- चेतनाद्युक्तेति ।। 'प्रमाणादङ्गीक्रियत एव' इति मूलावयव-मुपपादयति- एवमिति ।। पुरुषमतीति ।। पुरुषाणां मतयः परस्परं विरुद्धा अङ्गीकार्याः । तत्प्रभवेनेत्यर्थः । तत इति ।। तथा च 'तस्मान्न तत्वम्' इति विपर्ययापर्यवसानेनैव तर्कस्याऽभासत्वमिति भावः । चेतनादीति ।। 'यद्युक्तलक्षणं ब्रह्म तत्वं स्यात् तदा चेतनाद्युक्त-विधास्वन्तर्भवेत्' इत्यस्यानिष्टप्रसङ्गरूपत्वाभावादाभासत्वमिति भावः ।

प्रमाणसिद्धेऽर्थे तर्कोऽकिञ्चित्कर इत्येतत्प्रकृतेऽपि विशिष्टस्य पदार्थान्तरत्वपक्षेऽपि योजयति- तथेति ।। विकल्पेति ।। 'विशिष्टं विशेष्यादिभ्यो भिन्नमभिन्नं भिन्नाभिन्नं वा' इत्यादितर्कवाद्युक्त-विकल्पपांसुभिरित्यर्थः । कल्पनीय इति ।। यत्र विशेषणानामागन्तुकत्वं तत्र विशिष्टविशेष्य-योर्भेदाभेदः । यत्र तु यावद्धर्मभावित्वं तत्राभेदः । न चैवं व्याघातः प्रत्येकं विशिष्टबुद्धिश्च स्यादिति वाच्यम् । प्रतीतिव्यवहाररूपफलबलेन भेदाभेदे सिद्धे विरोधपरिहाराय प्रत्येकं विशिष्टबुद्धि-प्रतिबन्धाय च कस्यचिद् विशेषस्य कल्पनादिरूपनिर्वाहः कल्पनीय इत्यर्थः ।

## श्रीवेदेशतीर्थ

'सर्ववैलक्षण्याङ्गीकारात्' इतीममंशं व्याख्यातुमाह- अथेति ।। चतुर्विधमित्यादी-त्यादिपदेन 'पञ्चार्थान् गुरवः प्राहुर्विशेषाभाववर्जितान् ।'

'अर्थाः षड्पदार्थाः' इत्यादिप्रसिद्धमतपरिग्रहः । निर्विशेषत्वभङ्गाद्यापत्तेरिति ।। अत्राऽदि-पदेनास्वप्रकाशत्वरूपाचेतनलक्षणयोगित्वं स्वप्रकाशत्वभङ्ग इत्यादिकं गृह्यते । तर्कस्य विपर्यये पर्यवसानं दर्शयति-चेतनाद्युक्तेति ।। प्रमाणादङ्गीक्रियत एवेति मूलावयवमुपपादयति-एवमिति ।। विधान्तरेणेति ।। तथा च तर्कस्य विपर्ययापर्यवसानमिति भावः । अन्तर्भावयिष्यत इति । तथा च यद्युक्तलक्षणं ब्रह्म तत्त्वं स्यात्तर्हि चेतनत्वाद्युक्तविधास्वन्तर्भवेदिति तर्कस्येष्टापादनरूपत्वेनाऽ-भासत्वं स्यादिति भावः । सत्यं भविष्यतीति ।। तथा चात्राप्युक्ततर्कस्य विपर्ययापर्यवसानमिति भावः । निर्वाहः कल्पनीय इति ।। अनवस्थादिदोषपरिहारेण भिन्नत्वाद्यन्यतमप्रकारोपेततया वाच्यम् । तथा चेष्टापत्तिरिति भावः । निर्वाहप्रकारश्चाग्रे लेशतो दर्शयिष्यामः ।

## श्रीराघवेन्द्रतीर्थ

चेतनादिभावानङ्गीकारमात्रेण कथं दुर्घटं तर्केणेत्यतो व्यनक्ति- इह हीत्यादिना ।। वादिवर्गे इत्यर्थः । हीति प्रसिद्ध्यर्थः । शुद्धं जडामिश्रं बुद्धं ज्ञानरूपं मुक्तं बन्धहीनं अखण्डैकरसं जाति-गुणकर्मावयवादिशून्यम् । इत्यादीत्यादिपदेन विशेषसमवायसहिता द्रव्यादयः षडिति वदन्तो ग्राह्याः । ततः किमित्यत आह- यद्युक्तेति ।। नित्यशुद्धेत्यादिनोक्तेत्यर्थः । उक्तविधेति ।। उक्तविधायाः सकाशाद्वैलक्षण्याङ्गीकारादित्यर्थः । तत्तल्लक्षणवत्त्वेति ।। चेतनादि-विधास्वन्तर्भावेऽपि ज्ञानाश्रयत्वविधिप्रत्ययविषयत्वादिचेतनभावाभावादिलक्षणवत्त्वापातेन निर्विशेषत्वभङ्गतत्तद्धर्मनिमित्ततत्तच्छब्दवाच्यत्वाद्यापत्तेरिति भावः ।

एवं चेतनाद्युक्तविधास्वन्तर्भवेदित्युक्तावापाद्यस्यानिष्टत्वं न च ब्रह्मेत्यादिनोपपाद्य विपर्यये पर्यवसानमाह- चेतनाद्युक्तविधेति ।। मूलवाक्यशेषं विवृण्वानः परमुखेन समाधिं शिक्षयित्वा तत्समं विशिष्टाकारदौर्घट्येऽपीत्याह- एवं तर्केणेति ।। पुरुषमतिवैरूप्यजन्मनेति बहुव्रीहिः । वैरूप्यं वैचित्र्यं विरुद्धार्थकत्वं वा । तत इति ।। तर्कस्याऽभासत्वादित्यर्थः । एतदिति ।। प्रमाणसिद्धं ब्रह्मेत्यर्थः ।

इत्यादीत्यादिपदेन सर्वविलक्षणस्वभावं सदेव तत्त्वं भविष्यतीत्यस्य ग्रहः। वक्तव्यमिति पूर्वेणान्वयः । अक्षादिमानत्रयसिद्धविशिष्टाकारान् क्रमेणोदाहरति- दण्डीत्यादिना ।। विशिष्टादीत्यादिपदेन विशेषणतद्भेदादेर्ग्रहः । नोक्तप्रकारेति । विशेषणविशेष्यतत्सम्बन्धेभ्योऽन्यत्वानन्यत्वादि-प्रकारेत्यर्थः । कश्चिन्निर्वाह इति । विशेष्येण सविशेषाभिन्नं विशिष्टमित्यादिरूपेणेति भावः ।

अनङ्गीकुर्वाणाः केचित् तार्किकादयः । तत्तल्लक्षणेति ।। चेतनादिलक्षणेत्यर्थः । पुरुष-मतिवैश्वरूप्यजन्मनेति । पु्रुषमतेः पुरुषबुद्धेः यत् वैश्वरूप्यं१ अनेकरूपत्वं विचित्रत्वं तज्जन्मना विचित्रपुरुषबुद्धिजनितेनेत्यर्थः । विचित्रबुद्धयः पुरुषाः स्वस्वबुद्ध्यनुसारेणानेकधा तर्कयन्तीति भावः । अन्यत् निर्विशेषत्वभङ्गानापादकम् । इत्यादिप्रमाणेति ।। प्रत्यक्षानुमानागमरूपप्रमाण इत्यर्थः । तेषामेव विकल्पपांसूनामेव ।

## गुरुराजीया

सर्ववैलक्षण्याङ्गीकारादित्यंशं योजयितुमाह- अथेति ।। इत्यादीत्यादिपदेन 'एके तु समवायेन सहोक्तानि, रूपविज्ञानवेदनासञ्ज्ञासंस्कारान् वा पञ्च' इत्यादितत्वविवेकोक्त-मतान्तरपरिग्रहः । अन्यथेति ।। चेतनाद्युक्तविधान्तर्भाव इत्यर्थः । निर्विशेषत्वभङ्गाद्यापत्तेः इत्यत्राऽदिपदेन प्रकाशत्वभङ्गादिपरिग्रहः । अचेतनत्वस्याप्रकाशत्वरूपत्वादिति द्रष्टव्यम् । अनन्तर्भूतं च न तत्वमिति ।। अन्तर्भूतत्वस्य तत्वत्वव्यापकत्वादिति भावः । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भावः ।२ उक्तविधास्वनन्तर्भूतस्यातत्वरूपत्वे दृष्टान्तमाह - यथेति ।। प्रमाणेति ।। 'सदेव सोम्येदम्' इत्यादिप्रमाणेत्यर्थः । पुरुषमतीति ।। विश्वरूपमेव वैश्वरूप्यमिति स्वार्थे ष्यञ्प्रत्ययः । विचित्रपुरुषोत्प्रेक्षामूलकेनेत्यर्थः । आभास इति ।। प्रमाणविरुद्धेऽर्थे प्रवर्तमानस्य विपर्ययापर्यवसायित्वादिति भावः । विधान्तरेणेति ।। तथा च कल्प्यमानविधान्तरघटितोक्तविधान्तर्भूतत्वस्यैव१ व्यापकत्वेनोक्तविधान्तर्भूतत्वमात्रस्य तदभावेन तद्व्यावृत्तिसिद्धावपि वस्तुतो व्यापकव्यावृत्त्यसिद्धेर्न तया तद्व्याप्यव्यावृत्तिरिति भावः । अन्तर्भावयिष्यत इति ।। ततश्चोक्तविधास्वन्तर्भावापादने इष्टापत्तिरिति भावः । आभासत्वा-दिति ।। विपर्ययापर्यवसायित्वेनेति शेषः । सत्यं भविष्यतीति ।। तथा च विधान्तरकल्पनायां तद्घटितस्यैव व्यापकत्वप्राप्त्या निर्दिष्टविधान्तर्भूतत्वमात्रस्य व्यापकत्वाभावात् तद्व्यावृत्तावपि न वस्तुतो विधान्तरघटितव्यापकव्यावृत्तिरिति न तया तद्व्याप्यव्यावृत्तिरिति भावः । निर्वाहः कल्पनीय इति ।। तथा च निर्दिष्टविधान्तर्भूतत्वस्यैव व्यापकत्वेऽपि निर्वाहकल्पनया न तद्व्यावृत्तिरिति न तद्व्याप्यव्यावृत्तिरिति भावः ।

## गोविन्दीया

चेतनेति ।। चेतनाचेतनादीनां धर्मस्य परेण ब्रह्मण्यनङ्गीकारादित्यर्थः । इह हीति ।। ब्रह्मणि ते तु तर्कयन्तीति सम्बन्ध इत्यर्थः । इत्यादीति ।। आदिपदेन समवायमादाय पञ्चविधं विशेषमादाय षड्विधम् अभावमादाय, सप्तविधं सङ्गृहीतमित्यर्थः । अन्यथेति ।। वैलक्षण्यानङ्गीकारे इत्यर्थः । आभास इति ।। आभासो भवितुं युक्त इत्यर्थः । तत इति ।। तर्कस्याऽभासत्वादित्यर्थः। विधान्तरेणेति ।। स्वतन्त्रमस्वतन्त्रं

चेति प्रकारान्तरेण ब्रह्मस्वतन्त्रतत्वं भविष्यति । अथवा अचेतनत्वविरोधीत्यादिचेतनादिलक्षणं वाऽन्यत्प्रकल्प्य चेतनादिष्वेवान्तर्भाव इष्यत इत्यर्थः । तथा च न निर्विशेषत्वभङ्ग इति भावः । तथेति ।। यथा ब्रह्मविषये समाधानं वक्तुं शक्यम्, तथा प्रकृतेऽपि विशिष्टविषयेऽपि वक्तुं शक्यत इत्यर्थः । इत्यादीति ।। इत्यादिप्रत्यक्षानुमानागमप्रमाणसिद्धं विशिष्टादि तदुक्तविकल्पपांसुभिस्तदुपलक्षितदुर्घटत्वापादकतर्कैः न शक्यमाच्छादयितुम् । तस्य सत्यत्वं चोपपादयिष्याम इति तावच्छब्दो वक्तीत्यर्थः । तेषामिति ।। तर्काणामित्यर्थः । प्रकारान्तरेणेति ।। भिन्नाभिन्नविलक्षणत्वेन सत्यं भविष्यति विशेषणविशेष्यतत्सम्बन्धेभ्योऽ-न्यदुत्पन्नं विशिष्टमिति व्यवह्रियत इति राद्धान्त इत्यर्थः । एतेष्विति ।। भिन्नत्वादिप्रकारेषु कश्चिन्निर्वाहकः कल्पनीयः । तथा हि- यदि विशिष्टं भिन्नं तर्हि भेदपरम्परयाऽनवस्थादोषदुष्टं स्यादिति प्रसङ्गः निराकृतः । भेदो यथा स्वाश्रयस्य भिन्नत्वव्यवहारहेतुस्तथा विशेषबलात् स्वस्यापीति भेदपरम्पराभावान्नानवस्थेत्यादिनेति ।। यद्यभिन्नं तर्ह्येकशेषं तथा चेदं विशेषणमिदं विशेष्यमिति व्यवहारो न स्यादिति प्रसङ्गस्य परिहारः । अभेदेऽपि भेदव्यवहारहेतुविशेषमादाय तथा वक्तुं शक्यत इति अयावद्द्रव्यभाविविशेषणमादाय भिन्नाभिन्नत्वपक्षोऽपि निर्वाह्य इत्यर्थः ।

## जनार्दनभट्टीया

विधान्तरेण तत्वमिति ।। यथा 'नीलं तमः' इति अबाधितप्रतीत्या अन्धकारस्थद्रव्ये सिद्धे, तस्य गन्धाद्यनाश्रयत्वेन१ पृथिव्यादिबहिर्भावे सति दशमद्रव्यत्वम् अङ्गीकृतम् इति भावः । विधान्तरेणेति ।। तत्वद्वयवादिनं प्रति, त्रिविधमिति त्रैविध्यवादिनं प्रति चतुर्विधत्वेन विधान्तरेणे-त्यर्थः । प्रत्यक्षादिप्रमाणत्रयेणापि विशिष्टसिद्धिमुपपादयति– दण्डीत्यादिना ।।

# जगतो भिन्नमभिन्नं ..

**विशिष्टनिरासकतर्कस्य प्रतिकूलतर्कप्रतिहतिसमर्थनम्**

## श्रीमज्जयतीर्थटीका

एवं विशिष्टादिनिराकरणतर्कस्य विपर्ययापर्यवसानमभिधाय प्रतितर्कपराहतिञ्चाऽह-

# मूल

***जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते ।***

यथा विशिष्टं विशेषणादिभ्यो भिन्नमभिन्नं वेत्यादिविकल्पः परेण कृतः । तथा जगतो भिन्नमभिन्नं भिन्नाभिन्नमुभयविलक्षणं वेत्यादिविकल्पो ब्रह्मण्यपि कर्तुं शक्यते । किमतो न हि विकल्पनमेव दोषः इत्यतः प्रथमपक्षे दोषमाह-

**मूल**

*भिन्नं चेद्भेदादिविशिष्टाच्छुद्धं भिन्नमभिन्नं वेत्याद्यनवस्था ।*

यदि जगतो ब्रह्म भिन्नं स्यात् । तदा भेदेन तत्सम्बन्धेन व्यावर्तकधर्मादिना च विशिष्टं मिथ्या स्यात् । ततश्चोपास्याभावः प्रसज्येत । माभूद्भेदादिविशिष्टमुपास्यं किन्तु शुद्धमेवेति चेत्तर्हि तच्छुद्धमस्माद्भेदादिविशिष्टाद्भिन्नमभिन्नं भिन्नाभिन्नं वेत्यादि विकल्पयामः । भिन्नं चेत्तदपि भेदादिविशिष्टं मिथ्या स्यादिति प्रतिपत्तव्याभावः । अथ पुनः शुद्धं प्रतिपत्तव्यमिति ब्रूयात्तदा पूर्ववदनवस्था स्यात्ततश्च न कदाऽपि ब्रह्मप्रतिपत्तिः । अभेदादिपक्षस्तूत्तरन्यायेन दुष्ट इति न पृथग्दूषितः ।

द्वितीयं दूषयति-

**मूल**

*अभिन्नं चेन्मिथ्यारूपेण जगता ब्रह्मापि मिथ्यैव स्यात् ।*

यदि जगता ब्रह्माभिन्नं स्यात् । तदा जगतो मिथ्यात्वात्तदपि मिथ्यैव प्रसज्येत । यद्यप्यत्र जगदपि सत्यमेव स्यादिति शक्यमापादयितुम् । तथापि तत्प्रसङ्गाननुगुणत्वान्नोक्तम् । ब्रह्मणो मिथ्यात्वापादनं ह्यत्र प्रसक्तम् । तच्च स्फुटीकरिष्यामः ।

तृतीयं निराचष्टे-

**मूल**

*भिन्नाभिन्नं चेद् दोषद्वयमपि ।*

ब्रह्म जगतेत्यनुवर्तते । भिन्नत्वे वैशिष्ट्यापत्तिः । अभिन्नत्वे मिथ्यात्वमिति दोषद्वयम् । अपिशब्दाद्व्याघातश्च । ननु भेदाभेदौ क्वचिदस्माभिरङ्गीक्रियेते । तत्कथमेतत् । सत्यम् । परोक्तरीत्याऽनुवाद इत्यदोषः ।

चतुर्थं निराकरोति-

**मूल**

*उभयविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण एवाऽपतितम् ।*

यदि ब्रह्म जगतो भिन्नाभिन्नविलक्षणमङ्गीक्रियते तदा वक्तव्यं किमयं निषेधसमुच्चयस्तात्त्विक उत नेति । नाऽद्यः । विरोधात् । द्वितीये सत्वेनाङ्गीकृतस्य ब्रह्मण एवानिर्वचनीयत्वमापतितं स्यात् । इदमनेनोक्तं भवति । यदि भेदादिविकल्पानुपपत्त्या विशिष्टादिकमनिर्वचनीयं स्यात् । तदा ब्रह्मापि तथा प्रसज्येत । भेदादिविकल्पानुपपत्तेस्तत्रापि साम्याद् इति ।

## श्रीविजयीन्द्रभिक्षु

भिन्नं चेदित्यंशस्य प्रथमपक्षदूषणत्वमुपपादयति- यदि जगत इति ।। व्यावर्तकेति ।। व्यावर्तकधर्माभावे भेदस्यैवायोगादिति भावः । विशिष्टमिति ।। हेतुगर्भविशेषणम् । इष्टापत्ति-माशङ्क्याऽह- ततश्चेति ।। उपास्याभाव इति ।। ज्ञेयाभाव इत्यर्थः । तथा च ज्ञानान्मोक्ष इति न स्यादिति भावः । भेदादिविशिष्टाच्छुद्धमित्यादिमूलांशोपपादनाय तन्निवर्त्याशङ्कां दर्शयति- मा भूदिति ।। न कदाऽपीति ।। ब्रह्मप्रतिपत्तिरिति शेषः । शुद्धस्य विशिष्टाभिन्नत्वे दूषणानुक्तेर्न्यूनतामाशङ्क्याऽह- अभेदादिपक्षस्त्विति ।। उत्तरन्यायेनेति ।। अभिन्नं चेज्जगत इति भिन्नाभिन्नं चेदित्यादिविकल्पे द्वितीयादिपक्षदूषणन्यायेनेत्यर्थः । तच्चेति ।। ब्रह्मणो मिथ्याज्ञानत्वापादनं चेत्यर्थः । अस्माभिरिति ।। सिद्धान्तिभिरित्यर्थः । निषेधसमुच्चय इति ।। यद्यपि वैलक्षण्यशब्दो न निषेधार्थः । तथाऽपि तदुभयवैलक्षण्यस्य तदुभयतादात्म्याभाव-व्याप्तत्वात्तथोक्तमिति ध्येयम् । विरोधादिति ।। जगद्भिन्नत्वाभिन्नत्वयोः परस्परविरहरूपत्वेनैकत्र तदुभयनिषेधस्य विरुद्धत्वादित्यर्थः ।

ननु भिन्नाभिन्नविलक्षणत्वे नानिर्वचनीयत्वम् । किं तर्हि सदसद्विलक्षणमेवेत्यत आह- इदमनेनेति ।। भेदादिविकल्पानुपपत्त्याऽप्यनिर्वचनीयत्वस्य त्वयैवोक्तत्वाद्ब्रह्मणोऽप्यनिर्वचनीयत्वं दुर्वारमित्यर्थः ।

## श्रीवेदेशतीर्थ

भेदादिविशिष्टादित्यनुवादोपपत्तये विशिष्टस्य तदर्थप्रस्तुतिं दर्शयति- तदा भेदेनेत्यादिना ।। आदिपदार्थमाह- तत्सम्बन्धेनेत्यादिना ।। व्यावर्तकधर्मादिनेत्यत्राऽदिपदेन तत्सम्बन्धपरिग्रहः । विशिष्टमिति हेतुगर्भविशेषणम् । इष्टापत्तिमाशङ्क्याऽह- ततश्चेति ।। एवं भेदादिविशिष्टादित्यनुवाद-लब्धां तदर्थप्रस्तुतिं तदुपपत्तये प्रदर्श्य तद्व्याख्यातुं तन्निवर्त्याकाङ्क्षां दर्शयति- मा भूदिति ।। इत्याद्यनवस्था इति मूलगतादिशब्दार्थमाह- अथ पुनरिति ।। उत्तरन्यायेनेति ।। ब्रह्म जगतो भिन्नमभिन्नं वेत्यादिविकल्पे द्वितीयादिपक्षदूषणपरोत्तरग्रन्थन्यायेनेत्यर्थः । प्रसङ्गेति ।। प्रसङ्गः प्रसक्तिः । प्रकरणमिति यावत् । प्रसङ्गाननुगुणत्वमेव दर्शयति- ब्रह्मण इति ।। तच्चेति ।। मिथ्यात्वापादनं 'अनिर्वनीयत्वं ब्रह्मण एवापतितं' इत्यत्र स्फुटीकरिष्याम इत्यर्थः । एवञ्च सर्वेष्वपि पक्षेषु ब्रह्ममिथ्यात्वापादने प्रकरणस्वारस्यं भवतीति भावः ।

ननूभयविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण एवापतितमित्ययुक्तम् । उभयविलक्षणत्वेनैव निर्वचनादित्यतो नोभयविलक्षणत्वमपि वास्तवं ब्रह्मण्यङ्गीक्रियत इति वक्तुं पृच्छति - किमय-मिति ।। विरोधादिति ।। विधिसमुच्चयवन्निषेधसमुच्चयस्याप्येकत्र विरोधादिति भावः । अनिर्वच-नीयत्वमिति ।। उभयविलक्षणत्वस्य वस्तुतोऽनङ्गीकारादिति भावः । ननु कोऽयं प्रतितर्कः । यत्पराहतिरस्मत्तर्कस्येत्याकाङ्क्षायां वाक्यपञ्चकनिष्पन्नं प्रतितर्कस्वरूपं दर्शयति- इदमनेनेति ।।

## श्रीराघवेन्द्रतीर्थ

इत्यादिविकल्प इति ।। भेदोऽपि किं भेदिभ्यां भिन्नोऽभिन्नो वेत्यादिविकल्प आदि-पदार्थः । व्यावर्तकधर्मादिनेति । तेन विना भेदासिद्धेरिति भावः । विशेषणमादिपदार्थः । को दोष इत्यत आह- ततश्चेति ।। पूर्ववदिति । शुद्धमस्माद्भेदादिविशिष्टाद्भिन्नमभिन्नं वेत्यादि-विकल्पस्य भिन्नं चेद्भेदादिविशिष्टं मिथ्येति प्रतिपत्तव्यब्रह्मणोऽभाव इति दोषस्य च सम्भवात् । तदर्थं तत्रापि शुद्धं ज्ञेयमित्युक्तौ तत्राप्येवमित्यनवस्थेत्यर्थः ।

ननु 'जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते' इति वाक्ये भेदादिविकल्पमुक्त्वा भिन्नं चेदिति वाक्ये प्रथमपक्षे 'तस्य मिथ्यात्वेन ज्ञेयाभाव' इत्युक्तदोषनिरासाय शुद्धं ज्ञेयमित्युक्ते तच्छुद्धं विशिष्टाभिन्नं चेत् पुनर्ज्ञेयाभावः । तत्रापि शुद्धं ज्ञेयमित्युक्तौ तदपि विशिष्टाभिन्नं चेत् पुनर्ज्ञेयाभाव इत्येवं भेदपक्ष एवानवस्थादोष उक्तः। भेदादिविशिष्टाच्छुद्धमभिन्नमिति वा भिन्नाभिन्नमिति वा कैश्चिदुक्तेस्तत्पक्षदोषः कुतो नोक्त इत्यत आह- अभेदादिपक्षस्त्विति ।। भेदादिविशिष्टाच्छुद्ध-मभिन्नं चेन्मिथ्यारूपेण विशिष्टेनाभिन्नं शुद्धं मिथ्या स्यात् । भिन्नाभिन्नं चेद्विशिष्टभिन्नत्वपक्ष-दोषस्य वैशिष्ट्यस्याऽपत्त्या मिथ्यात्वापत्तिः । अभिन्नत्वपक्षदोषस्य मिथ्याविशिष्टाभिन्नत्वप्रयुक्त-मिथ्यात्वस्यापत्तिरित्येवं१ दुष्ट इति भिन्नं चेदित्याद्युक्तवक्ष्यमाणन्यायेन सिद्धमिति शुद्धं विशिष्टादभिन्नं चेन्मिथ्या स्यादित्यादिरूपेण पृथङ् न दूषित इत्यर्थः ।

कथं प्रसङ्गाननुगुणतेत्यत आह- ब्रह्मण इति ।। स्फुटीकरिष्याम इति ।। 'न सत्तन्नासदुच्यते' इत्यादिमूलवाक्यव्याख्यावसाने तदनेन विशिष्टनिराकरणेत्यादिग्रन्थेनेति भावः । २भिन्नादिविशिष्ट-पदार्थस्य मिथ्यात्वोपपादनाय विशेषणादिना भिन्नाभिन्नत्वादिविकल्पपूर्वमनवस्थादितर्कोक्तौ तस्य 'दृष्टस्य वस्तुनः' इत्यादिना ३विपर्ययापर्यवसानमुक्त्वा प्रतितर्कपराहतिं वक्तुं सत्यभूतब्रह्मण्यपि मिथ्यात्वाय तदुक्तभिन्नाभिन्नत्वादितर्कसञ्चारस्यात्र क्रियमाणत्वाद् ब्रह्मणो मिथ्यात्वं प्रसक्तमिति ध्येयम् । क्वचिदस्माभिरिति । अयावद्द्रव्यभाविगुणगुण्यादाविति भावः । परोक्तरीत्येति । विशिष्टं विशेषणादितो भिन्नाभिन्नमिति तृतीये दोषद्वयमिति पूर्वमुक्तत्वादिति भावः ।

दृष्टस्य वस्तुन इत्यादिना उभयविलक्षणत्वं चेत् इत्यन्तेन ग्रन्थेनोक्तं निष्कृष्य दर्शयति- इदमनेनोक्तमिति ।। दृष्टस्य वस्तुन इत्यादिग्रन्थेनेदं वक्ष्यमाणमुक्तं भवतीत्यर्थः । यद्वा न भिन्नाभिन्नविलक्षणत्वमनिर्वचनीयत्वम् । किन्तु सदसद्विलक्षणत्वमेवेत्यतः परोक्तरीत्यैव परस्येद-मापादनमिति भावेनाऽह- इदमनेनेति ।। विशिष्टादेर्जगत इति समानाधिकरणम् । विशिष्ट-निराकरणस्य प्रकृतत्वाद्विशिष्टादेर्जगत इत्युक्तम् । उपास्याभाव इति ।। मुमुक्षुणा मिथ्याभूतस्यानुपास्यत्वादिति भावः । प्रतिपत्तव्यं ज्ञातव्यम्, उपास्यमित्यर्थः । ननु भेदादिविशिष्टाच्छुद्धं ब्रह्म अभिन्नमिति पक्षः कस्मान्न दूषित इत्यत आह- अभेदादीति । ब्रह्म जगता अभिन्नमिति पक्षे यो दोषः कथ्यते मिथ्यारूपजगदभिन्नत्वेन, ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गरूपस्तन्न्यायेन भेदादिविशिष्टाच्छुद्धब्रह्मणोऽभिन्नत्वे भेदादिविशिष्ट-ब्रह्मणो मिथ्यात्वात्तदभिन्नस्य शुद्धब्रह्मणोऽपि मिथ्यात्वं स्यादिति दुष्टत्वान्न पृथग् दूषित इत्यर्थः । शिष्यः शङ्कते- नन्विति ।। गुणगुण्यादाविति शेषः । अयमर्थः । गुणादेर्गुण्यादिना भेदे अङ्गुलीद्वयवद्भेदेनोपलम्भप्रसङ्गः । अभेदे अन्यतरमात्रावशेषः, तच्छब्दयोः

पर्यायत्वापत्तिरिति दोषद्वयमस्माकमपि समानं विरोधश्च समान इति अनुवादः । भिन्नाभिन्नं चेद्दोषद्वयमित्यनुवादः । अस्मन्मते विशेषेण सर्वमुपपद्यते । परेण तु स नाङ्गीकृत इति भावः ।

## गुरुराजीया

भिन्नं चेद्भेदादीत्यादिपदार्थमाह- तत्सम्बन्धेनेत्यादिना ।। मिथ्या स्यादिति ।। त्वया विशिष्टस्य मिथ्यात्वाङ्गीकारादिति भावः । इष्टापत्तिं परिहरति- ततश्चेति ।। उत्तरन्यायेनेति ।। ब्रह्म जगतो भिन्नमभिन्नं वेत्यादिविकल्पे द्वितीयादिपक्षदूषणपरोत्तरग्रन्थन्यायेन भेदादिविशिष्टा-च्छुद्धमभिन्नमिति द्वितीयादिपक्षो निरसनीय इत्यर्थः । प्रसङ्गेति ।। प्रसङ्गः प्रसक्तिः । प्रकरणेत्यर्थः । तदेवोपपादयति - ब्रह्मणो मिथ्यात्वेति ।। स्फुटीकरिष्याम इति ।। अनिर्वचनीयत्वं ब्रह्मण एवाऽपतितमित्यादिनेति शेषः ।

ननु उभयविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण इत्ययुक्तम् । उभयविलक्षणत्वेनैव१ निर्वचनादित्यतो नोभयविलक्षणत्वमपि वास्तवं ब्रह्मण्यङ्गीकृतमिति वक्तुं पृच्छति- किमयमिति ।। विरोधादिति ।। विधिसमुच्चयवन्निषेधसमुच्चयस्यापि एकत्र विरोधादिति भावः । अनिर्वचनीयत्वमिति ।। उभयविलक्षणत्वस्यापि वस्तुतोऽनङ्गीकारादिति भावः । ननु कोऽयं प्रतितर्कः । यत्पराहतिर्विशिष्टादिनिराकरणतर्कस्येत्यतो वाक्यपञ्चकलब्धं प्रतितर्कस्वरूपमुपदर्शयति- इदमनेनेति ।।

## गोविन्दीया

किमत इति ।। अतः विकल्पात् किमित्यर्थः । व्यावर्तकधर्मादिनेति ।। आदिपदेन तत्सम्बन्धो ग्राह्य इत्यर्थः । अभेदादिपक्ष इति ।। ब्रह्मजगद्विषयाभेदादिपक्षस्तूत्तरत्र निवार्यते । तन्न्यायेन विशिष्टशुद्धविषयाभेदादिपक्षोऽपि दुष्ट इति न पृथग् दूषित इत्यर्थः । तच्चेति ।। तच्च ब्रह्मणो मिथ्यात्वापादनमुभयविलक्षणं चेदित्यत्र स्फुटीकरिष्याम इत्यर्थः । नन्विति ।। यस्मादयावद्द्रव्य-भाविधर्ममादाय क्वचित् स्थले भेदाभेदौ अस्माभिरङ्गीक्रियेते तत् तस्मादेतत् व्याघातदूषणं कथमित्यर्थः । विरोधादिति ।। विधिसमुच्चयवन्निषेधसमुच्चयस्यापि विरोधादित्यर्थः । इदमनेनेति ।। अनेन वाक्येनेदमुक्तं भवतीत्यर्थः ।

## जनार्दनभट्टीया

उभयविलक्षणं वेत्यादीति ।। यद्यपि विशिष्टनिरासस्समये प्राग् विकल्पत्रयमेव कृतम् । तथाऽपि उभयविलक्षणं विकल्पनम् ‘उभयविलक्षणं चेद् अनिर्वचनीयत्वं ब्रह्मण एवाऽपतितम्’ इत्युत्तरार्थम् ।

ननु ‘अभिन्नं चेन्मिथ्यारूपेण जगता’ इत्युत्तरवाक्ये जगतो भिन्नम् अभिन्नं वा ? इति पूर्ववाक्यस्याभेदादिनिरासेऽपि ‘भिन्नं चेद् भेदादिविशिष्टात् शुद्धम्’ इत्येतद्वाक्यस्थाभेदादिपक्षो न दूषित इत्यपूर्णता मूलस्येत्यत आह – अभेदादिपक्षस्त्विति ।। भिन्नं चेत् ‘भेदादिविशिष्टात्’ इति वाक्यस्थोऽभेदादिपक्ष इत्यर्थः । उत्तरन्यायेनेति ।। जगदपेक्षया ब्रह्मणो भेदपक्षनिराकरण-न्यायसाम्येनेत्यर्थः

। द्वितीयमिति ।। जगतो भिन्नमिति वाक्यस्थद्वितीयमित्यर्थः । तच्चेति ।। तद् ब्रह्मणो मिथ्यात्वापादनम् उत्तरवाक्यव्याख्यानावसरे 'इदमनेन उक्तं भवति' इत्यादिना स्फुटीकरिष्याम इत्यर्थः । 'ब्रह्मण एव' इति एवकारस्वारस्यमाह – सत्यत्वेनाङ्गीकृतस्येति ।।

## यद्येवमपि..

**प्रसङ्गस्य विपर्यये पर्यवसानम्**

### श्रीमज्जयतीर्थटीका

एवं प्रसङ्गमुक्त्वा विपर्यये पर्यवसानमाह-

## मूल

***यद्येवमपि नानिर्वचनीयत्वं ब्रह्मणस्तर्हि जगतोऽपि न स्यात् ।***

एवं भिन्नत्वादिविकल्पानुपपत्त्या प्रसक्तमपि नानिर्वचनीयत्वं ब्रह्मणोऽङ्गीक्रियते चेत्तर्हि विशिष्टादेर्जगतोऽपि न भवत्यविशेषात् ।

## 'विश्वं सत्यम्' ..

**ब्रह्मजगतोः सत्यत्वे मिथ्यात्वे च श्रुतिसाम्यम्**

### श्रीमज्जयतीर्थटीका

ननु विषमोऽयमुपन्यासः । यावता ब्रह्मणः सत्यतां प्रतिपादयन्ती 'तत्सत्यम्' इत्यादिका श्रुतिः तर्कमाभासयिष्यतीति चेन्न । विशिष्टादेरपि सत्यत्वे श्रुतेरुदाहृतत्वादित्याह-

## मूल

***'विश्वं सत्यम्' इत्यादिवचनमत्राप्युक्तम् ।***

अत्रापि विशिष्टादिजगतः सत्यत्वेऽपि । अथापि स्यात्तर्को हि प्रमाणानामनुग्राहकः । अस्ति च विशिष्टादिनिराकरणतर्कस्यानुग्राह्यं वाचारम्भणमित्यादिप्रमाणं न तु ब्रह्मनिराकरणतर्कस्य । अतो वैषम्यमित्यत आह-

**मूल**

*‘न सत्तन्नासदुच्यते । असद्वा इदमग्र आसीन्नासदासीन्नो सदासीत्तदानीम्’ इत्यादि ब्रह्मणो मिथ्यात्वे प्रमाणमस्ति ।*

‘तदुपन्यस्ततर्कस्यानुग्राह्यं भविष्यति’ इति वाक्यशेषः ।

ननु जगदेव मिथ्या । तत्प्रतियोगिकभेदादिविशिष्टं च । अतः कथं तद्भिन्नमित्यनेन ब्रह्मणः शुद्धत्वहानिरुक्तेति चेन्न । परस्पराश्रयप्रसङ्गात् । वियदादिजगतो विशिष्टस्य मिथ्यात्वसिद्धये साम्प्रतमपि परस्य प्रवर्तमानत्वादिति ।।

## श्रीविजयीन्द्रभिक्षु

ननु प्रतिकूलतर्कपराहतिप्रतिपादनावसरे ‘विश्वं सत्यमित्यादिवचनमत्राप्युक्तमिति’ वाक्यं प्रकृतानुपयुक्तमित्याशङ्क्य तत्सङ्घटनाय तदनुगुणां शङ्कामाह- नन्विति ।। ननु त्वदुक्तब्रह्म-निराकरणात्मकतर्कापेक्षया मदुक्तविशिष्टादिनिराकरणपरतर्क एव प्रबलः । श्रुत्यनुग्राहकत्वात् । अस्ति च तदनुग्राह्या वाचारम्भणमित्यादिश्रुतिरिति शङ्कते- अथापीति ।। शङ्कोत्तरत्वेन मूल-मवतारयति- अत आहेति ।। तत् न सत्तन्नासदिति श्रुतिवाक्यम् । उपन्यस्तेति ।। ब्रह्मानिर्वच-नीयत्वापादकवाद्युपन्यस्तेत्यर्थः । नन्विति ।। सत्यभूतविशेषणादिविशिष्टत्वमेव शुद्धत्वविघातक-मिति भावः । तद्भिन्नमित्यनेनेत्यर्थकोऽनुवादः । विशिष्टं चेति ।। वियदादिजगत्प्रतियोगिक-भेदादिविशिष्टचैतन्यं चेत्यर्थः । परस्परेति ।। विशिष्टस्य वियदादिप्रपञ्चस्य च मिथ्यात्वे सिद्धे ब्रह्मणः शुद्धत्वसिद्धिः । तत्सिद्धौ च तन्निर्वाहाय विशिष्टस्य वियदादिप्रपञ्चस्य च मिथ्यात्व-सिद्धिरिति परस्पराश्रयेत्यर्थः । साम्प्रतमिति ।। अद्यापीत्यर्थः ।

## श्रीवेदेशतीर्थ

शुद्धत्वहानिरिति ।। सत्यभूतमेव विशिष्टादिकं शुद्धत्वविघातकं नारोपितम् । न ह्यारोपितेन नीलिम्ना गगनस्य नीरूपत्वमपगच्छति । तद्वदिति भावः । परस्पराश्रयेति ।। जगतो मिथ्यात्वसिद्धौ तत्प्रतियोगिकभेदादिविशिष्टस्यापि मिथ्यात्वेन ब्रह्मणः शुद्धत्वाहानिः । तदहानौ च भिन्नत्वपक्षे दोषाभावेन प्रतितर्कस्याप्राप्त्या तत्पराहत्यभावेन विशिष्टादिनिराकरणतर्केण विशिष्टादि-जगन्मिथ्यात्वसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः ।। साम्प्रतमपीति ।। अद्यापीत्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

यावतेति ।। यस्मादित्यर्थः । भिन्नत्वपक्षे दोषो नेति शङ्कते- नन्विति ।। परस्परेति ।। विशिष्टस्य वियदादिरूपजगतश्च मिथ्यात्वसिद्धौ ब्रह्मणः शुद्धत्वसिद्धिः । तत्सिद्धौ च तन्निर्वाहाय विशिष्टादेर्मिथ्यात्वसिद्धिरिति परस्पराश्रय इति भावेन विशिष्टादेर्मिथ्यात्वसिद्धिं व्यनक्ति- वियदा-दीति ।। साम्प्रतम् इदानीमित्यर्थः । तदुपन्यस्तेति । तत् इति पदच्छेदः । ब्रह्मणोऽपि मिथ्यात्वे प्रमाणमस्ति तत्प्रमाणं अस्मदुपन्यस्तस्य तर्कस्येत्यर्थः ।। भिन्नमित्यनेनेति ।। भिन्नं चेदिति वाक्येनेत्यर्थः । भिन्नं चेदित्यत्र तदिति

विशेष्यं पूरितम् । तथा च ब्रह्मणो जगत्प्रतियोगिकभेदविशिष्टत्वे शुद्धत्वहानिर्वक्तुं न शक्यते भेदवैशिष्ट्यस्य सत्यत्वे खलु सा स्यात् । न चैवम् । तस्याऽरोपितत्वेन मिथ्यात्वात् । न ह्यारोपितेन नीलिम्ना गगनस्य नीरूपत्वमपैतीति भावः ।

## गुरुराजीया

ननु सत्यप्रतियोगिकभेदादिविशिष्टत्वस्य मिथ्यात्वे प्रयोजकत्वात् सत्यभूतब्रह्म-प्रतियोगिकभेदादिविशिष्टतया जगतो मिथ्यात्वेऽपि, जगतो मिथ्यात्वात् तत्प्रतियोगिक-भेदादिविशिष्टस्य ब्रह्मणः मिथ्याभूतजगत्प्रतियोगिकभेदादिविशिष्टत्वेऽपि सत्यप्रतियोगिकभेदादि-विशिष्टत्वाभावेन मिथ्यात्वाप्राप्तेर्न तस्य शुद्धत्वहानिरिति कथं तत्प्रतिपत्तव्याभाव इति शङ्कते- ननु जगदेवेति ।। परस्पराश्रयप्रसङ्गादित्युक्तमेव प्रपञ्चयति- वियदादीति ।। जगतो मिथ्यात्वसिद्धौ तत्प्रतियोगिकभेदादिविशिष्टस्य ब्रह्मणः उक्तप्रयोजकविरहान्मिथ्यात्वाभावसिद्धिः । तत्सिद्धौ सत्यभूतब्रह्मप्रतियोगिकभेदादिविशिष्टत्वादुक्तप्रयोजकाक्रान्तत्वाज्जगतो मिथ्यात्वसिद्धिरिति परस्पराश्रयत्वप्रकारोऽनेनोक्तो भवतीति भावः ।

## गोविन्दीया

यावतेति ।। यावन्तीत्यर्थः । अथापीति ।। विशिष्टादिजगतः सत्यत्वं निराकुर्वत्तर्क-माभासीकुर्वाणश्रुतेर्विद्यमानत्वेऽपि वैषम्यं स्यादित्यर्थः । तदिति ।। तत् ब्रह्मणः । मिथ्यात्व-प्रतिपादकवेदवचनमित्यर्थः । तद्भिन्नमिति ।। शुद्धं भिन्नमित्यर्थः । तदित्यर्थः शुद्धमिति पदस्यानुवाद इति भावः । शुद्धत्वहानिरिति ।। यथाऽऽरोपितनैल्यमादायाऽकाशस्य नीरूपत्वहानिर्नास्ति, तथाऽऽरोपितभेदादिवैशिष्ट्यमादाय ब्रह्मणः न शुद्धत्वहानिर्भवतीत्यर्थः । परस्पराश्रयप्रसङ्गादिति ।। वियदादिजगतः विशिष्टस्य मिथ्यात्वसिद्धौ ब्रह्मणः शुद्धत्वहानिः सिद्ध्यति । तत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयप्रसङ्गादित्यर्थः । अद्यापि तन्मिथ्यात्वे परस्य यतमानत्वादिति भावः ।

## नारोपन्तीया

ननु जगदेव मिथ्येति । सत्यभूतब्रह्मप्रतियोगिकभेदविशिष्टम् अतः जगदेव मिथ्या । ब्रह्म तु मिथ्याभूतजगत्प्रतियोगिकभेदविशिष्टमेव । अतो न तस्य सत्यताहानिः, मिथ्यात्वापादनं च सङ्गच्छत इति भावः ।

## जनार्दनभट्टीया

'यद्येवमपि' इति वाक्यस्य प्रसङ्गान्तरत्वभ्रान्तिं वारयन् अवतारयति – एवमिति ।। विशिष्टादेरपि सत्यत्व इति ।। 'विश्वं सत्यम्' इति श्रुतेः प्रपञ्चत्वावच्छेदेन सत्यत्वप्रतिपादकत्वात् तदन्तःपातित्वाद् विशिष्टादेरिति भावः । अत्राऽपीत्यस्य मूलस्य प्रकृतब्रह्मपरत्वभ्रान्तिं वारयति – अत्रापीति ।।

## ‘विश्वं सत्यम्’..

**विशिष्टनिराकरणतर्कस्य पञ्चाङ्गवैकल्येनाभासत्वसमर्थनम्**

*‘विश्वं सत्यम्’*

### श्रीमज्जयतीर्थटीका

तदनेन विशिष्टादिनिराकरणतर्कस्य प्रतितर्कपराहतिं प्रतिपादयता जगतो भिन्नमित्यादिना ग्रन्थेन व्याप्तिवैकल्यं च दर्शितम् । अननिर्वचनीयेऽपि ब्रह्मण्यस्य तर्कस्य सञ्चारोपपादनात् । अखण्डं ब्रह्मैव तत्त्वमित्यस्यार्थस्योपपत्तये खल्वयं परेण तर्कोऽवतारितः । तस्य ब्रह्मण्यपि प्रवेशोपपादनेनेष्टाविघातित्वाख्यतर्काङ्गवैकल्यमपि प्रतिपादितम् । इष्टापादनरूपता च यथा-सम्भवमूहनीयेत्यङ्गपञ्चकवैकल्यात्तर्काभासोऽयमिति स्थितम् ।

### श्रीविजयीन्द्रभिक्षु

प्रमाणविरोधोद्भावनेन विपर्यये पर्यवसानाभावसूचनादनेनैव तर्कस्याऽभासत्वसिद्धेः प्रतिकूल-तर्कपराहत्युद्भावनं मृतमारणन्यायेन व्यर्थमित्याशङ्क्य अङ्गान्तरवैकल्यमस्तीति ज्ञापनाय प्रतिकूल-तर्कोक्तिरित्यभिप्रायेणोक्तमर्थमुपसंहरति- तदनेनेति ।। तदित्यव्ययं तस्मादित्यर्थे । तस्मादयं विशिष्टादिनिराकरणतर्कः तर्काभास इति स्थितमित्यन्वयः । अननिर्वचनीयेऽपीति ।। तथा चाप्रयोजकत्वादस्य विशिष्टादिनिराकरणार्थं प्रवृत्तस्य तर्कस्याङ्गभूता व्याप्तिरसिद्धेति भावः । इष्टाविघातित्वरूपतर्काङ्गवैकल्यस्यापि प्रदर्शनाय परस्येष्टं दर्शयति- अखण्डमिति ।। तथा च परोक्तन्यायेनैव ब्रह्मणोऽखण्डत्वभङ्गाद्विशिष्टादिनिराकरणतर्कस्य ब्रह्मविषयत्वोपपादनेनेष्टा-विघातित्वाख्याङ्गान्तरवैकल्यमपि प्रतिपादितमित्यर्थः ।

नन्वेवमपि अनिष्टरूपाङ्गवैकल्यस्य प्रतिकूलतर्कोपन्यासेनाज्ञापनात्कथमङ्गवैकल्यज्ञापकत्व-मित्याशङ्क्य तस्य स्वयमेवोदाहर्तुं शक्यत्वादुपेक्षितमित्याह - इष्टापादनरूपता चेति ।। ऊहनी-येति ।। इतिशब्दः प्रकारार्थः ।

### श्रीवेदेशतीर्थ

अननिर्वचनीयेऽपीति ।। ‘यत्तत्त्वं तद्भिन्नत्वाद्यन्यतमप्रकारोपेतम्’ इति न व्याप्तिः । तत्त्वरूपेऽपि ब्रह्मणि भिन्नत्वाद्यन्यतमप्रकाराभावस्योपपादितत्वादिति भावः । अप्रयोजकत्वान्न तर्काङ्गभूतव्याप्तिरित्यनेनाऽहेति कश्चित् । इष्टाविघातित्वाख्यतर्काङ्गान्तरवैकल्यस्यापि प्रदर्शनाय परस्येष्टं दर्शयति- अखण्डमिति ।। इत्यस्येति ।। विशिष्टादेः सत्यत्वे ब्रह्मैव तत्त्वमित्यस्यानुप-पत्तेस्तन्मिथ्यात्वसाधकतर्कस्योक्तप्रतिपत्तिजनकत्वमिति भावः । यथासम्भवमिति ।। यदि विशिष्टादिकं तत्त्वं स्यात्तर्हि भेदाद्यन्यतमप्रकारोपेतं स्यादित्यापादने इष्टापत्तिः । तथा हि विशिष्टं क्वचिद्विशेषणेन दण्डादिना भिन्नं क्वचिद् ब्रह्मस्वरूपानन्दादिना विशेषणेन चाभिन्नम् ।

विशेष्येण तु खण्डितत्वे भिन्नाभिन्नम् । यावद्वस्तुभावित्वे चानन्दादिविशिष्टं विशेष्येण ब्रह्मणाऽत्यन्ता-भिन्नम् । विशेषणमपि विशेष्येण क्वचिद्भिन्नम् । यथा दण्डादिकम् । क्वचिदत्यन्ताभिन्नम् । यथा आनन्दादिकम् । क्वचिद्भिन्नाभिन्नम् । यथा फलश्यामतादिकम् । भेदस्तु धर्मिस्वरूपभूत एव । अत्र सर्वत्रोक्तदोषास्तु स्वव्याहतिकरा उपेक्ष्या एव । विशेषबलेन भेदकार्यादिकमुपपद्यते । तस्य भेदकार्यनिर्वाहकत्वादिना धर्मिग्राहकप्रमाणसिद्धत्वादित्यादिकमूहनीयमिति । तदिदमुक्तम् । यथा-सम्भवमिति ।।

## द्वैतद्युमणि

इष्टाविधातित्वरूपेति ।। उक्ततर्कस्य सत्तर्कत्व एतज्जातीयतर्केण स्वाभिमतस्य ब्रह्मानिर्वनीयत्वस्य विघातापत्त्येष्टाविघातित्वरूपतर्काङ्गस्य वैकल्यमित्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

प्रतितर्कपराहत्युक्त्याऽन्यदपि लब्धमित्युपपादयन् दृष्टस्येत्यादिनोक्तमुपसंहरति- तदने-नेति ।। तत् तस्मात् । अङ्गपञ्चकवैकल्यादित्यादिनाऽन्वयः । अनेन इत्यस्य विवरणमित्यादिना ग्रन्थेनेति । कथमित्यतो व्यनक्ति- अननिर्वचनीयेऽपीति ।। साध्याभावोपपादनायैतदुक्तिः । तर्कस्येति ।। विकल्पपूर्वमुक्तानवस्थादिरूपतर्कस्येति वा भिन्नत्वादिविकल्पसहत्वरूपतर्कस्येति वाऽर्थः । इष्टाविघातकत्वरूपं यदङ्गान्तरं तदपि नेति परस्येष्टोक्तिपूर्वमाह-अखण्डं ब्रह्मैवेत्यादि ।। प्रतिपादितमिति ।। इत्यादिना ग्रन्थेनेत्यनुषङ्गः । यथासम्भवमिति ।। भेदपक्षे याऽनवस्थोक्ता सेष्टैव । भेदानभ्युपगमात् । अभेदपक्षे भेदाभेदपक्षे चोक्तदोषावपीष्टावेव । पक्षद्वयेऽपि सविशेषत्वा-भ्युपगमेन निर्विशेषाभेदादिपक्षे प्रागुक्तदोषस्याङ्गीकारादित्यूहनीयेत्यर्थः । इष्टेति ।। इष्टस्य ब्रह्माखण्डत्वसत्यत्वादेरविघातित्वम् अनुकूलत्वमित्यर्थः ।

## गुरुराजीया

कथं तत्प्रदर्शितमित्यतः ब्रह्मणस्तर्कबाध्यत्वेऽप्यनिर्वचनीयत्वाभावेन 'यत्तर्कबाध्यं तदनिर्वचनीयमिति' तर्कमूलव्याप्त्यसिद्धेरिति१ भावेनाऽऽह- अननिर्वचनीयेऽपीति ।। ओति ।। परस्याननुकूलत्वरूपाङ्गेत्यर्थः । तस्य चेष्टविघातकत्वरूपत्वेन प्रकृततर्कस्य ब्रह्मण्यपि प्रवृत्त्युप-पादनेन इष्टविघातकत्वसमर्थनादिति भावः । विशिष्टादिनिराकरणतर्के२ इष्टापादनतां चाऽह- इष्टापादनता चेति ।। ब्रह्मण इव विशिष्टादेर्जगतोऽपि प्रमाणप्रमितत्वस्य विशिष्टादेरिव च ब्रह्मणोऽपि तर्कबाध्यत्वेनानिर्वचनीयत्वापादनस्य च सूपपादत्वेन३ उभयोरपि साम्याद्यथा परेण सत्तया प्रमाणेनावगतस्य ब्रह्मणस्तद्विरुद्धानिर्वचनीयत्वं परित्यज्य तर्कबाध्यत्वप्रयुक्तसत्यत्वा-विरुद्धनाममात्रभूतमनिर्वचनीयत्वम् अङ्गीकृत्य तर्कस्येष्टापादनता उपपादनीया । तथा जगतो ब्रह्ममात्रसाम्यमभिलषता मया विशिष्टादेर्जगतः प्रमाणसिद्धसत्यत्वविरुद्धानिर्वचनीयताया अङ्गीकर्तुमशक्यत्वेऽपि तां परित्यज्य तदविरुद्धतर्कबाध्यत्वप्रयुक्तनाममात्रभूतानिर्वचनीयताया अङ्गीकर्तुं शक्यत्वेन तर्कस्येष्टापादनत्वं चेत्यर्थः । एतदेवाभिप्रेत्य यथासम्भवमूहनीयेति४ ग्रन्थकृतोक्तम् । अन्यथा

इष्टापादनता चेत्येतावता पूर्तेस्तावन्मात्रस्य वक्तव्यतया यथासम्भवमूहनीयेति५ इत्यस्याऽनर्थक्यापात इत्यवधेयम् ।

## गोविन्दीया

अनिर्वचनीयेऽपीति ।। विशिष्टादिजगतोऽनिर्वचनीयत्वमङ्गीकृत्य तत्सत्यत्वनिराकरण-तर्कोऽवतारितः । तादृशे दृष्टान्ते तर्कस्य व्याप्तिप्रदर्शनमुचितम्, तद्विहायाननिर्वचनीयेऽपि सत्यभूतेऽपि ब्रह्मणि तर्कस्यास्य सञ्चारोपपादानात् । व्याप्तिवैकल्यं च दर्शितमित्यर्थः । यथा खलु आपादकस्य सत्त्वे आपाद्यस्यासत्त्वे व्याप्तिवैकल्यं तथाऽसम्मतस्थलेऽपि उभयोस्सत्त्वेऽपीति भावः । इष्टाविघातित्वाख्यतर्काङ्गवैकल्यमिति । प्रतितर्कप्रतिघातित्वमित्यर्थः । इष्टापादनरूपता चेति ।। अनिष्टापादनं तर्काङ्गमिष्टापादनेन चाङ्गवैकल्यमित्यर्थः । प्रमाणविरुद्धार्थेऽनिर्वचनीये विपर्यये पर्यवसानात् । तदङ्गवैकल्यं परस्याननुकूलत्वं हि तर्काङ्गं परेण विशिष्टनिराकरणे यस्तर्कोऽवतारितः, तमेव तर्कमादाय ब्रह्मणः सत्यत्वनिराकरणं च कृतमतः परस्यानुकूलत्वादेव तदङ्गवैकल्यमित्यङ्गपञ्चकवैकल्यमूहनीयमिति भावः ।

## नारोपन्तीया

इष्टाविघातित्वाख्यतर्काङ्गवैकल्यमिति ।। जगदेव मिथ्या ब्रह्म तु सत्यमिति परस्येष्टम् । ब्रह्मण्यपि यदा तर्कः संवादितः तदा परेष्टविघात इत्यर्थः । १इष्टापादनरूपस्येति ।। ब्रह्मसमानयोगक्षेमस्य नाममात्रेण मिथ्यात्वस्य सिद्धान्तिनामपीष्टत्वादिति भावः ।

## जनार्दनभट्टीया

व्याप्तिवैकल्यं च दर्शितमिति ।। विपर्ययापर्यवसानं तु सर्ववैलक्षण्याङ्गीकाराद् दुर्घटमपीति पूर्ववाक्य एवोक्तमिति भावः । इष्टापादनरूपतेति ।।

ननु तत्ववादिभिः अस्माभिः घटानित्यत्ववत् विशिष्टादिनिराकरणतर्के आपाद्यस्य अनवस्थैकतर-परिशेषादेः वस्तुतोऽनङ्गीकारेण अनिष्टत्वात् कथमिष्टापादनरूपतेत्युक्तम्? इत्यत आह– यथा सम्भवमिति ।। अयं भावः – विशिष्टनिरासकतर्के यदापाद्यम् अनवस्थादि तत् घटानित्यत्ववत् प्रामाणिकत्वेनेष्टं तत्ववादिनां किन्तु तादृशतर्केण यदापादकं भिन्नत्वादि तदेव आपादकीकृत्य, ब्रह्म पक्षीकृत्य तदापाद्यस्यैव अनवस्थादेरस्माभिरापादयितुं शक्यत्वेन परानिष्टमेव अस्माकमिष्टमेवेति । अत एव इष्टापादनता यथासम्भवमिति वक्तव्ये इष्टापादनरूपतेति यथासम्भवमिति चोक्तम् । अङ्गपञ्चकेति ।। 'सर्ववैलक्षण्याङ्गीकारात्' इति वाक्ये विपर्ययापर्यवसानस्य उक्तत्वात् 'जगतो भिन्नम्' इत्यादिना अङ्गचतुष्टयवैकल्यस्य प्रतिपादनात् मिलित्वा अङ्गपञ्चकवैकल्यमित्यर्थः ।

## न हि दृष्टेर्बलवत्किञ्चित्प्रमाणम् ..

**तर्कस्य प्रमाणदृष्टबाधनासामर्थ्ये वास्तविकनिमित्तप्रदर्शनम्**

## श्रीमज्जयतीर्थटीका

तर्कः प्रमाणदृष्टार्थबाधनस्य नेष्टे कुत इति पृष्टवतः प्रतिवादिनो दत्तमुत्तरम् । सुहृद्भावेन पृच्छन्तं प्रत्याह -

## मूल

***न हि दृष्टेर्बलवत्किञ्चित्प्रमाणम् ।***

बाधकेन हि बलवता भवितव्यम् । विरोधमात्रेण बाधकत्वे वैपरीत्यस्यापि प्रसङ्गात् । न हि विशिष्टादिजगद्विषयप्रत्यक्षादिदृष्टेः सकाशात्तर्कस्य प्राबल्यमस्ति । येनासौ तद्बाधकः स्यादिति ।

## श्रीविजयीन्द्रभिक्षु

'न हि दृष्टेर्बलवत्किञ्चित्प्रमाणम्' इत्यनेन प्रमाणान्तरस्य तर्कबाधकता निरस्यते । इदं तु परं प्रति प्रमाणदृष्टार्थे तर्कबाधकतानिरासेन गतार्थमित्याशङ्क्यावतारयति- तर्क इति ।। अनेन वाक्येन प्रत्यक्षं प्रति प्रमाणान्तरस्य बाधकता निरस्यत इत्युक्तम् । तत्कथमप्रतीतेरित्याशङ्क्योप-पादयति- बाधकेनेति ।। यद्यस्य बाधकं तेन तदपेक्षया बलवता भवितव्यम् । विरोधिता च तथा यद्यस्य विरोधित्वे सति यदपेक्षया बलवत्तरस्य बाधकमिति नियमः । न तु विरोधिमात्रं बलवन्मात्रं वा । दुर्बलेनैव प्रबलस्य अविरुद्धेन बलवता च दुर्बलस्य बाधापत्तेः । न चैवम् । तथाऽनुपलब्धेः। तथा च विशिष्टादिजगद्विषयप्रत्यक्षादिप्रमाणजन्यज्ञानापेक्षया तन्निरासकतर्कस्य प्राबल्याभावाद् विरोधित्वेऽपि तेन तर्केण न तद्बाध इत्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

दत्तमुत्तरमिति ।। अङ्गपञ्चकवैकल्यादाभासोऽयं तर्क इत्युत्तरं दत्तमित्यर्थः । विशिष्टा-दीति ।। प्रकृष्टप्रकाशश्चन्द्रः, सोऽयं देवदत्तः, दण्डी चैत्रः, पर्वतोऽग्निमान् इत्यादौ प्रकृष्ट-प्रकाशत्वादिविशिष्टादिजगद्विषयप्रत्यक्षानुमानादिज्ञानस्येत्यर्थः ।दत्तमुत्तरमिति ।। सर्ववैलक्षण्याङ्गीकारादित्यादिना ग्रन्थेनोक्तमुत्तरमित्यर्थः ।

## गुरुराजीया

बाधनस्येति ।। 'अधीगर्थदयेषां कर्मणि'२ इति षष्ठी ।।

## गोविन्दीया

दत्तमुत्तरमिति ।। आक्षेपेण पृष्टवतः तर्कस्याभासत्वोपपादनेन दत्तमुत्तरमित्यर्थः । वैपरीत्यस्यापीति ।। विरोधमात्रस्य तत्रापि सत्त्वाद् वैपरीत्येन प्रत्यक्षस्यापि तर्कं प्रति बाधकत्वप्रसङ्गादित्यर्थः । येनासाविति ।। येन निमित्तेनासौ तर्कः प्रत्यक्षबाधकं स्यादित्यर्थः ।

### जनार्दनभट्टीया

'न हि दृष्टेः' इत्युत्तरवाक्यस्य 'दृष्टस्य वस्तुनः' इति पूर्ववाक्येन पौनरुक्त्यम् आशङ्क्य प्रकृष्टव्यवस्थाया शङ्कां परिहरति – तर्क इत्यादिना ।। 'नहि' इति वाक्यलब्धं बाधकतावच्छेदकं दर्शयति – वैपरीत्यस्यापीति ।। इदं रजतमिति भ्रमस्यापि नेदं रजतमिति प्रमितिबाधकत्वप्रसङ्गात् इत्यर्थः । 'दृष्टेः' इत्यस्य षष्ठीत्वप्रतीतिं३ वारयन् वाक्यस्य प्रकृतोपयोगमाह – नहीत्यादिना ।।

## न हि युक्तिपराजितोऽपि ..

**दृष्टेस्तर्कस्य प्राबल्याभावसमर्थनम्**

### श्रीमज्जयतीर्थटीका

कुतो न तर्को दृष्टेर्बलवानित्यत आह-

## मूल

***न हि युक्तिपराजितोऽपि क्षुधितो नान्नमत्ति ।***

यदा हि देशविशेषस्थेन पुरुषेणान्ने दृष्टे देशान्तरस्थोऽन्यस्तु स्वानुभूतान्नरसादिकं तत्रानुप-लभमानो यदीदमन्नं स्यात्तदा(सं)प्रतिपन्नरसाद्युपपन्नं स्यात्, न चैवमतो नान्नमेतदिति यदि तर्कयेत्तदा कथम् । यदि तर्को दृष्टेरपि बलवान् स्यात् । तदाऽयमपि तर्को बलवत्त्वादन्नदृष्टिं बाधेत । ततश्च दृष्टान्नोऽपि तर्केणानन्नत्वं प्रतिपन्नो दृष्टिमनादृत्य नाद्यात् । न चैतदस्ति । तेन ज्ञायते न तर्को दृष्टेर्बलवानिति । अत्र युक्तिपराजित इति गुडजिह्विकैव । न तु पराजित एव । पराजितत्वं हि तद्विषयत्वाभ्युपगमः । सति च तस्मिन्न हि नात्तीति न स्यात् । उपादीयमानं च तत्क्षुन्निवृत्त्याद्यर्थक्रियाक्षमं च न स्यादित्यतिप्रसङ्गान्तरसूचनाय क्षुधित इत्युक्तम् ।

### श्रीविजयीन्द्रभिक्षु

अस्तूक्तरीत्या बाधकत्वे विरोधित्वे सति बलवत्त्वं तन्त्रम् । तथाऽपि दृष्ट्यपेक्षया तर्कः किमिति बलवान्न । तस्य प्रमाणानुग्राहकत्वेन प्राबल्यावश्यम्भावात् इति पृच्छति- कुत इति ।। तर्कस्य दृष्ट्यपेक्षया बलवत्त्वं कुतो नेति पृष्टवन्तं प्रति युक्तिपराजितस्य क्षुधितस्यान्नाऽऽदान-प्रतिपादनमसङ्गतमित्याशङ्क्य तर्कस्य बलराहित्यप्रतिपादनोपयोगिकारणप्रतिपादनपरतया व्याचष्टे- यदा हीति ।। देशविशेषस्थेन इति पुरुषाविशेषणं उभयोरप्येकदेशस्थत्वे सम्प्रतिपन्न-विषयत्वेन विवादाभावप्रसङ्गात्तत्सिद्ध्यर्थं

विजातीयरसोपेतान्नभोक्तृत्वज्ञापनाय । तदा कथमिति ।। अन्नभक्षणे प्रवर्तेतेति शेषः । तत्कुत इत्यत आह- यदीति ।। बाध एवेत्यत आह-ततश्चेति ।। दृष्टिमनादृत्येति ।। दृष्टिं बाधितार्थत्वेन निश्चित्य क्षुन्निवृत्त्यर्थं तददनविमुखः स्यादित्यर्थः ।

तत्र स्यादित्यत्रेष्टापत्तिमाशङ्क्याऽह- न चैतदस्तीति ।। तथा च तर्कस्य प्रमाणानुग्राहकत्वेऽपि कार्यमेव तस्य दृष्ट्यपेक्षया प्राबल्याभावज्ञापकमित्याह- तेनेति ।। ननु तर्को यदि दुर्बलः कथं तर्ह्युच्यते युक्तिपराजित इति तत्राऽह- अत्रेति ।। न हीति वाक्य इत्यर्थः । तद्विषयेति ।। युक्तेर्यो विषयः अनन्नत्वं तदभ्युपगम इत्यर्थः । गुडजिह्विकेत्यत्र ज्ञापकमाह- सति चेति ।। तर्कविषयी-भूतानन्नत्वाभ्युपगमे च सतीत्यर्थः । न हि युक्तिपराजित इत्यनेनैव तर्कस्य दौर्बल्यप्रतिपादनात् क्षुधित इत्यधिकमित्याशङ्क्य ‘ननु प्रत्यक्षं तद्बाधितमेवास्तु । न च प्रवृत्त्यनुपपत्तिः । रागौत्कट्यात् तदुपपत्तेः’ इत्याशङ्कानिरासकातिप्रसङ्गान्तरसूचकत्वान्नाऽधिक्यमित्याह- उपादीयमानं चेति ।। तत् प्रत्यक्षदृष्टमन्नम् ।

## श्रीवेदेशतीर्थ

तदा कथमिति ।। तर्को दृष्टेर्बलवानिति शेषः । ननु का कथन्ता । तर्को दृष्टेर्बलवानेवेति ब्रूम इत्याशङ्कायां ‘न हि युक्तिपराजितोऽपि’ इत्यादिमूलोक्तविपर्ययपर्यवसानलब्धतर्कस्वरूपं दर्शयति- यदीत्यादिना ।। नचैतदस्तीति ।। न हि युक्तिपराजितोऽपि क्षुधितो नान्नमत्ती-त्यस्तीत्यर्थः । ननु युक्तेर्दौर्बल्ये कथं तत्पराजितत्वं युक्तिपराजित इत्यनेनोच्यत इत्यत आह- अत्रेति ।। ननु क्षुधितपदं व्यर्थमित्याशङ्कायां रागातिरेकाद्भ्रमसंस्काराद्वाऽदने प्रवृत्तिरित्याशङ्का-निवर्तकतर्कान्तरसूचकत्वान्न व्यर्थमित्याह- उपादीयमानं चेति ।।

## श्रीराघवेन्द्रतीर्थ

प्रतिपन्न इति । मन्यमान इत्यर्थः । नाद्यादिति ।। न भक्षयेदित्यर्थः । न चैतदस्तीति ।। नाद्यादित्येतन्नास्तीति विपर्यये पर्यवसानम् । ननु तर्को दुर्बलः तत्कथं युक्तिपराजित इत्युक्तिरित्यत आह- अत्र युक्तिपराजित इति ।। गुडयुक्ता जिह्वा गुडजिह्विका । धात्वर्थे वुन् वक्तव्य इति वुनीकादेशे टापि सति रूपम् । बालस्य कट्वाद्यौषधदानाय मुखं व्यादातुं गुडे जिह्वायां दत्ते तात्कालिकसन्तोषो बालस्य यथा जायते । तथा तर्कप्राबल्यवादिनः किञ्चित्सन्तोषाय पराजितमित्युक्तमित्यर्थः ।

कुत एवम् । मुख्यपराजय एवास्त्वित्यत आह- पराजितत्वं हीति ।। तद्विषयाभ्युपगमः तर्क-विषयानन्नत्वाभ्युपगमः । सोऽप्यस्त्वित्यत आह- सति च तस्मिन्निति ।। अनन्नत्वाभ्युपगमे सति न हि नान्नमत्तीति मूलकृदुक्तं विपर्यये पर्यवसानं न स्यादित्याह- न हि नात्तीति ।। न स्यादिति ।। नास्त्येवेति स्यादित्यर्थः । तदिति । अन्नम् । अतिप्रसङ्गान्तरेति ।। क्षुन्निवृत्तितज्जन्यदुःखाभाव-सुखानुभवमुखप्रसादादि न स्यादित्यतिप्रसङ्गान्तरेत्यर्थः । अन्ने यावनालान्ने । ननु युक्तेर्दौर्बल्ये कथं तत्पराजितत्वोक्तिरित्यत आह- अत्रेति ।। गुडेति ।। औषधदाता भिषक् आदौ जिह्वायां गुडं स्थापयति सोऽयं

गुडजिह्विकान्यायस्तद्वदित्यर्थः। तद्विषयेति ।। तर्कविषयानन्नत्वाभ्युपगम इत्यर्थः । सति चेति । अनन्नत्वेऽङ्गीकृते सतीत्यर्थः । न हीति ।। अन्नं नात्तीति न हि, अत्तीति यावत् । 'न स्यात्' तथा च नाद्यादित्यर्थः ।

## गुरुराजीया

तदा कथमित्युक्तस्यैवाभिप्रायमाह- यदीति ।। इष्टापत्तिं परिहरति- न चैतदस्तीति ।। युक्तिपराजितोऽपि क्षुधितो नान्नमत्तीति न चास्तीत्यर्थः । ननु युक्तेर्दृष्ट्यपेक्षया दौर्बल्येन तया पराजितत्वाभावात् कथं युक्तिपराजित इति तत्पराजितत्वोक्तिरित्यत आह- अत्रेति ।। ननु च न हि युक्तिपराजितोऽपि नान्नमत्तीत्येतावतैव विवक्षितप्रसङ्गाभिधानसिद्धेः क्षुधित इत्यनर्थकमित्यत आह- उपादीयमानं चेति ।। अर्थक्रियाक्षमं न स्यादिति ।। अन्यथा वस्तुतोऽनन्नस्य मृत्तिकादेरपि अन्नोचितार्थक्रियाक्षमत्वप्रसङ्गादिति भावः ।

## गोविन्दीया

तदा कथमिति ।। तदा तर्कः प्रबलवानेव किं नेत्यर्थः । अयमपीति ।। अनन्नत्वतर्क इत्यर्थः । न चैतदस्तीति ।। अन्नं नात्तीत्येतन्नास्ति किन्त्वत्त्येवेत्यर्थः । अत्रेति ।। गुडस्पृष्ट-जिह्विकावदेव युक्त्या पराजितः, अन्नत्वाभ्युपगमात् । न तु सर्वात्मना पराजित एवेत्यर्थः । तद्विषयत्वभ्युपगम इति ।। तर्कविषयानन्नत्वाङ्गीकार इत्यर्थः । सतीति ।। तस्मिन् साक्षात् पराजितत्वे सति मूलवाक्येन हि नात्तीति शब्दप्रयोगो न स्यादित्यर्थः । प्रसङ्गान्तरेति ।। तर्कान्तरसुवचनायेत्यर्थः ।

## जनार्दनभट्टीया

देशान्तरस्थोऽन्य इति ।। नारिकेलद्वीपवासीत्यर्थः । प्रतिपन्नरसादीति१ ।। स्वानुभूत-निर्हारि२रसादीत्यर्थः । तद्विषयाभ्युपगम इति ।। तर्केण आपादनीयानन्नत्वाभ्युपगम इत्यर्थः । अतिप्रसङ्गान्तरसूचनायेति ।। अतिप्रसङ्गान्तरसूचनस्य उपयोगं स्वयमेव वक्ष्यति ।

## बलवद्दृष्ट्यबाधे..

**प्रत्यक्षाभासस्यापि तर्कबाध्यत्वाभावसमर्थनम्**

## श्रीमज्जयतीर्थटीका

ननु यदा वस्तुतोऽनन्ने प्रत्यक्षेणान्नबुद्धिर्जायते । तदाऽस्त्येवोक्ततर्केण बाधः, परित्याग-दर्शनात् । तत्कथमेतदित्यत आह-

## मूल

*बलवद्दृष्ट्यबाधे ।*

पूर्वेणान्वयः । यदा परित्यागः तदा बलवदनन्नत्वदृष्ट्याऽन्नत्वदृष्टेर्बाधे सत्येव । न तु केवल-तर्केण । अन्यथाऽन्यत्रापि तत्प्रसङ्गादिति ।

## श्रीविजयीन्द्रभिक्षु

बलवद्दृष्ट्यबाध इति मूलस्य तर्कदौर्बल्यप्रतिपादनपरत्वाभावादानर्थक्यमाशङ्क्य तन्निवर्त्याशङ्कामाह- नन्विति ।।

## श्रीवेदेशतीर्थ

अन्यथेति ।। केवलतर्केण बाधे अन्नेऽन्नत्वदृष्टावपि तर्कबाधप्रसङ्गादित्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

प्रत्यक्षाभासे तर्कबाधो दृष्ट इत्याशङ्कते- नन्विति ।। पूर्वेणेति ।। बलवद्दृष्ट्या बाधाभावे सति दृष्टान्नेतरतर्केणानन्नत्वज्ञाने सत्यपि नान्नमत्तीति न हीति योजनेति भावः । परोक्तस्थलेऽपि बलवद्विपरीतदृष्टिबाधो न तर्केणेति भावेनाऽह - यदेति ।। दृष्टस्य परित्याग इत्यर्थः । अन्यत्रा-पीति ।। बलवद्दृष्ट्यबाधस्थलेऽपीत्यर्थः ।

## गुरुराजीया

अन्यथेति ।। केवलतर्केणैवान्नदृष्टेर्बाधे वस्तुतोऽन्नेऽन्नत्वदृष्टेरपि तर्कबाधितत्वात् तत्परित्यागप्रसङ्गादिति भावः । अनन्ने कार्पासबीजादौ । पूर्वेणान्वय इति ।। बलवद्दृष्ट्यबाधे सति केवलं युक्तिपराजितोऽपि नान्नमत्तीति न हि अन्नमत्त्येव स्वीकरोत्येवेत्यर्थः । यदेति ।। यदा तु अनन्ने अन्नत्वप्रत्यक्षस्य तर्कबाधे सति परित्यागस्तदा तन्मूलभूतबलवत्प्रत्यक्षबाधे सत्येव न केवल-तर्कबाधेनेत्याशयः । अन्यथेति केवलतर्केण चेत्परित्याग इत्यर्थः । अन्यत्रापीति ।। वस्तुतोऽन्नेऽपि यदीदमन्नं स्यात्तदा परिचितरसाद्युपेतं स्यान्न चेदं तथा तस्मान्नेदमन्नमिति तर्कबाधेन परित्यागप्रसङ्गादित्यर्थः ।

## गोविन्दीया

परित्यागेति ।। अन्नत्वाभावेनानन्नस्य परित्यागदर्शनादित्यर्थः । एतदिति ।। तर्केण प्रत्यक्षस्य बाधो नास्तीति यदुक्तं तदेतत् कथमुक्तमित्यर्थः । पूर्वेणान्वय इति ।। बलवद्दृष्ट्या बलवत्प्रत्यक्षेण बाधे सत्येव युक्तिपराजितोऽपि क्षुधितोऽन्नं नात्तीति न हि, अत्त्येवेत्यर्थः । नतु इति ।। प्रत्यक्षासहकृततर्केणेत्यर्थः । अन्यथेति ।। केवलतर्केण प्रत्यक्षस्य बाधोऽङ्गी-क्रियमाणेऽन्यत्राप्यबाधितान्नेऽपि तर्केण बाधप्रसङ्गादित्यर्थः ।

## जनार्दनभट्टीया

ननु बलवद्दृष्टस्थले१ तर्केण प्रत्यक्षबाधाभावेऽपि प्रत्यक्षबाधस्थले तर्केणापि बाधोऽस्तु । एवञ्च ‘दृष्टस्य वस्तुनः बलवद्दृष्टिं विना’ इति पूर्वग्रन्थानुपपत्तिरित्यत आह – यदेत्यादिना ।। नतु केवलतर्केणेति ।। तथा च ‘दृष्टस्य वस्तुनः’ इति प्रत्यक्षस्य केवलतर्काबाधत्वपरमिति भावः । अन्य-त्रेति ।। २अन्नप्रमितिस्थलेऽपीत्यर्थः ।

## न चान्नत्वे दुर्घटे ..

**रागातिरेकेणापि बाधितेऽर्थे प्रवृत्त्यभावसमर्थनम्**

### श्रीमज्जयतीर्थटीका

ननु प्रत्यक्षेण दृष्टमन्नं तर्केण बाध्यत एवातो नायं प्रसङ्गः । ननूक्तं तर्हि नाद्यादिति । मैवम् । बाधितेऽप्यर्थे रागातिरेकेण प्रवृत्तिसम्भवादित्यत आह-

## मूल

***न चान्नत्वे दुर्घटे तस्यानन्नत्वं भवति ।***

यद्यन्नत्वं तस्य बाधितं स्यात्तदा परमार्थतोऽनन्नत्वं स्यात् । रजतत्वे बाधिते सत्यरजतत्व-पारमार्थ्यवत् । न त्वेवम् । तथा सति नाद्यादित्युक्तम् । न हि रजते रागातिरेकवानपि निवृत्ते भ्रमे पुनस्तत्र प्रवर्तते । यदि पुनरुत्पन्नेऽपि बाधे रागातिरेकात् भ्रमसंस्कारात्(द्वा) प्रवृत्ति-रित्यभिप्रायः । तथाप्यर्थक्रिया न स्यादिति । ननूक्तमेवैतत्क्षुधित इति । सत्यम् । तस्यैव प्रपञ्चोऽयमित्यदोषः । यदानन्नमन्नत्वेन मन्यते तदा तर्कबाधितं भवत्येवानन्नमित्यत आह-

**मूल**

***दृष्ट्यबाधितदृष्टस्य***

पूर्वेणैव सम्बन्धः । तात्पर्यं पूर्ववत् ।

### श्रीविजयीन्द्रभिक्षु

शङ्कोत्तरत्वेन मूलमवतार्य तस्य च ‘अन्नत्वे बाधितेऽनन्नत्वं भवति’ इत्यप्रतीते-रयुक्तत्वमाशङ्क्य ‘न चान्नत्वे दुर्घटे’ इत्यस्यानन्तरं परमार्थतोऽनन्नत्वं स्यादिति शेषपूरणं, न च तस्यानन्नत्वमित्यनेन सम्बन्धं च सूचयन् व्याचष्टे- यद्यन्नत्वमिति ।। निश्चितेऽप्यनन्नत्वे रागौत्कट्यात्प्रवृत्तिरित्याशङ्कामर्थान्तरन्यासेन परिहरति- न हीति ।। प्रवर्तकज्ञानाभावादिति भावः। निवृत्त इति ।। बाधकज्ञानेनेति शेषः । ननु भ्रमाभावेऽपि तज्जनितसंस्कारात्प्रवृत्तिरुपपन्नेति शङ्कते- यदीति ।। रागातिरेकात् उत्कटरागात् । भ्रमसंस्कारात् भ्रमव्यापारभूतादित्यर्थः । अत्र संस्कारशब्दप्रयोगः निश्चयस्य प्रवृत्तिप्रतिबन्धसामर्थ्यविघटनसामर्थ्यसूचनार्थः

। अर्थक्रिया क्षुन्निवृत्तिरूपा । 'न हि युक्तिपराजितोऽपि' इति वाक्ये 'क्षुधित' इत्यनेनैवैतच्छङ्का-समाधानकरणात् 'न चान्नत्वे दुर्घट' इत्यस्यापि तदर्थत्वे पौनरुक्त्यमित्याशङ्कते- नन्विति ।। अर्धाङ्गीकारेण परिहरति- सत्यमिति ।। यद्यपि 'न हि युक्तिपराजितोऽपि' इति वाक्यैकदेशेन क्षुधित इत्यनेनैतच्छङ्कासमाधाने सूचिते । तथाऽपि शब्दतो न प्रपञ्चिते इति भावः ।

ननूक्तरीत्या क्षुन्निवृत्त्याद्यर्थक्रिया न स्यादित्यतिप्रसङ्गेन वस्तुतोऽन्न एवान्नत्वदृष्टेस्तर्केण न बाधः । यत्र त्वनन्न एवान्नत्वदृष्टिस्तत्र तर्केण बाधो भविष्यति । उक्तातिप्रसङ्गाभावादिति शङ्कते- यदेति ।। शङ्कोत्तरत्वेन मूलमवतार्याकाङ्क्षाशान्तयेऽन्वयं दर्शयति- अत आहेति ।। पूर्वेणैवेति ।। न चानन्नत्वे तर्केण दुर्घटेऽपि दृष्ट्यबाधितदृष्टस्यानन्नत्वं भवतीति पूर्वेण सम्बन्ध इत्यर्थः । ननु वस्तुगत्या तस्यानन्नत्वेन तर्केणापि तस्यान्नत्वबाधे न किञ्चिद्बाधकमित्यत आह- तात्पर्यं तु पूर्ववदिति ।। प्रत्यक्षेणैव तत्रान्नत्वबाधो न तर्केणेति भावः ।

नन्वयमर्थो बलवद्दृष्ट्यबाध इत्यनेनैव वर्णित इति चेत्सत्यम् । तस्यैवानेन प्रपञ्चनान्न दोष इति भावः ।

तदेतदभिप्रेत्याप्युक्तम्- पूर्ववदिति ।।

यद्वा इह प्रमाणसामान्यसिद्धस्य तर्केणाबाध उच्यते । पूर्वं तु प्रत्यक्षसिद्धस्य तर्केणाबाध उक्त इति न पौनरुक्त्यम् ।

## श्रीवेदेशतीर्थ

न चान्नत्वे इत्यादि मूलोक्तविपर्ययपर्यवसानलब्धमुक्तशङ्कानिवर्तकं तर्कं दर्शयति- यद्यन्नत्वमित्यादिना ।। न त्वेवमिति ।। तस्यानन्नत्वं न हीत्यर्थः । ननु मूलं विपर्ययपर्यवसानपरं चेत्तस्यानन्नत्वं न च भवतीत्येव वक्तव्यं व्यर्थमधिकमिति चेत् । मैवम् । यद्यन्नत्वं तस्य बाधितं स्यादित्यापादकसूचकत्वेन सार्थकत्वात् । न हीति ।। प्रवर्तकज्ञानाभावादिति भावः ।

ननु भ्रमाभावेऽपि तज्जनितसंस्कारात्प्रवृत्तिरुपपन्नेति शङ्कते- यदीति ।। रागातिरेकादिति ।। उत्कटरागसंहितादित्यर्थः । प्रपञ्च इति ।। यद्यपि क्षुधितपदेनैतच्छङ्कासमाधाने सूचिते तथाऽपि शब्दतो न प्रपञ्चिते इति भावः ।

## श्रीराघवेन्द्रतीर्थ

अर्थक्रिया न स्यादिति ।। क्षुन्निवृत्त्यादिप्रागुक्तार्थक्रिया न स्यादित्यर्थः । पूर्ववाक्ये 'क्षुधित' इति पदेन क्षुन्निवृत्त्याद्यर्थक्रियाभावरूपातिप्रसङ्गान्तरसूचनस्योक्तत्वात् 'न चान्नत्वे दुर्घटः' इत्याद्युक्तिः पुनरुक्तेत्याशङ्क्य निराह- ननूक्तमेतदिति ।। अर्थक्रियाभावरूपाति-प्रसङ्गान्तरमित्यर्थः ।

भ्रमस्थलेऽक्षसिद्धं तर्कबाधितमस्तीति शङ्कानिरासकत्वेन मूलमवतारयति- यदेति ।। पूर्वेणेति ।। दृष्ट्यबाधितदृष्टस्यान्नत्वे तर्केण दुर्घटेऽपि तस्यानन्नत्वं न च भवतीति योजनेति भावः । तात्पर्यं पूर्ववदिति ।। अन्नत्वेन दृष्टं यदाऽनन्नं भवति तदा बलवदनन्नत्वदृष्ट्याऽन्नत्वदृष्टेर्बाधे सत्येव न तु केवलतर्केण । अन्यथा दृष्ट्यबाधितदृष्टान्नस्थलेऽप्यनन्नत्वप्रसङ्गादित्येवं बलवद्दृष्ट्यबाध इति वाक्यतात्पर्यमिव तात्पर्यं ज्ञेयमित्यर्थः । दृष्टमन्नं वास्तवान्नम् । 'रागातिरेकेण रागौत्कट्येन । यद्यन्नत्वमिति ।। प्रत्यक्षदृष्टस्य तस्य वस्तुतोऽन्नस्य अन्नत्वं यदि उक्ततर्केण बाधितं स्यादित्यर्थः । तथा सतीति ।। परमार्थतोऽ-नन्नत्वे सतीत्यर्थः । भ्रमेति ।। वस्तुतोऽनन्नेऽन्नत्वभ्रमसंस्कारादित्यर्थः । अर्थक्रिया क्षुन्निवृत्ति-रूपा । अनन्नं वस्तुतोऽनन्नम् । तर्केति ।। यदीदमन्नं स्यादिति तर्केत्यर्थः ।

अनन्नम् अनन्नत्वप्रत्यक्षम् । पूर्वेणैवसम्बन्ध इति ।। बलवद्दृष्ट्यबाधितदृष्टस्य अन्नत्वे दुर्घट इत्यादिना सम्बन्ध इत्यर्थः । तात्पर्यमिति । दृष्ट्यबाधितदृष्टस्य वस्तुतोऽन्नस्य यदीदमन्नं स्यादित्युक्ततर्केणान्नत्वे दुर्घटे तस्यानन्नत्वं न हि भवति अन्नमेव भवति, दृष्टिबाधितदृष्टस्य त्वनन्नत्वमेव भवतीति यावदिति पूर्ववत्तात्पर्यं द्रष्टव्यमित्यर्थः ।

## गुरुराजीया

प्रत्यक्षदृष्टस्य तर्कविरोधेन दुर्घटत्वे प्रागुक्तदोषं परिहर्तुं तर्कविरोधेन दुर्घटत्वस्येष्टापत्ति-शङ्कामेवोत्थापयति- नन्विति ।। प्रत्यक्षदृष्टस्य तर्केण दुर्घटत्वे परित्यागप्रसङ्गेनोपादानं न स्यादिति तत्रोक्तदोषमुद्भावयति- नन्विति ।। प्रत्यक्षदृष्टस्य तर्कबाध्यत्वेऽप्युत्कटरागेणोपादानोपपत्तेर्न तदन्यथानुपपत्त्या तस्य तर्केणाबाध्यत्वसिद्धिरित्याशयेन परिहरति- मैवम् । रागातिरेकेणेति ।। उपलक्षणं चैतत् । भ्रमजन्यसंस्कारेणेत्यपि द्रष्टव्यम् । अत एव रागातिरेकाद्भ्रम-संस्काराद्वेत्युत्तरत्रोभयग्रहणमिति भावः । अन्नत्वस्य बाधितत्वेऽपि परमार्थतोऽनन्नत्वं कुत इत्यतः 'यत्र यद्बाधितं तत्र तदभावः पारमार्थिकः' इति व्याप्तेरिति भावेन दृष्टान्तोपदर्शनेन तामुपपादयति- रजतत्वे बाधित इति ।। शुक्तिकाया इति शेषः । अस्तु परमार्थतोऽनन्नत्वमपि तस्येत्यत आह- न त्वेवमिति ।। परमार्थतोऽनन्नत्वं तस्य नैवेत्यर्थः । कुतोऽवधारणमित्यतः परमार्थतोऽनन्नत्वे बाधकमाह- तथा सतीति ।। परित्यागप्रसङ्गेनोपादानं न स्यादित्युक्तमित्यर्थः । रागातिरेकेण प्रवृत्तेरन्यथोपपन्नत्वान्न तत्र प्रवृत्त्यभावापादनं युक्तमित्यत आह- न हीति ।। अन्यथा रजत-भ्रमनिवृत्त्यनन्तरमपि रजतरागातिरेकेणारजतेऽपि रजतार्थी प्रवर्तेतेति१ भावः । अर्थक्रियेति ।। क्षुन्निवृत्तिरित्यर्थः । अन्यथाऽरजतेऽपि रजतोचितार्थक्रियाप्रसङ्गादिति भावः ।

पूर्वेणेति ।। दृष्ट्यबाधितदृष्टस्य तर्केणान्नत्वे दुर्घटेऽनन्नत्वं नेति पूर्वेणान्वय इत्यर्थः । न केवलमस्य 'न चान्नत्व' इत्यादिपूर्वेणान्वयमात्रम् । किन्तु यदि पुनस्तस्यान्नत्वं बाधितं स्यादित्यादिरूप-तत्तात्पर्यवदेतत्तात्पर्यमपि द्रष्टव्यमित्याह- तात्पर्यमिति ।।

## गोविन्दीया

नन्विति ।। तर्हि नाद्यादित्यनिष्टमुक्तं न तु निश्चयः, इति शङ्कायामेवावान्तर उच्यत इत्यर्थः । नायमिति ।। यदि तर्को बलवान् तर्ह्यन्नदृष्टिं बाधेतेत्ययं प्रसङ्गो नानिष्टः, बाध्यत इत्यङ्गीकारादिष्टापादनरूपत्वादित्यर्थः । मैवमिति ।। इदमपि शङ्कागर्भितमेव न तु सिद्धान्त्युक्त-मित्यर्थः । बाधितेऽपीति ।। रागातिरेकेणोत्कटरागेणादनप्रवृत्तिसम्भवादित्यर्थः । न (च) त्वेव-मिति ।। प्रकृते देशविशेषस्थपुरुषदृष्टान्नेऽन्नत्वं न च बाधितमित्यर्थः । तथा सतीति ।। यदि तत्रापि बाधितम्, तर्हि नाद्यादित्यनिष्टमुक्तमित्यर्थः । तथापीति ।। प्रवृत्तावपि क्षुन्निवृत्तिरूपार्थक्रिया न स्यादित्यर्थः । नन्विति ।। क्षुधितपदेनैतत् सर्वमुक्तं पुनःकथने पौनरुक्त्यं स्यादित्यर्थः । तस्यै-वेति ।। पूर्वोक्तस्यैव प्रपञ्चोऽयमित्यदोष इत्यर्थः । यदेति ।। वस्तुतोऽन्नेऽन्नत्वं बाधितं न चेत् यदानन्नमन्नत्वेन मन्यते तदान्नत्वं बाधितं भवत्येवेत्यर्थः ।

पूर्वेणैव सम्बन्ध इति ।। बलवदन्नत्वदृष्ट्याऽबाधितस्य दृष्टस्यान्नस्य भ्रमविषयत्वाभावेनान्नत्वे दुर्घटे सति तस्यानन्नत्वमेव भवतीत्यर्थः । तात्पर्यं पूर्ववदिति ।। यदा तर्केणान्नत्वदृष्टेर्बाधः तदा बलवदनन्नत्वदृष्ट्या बाधे सत्येव न तु केवलेनेति तात्पर्यं पूर्ववदित्यर्थः ।

## जनार्दनभट्टीया

रागातिरेकेणेति ।। इच्छोत्कर्षेणेत्यर्थः । मूले 'भवति' इति वर्तमाननिर्देशेन तर्कस्य अप्रतीतेस्तर्कपरतया मूलं योजयति – यदीत्यादिना ।। अर्थक्रिया न स्यादिति ।।१ अनेन क्षुधितपदेन प्रसङ्गान्तरसूचनस्य उपयोगो वेदितव्यः । अत एव तथैव शङ्कते – ननूक्तमिति ।। तस्यैवेति ।। 'युक्तिपराजितः' इति पूर्ववाक्ये क्षुधितपदेन प्रसङ्गान्तरसूचनमात्रं कृतम् । अत्र तु तादृशप्रसङ्गान्तरव्यावृत्त्या 'यदि पुनः' इत्यादिशङ्कां उत्थाप्येति तस्यैव अयं विस्तार इत्यर्थः । तथा च प्रपञ्चनार्थत्वात् पौनरुक्त्यं न दोषाय । 'सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः' इति भावः ।

पूर्वेणैवेति ।। दृष्ट्यबाधितदृष्टस्य तर्केण अन्नत्वदुर्घटे सति तस्य अनन्नत्वं न भवतीति पूर्वेण सम्बन्धः । ननु एवमपि दृष्टिबाधितस्थले तर्केण प्रत्यक्षबाधोऽस्तु इत्यत आह – तात्पर्यमिति ।। बाधस्थलेऽपि न केवलतर्केण बाधः । किन्तु बलवद्दृष्ट्यैवेति तात्पर्यं पूर्ववदेवेत्यर्थः ।

# न चान्नानन्नवैलक्षण्यमनुभूयते ..

**तर्कबाधितेऽनन्नवैलक्षण्यज्ञानस्याभ्यवहारादिकारणत्वाभावसमर्थनम्**

## श्रीमज्जयतीर्थटीका

ननु यस्य तर्केणानन्नत्वं बाध्यते तदनन्नं भवत्येव । न चैवमभ्यवहाराद्यभावापातः । अनन्नवैलक्षण्येन तदुपपत्तेः । न हि तर्केण पदार्थानां स्वरूपासत्त्वमुच्यते । किं तर्हि प्रतिपन्न-स्वभावानुपमर्देन तदनिर्वाच्यमेवेति चेन्न । तथा सति नेदं रजतमिति बाधकानन्तरं शुक्तिकानुभववदन्नानन्नवैलक्षण्यानुभवप्रसङ्गः । न चासावस्तीत्याह–

## मूल

***न चान्नानन्नवैलक्षण्यमनुभूयते ।***

कुतो युक्त्यनुसन्धातुरेवंविधानुभवाभावोऽवगम्यत इति चेत् । तत्कार्यव्यवहाराभावादित्याह-

**मूल**

***न च तथा व्यवहारः ।***

ननु न व्यवहार एवानुभवे प्रमाणं विनाऽपि व्यवहारेण बालमूकादीनामनुभवसद्भावात् । अतो व्यवहाराभावेऽपि तथाऽनुभवो युक्त्यनुसन्धातुः किं न स्यात् । स्यात्, यदि तथाऽन्यदपि किञ्चित्प्रमाणं स्यात् । न चैतदस्तीत्याह-

**मूल**

***न च तत्र किञ्चिन्मानम् ।***

न चानुभवाभावे प्रत्यक्षस्य सत्त्वात् किमनेनेति वाच्यम् । विप्रतिपन्नं प्रति सत्युपायान्तरे प्रत्यक्षस्यानवतार्यत्वात् ।

## श्रीविजयीन्द्रभिक्षु

अनन्नेति ।। अनन्नवैलक्षण्यज्ञानेनेत्यर्थः । एवमपि क्षुन्निवृत्तिरूपार्थक्रिया न स्यादित्यत आह- न हीति ।। तर्केणेति ।। तर्कसहकृतप्रत्यक्षेणेत्यर्थः । उच्यते बोध्यत इत्यर्थः । क्षुन्निवर्तन-सामर्थ्यरूपप्रतिपन्नस्वभावानपायात् क्षुन्निवृत्त्याद्यर्थक्रियोपपद्यत इति भावः । तत्सहकृतप्रत्यक्षेण तदनिर्वचनीयताबोधने उभयवैलक्षण्यानुभवप्रसङ्गः । न च सोऽस्ति । प्रत्यक्षेणानन्नवैलक्षण्यानु-भवेऽपि नेदं रजतमिति बाधानन्तरं रजतवैलक्षण्यानुभववत् तर्केण बाधानन्तरम् अनन्न-वैलक्षण्यानुभवाभावादित्यभिप्रायं वर्णयन् शङ्कोत्तरत्वेन मूलमवतारयति- तथा सतीति ।। नन्वस्त्येव युक्त्यनुसन्धातुरनन्नवैलक्षण्यानुभवः । तथा नानुपलब्धिबाधः । परबुद्धेरप्रत्यक्षत्वेन योग्यानुपलब्धे-रभावादिति भावेन शङ्कते- कुत इति ।। योग्यानुपलब्ध्या तदभावानवगमे तत्कार्यभूतव्यव-हाराभावादिलिङ्गेन तदभावानुमितिः सम्भवतीत्यभिप्रायं वर्णयन् मूलमवतारयति- तत्कार्येति ।।

व्यावहार एवेति ।। अभिलापरूप एवेत्यर्थः । युक्तम् अभिलापाभावेऽपि बालमूकादीना-मनुभववत्त्वम् । प्रवृत्त्यादितत्कार्यसत्त्वात् । इह तु न तथा, तत्साधकस्य कस्याप्यभावादि-त्यभिप्रेत्याऽह- स्यादिति ।।

शङ्कते- न चेति ।। अनुभवाभावे अनन्नवैलक्षण्यानुभवाभावे । किमनेनेति ।। न च तत्र किञ्चिन्मानमित्यनेनेत्यर्थः । उपायान्तरे प्रमाणान्तर इत्यर्थः । अनवतार्यत्वादिति ।। प्रत्यक्षोपन्यासे त्वनुभवकलहः स्यादिति भावः ।

## श्रीवेदेशतीर्थ

तथाऽन्यदपीति ।। यथा बालमूकाद्यनुभवानुमापकं व्यवहारादन्यच्चेष्टाविशेषादिकं प्रमाण-मस्ति, न तथा प्रकृत इत्यर्थः । अनुभवाभाव इति ।। अन्नानन्नवैलक्षण्यानुभवाभाव इत्यर्थः । अनेन व्यवहाराभावलिङ्गकानुमानेन ।। उपायान्तर इति ।। प्रमाणान्तर इत्यर्थः । अनवतार्यत्वादिति ।। प्रत्यक्षोपन्यासेऽनुभवकलहः स्यादिति भावः ।

## श्रीराघवेन्द्रतीर्थ

दृष्ट्यबाधितदृष्टस्यापि तर्केणास्ति बाध इति शङ्कते- ननु यस्येति ।। दृष्ट्यबाधितदृष्टस्यापि यस्येत्यर्थः । प्रतिपन्नेति ।। प्रमितवस्तुस्वभावेत्यर्थः । अनिर्वाच्यत्वमेवेति ।। उच्यत इत्यनुषङ्गः। मूलार्थमनुवादेन विवृण्वन्नेवोत्तरवाक्यमवतारयति । कुत इत्यादिना ।। एवंविधेति ।। अन्नानन्न-विलक्षणमिदमित्येवंरूपेत्यर्थः ।

किं न स्यादिति चोद्योत्तरमाह- स्याद्यदीति ।। तथेति ।। 'अन्नानन्नविलक्षणमेतत्' इत्यत्रा-बाधितदृष्टेऽन्ने व्यवहारादन्यत्किञ्चित्प्रमाणं स्याद्यदीत्यर्थः । 'इदमन्नमेव ; न तु तद्विलक्षणम्' इति भोक्तुः प्रत्यक्षस्यैव वैलक्षण्यानुभवाभावे सत्त्वेन 'न च तथा व्यवहारः' इत्यादिवाक्यद्वयेन वैलक्षण्यव्यवहाराभावलिङ्गेन मानाभावहेतुना च वैलक्षण्यानुभवाभावोपपादनं कुतः कृतमित्याशङ्क्य निराह- न चानुभवेति ।। अनेनेति ।। न च तथेत्यादिग्रन्थेनेत्यर्थः । उपायान्तरे व्यवहारा-भावादिरूप इत्यर्थः । यस्य वास्तवान्नस्य । ननु तर्केणान्नस्यासत्त्वप्रतिपादनात् कथमभ्यवहारप्रसङ्ग इत्यत आह- न हीति ।। प्रतिपन्नेति ।। असद्विलक्षणस्वरूपानुपमर्देनेत्यर्थः । तथानुभवः अन्नानन्न-विलक्षणत्वानुभवः । युक्त्यनुसन्धातुः यदीदमन्नं स्यादिति युक्त्यनुसन्धानवतः । अनवतार्यत्वात् अनुभवकलहापत्त्याऽवक्तव्यत्वादित्यर्थः ।

## गुरुराजीया

अनुभवाभाव इति ।। अन्नानन्नवैलक्षण्यानुभवाभाव इत्यर्थः ।

अनेनेति ।। व्यवहाराभावलिङ्गकानुमानेनेत्यर्थः । प्रत्यक्षसिद्धेऽर्थेऽनुमानस्यानपेक्षितत्वादिति भावः । उपायान्तर इति ।। प्रत्यक्षातिरिक्तप्रमाणसद्भाव इत्यर्थः । अनवतार्यत्वादिति ।। अन्यथा अनुभवकलहप्रसङ्गादिति भावः ।

## गोविन्दीया

नन्विति ।। यस्य वस्तुतोऽन्नस्यापीत्यर्थः । न चैवमिति ।। एवं सति यद्यन्नस्यान्नत्वं बाधितं स्यात्तर्ह्यभ्यवहाराद्यभावापातः, इति न च वाच्यमित्यर्थः । अनन्नेति ।। तर्केणानन्नेति बाधकज्ञानानन्तरमनन्नवैलक्षण्येन ज्ञानादभ्यवहाराद्युपपत्तेरित्यर्थः । न हीति ।। तर्केणान्नपदार्थ-स्यासत्त्वं न ह्युच्यते किं तर्हि प्रतिपन्नान्नस्वभावानुपमर्देन तस्यान्नपदार्थस्यानिर्वाच्यत्वमेवेति चेदित्यर्थः । न चेति ।। बाधितान्नस्यानन्नत्वमेवानुभूयते न त्वनन्नविलक्षणत्वमित्यर्थः । स्यादिति ।। बालमूकाद्यनुभवे हस्ताङ्गुलिचलनादिरूपप्रमाणं यथाऽस्ति तथा यद्यन्यदपि तत्रानन्नवैलक्षण्यानुभवे किञ्चित्प्रमाणं स्यात् तर्हि व्यवहाराभावेऽप्यनुभवोऽनुमितः स्यादित्यर्थः । न चेति ।। अनुभवे तदभावे च साक्षिप्रत्यक्षस्य सत्त्वात् किं व्यवहारेण तदभावेन चेति न च वाच्यमित्यर्थः ।

### जनार्दनभट्टीया

अनन्नवैलक्षण्येनेति ।। अनन्नवैलक्षण्यानुभवेनेत्यर्थः । अन्नानन्नवैलक्षण्यानुभवप्रसङ्गः इत्यस्यापि अन्नानन्नवैलक्षण्यानुभवस्य अनुभवप्रसङ्ग इत्यनुभवशब्दावृत्त्या अर्थो ज्ञेयः । अत एव अनुभवपदम् । ननु ‘व्यवहार एव अनुभवे प्रमाणम्’ इत्यनेन न चानुभवाभावे प्रत्यक्षस्य सत्त्वात् इत्यनेन वाक्येन तथैव प्रपञ्चयिष्यतीति ध्येयम् । युक्त्यनुसन्धातुरिति ।। तर्कात्मकयुक्त्यनुसन्धानवत इत्यर्थः । न चेति ।। अनुभवाभावे = अन्नानन्नवैलक्ष्यण्यानुभवाभावे ‘इदम् अन्नानन्नवैलक्षण्येन अनुभवामि’ इति साक्षिरूपप्रत्यक्षस्य सत्त्वाद् इत्यर्थः । किमनेनेति ।। प्रमाणाभावरूपानुमानोपन्यासेन किम्? स्फुटत्वात् प्रत्यक्षमेव अन्नानन्नवैलक्षण्याभावे प्रमाणत्वेन उपन्यस्यतामिति भावः ।

## अतो विशिष्टादिनिराकरणयुक्तीनामपि ..

**दृष्टस्य वस्तुन इत्यादिनोक्तस्योपसंहारः**

### श्रीमज्जयतीर्थटीका

दृष्टस्य वस्तुन इत्यादिनोक्तमुपसंहरति-

## मूल

***अतो विशिष्टादिनिराकरणयुक्तीनामपि विशिष्टाद्यपेक्षत्वाज्जात्युत्तरमिति न युक्तिबाधाऽपि ।***

यतो विशिष्टादिनिराकरणतर्क उक्तविधया तर्काङ्गपञ्चकविकलोऽतोऽसौ जात्युत्तरम् । तस्मान्न श्रुतीनां विशिष्टार्थप्रतिपादकत्वस्य तर्कबाधेति । ‘प्रकृष्टप्रकाशश्चन्द्रः’ इत्यादिनान्तरङ्गानुपपत्ति-बाधा परिहृता । दृष्टस्येत्यादिना बाह्यतर्कबाधा । अतः समुच्चयार्थोऽपिशब्दः ।

ननु सिद्धमपि दूषणासमर्थमुत्तरं जातिरित्युच्यते । असामर्थ्यं च द्विविधम् । साधारणमसाधारणं च । तत्र साधारणं स्वव्याहतिः । असाधारणं तु युक्ताङ्गहानिरयुक्ताङ्गाधिकत्वमविषयवृत्तित्वं चेति त्रिविधम् । तत्र

साधारणेनासामर्थ्येन विना कथं युक्ताङ्गहीनतामात्रेण तर्कस्य जातित्व-मित्यत उक्तम्– विशिष्टादीति ।। विशिष्टादिनिराकरणतर्को हि विशिष्टादिकमपेक्ष्योत्पद्यते । भिन्ना(न्या)दिविशिष्टाज्ञाने विशिष्टस्य विशेषणादिभ्यो भिन्नत्वे दण्ड्यानयननियोगेऽन्यानयन-प्रसङ्गः' इत्याद्यापादनायोगात् । एवं विशेषणाद्यपेक्षाऽपि द्रष्टव्या । तथा च स्वापेक्षणीयमेव विशिष्टादिकं निराकुर्वन्नयं स्वात्मानं व्याहन्तीति कथं न जात्युत्तरम् । परसिद्धमेव भिन्नादिक-मङ्गीकृत्य तर्कप्रवृत्तेर्नैवमिति चेन्न । परसिद्धिमात्रेण विपर्ययपर्यवसानाद्यनुपपत्तेः । तत्र च विशिष्टाद्यपेक्षानियम इति सङ्क्षेपः । नित्यसमा चेयं जातिः- (यथोक्तं) 'विवक्षितधर्मस्य तदतद्रूपविकल्पानुपपत्त्या धर्मिणस्तद्विशिष्टत्वखण्डनं नित्यसमा' इति ।

## श्रीविजयीन्द्रभिक्षु

समुच्चयान्तरानुपलम्भादपिशब्दानर्थक्यमित्याशङ्क्याऽह- प्रकृष्टेति ।। अन्तरङ्गानुप-पत्तीति ।। 'सत्यं ज्ञानम्, तत्त्वमसि' इत्यादिवाक्यस्य विशिष्टार्थपरत्वे स्वरूपमात्रप्रश्नोत्तरत्वादि-रूपान्तरङ्गानुपपत्तीत्यर्थः । बाह्यतर्केति ।। 'विशिष्टं भिन्नमभिन्नं भिन्नाभिन्नं वा' इत्यादि-विकल्पासहत्वाद्विशिष्टमनिर्वाच्येत्येवंरूपा या तर्कबाधा सेत्यर्थः । विशिष्टाद्यपेक्षत्वादित्यस्या-नर्थक्यमाशङ्क्य तन्निवार्याशङ्कां दर्शयति- नन्विति ।। असाधारणमिति ।। युक्ताङ्गहान्यादीनां सकलजातिसाधारणत्वाभावादिति भावः । तत्रेति ।। जातिमात्रसाधारणस्वव्याहतिरूपासामर्थ्यं विना जातित्वमेव न स्यादिति भावः । तर्कस्य विशिष्टाद्यपेक्षा क्वेत्याशङ्कायामाह- विशिष्टा-दीति ।। तर्कोत्पत्तौ विशिष्टाद्यपेक्षामुपपादयति- भिन्नेति ।। भिन्नान्यादिशब्दैः यद्व्यवह्रियमाणं विशिष्टं तस्याज्ञान इत्यर्थः । एवमिति ।। विशेषणादिनिराकरणतर्कोऽपि स्वोत्पत्तौ विशेषणादिक-मपेक्षते । विशेषणादेरज्ञाने यदि विशिष्टविशेषणं विशेष्याद् भिन्नं स्यात्तदा मेरुमन्दरयोरिव स्वातन्त्र्यापत्त्या विशेषणत्वमेव न स्यादित्याद्यापादनायोगादित्यर्थः । तावता स्वव्याघातकत्वं कथमित्यत आह- तथा चेति ।। परसिद्धिमात्रेणेति ।। 'यदि विशिष्टं विशेषणादिभ्यो भिन्नं स्यादन्यस्यैवाऽनयनं स्यात् । न चान्यदानीयते' इति विपर्यये पर्यवसानं वाच्यम् । न चैतत् सम्भ-वति । वस्तुतो विशिष्टादिभिन्नस्य विशेषणस्य सत्त्वापेक्षत्वादित्यर्थः । सामान्येन विना विशेषापर्यवसानात् । कुत्र जातावन्तर्भवतीत्यत आह- नित्यसमा चेयमिति ।।

## श्रीवेदेशतीर्थ

विशिष्टापेक्षत्वादित्यंशं व्याख्यातुं तन्निवर्त्याशङ्कां दर्शयति- नन्विति ।। छलव्यावृत्त्यर्थं सिद्धमपीति विशेषणम् । पक्षे सिद्धमित्यर्थः। पक्षधर्मत्वोपेतमिति यावत् । छलोत्तरे तु न पक्षधर्म-त्वम् । 'आढ्योऽयं नवकम्बलवत्त्वात्' इति नूतनत्वाभिप्रायेण वादिना प्रयुक्ते प्रतिवादी सङ्ख्यार्थत्वमारोप्य वदति । त्वदीयो हेतुः स्वरूपासिद्धः । एकस्यैव कम्बलस्योपलम्भाद् इति । तथा च नवकम्बलवत्त्वादिति हेतुर्न स्वसाध्यसाधकः । स्वरूपासिद्धत्वादिति छलवादिनाऽसाधकता साधनीया । तत्र च हेतुर्न पक्षेऽस्ति । नवकम्बलवत्त्वस्य वस्तुगत्या स्वरूपासिद्ध्यभावात् । अतो न तत्पक्षधर्मतोपेतमिति सिद्धमपीत्यनेन तद्व्यावृत्तिः । जात्युत्तरे तु धूमवत्त्वादिति हेतौ वादिनोक्ते प्रतिवादी व्याप्तिमनङ्गीकृत्य वदति । यदि महानससाधर्म्याद्धूमात् पर्वतोऽग्निमान् स्यात्तर्हि ह्रद-साधर्म्याद्द्रव्यत्वान्निरग्निः किं न स्यात्तथा च त्वदनुमानस्य सत्प्रतिपक्षत्वमिति । तदा त्वदीयोऽयं

धूमवत्त्वादिति हेतुर्न स्वसाध्यसाधकः । युक्ताङ्गहीनप्रतिप्रमाणेन प्रतिपक्षितत्वादित्युत्तरं व्याप्ति-हीनमपि पक्षधर्मतोपेतं भवतीति न लक्षणाननुगम इति भावः ।

साधारणम् सर्वजातिसाधारणम् । असाधारणम् न सर्वजातिसाधारणम् । विशिष्टादिक-मपेक्ष्येति ।। विशिष्टादिकप्रतीतिमपेक्ष्येत्यर्थः। एतदेवोपपादयति- भिन्नान्यादीति ।। विशेषणाद्य-पेक्षाऽपीति ।। विशेषणादिप्रतीत्यपेक्षाऽपीत्यर्थः । आदिपदेन भेदादिग्रहणम् । स्वापेक्षणीयम् स्वोप-जीव्यप्रतिपत्तिकम् । तर्कप्रवृत्तेरिति ।। दण्ड्यानयनप्रयोगेऽन्यानयनप्रसङ्ग इत्यादितर्कप्रवृत्तेरि-त्यर्थः । विपर्ययपर्यवसानाद्यनुपपत्तेरिति ।। अत्रादिपदेन पक्षनिर्देशः । व्याप्तिज्ञानं च ग्राह्यम् । न चान्यदानीयते । अपि तु दण्डविशिष्टो देवदत्त एवेति विपर्ययपर्यवसानं वाच्यम् । न चैतत्स्वस्य विशिष्टान्यादिपदार्थज्ञानाभावे परज्ञानमात्रेण सम्भवति । अनुभवविरोधात् । एवं पक्षनिर्देशव्याप्ति-ज्ञानान्यथानुपपत्त्याऽपि परस्य विशिष्टज्ञानमस्तीत्युपपादनीयम् । अतः स्वकीयविशिष्टादि-प्रतीतिरपि तर्कोपजीव्येति तन्निरासकत्वे तर्कस्य स्वव्याहतिरिति भावः ।

नन्वस्त्येव परस्य विशिष्टप्रतीतिर्भ्रमरूपा । तर्केण च विशिष्टादिसत्ता निराक्रियते । अतो न व्याहतिरिति चेन्न । प्रतीतस्योत्सर्गतः सत्त्वनियमात् । तर्कस्यान्योन्याश्रयतयाऽबाधकत्वादन्यस्य च बाधकस्यानुपलम्भात् । तदिदमुक्तम्- इति सङ्क्षेप इति ।। इतीत्यनन्तरं लक्षणादिति शेषः । क्वचिन्नित्यसमा चेयं जातिरित्यनन्तरं यथोक्तमिति पाठः । तदा नायं शेष इति ज्ञातव्यम् ।

## द्वैतद्युमणि

तत्र च विशिष्टाद्यपेक्षानियमादिति ।। आपाद्यव्यतिरेकविशिष्टे पक्ष आपादकव्यतिरेक-सिद्धेस्तर्कफलत्वेन तद्विषयीभूतविशिष्टस्याप्युक्तरीत्याऽभावप्राप्त्या तस्य स्वव्याहतिरिति भावः ।

ननु विशिष्टाद्यपेक्षा नाम तज्ज्ञानमात्रस्य तर्ककारणत्वाभ्युपगमः । न तु विशिष्टादीनां सत्त्वेन ज्ञानस्य कारणत्वाभ्युपगमः । इत्थं चापाद्यव्यतिरेकनिर्णयादिविषयाणामनिर्वचनीयानामेव प्रतीत्याऽनिर्वचनीयार्थावगाहिन आपादकविपर्ययनिर्णस्योत्पत्त्यङ्गीकारात् । ब्रह्मातिरिक्तस्य कस्यापि सत्त्वानङ्गीकारेण सत्यत्वेन तदसिद्धेरस्माकं क्षतिहेतुत्वाभावान्न कोऽपि दोष इत्यत आह- सङ्क्षेप इति ।। एतद्दोषपरिहारस्य स्फुटत्वात् सङ्क्षेपः क्रियत इति भावः । तथा हि विशिष्टादिकं यदि पारमार्थिकं स्यात् तदा भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात् । तथा चानवस्थादिकं स्यान्न चैवम् । तस्मान्न सत्यमिति तर्केण सत्यत्वाभावो विषयीक्रियते । स यदि सत्त्वेन विषयीक्रियते तर्हि तद्विशिष्टस्य सत्त्वप्राप्त्या विशिष्टस्य सत्त्वापत्तिः । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतर-विधिनान्तरीयकत्वादित्यादिपूर्वदर्शितदिशाऽवसेयमिति । नित्यसमा चेयं जातिरिति ।। विवक्षित-धर्मस्येत्यादि ।। भेदरूपधर्मस्य भेदवत्त्वतदभावरूपधर्मानुपपत्त्या धर्मिणो भिन्नत्वादिखण्डनात् नित्यसमजातित्वं ज्ञेयम् । उपपादितमेतत् सामान्यतो मिथ्यात्वनिराकरणावसरे ।

## श्रीराघवेन्द्रतीर्थ

मूलं योजयति- यत इति ।। भिन्नत्वादिविकल्पासहत्वरूपस्तर्क इत्यर्थः । इतिशब्दो हेत्वर्थ इत्यभ्युपेत्य इति न युक्तिबाधाऽपि इति शेषार्थमाह- तस्मादिति ।। 'सत्यं ज्ञानम्' इत्यादि-श्रुतीनामित्यर्थः । अपिपदार्थं दुर्बोधत्वाद्व्यनक्ति- प्रकृष्टेति ।। प्रकृष्टप्रकाशश्चन्द्रः इत्यादौ प्रकृष्टत्वादिविशेषणानि सन्त्येवेत्यादिना सत्यज्ञानादिवाक्यानां विशिष्टार्थपरत्वे स्वरूपमात्रप्रश्ने प्रत्युत्तरत्वायोगरूपान्तरङ्गानुपपत्तिबाधा परिहृता । दृष्टस्य वस्तुनो बलवद्दृष्टिं विना इत्यादिना च विशिष्टं विशेषणादितो भिन्नमभिन्नं वेत्यादिविकल्पासहत्वादनिर्वाच्यमेवेत्येवंरूपबाह्यतर्कबाधा परिहृतेत्यर्थः । न केवलमन्तरङ्गानुपपत्तिबाधा । किन्तु बाह्यतर्कबाधाऽपि नेति समुच्चयेऽपिशब्द इत्यर्थः ।

विशिष्टेत्याद्यंशस्य व्यावर्त्यमाह- ननु सिद्धमपीति ।। छलोत्तरेऽनतिव्याप्त्यर्थमेतद्विशेषणम् । साधारणमिति ।। साधर्म्यवैधर्म्यादिसर्वजातिष्वनुगतमित्यर्थः । अपेक्ष्योत्पद्यत इत्येतद्व्यनक्ति - भिन्नादिविशिष्टाज्ञान इति ।। एवं विशेषणादीति ।। विशेषणादेरज्ञाने विशेषणं विशेष्याद्भिन्नं चेन्मेरुमन्दरयोरिव विशेषणत्वायोग इत्याद्यापादनायोगादिति तर्कस्य विशेषणाद्यपेक्षा ज्ञेया इत्यर्थः । विपर्यय इति ।। तस्माद्विशिष्टं विशेषणादिभ्यो भिन्नं नेत्यभिन्नं नेति भिन्नाभिन्नं नेति वा विपर्यये पर्यवसानं विशिष्टस्य विशेषणादिभेदादिना व्याप्त्यादिकं वा परसिद्धमात्रेण न युक्त-मित्यर्थः । सामान्यस्य विना विशेषमपर्यवसानात्केयं जातिरित्यत आह- नित्येति ।। यथोक्त-मिति ।। तार्किकैः –

'धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।

धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो मतः ।।'

इति कारिकार्थमनुवदति- विवक्षितेति ।। शब्दोऽनित्य इत्युक्तेऽनित्यत्वमनित्यं नित्यं वा । आद्ये धर्मिणः शब्दस्य नानित्यत्वम् । किन्तु नित्यत्वमेव स्यात् । द्वितीये नित्यधर्माश्रयस्य नानित्यत्वमित्येवं विवक्षितधर्मवैशिष्ट्यखण्डनं धर्मिण इत्यर्थः ।जात्युत्तरम् असदुत्तरम् । अपिशब्दसमुच्चेयमाह- प्रकृष्टेति ।। कश्चन्द्र इत्यादिप्रश्नस्य कैर्लक्षणैर्विशिष्ट इत्यर्थकत्वेन प्रश्नोत्तरयोर्वैयधिकरण्यरूपान्तरानुपपत्तिबाधा परिहृतेत्यर्थः । बाह्येति ।। विशिष्टं विशेषणादिभ्यो भिन्नमभिन्नं वेत्यादिरूपा बाह्यानुपपत्तीत्यर्थः । तथा च न केवल-मान्तरानुपपत्तिबाधा नास्ति, किन्तु बाह्यतर्कबाधाऽपि नास्तीति मूलार्थो द्रष्टव्यः । युक्ताङ्गेति ।। व्याप्त्यादिरूपेत्यर्थः । जातित्वमिति ।। सामान्यलक्षणाभावादिति भावः । तदुपपादयति- भिन्नान्यादीति ।। विशिष्टं विशेषणादिभ्यः भिन्नम् इत्यत्र भिन्नमिति विशिष्टम् । अन्यानयनादि-प्रसङ्ग इत्यत्र अन्येति विशिष्टमिति विवेकः । यदि विशिष्टं तत्त्वं स्यात्तर्हि भिन्नत्वाद्यन्यतमप्रकारोपेतं स्यात् । न च भवत्यन्यतमप्रकारोपेतम् । तस्मान्न तत्त्वमिति विपर्ययपर्यवसानं परप्रसिद्ध्याऽनुप-पन्नमित्यर्थः । विपर्ययपर्यवसानं स्वरीत्यैव कार्यम् १अस्मद्रीत्यनुसारेण विपर्ययपर्यवसानमेव न सम्भवतीति भावः । तत्र चेति ।। विशिष्टादिनिराकरणतर्क इत्यर्थः । विवक्षितधर्मस्येति ।। शब्दोऽनित्य इत्यत्रानित्यत्वं नित्यमनित्यं वेति विकल्प्याऽऽद्ये नित्यधर्माश्रयत्वेन नित्यत्वापत्त्या, शब्दोऽनित्य इत्यनुपपत्तिः । द्वितीयेऽनित्यत्वस्यानित्यत्वे शब्दस्य नित्यत्वापत्त्या शब्दोऽनित्य

इत्यनुपपत्तिरित्युदाहरणम् । एवं प्रकृते २विशेषणादिभ्यो भेदाङ्गीकारे भेदरूपधर्मस्य भिन्नाभिन्नत्व-विकल्पानुपपत्त्या धर्मिभूतविशिष्टादेस्तद्विशिष्टत्वस्य भेदविशिष्टत्वस्याखण्डनान्नित्यसमा जाति-रियमित्यर्थः ।

## गुरुराजीया

उक्तमिति ।। विपर्ययपर्यवसानाभावादिकमित्यर्थः । ननु विशिष्टादिनिराकरण-तर्कस्याऽभासत्वे अत इत्युक्तो हेतुः क इत्यतोऽङ्गपञ्चकवैकल्यमेवेति भावेन सिद्धे तस्मिन् तेन तत्सिद्ध्येत् । तदेव तु कथं सिद्धमित्यतः तदसिद्धिं परिहरन् वाक्यं योजयति- यत इति ।। उक्तविधयेति ।। 'दृष्टस्य वस्तुनः' इत्याद्युक्तविधयेत्यर्थः ।

ननु श्रुतीनां विशिष्टार्थत्वे बाधान्तरस्यापरिहृतत्वेन तत्समुच्चायकत्वासम्भवान्न तर्क-बाधेत्येतावता पूर्णत्वान्न बाधाऽपीति समुच्चयार्थकापिशब्दवैयर्थ्यमित्यतः प्रकृष्टप्रकाशश्चन्द्र इत्यादिना पूर्वत्र परिहृतबाधया परिहरिष्यमाणबाधायाः समुच्चयार्थकत्वेन न वैयर्थ्यमिति भावेन बाधद्वयोपदर्शनपूर्वकं तत्समुच्चायकतयाऽपिशब्दं योजयति-प्रकृष्टेत्यादिना ।। अन्तरङ्गबाधेति ।। स्वरूपमात्रप्रश्नोत्तरत्वान्यथानुपपत्त्या प्रकृष्टादिवाक्यवत् सत्यज्ञानादिवाक्यानां स्वरूपमात्रपरत्वे न विशिष्टपरत्वमिति पूर्वत्र परिहृताया अनुपपत्तेः श्रुतिमूलकत्वेन तदमूलकविशिष्टादिनिरासतर्क-बाधापेक्षयाऽन्तरङ्गत्वेन प्रबलतया तामेव प्रथममाशंक्य स्वरूपमात्रस्य सिद्धत्वेन प्रश्नस्य तद्विषयकत्वानुपपत्त्या विशिष्टार्थविषयकत्वस्यैव सत्त्वेन प्रकृष्टादिवाक्यानामखण्डार्थनिष्ठताभाववद् विशिष्टविषयकप्रश्नोत्तराणां सत्यज्ञानादिवाक्यानां विशिष्टार्थमात्रनिष्ठत्वस्यैव सम्भवान्न तदनुपपत्तिप्रसक्तिरित्येवं परिहृतेत्यर्थः । बाधेति ।। विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं वेत्यादिविकल्पमूलकानुपपत्तेः श्रुत्यमूलकत्वेन बहिरङ्गतया दुर्बलत्वेन पश्चात् 'दृष्टस्य' इत्यादिना परिहृतेत्यर्थः ।

ननु पञ्चाङ्गवैकल्येनाऽभासतया जात्युत्तरतायाः 'विशिष्टापेक्षितत्वात्' इति विशेषणेन विनाऽपि निर्वाहाद् विशिष्टादिनिरासकतर्कस्य विशिष्टापेक्षितत्ववर्णनमनर्थकमित्याशङ्क्य असाधारणासामर्थ्यस्य तत्प्रयोजकस्य तन्निरपेक्षैतद्वाक्येन सिद्धावपि स्वव्याहतिरूपसाधारणा-सामर्थ्यस्य तेनासिद्ध्या तत्समर्पकत्वात् तस्य न वैयर्थ्यमिति भावेन तत्समर्पकतया योजयितुं तदभावेन जात्युत्तरत्वाभावशङ्कामुत्थापयति- नन्विति ।। सिद्धमपीति ।। अत्रासामर्थ्यं व्याप्ति-पक्षधर्मतयोरन्यतरवैकल्ये भवति । तत्र पक्षधर्मताविधुरः 'कल्पितदूष्योऽकल्पितदूष्यश्च' इति द्विविधः । तत्राऽद्यं छलम् । तथा हि, 'आढ्योऽयं नवकम्बलत्वात्' इति प्रतिवादिनं प्रत्युक्ते 'कुतोऽस्य नवकम्बला' इत्यत्र नवकम्बलत्वादित्ययं हेतुराढ्यत्वसाधको न भवति असिद्धत्वादिति प्रतिवादिनोऽभिप्रायः । अत्र यदसिद्धं तदसाधकमिति व्याप्तिरस्ति । नूतनार्थे प्रयुक्तहेतोः प्रतिवाद्यभिमतसङ्ख्याविशेषपरत्वाभावात् पक्षधर्मताया एव केवलमभावः । अकल्पितदूष्यस्तु केवलं निरनुयोज्यानुयोगः । तत्र वादिना निर्दोषहेतौ प्रयुक्ते सति अनैकान्तिकत्वादित्यादि-मिथ्यादूषणोद्भावनं निरनुयोज्यानुयोगः । अत्र वाद्युक्तो हेतुः साध्यसाधको न भवति अनैकान्तिकत्वादित्यादिकं प्रतिवादिनो विवक्षितम् । अत्र व्याप्तौ सत्यामेतत्केवलं पक्षधर्मतावैधुर्यमेव । तथा च पक्षधर्मतावैधुर्यनिमित्तासामर्थ्यस्य

छलनिरनुयोज्यानुयोगयोरतिप्रसङ्गः स्यात् । तदर्थं सिद्धमित्युक्तम् । तच्च पक्षधर्मत्वमित्यर्थः । तथा च पक्षधर्मत्वमात्रं सदनुमानसाधारणमित्यतोऽसमर्थमित्युक्तम् ।

असामर्थ्यं चात्र व्याप्तिवैधुर्यमेव । न तु शक्तिवैकल्यम् । तेन भवद्दर्शनेऽतिरिक्तस्य शक्तिपदार्थस्याभावादप्रसिद्धिरित्यपास्तम् । यद्यपि व्याप्तिपक्षधर्मतान्यतरवैधुर्यादेव सर्वत्र हेतोराभासत्वं भवति । तथाऽपि प्रकृतस्य हेतोः व्याप्तिमात्रवैधुर्यादेवाऽभासत्वमिति तस्यैवोपादानं युक्तम् । ततश्च सत्यां व्याप्तौ पक्षधर्मतावैधुर्याद्दूषणासमर्थं कल्पितदूष्यं छलम् । सत्यां व्याप्तौ पक्षधर्मतावैधुर्यादपकृष्टम् अकल्पितदूष्यं निरनुयोज्यानुयोगः । सति पक्षधर्मत्वे व्याप्तिवैधुर्यादपकृष्टमुत्तरं जातिरिति विवेकोऽत्र बोध्यः ।

मूलाख्यमङ्गं द्वेधा१ विभजते- असामर्थ्यमिति ।। विशिष्टादिकमपेक्ष्येति ।। तत्प्रतीति-मपेक्ष्येत्यर्थः । एतस्यैवोपपादनम्- भिन्नादीति ।। विशेषणादीत्यादिपदेन भेदपरिग्रहः । स्वापेक्षणीयं स्वोपजीव्यप्रतिपत्तिकम् । तर्कप्रवृत्तेरिति ।। दण्ड्यानयननियोगेऽन्यानयनप्रसङ्गः- इत्यादि-तर्कप्रवृत्तेरित्यर्थः । विपर्ययपर्यवसानानुपपत्तेरित्येतदेव दर्शयति- तत्रेति ।। तत्र विपर्ययपर्यवसाने पराभ्युपगतस्याभावः पक्षे स्वीकार्यः । अन्यथा परोक्तदूषणस्यैवाभावप्रसङ्गात् । तथा हि । न चान्यदानीयते । अपि तु दण्डविशिष्टो देवदत्त इत्येव ह्यत्र विपर्ययपर्यवसानं वाच्यम् । न चैतत् स्वस्य विशिष्टान्यादिपदार्थज्ञानाभावे परज्ञानमात्रेण सम्भवति । अनुभवविरोधात् । अतः स्वकीयविशिष्टादिप्रतीतिरपि तर्कोपजीव्येति तन्निरासकत्वात् तर्कस्य स्वव्याहतिरिति भावः ।

नन्वस्त्वेवं परस्य विशिष्टप्रतीतिः भ्रमरूपा तर्केण च विशिष्टादिसत्ता निराक्रियतेऽतो न व्याहतिरिति चेन्न । प्रतीतस्योत्सर्गतः सत्त्वनियमात् । प्रकृते च तर्कस्यान्योन्याश्रयत्वप्रसक्त्या बाधकत्वानुपपत्त्या तदभावे सत्त्वनियमभङ्गानुपपत्तेः । तदेतदभिप्रेत्योक्तम्- इति सङ्क्षेप इति ।।

ननु परिगणितयावद्विशेषबहिर्भूतत्वात् कथमियं जातिरिति चेन्न । उक्तरीत्या जातिसामान्यलक्षणाक्रान्तताया उपपादितत्वेन जातित्वस्य सिद्धत्वात् । अन्यथा अतिव्याप्ततया तस्य सामान्यलक्षणत्वाभावप्रसङ्गात् । ततश्च तदनुरोधेन विशेषान्तरस्यापि परिकल्पनीयत्वेन तद्घटितयावद्विशेषबहिर्भूतत्वासिद्धेः जातित्वमनाकुलमेव । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु नित्यसमायामेवान्तर्भूतत्वात् परिगणितयावद्विशेषबहिर्भूतत्वमेवासिद्धमित्याशयेनाऽह- नित्यसमा चेयमिति ।। नित्यसमैवेयं जातिरित्यर्थः । तत् कथमित्यतस्तल्लक्षणाक्रान्ततामेवोपदर्शयति- विवक्षितस्येत्यादि ।। यथा चोक्तनित्यसमालक्षणाक्रान्तत्वं तथा शेषवाक्यार्थचन्द्रिकायाम् अस्माभिः प्रपञ्चितम् । तत एव प्रतिपत्तव्यम् ।

## गोविन्दीया

अतोऽसाविति ।। युक्ताङ्गहीनत्वं नामासाधारणं सामर्थ्यविधुरं नाम जात्युत्तरमि-त्यर्थः । प्रकृष्टेति ।। सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यादिपदानां ब्रह्मस्वरूपमात्रवाचकत्वे पर्यायत्वेन व्यर्थत्वापत्त्या वाच्यार्थानुपपत्तेर्लक्षणाश्रयणमिति परेणान्तरङ्गानुपपत्तिरूपा बाधाऽभिहिता, सा च प्रकृष्टप्रकाशश्चन्द्र इत्यादिना परिहृतेत्यर्थः । नन्विति ।। सिद्धमपि, पक्षे सिद्धमपि व्याप्त्यभावाद् युक्तहेतुदूषणासमर्थं ह्रदसाधर्म्याद् द्रव्यत्वान्निरग्निकः किं न स्यात् ? इत्यत्र द्रव्यत्वादिति हेतुवचनं जात्युत्तरमित्युच्यत इत्यर्थः । तत्रेति ।। तत्र तर्करूपवाक्ये स्वव्याहतिरूपसाधारणेनासामर्थ्येने-त्यर्थः । इत्यादीति ।। विशिष्टज्ञानाभावे इत्याद्यापादनरूपतर्कान्तरप्रवृत्तिरेव न स्यादित्यर्थः । एवमिति ।। यथा विशिष्टादिकमपेक्षितं तथा विशेषणं भेदश्चापेक्षित इत्यर्थः । तथा चेति ।। तर्कान्तरे विपर्यये पर्यवसानत्वेन स्वापेक्षणीयमेव विशिष्टादिकं तर्कं निराकुर्वन्नयं प्रतिवादी ‘स्वोत्थानं१ स्वरचिततर्कोत्थानमेव व्याहन्तीति कथं न जात्युत्तरमित्यर्थः । परसिद्धमिति ।। परसिद्धमेव भिन्नादिकमङ्गीकृत्य तर्कान्तरप्रवृत्तेर्नैवं, न व्याहतत्वमिति, चेदित्यर्थः । परसिद्धमात्रेणेति ।। तत्र तर्कान्तरे । न चान्यमानीयते, अपि तु दण्डविशिष्टमेवेति विपर्यये पर्यवसानाद्यनुपपत्तेरित्यर्थः । आदिपदेन पक्षनिर्देशव्याप्त्यादिज्ञानं ग्राह्यमिति भावः । तत्रेति ।। विपर्यये पर्यवसाने नियमेन विशेषाद्यपेक्षा वर्तत इत्यर्थः । इति सङ्क्षेप इति ।। व्याहतित्वपरिहाररूपशङ्कास्तदुपपादकरूपपरिहारा अपि बहवस्तिष्ठन्ति ग्रन्थविस्तारभयादिति सङ्क्षेप इत्यर्थः ।

## नारोपन्तीया

अन्तरङ्गानुपपत्तिबाधेति । स्वरूपमात्रप्रश्नत्वान्यथानुपपत्त्या प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्याखण्डार्थतेति अन्तरङ्गानुपपत्तिः परस्याभिप्रेता । सिद्धान्तिना च प्रश्नस्यैव विशिष्टार्थ-विषयतायाः समर्थितत्वात्, तादृशानुपपत्तिलक्षणबाधा परिहृतेत्यर्थः । बाह्यतर्कबाधेति ।। विशेषणविशेष्यसम्बन्धात्मके वा तदतिरिक्ते वा विशिष्टेऽङ्गीक्रियमाणेऽतिप्रसङ्गोऽनवस्था चेत्यादिप्रसञ्जनरूपतर्कबाधा पूर्वोक्तवदन्तरङ्गत्वाभावाद्वा बहिरङ्गानुपपत्तिरिति यावत् । साऽपि परिहृतेत्यर्थः । तत्र च विशिष्टाद्यपेक्षानियम इति ।। तत्र विपर्यये पर्यवसाने पराभ्युपगत-स्यार्थस्याभावः पक्षे स्वीकार्यः । अन्यथा परोक्तदूषणस्यैव सङ्गततापातात् । तथा च- पक्षत्वाभि-मतस्य तादृशाभाववैशिष्ट्यमन्ततोऽभ्युपगतम् । परेण च प्रतियोगिवैशिष्ट्यमित्युभयोरपि विशिष्टाङ्गीकारित्वात् तद्दूषणे पुनर्व्याघात इति भावः ।

## जनार्दनभट्टीया

ननु विशिष्टादिनिराकरणतर्कस्य ब्रह्मण्यपि सञ्चारोपपादनेनैव तद्बाधस्य परिहृतत्वात् ‘अतो विशिष्टात्’ इति मूलस्य पौनरुक्त्यमित्यत आह – उपसंहरतीति ।। एवञ्च उपसंहाररूपत्वात् न पौनरुक्त्यमिति भावः । अथ अन्नत्वनिराकरणतर्कस्य निरासस्य प्रकृतत्वात् तन्निरासपरत्वभ्रान्तिं वारयन् अवतारयति – दृष्टस्य वस्तुन इत्यादिनेति ।। विशिष्टनिराकरणतर्कस्य जात्युत्तरत्वसिद्धये स्वव्याहत्याख्यमसामर्थ्यमस्तीति उपपादयति – विशिष्टादिनिराकरणेति ।। युक्ताङ्गहीनतामात्रे-णेति ।। उचिताङ्गपञ्चकवैकल्यमात्रेणेत्यर्थः । विशिष्टादिकमपेक्ष्येति ।। विशिष्टं निर्दिश्य, तद्विशिष्टं विशेषणाद्यपेक्षया भिन्नमभिन्नं वा इत्यादिरूपेण

तर्कप्रवृत्तेरिति भावः । एतदेव व्यतिरेकमुखेन दृढयति– भिन्नादिविशिष्टेत्यादिना ।। तत्र चेति ।। परसिद्धविशिष्टादिकमादाय विपर्ययपर्यवसानाद्यनुपपत्तौ सिद्धायामित्यर्थः ।

## अतो निखिलगुणगणाढ्यमेव ब्रह्म ..

**तर्कविरोधपरिहारादिलब्धब्रह्मगुणगणाढ्यत्वस्योपसंहारः**

### श्रीमज्जयतीर्थटीका

यदर्थमयं तर्कविरोधपरिहारादिप्रपञ्चस्तदुपसंहरति

## मूल

***अतो निखिलगुणगणाढ्यमेव ब्रह्म श्रुत्यभिप्रेतम् ।***

यतः 'पराऽस्य' इत्यादिषु श्रुतिषु विशिष्टप्रतिपादनं प्रतीयते । यतश्चान्तरानुपपत्तेः १बाह्यतर्कस्य च बाधा नास्ति । एवं च न सूत्रकारस्य श्रुतिविरोध इति सिद्धम् ।

### श्रीविजयीन्द्रभिक्षु

बाह्यतर्कस्येति ।। बाह्यानुपपत्तिरूपतर्कस्येत्यर्थः । अन्तरानुपपत्तेरिति ।। कर्तरि षष्ठी । तथा चान्तरानुपपत्तिकृता च बाधा यतश्च नास्ति अत इति सम्बन्धः । श्रुतिविरोध इति ।। 'अशब्दमस्पर्शम्' इत्यादिप्रागुद्भावितश्रुतिविरोध इत्यर्थः ।

### श्रीवेदेशतीर्थ

यत इति यतश्चेति यच्छब्दद्वयस्यात इति मूलेनान्वयः । गुणगणाढ्यस्य ब्रह्मणः श्रुत्यभिप्रेतत्वे किं सिद्धमित्यपेक्षायामाह- एवं चेति ।।

### श्रीराघवेन्द्रतीर्थ

तर्कविरोधपरिहारादीति ।। सत्यज्ञानादिवाक्यानां विशिष्टार्थकत्वप्रपञ्चनं प्रकृष्ट-प्रकाशश्चन्द्र इत्यादिष्वित्यादिनोक्तमादिपदार्थः । अतःपदपरामृष्टं द्वेधा दर्शयति- यत इति ।। अन्तरङ्गेति ।। सत्यज्ञानादिवाक्यस्य विशिष्टपरत्वे स्वरूपमात्रप्रश्नोत्तरत्वरूपानुपपत्तेः बाधा भिन्नत्वादिविकल्पासहत्वरूपबाह्यतर्कस्य च बाधेत्यर्थः । अत इति योज्यम् ।

यदुक्तं पूर्वत्र शून्यवादिनिरासपराणां नासत इत्यादिसूत्राणां शून्यमिवाखण्डं ब्रह्मेति वदतो मायिनोऽपि मतस्य निरासकत्वे अखण्डब्रह्मबोधकश्रुतिविरोधः सूत्रकारस्येति । तन्निरासोप-संहारोऽपि सिद्ध इत्याह - एवं चेति

।। गुणगणाढ्यस्यैव श्रुत्यभिप्रेतत्वे सतीत्यर्थः ।आन्तरानुपपत्तेर्बाधेत्यन्वयः । अनुपपत्तिनिरूपिता बाधा अनुपपत्तिप्रयुक्ता बाधेत्यर्थः । बाह्यतर्कस्येत्येतदप्येवमेव व्याख्येयम् । नास्तीति ।। तथा च प्रकृष्टप्रकाशश्चन्द्र इत्यादिष्वित्यादि, नान्तरङ्गबाधा परिहृता । दृष्टस्य वस्तुन इत्यादिना बाह्यतर्कबाधा च परिहृतेति यावदित्यर्थः ।

## गुरुराजीया

अस्तु गुणगणाढ्यस्य श्रुत्यभिप्रेतत्वम् । ततोऽपि किं प्रकृते सिद्धमित्यत आह- एवं चेति ।।

## गोविन्दीया

यदर्थमिति ।। अयं तर्कविरोधपरिहारप्रपञ्चः आदिशब्देन सङ्गृहीतः । आन्तरानुपपत्ति-परिहारप्रपञ्चश्च कृतः । तद्विशिष्टं ब्रह्मोपसंहरतीत्यर्थः । एवं चेति ।। विशिष्टार्थं वक्तुः सूत्रकारस्य श्रुतिविरोधो नास्ति । श्रुतीनामपि विशिष्टार्थप्रतिपादकत्वादिति सिद्धमित्यर्थः ।

## जनार्दनभट्टीया

श्रुतिविरोध इति ।। 'अशब्दमस्पर्शम्' इत्यादिनिर्गुणत्वप्रतिपादकश्रुतिविरोध इत्यर्थः ।

# अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः..

**दृश्यत्वाद्यनुमानानामसिद्धिसमर्थनम्**

## श्रीमज्जयतीर्थटीका

एवं दृश्यत्वाद्यनुमानानां कालातीतत्वमभिधायासिद्धिमप्याह-

# मूल

***अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः ।***

यथाऽनिर्वचनीयासिद्धेरप्रसिद्धविशेषणता । एवं तत एवानुमानस्य दृश्यत्वादेरसिद्धिरपीति योज्यम् । तथा हि । न तावद् दृश्यत्वादिकं सत् । तेनैवानैकान्त्यापत्तेः । तथा नाप्यनिर्वच-नीयम् । तस्य पूर्ववदसिद्धत्वात् । तथा चासत्त्वे वक्तव्ये सुतरामसिद्धिः ।

ननु सामान्यतः प्रयुक्ते हेतौ विशेषविकल्पैर्निराकरणे१ धूमाद्यनुमानभङ्ग इति । मैवम् । अनिर्वचनीयासिद्धेरेव । न खल्वसिद्धाश्रयं सामान्यं सिद्धं भवति२ । 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इत्यस्यैवायं प्रपञ्चः । न चैतत्प्रागनुक्तमेव । प्रकृतत्वसाम्ये सम्भवे च सत्यर्धजरतीयानुपपत्तेः ।

## श्रीविजयीन्द्रभिक्षु

नन्वनिर्वचनीयासिद्धेरित्यनेन दृश्यत्वाद्यनुमानस्यासिद्धिरुच्यते । कुतोऽसिद्धिरिति जिज्ञासायां तदुपपादकतया अनिर्वचनीयासिद्धिरुपन्यस्यते । तथा चानिर्वचनीयासिद्धेरनुमानस्या-सिद्धिरित्येव वाक्यविन्यास उचितः । न त्ववधारणापिशब्दसाहित्येन । अनिर्वचनीयासिद्ध्यति-रिक्तस्य अनुमानासिद्ध्युपपादकस्याप्रसक्तेः । अनुमानातिरिक्तेऽसिद्धेरदूषणत्वाच्च । इति दोष-परिहारायाभिप्रेताध्याहारप्रदर्शनपूर्वकं योजनां दर्शयति- यथेति ।। असिद्धिमेवोपपादयति- तथा हीति ।। पूर्ववदिति ।। पूर्वोक्तप्रकारेणाप्रामाणिकत्वादित्यर्थः । तथा चेति ।। पारिशेष्याद्दृश्य-त्वादिकमसदित्येव वाच्यम् । चतुर्थप्रकारासम्भवात् । तथा च सुतरामसिद्धिरित्यर्थः । सर्वानुमानेऽपि प्रसिद्धधूमाद्यनुमानेऽपि ।

किमेतद्देशसंलग्नो धूमो हेतुः किंवाऽनेतद्देशसंलग्नः । नाऽद्यः । दृष्टान्तस्य साधनवैकल्यापत्तेः । नान्त्यः । स्वरूपासिद्धिप्रसङ्गादिति प्रसिद्धानुमानेऽपि सामान्यतः प्रयुक्तधूमादीनां विशेष-विकल्पैर्निराकरणसम्भवादिति भावः । आरोपितानारोपितसाधारणं सामान्यमेव नास्ति । माना-भावात् । आश्रयस्यैवाभावे दृश्यत्वस्य सामान्यरूपत्वमसिद्धमित्यभिप्रेत्य दूषयति- मैवमिति ।। एतदेवोपपादयति- न खल्विति ।। 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इति पूर्वमेव दृश्यत्वादि-हेतूनां दूषितत्वात् 'अनिर्वचनीयासिद्धेरेव' इत्यनेनापि तद्दूषणाभिधानं पुनरुक्तमित्याशङ्क्याऽह- दृश्यत्वेति ।। दृश्यत्वाद्यनुमानेष्विति वाक्ये एत इति सर्वनाम्ना असिद्ध्यतिरिक्तस्यैव दोषस्य परामर्शान्न पौनरुक्त्यमित्याशंक्याऽह- न चैतदिति ।। अर्धजरतीयानुपपत्तेरिति ।। अर्धजरतीशब्देन सर्वात्मना जरतीं त्यक्तुमशक्नुवतः प्रक्रिया लक्ष्यते । छप्रत्ययेन चोपमानोपमेयभावरूपसम्बन्ध उच्यते । तथा च तत्प्रक्रियातुल्यप्रक्रियानुपपत्तेरित्यर्थः ।

इत्थं हि तत्प्रक्रिया 'अर्धं जरत्याः कामयते अर्धं न कामयते । मुखं जरत्याः कामयते नाङ्गान्तरम्' इति । एवं जरत्या एकदेशे कामना एकदेशे तु सा नेत्येतद्यथा जुगुप्सितम् । एवं प्रकृतत्वसाम्ये च सम्भवति च कस्यचित्परामर्शः कस्यचिन्नेत्येतज्जुगुप्सितमिति भावः ।

## श्रीवेदेशतीर्थ

अवधारणलब्धमर्थं दर्शयन् योजयति- यथानिर्वचनीयेत्यादिना ।। ननु दृश्यत्वाद्यनुमानेष्वप्येत एवेत्यत्रास्यार्थस्योक्तत्वादिदं वाक्यं व्यर्थमित्यत आह- दृश्यत्वादीति ।। तत्रातिदेशबलादिदं दूषणं सूचितमेवात्र शब्दत एवोपपाद्यत इति भावः ।। अर्धजरतीयानुपपत्ते-रिति ।। अत्र केचित् । अर्धजरतीशब्देन सर्वात्मना जरतीं त्यक्तुमशक्नुवतः प्रक्रिया लक्ष्यते । छप्रत्ययेन चोपमानोपमेय(भाव)रूपसम्बन्ध उच्यते । तथा च तत्प्रक्रियातुल्यप्रक्रियानुपपत्तेरित्यर्थः पर्यवस्यति । तथा च तत्प्रक्रिया । अर्धं जरत्याः कामयते अर्धं न कामयते मुखं जरत्याः कामयते नाङ्गान्तरमिति । एवञ्च जरत्या एकदेशे कामना एकदेशे नेत्येतद्यथा जुगुप्सितमेवं प्रकृतत्वसाम्ये सम्भवे च सति कस्यचित्परामर्शः कस्यचिन्नेत्येतज्जुगुप्सितमिति भाव इत्याहुः ।

अन्ये तु चरतीयानुपपत्तेरिति पाठः । तत्र चरतिश्चरणं भक्षणमिति यावत् । तेन तत्कर्तुः प्रक्रिया लक्ष्यते । छप्रत्ययेन च पूर्ववत्सम्बन्ध उच्यते । तेनार्धभक्षणकर्तुः प्रक्रियातुल्यप्रक्रियानुपपत्तेरित्यर्थः पर्यवस्यति । इत्थं हि तत्प्रक्रिया- सगर्भां मत्स्यवधूं गृहीत्वा कश्चिदस्या प्रसवे मत्स्यान्तरं भवि-ष्यति । एवञ्च तदपि भक्षणार्थं भविष्यति । इदानीं चेमामपक्त्वाऽनश्नन्नहं न स्थातुमुत्सह इति विचार्य वदति । अस्या अर्धं पाकाय अर्धं प्रसवायेति । एवञ्च तद्यथा जुगुप्सितमेवमेतदपीति भाव इत्याहुः ।

## श्रीराघवेन्द्रतीर्थ

एवकारसार्थक्यायाऽह१- यथेति ।। तेनैवानैकान्त्यादिति ।। दृश्यत्वादिहेतौ सत्यपि दृश्यत्वादौ मिथ्यात्वाभावादिति भावः । पूर्ववदिति ।। 'विमतमनिर्वचनीयं बाध्यत्वात्' इत्यादौ साध्यस्येवेत्यर्थः। धूमादीति ।। पर्वतोऽग्निमान् धूमादित्यत्रैतद्देशकालसंलग्नो धूमो हेतुश्चेद् दृष्टान्तः साधनहीनः । तद्देशादिसम्बद्धश्चेदसिद्धिरित्यादिरूपेण निराससम्भवादिति भावः । धूमत्व-स्योभयधर्मिणः सत्त्वेनोभयसाधारणोऽप्यनिर्वचनीयकोटेरलीकत्वेनानिर्वचनीये सत्ये च नैकमनुगतं दृश्यत्वादिसामान्यमस्तीति भावेनाऽह- न खल्विति ।। इतिशब्दो वाक्यव्याख्यासमाप्तौ । पूर्ववाक्येनापौनरुक्त्यायाऽह - दृश्यत्वादीति ।।

ननु तत्रैतच्छब्देन तत्प्रकृताप्रसिद्धविशेषणत्वादयोऽसिद्धिभिन्नाः परामृश्यन्तामिति भावेना-शङ्क्य निराह - न चैतदिति ।। प्रकृतत्वसाम्य इति ।। अनुमानदोषस्य प्रकृतत्वसाम्ये प्रतिज्ञायामिव हेतावपि सम्भवे च सति प्रतिज्ञादोषस्यैव तत्रोक्तिर्न हेतुदोषस्येत्यर्धजरतीयानुपपत्तेरित्यर्थः । अत एव प्राक् किञ्चेत्यादिनाऽसिद्धिरपि व्युत्पादितेति भावः । अर्धजरतीशब्देन सर्वात्मना जरतीं त्यक्तुमशक्नुवतः प्रक्रिया लक्ष्यते । उपमानार्थे छप्रत्ययः । अर्धं जरत्याः कामयते । अर्धं नेति जरत्याः मुखं कामयते नाङ्गान्तरमित्यर्धे कामनाऽर्धे नेति कामुकप्रक्रिया यथा हेया तथा प्रकृतत्वसाम्ये सम्भवे च कस्यचित्परामर्शः कस्यचिन्ने-त्येतस्यानुपपत्तेरित्यर्थः । अर्धचरतीयेति पाठेऽर्धं पाकेन भक्षणायार्धं प्रसवायेत्येतद्यथाऽनुपपन्नं तथेत्यर्थः । 'चर गतिभक्षणयोः' इति धातोरित्याहुः । तेनैवेति ।। दृश्यत्वे दृश्यत्वाभावेऽज्ञानासिद्ध्यापत्तेः अतो दृश्यत्वे दृश्यत्वसद्भावेऽपि मिथ्यात्वाभावाद्व्यभिचार इत्यर्थः । धूमाद्यनुमानेति ।। एतद्देशकालविशिष्टधूमस्य हेतुत्वे दृष्टान्ते साध्यवैकल्यं अनेतद्देशकालविशिष्टस्य तस्य हेतुत्वे स्वरूपासिद्धिरतो धूमत्वसामान्यमेव हेतुरिति यथा तत्रोच्यते तथाऽत्रापि दृश्यत्वसामान्यमेव हेतुरस्त्विति भावः । इदम् अनिर्वनीयासिद्धेरेवेति वाक्येनोच्यमानं दूषणमित्यर्थः । प्रागिति ।। प्रागुक्तस्यैव हि प्रपञ्चः कार्यो नान्यस्य । इदं च दूषणं प्रागनुक्तमेवातो नायं पूर्वोक्तस्य प्रपञ्च इत्यर्थः । प्रकृतत्वेति ।। दृश्यत्वाद्यनुमानेष्वपीति वाक्येन ये पूर्वप्रकृता दोषा दृश्यत्वाद्यनुमानेऽतिदिष्टास्तैस्सहास्यापि दोषस्य प्रकृतत्वेन साम्ये सम्भवति सत्यर्धजरतीयन्यायेन कस्यचिद्दूषणस्यातिदेशः कस्यचिन्नेत्येतज्जुगुप्सितमिति भावः ।

## गुरुराजीया

तेनैवेति ।। दृश्यत्वादौ दृश्यत्वाद्यवृत्तौ अज्ञानासिद्धिप्रसङ्गेन तस्य दृश्यत्वादिमत्त्वा-वश्यम्भावादिति भावः । धूमाद्यनुमानेति ।। तत्रापि एतद्देशकालसंलग्नो धूमो हेतुः, अनेतद्देशकालसंलग्नो२ वा । नाद्यः । तथा सति दृष्टान्ते तदभावेन तस्य साधनवैकल्यप्रसङ्गात् । नान्त्यः । तस्य पक्षेऽसत्त्वेन पक्षेऽसिद्धिप्रसङ्गादित्यादिरूपेण तत्रापि विशेषविकल्पैर्निराकरणस्य कर्तुं शक्यत्वादिति भावः । अविवक्षितविशेषं धूममात्रं धूमानुमाने हेतुरिति युज्यते परिहारः । धूमद्वयेऽपि धूमत्वसामान्यस्य वादिप्रतिवादिसम्मतत्वात् ।

न च सत्यानिर्वचनीयदृश्ययोर्दृश्यत्वसामान्यं वादिप्रतिवादिसम्मतम् । येनात्र तथा परिहारः स्यात् । अनिर्वचनीयस्य स्वरूपेणास्माकमसिद्धेरित्याशयवानाह- अनिर्वचनीयासिद्धेरेवेति ।। अनिर्वचनीयासिद्धावपि तदनुगतदृश्यत्वसामान्यसिद्धिः किं न स्यादित्यत आह- न खल्विति ।। अन्यथा गगननलिने प्रसिद्धनलिने च नलिनत्वसामान्यस्यापि सिद्धिप्रसङ्गादिति भावः । प्रपञ्च इति ।। तथा च न तेनास्य गतार्थतेति भावः । न चैतत्प्रागनुक्तमेवेति ।। अतिदेशो हि प्रागुपदिष्टस्य भवति । पूर्वं च विवादपदं अनिर्वचनीयं बाध्यत्वादित्यनुमानमुक्तम् । तत्र चाप्रसिद्धविशेषणत्वादय एव दोषा उक्ताः । न तु हेतोरीदृशविकल्पेन खण्डनं कृतम् । तथा च कथमसावतिदेशो युज्यत इत्यर्थः । प्रकृतत्वसाम्य इति ।। अनुमानदूषणं हि प्रकृतम् । तत्र च साध्यांशे विकल्प्यासदनिर्वचनीययोः मिथ्यात्वं सामान्यम् अनुगतं नास्तीति दूषिते हेतावपि तादृशविकल्पस्य दूषणस्य च सम्भवात् कण्ठतोऽनुक्तमप्यर्थादुक्तमेव । एकत्रोक्तस्यान्यत्राग्राह्यता हि द्वेधा सम्भवति । अप्रकृतत्वाद्वा तत्रोक्तदूषणभूषणयोरन्यत्रासम्भवाद्वा । नोभयथाऽपि प्रकृतेऽस्ति । साध्यदूषणवद्धेतुदूषणस्यापि प्रकृतत्वाद्दूषणस्य हेतावपि योजयितुं शक्यत्वेन सम्भवाच्चेत्यर्थः । अर्धजरतीयानुपपत्तेरिति ।। 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इत्यधिकरणीय-

'तेनासां यदि वा नैव क्वचिदस्ति प्रमाणता ।

सर्वत्राऽग्रहता वा स्यान्न त्वर्धजरतीयता ।।'

इत्येतद्वार्तिकव्याख्यावसरे राणके उक्तम् 'केनचित्पाशुपतेन सर्वजरत्या योषितोऽनुपभोग्यत्वात् सर्वतरुण्याश्च वृद्धे मय्यरुचिप्रसङ्गादर्धजरत्या एवाऽनयने दूतः प्रेषितः' इति लोकप्रवादोऽर्ध-जरतीयशब्देन उपमानत्वेनोक्त इति ।

क्वचिच्चरतीयेति पाठः । सोऽपि गृहैकत्वाधिकरणीय -

'श्रुतशब्दाभिधेयानां नार्थानां युगपत् तथा ।

ग्रहणाग्रहणं युक्तमर्धकुक्कुटिपाकवत् ।।'

इत्येतद्वार्तिकव्याख्यावसरे राणके विवृतः । 'तथाशब्दातिदिष्टं विरोधं द्रढयितुम् अर्धं कुक्कुट्याः पच्यतामर्धं प्रसवाय ध्रियतामिति लोकप्रवादादायातं पाशुपतवाक्यम्-

‘नैकस्य वस्तुनोऽर्धचरतीयं, कथं भवेत् ।

कुक्कुट्याः पाक अर्धस्य प्रसवस्यार्धधारणम् ।। ’

इति वार्तिकालोचनया दृष्टान्तितं गम्यते’ इति । तत्राऽद्यपाठे तथा एकस्मिन्नेवानुमाने न्याय-साम्येऽपि साध्यांश एव दूषणप्रवेशो हेत्वंशे न तत्सङ्क्रम इत्यपि न सम्भवतीत्युपमार्थः । द्वितीयपाठे तु तथा एकस्मिन्नंशे दूषिते भूषिते वा तत्समानन्यायाक्रान्तोऽपरोऽप्यंशो दूषितो भूषितो वा भवत्येव । न तु एक एव दूषितो भूषितश्च न त्वपर इति न युज्यत इत्युपमार्थः१।

## गोविन्दीया

कालातीतेति ।। प्रबलप्रमाणविरोधितेत्यर्थः । तत एवेति ।। अनिर्वचनीयासिद्धेरेवे-त्यर्थः । तेनैवेति ।। तत्रैव दृश्यत्वादौ दृश्यत्वं वर्तते सत्यत्वाङ्गीकारेण मिथ्यात्वाभावाद् अनैकान्त्यापत्तेरित्यर्थः । सर्वानुमानोच्छेदप्रसङ्ग इति ।। तथा हि- पर्वतीयधूमेन पर्वतीय-वह्निसाधनेऽन्यत्र दृष्टेन धर्मेणाग्न्यनुमितिर्न स्यादित्यादिविकल्पैरुच्छेदप्रसङ्ग इत्यर्थः । मैवमिति ।। अनिर्वचनीयासिद्धेरेव पक्षरूपाश्रयदृश्यत्वादेरप्यसिद्धिरित्यर्थः । सामान्यमिति ।। दृश्यत्वादिक-मित्यर्थः । अयं प्रपञ्च इति ।। दृश्यत्वाद्यनुमानेष्वप्येत एव दोषा इत्यनेन वाक्येनानुमानदोषाणा-मुक्तत्वादसिद्धिरप्युक्तप्रायैव पुनस्तत्कथं न पुनरुक्तं स्यादित्याशङ्क्यानिर्वचनीयासिद्धेरेवेति वाक्येन योऽयमर्थ उक्तः, स च तस्यैव पूर्वोक्तस्यैव प्रपञ्चः । अतो न दोष इत्यर्थः । प्रकृतत्वसाम्ये इति ।। असिद्धाश्रयत्वसाम्ये सम्भवे च सति कस्यचिद्वादिनः सिद्धमिति वक्तुः प्रक्रियाया अर्धचरतीयानुपपत्तेः । अर्धचरतीत्यनेनार्धं पाकायार्धं प्रसवायेति तत्प्रक्रियोपलक्ष्यते, छप्रत्ययादेशेन ईयशब्देनोपमानोपमेययोः सम्बन्धो लक्ष्यते । तथा चार्धचरणप्रक्रियातुल्यत्वेनानुपपत्तेरित्यर्थः । यथार्धचरणप्रक्रियाया अनुपपत्तिस्तथा दृश्यत्वसामान्यं कस्यचित्सिद्धमिति वक्तुः प्रक्रियाया अनुपपत्तिरिति भावः । अर्धजरतीयानुपपत्तेरिति पाठे मुखं जरत्याः कामयते नाङ्गान्तरमिति प्रक्रियाया यथाऽनुपपत्तिस्तथा प्रकृतप्रक्रियाया इत्यर्थः ।

## नारोपन्तीया

सर्वानुमाने प्रसङ्ग इति । पर्वतो वह्निमान् धूमादित्यादावपि धूमः किं पर्वतीयवह्नि-समानाधिकरणो वा हेतूक्रियते, आहोस्विन्महानसीयवह्निसमानाधिकरणो वेति विकल्प्याऽद्ये पर्वतीय-वह्न्यसिद्ध्या विशिष्टासिद्धिः । द्वितीये व्यधिकरणासिद्धिरित्यादिखण्डनस्य कर्तुं शक्यत्वात् । अनिर्वचनीयासिद्धेरेवेति ।। यद्यपि सर्वानुमानोच्छेदभिया नैतादृशविकल्पखण्डनं च युक्तम् । तत्र तत्र पक्षदृष्टान्तवृत्तिधूमनिष्ठधूमत्वसामान्यधर्मपुरस्कारेण धूमो हेतुरित्येवं समाधानं सुशकम् । तथापि प्रकृते अनिर्वचनीयपदार्थस्यैव परं प्रत्यसिद्ध्या सामान्यधर्मपुरस्कारेणाहेतूकरणादिति भावः । अनिर्वचनीयासिद्धावपि कुतो न सामान्येन हेतुत्वमित्यत आह । न खल्विति । न चैतत्प्रागनुक्तमेवेति । अतिदेशो हि प्रागुपदिष्टस्य भवति । पूर्वं च विवादपदमनिर्वचनीयं बाध्यत्वादित्यनुमानमुक्तम् । तत्र

चाप्रसिद्धविशेषणत्वादय एव दोषा उक्ताः । न तु हेतोरीदृशविकल्पेन खण्डनं कृतम् । तथा च कथमसौ विकल्पो युज्यत इत्यर्थः ।

प्रकृतत्वसाम्य इति । अनुमानदूषणं हि प्रकृतम् । तत्र च साध्यांशे विकल्प्यासदनिर्वचनीय-योर्मिथ्यात्वमनुगतं नास्तीति दूषिते हेतावपि तादृशविकल्पस्य दूषणस्य च सम्भवात् कण्ठतोऽ-नुक्तमप्यर्थादुक्तमेव । एकत्रोक्तस्यान्यत्राग्राह्यता हि द्वेधा सम्भवति । अप्रकृतत्वाद्वा तत्रोक्तदूषण-योरन्यत्रासम्भवाद्वा । नोभयमपि प्रकृतेऽस्ति । साध्यदूषणवद्धेतुदूषणस्यापि प्रकृतत्वात्, तद्दूषणस्य हेतावपि योजयितुं शक्यत्वेन सम्भवाच्चेत्यर्थः । अत एवाऽह- अर्धजरतीयानुपपत्तेरिति ।। यथा ह्येकस्मिन् शरीरेऽर्धभाग एव जराप्रवेशः, अर्धभागे तु यौवनमिति न सम्भवति, तथा एकस्मिन्नेवानुमाने न्यायसाम्येऽपि साध्यांश एव दूषणप्रवेशः हेत्वंशे न तत्संक्रम इत्यपि न सम्भवतीत्यर्थः । क्वचिदर्धचरतीति पाठः। तदर्थस्तु- गोर्वा अजाया वा तृणादिचरणार्थं पूर्वकायरूपमर्धं वने प्रस्थाय, देहार्धं अपरकायरूपमर्धं गृहे बद्धुमशक्यम् । किन्तु मुखे प्रस्थित एव सर्वं प्रस्थितं भवति । प्रत्यग्भागे बद्धे च सर्वं भवति । तथा एकस्मिन्नंशे दूषिते भूषिते वा तत्समानन्यायाक्रान्तोऽपरोऽप्यंशो दूषितो भूषितो वा भवतीति ।

## जनार्दनभट्टीया

तेनैवेति ।। मिथ्यात्वरूपसाध्यरहितेनेत्यर्थः ।

स्थलान्तरं न गवेषणीयमित्येवकारार्थः । विशेषविकल्पैरिति ।। सत्त्वानिर्वचनीयत्वासत्त्व-विकल्पैरित्यर्थः । सर्वानुमानेति१ ।। धूमाद्यनुमानोऽपि 'किं नीलधूमो हेतुः, उत रक्तधूमो वा' इत्यादिना विकल्प्य दूषणस्य सम्भवाद् इत्यर्थः । उक्तस्यैव विस्तरेणोक्तौ प्रपञ्चरूपता । दृश्यत्वाद्यनुमाने-ष्विति ।। 'वाक्ये अनिर्वचनीयासिद्ध्याऽप्रसिद्धिरेव अभिप्रेता न तु दृश्यत्वादिहेत्वसिद्धिः' इति प्रागनुक्तमेवेति शङ्कितुर्हृदयम् । अर्धजरतीयेति ।। 'अर्धं जरत्याः कामयते अर्धं न कामयते । मुखं जरत्याः कामयते । अङ्गान्तरं न कामयते' इति न्यायार्थः । 'अर्धचरतीय' इति क्वचित् पाठः । तत्र अर्धम् अलाबुफलं भक्षणाय । अर्धन्तु बीजायेत्यर्थः । तथा च अर्धं पाकाय अर्धं प्रसवायेति यथा नोपपद्यते अलाबुफलस्य परिपक्वत्वे तद्बीजेन उत्तरत्र जननसम्भवेऽपि२ भोजनार्थं पाकायोगात् । कोमलत्वे तु भोजनार्थं पाकसम्भवेऽपि तद्बीजेन अङ्कुरप्रसवायोगात् । किन्तु समग्रमपि अलाबुफलं केवलपाकाय वा । केवलप्रसवाय वा । तथा एकन्यायविषयाणां मध्ये एकदेशस्य परित्यागो न कर्तव्य इति भावः । एवञ्च 'अनिर्वचनीयासिद्धेः' इत्यत्र दृश्यत्वाद्यनुमानेष्विति वाक्यार्थप्रपञ्चनरूपत्वमुपपद्यत इति भावः ।

# अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः..

**दृश्यत्वाद्यनुमानानां प्रतितर्कपराहतिसमर्थनम्**

*अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः*

## श्रीमज्जयतीर्थटीका

अथवा प्रतिकूलतर्कपराहतिमनेनाऽह- यदि जगन्मिथ्या स्यात्तदा दृश्यत्वाद्यनुमानस्यापि जगदन्तःपातित्वेन मिथ्यात्वेनासिद्धिः स्यात् । अन्यथा तेन व्यभिचारापातात् ।

ननु न वयं मिथ्यापदेन जगतोऽसत्त्वमाचक्ष्महे । किं नामानिर्वचनीयत्वमेवातः कथं तदन्तःपातित्त्वेनानुमानस्यासिद्धिरिति चेत् न । तथा सत्यनिर्वचनीयासिद्धेरप्रसिद्धविशेषणत्व-स्योक्तत्वादिति ।

## श्रीविजयीन्द्रभिक्षु

उक्तपौनरुक्त्यपरिहारेऽपरितुष्यन्नाह- अथवेति ।। यथाश्रुते तत्परत्वस्याप्रतीतेरुदाहृत्य व्याचष्टे- यदीति ।। अनिर्वचनीयासिद्धेरेवेत्यस्य वैयर्थ्यमाशङ्क्य तन्निवर्त्याऽशङ्कां दर्शयति- ननु न वयमिति ।। तथा सतीति ।। मिथ्यापदस्यानिर्वचनीयार्थत्वे दृश्यत्वानुमानस्याप्रसिद्धविशेषणत्वं स्यात् अनिर्वचनीयासिद्धेः प्रागुपपादितत्वादित्यर्थः । अनिर्वचनीयासिद्धेरिति ।। अनिर्वचनीयत्वा-सिद्धेरित्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

प्रतिकूलतर्केति ।। दृश्यत्वाद्यनुमानस्येति योज्यम् । अनेनेति ।। अनिर्वचनीयासिद्धे-रेवेत्यादिवाक्येनेत्यर्थः । अन्यथेति ।। सत्यत्वे तेन दृश्यत्वादिनैव व्यभिचारापातात् । दृश्यत्वादौ दृश्यत्वाभावश्चेदज्ञानासिद्धिरिति भावः । असिद्धिः स्वरूपासिद्धिः । अन्यथा मिथ्यात्वाभावे । तेनेति ।। दृश्यत्व एवोक्तरीत्या व्यभिचारापातादित्यर्थः ।

## गुरुराजीया

अन्तःपातित्वेनेति ।। मिथ्याभूतगन्धर्वनगरान्तर्गतदेवदत्तभवनवन्मिथ्याभूत-जगदन्तर्गतानुमानस्य मिथ्यात्वावश्यम्भावादिति भावः । व्यभिचारापातादिति ।। दृश्यत्वाद्यनुमानस्यादृश्यत्वेऽज्ञानासिद्धिप्रसक्तेरिति भावः ।

## जनार्दनभट्टीया

अन्यथेति ।। १असत्यत्वं चेत्यर्थः ।

# अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः..

**दृश्यत्वाद्यनुमानानां दृष्टान्तस्य साध्यसाधनवैकल्यसमर्थनम्**

*अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः*

## श्रीमज्जयतीर्थटीका

अथवा शुक्तिरजतादेरनिर्वचनीयासिद्धेस्तथा शुक्तिकाया एव दृग्विषयत्वाभ्युप-गमादनिर्वचनीयतयाऽभिमतस्य रजतस्यासिद्धेरदृश्यत्वाद् दृष्टान्तस्य साध्यसाधनवैकल्येनानुमान-स्यानुपपत्तिरिति योजनीयम् ।

## श्रीविजयीन्द्रभिक्षु

साधनवैकल्यमुपपादयितुमाह- तथेति ।। यथा शुक्तिरजतस्यानिर्वचनीयत्वमसिद्धं तथा दृग्विषयत्वमप्यसिद्धम् । तस्यासत्त्वेन दृग्विषयत्वानभ्युपगमात् । शुक्तिकाया एव तद्विषयत्वाभ्युप-गमाच्च । तथा च शुक्तिरजतादिदृष्टान्तस्य साध्यसाधनवैकल्येन दृश्यत्वाद्यनुमानस्य असिद्धिः अनुपपत्तिरिति योजनीयमित्यर्थः ।

## श्रीवेदेशतीर्थ

शुक्तिकाया एवेति ।। रजतं दृष्टमिति भ्रममात्रत्वात् । यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति तल्लक्षणाच्चेति भावः । अनुपपत्तिरिति मूलगतासिद्धिपदार्थकथनम् ।

## द्वैतद्युमणि

किं नामानिर्वचनीयत्वमेवेति द्वितीयान्तम् । 'मिथ्यापदेनाऽचक्ष्महे' इति सम्बन्धः । इदं चानिर्वचनीयासिद्धेरिति धर्मिरूपानिर्वचनीयवाचकपदघटितमूलनिवर्त्यशङ्काप्रदर्शनार्थमिति द्रष्टव्यम् ।

## श्रीराघवेन्द्रतीर्थ

तदेव वाक्यं दृष्टान्तदोषोक्तिपरतया व्याचष्टे- अथवेति ।। अनिर्वचनीयासिद्धेरिति ।। अनिर्वचनीयत्वासिद्धेरित्यर्थः । तेन साधनहीनतोपपादनं ध्येयम् । हेतुहीनतामुपपादयति- तथेति ।। शुक्तिकाया एवेति ।। यत्सन्निकृष्टेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति विषयत्वनिर्वचनात् । शुक्तिसन्निकृष्टकरणेनैवेदं रजतमिति ज्ञानस्योत्पत्त्या शुक्तिकाया एव दृश्यत्वाभ्युपगमादित्यर्थः । असिद्धेरित्यनुवादः । अदृश्यत्वादिति व्याख्या । असिद्धिरित्यस्यार्थोऽनुपपत्तिरिति । दृश्यत्वादे-रसिद्ध्याद्युक्तिः । शुक्तिरजतादेरिति । असदेव रजतं प्रत्यभादित्यनुभवेन शुक्तिरजतादेरसत्त्वावगमेना-निर्वचनीयत्वासिद्धेरित्यर्थः । तथा च साध्यवैकल्यमिति भावः । साधनवैकल्यं चाऽह- तथेति ।।

## गुरुराजीया

शुक्तिकाया एवेति ।। यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते तस्यैव तद्विषयत्वेन शुक्तिमात्रसन्निकृष्टकरणजन्यतज्ज्ञानस्य शुक्तिमात्रविषयकत्वादिति भावः । अनुपपत्तिरिति ।। अनेन मूलगतमसिद्धिपदम् अनुपपत्त्यर्थकतया व्याख्यातं भवति ।

## गोविन्दीया

अथवेति ।। शुक्तिरजतादेरनिर्वचनीयत्वासिद्धेर्दृष्टान्तस्य साध्यवैकल्यम् । तथा शुक्तिकाया एव दृग्विषयत्वाभ्युपगमादनिर्वचनीयत्वाभिमतस्य रजतस्यासिद्धेः दृश्यत्वात् साधन-वैकल्यम् । तथा चानुमानस्यानुपपत्तिरिति योजनीयमित्यर्थः ।

## जनार्दनभट्टीया

शुक्तिकाया एवेति ।। 'यत्सन्निकृष्टकरणेन' इत्याद्यनित्यज्ञानविषयलक्षणानुसारेण तत्ववादिभिरस्माभिः शुक्तेरेव दृग्विषयत्वाभ्युपगमादिति भावः । साध्यवैकल्यस्फोरणाय आह – अनिर्वचनीतयाऽभिमतस्येति ।। साधनवैकल्यस्फोरणाय आह – अदृश्यत्वादिति ।। आदेशं= प्रश्नम्, अप्राक्षः= अपृच्छः, श्वेतकेतुं प्रति उद्दालकस्य इदं वाक्यं छान्दोग्योपनिषदि, मतं= मननविषयीकृतम् ।

# उत तमादेश-मप्राक्ष्यो..

**उत तमादेशमित्यादिश्रुतीनां पराभिमतार्थानुवादः**

उत तमादेश-मप्राक्ष्यो..

## श्रीमज्जयतीर्थटीका

मा भूदनुमानात्प्रपञ्चमिथ्यात्वसिद्धिः श्रुत्या तु भविष्यति । तथा हि । 'उत तमादेश-मप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति ब्रह्मज्ञानेन सर्वज्ञानमुच्यते ।

न च सर्वस्य वियदादिप्रपञ्चस्य ब्रह्मव्यतिरेकेण परमार्थतः सत्त्वे तदुपपद्यते । तेन ज्ञायते ब्रह्मैव परमार्थसत् । वियदादिकन्तु तत्राऽरोपितम् । तद्व्यतिरेकेण नास्तीत्यस्यार्थ इति । मैवम् । एकविज्ञानेन सर्वविज्ञानस्य सादृश्यप्राधान्याभ्यामुपपत्तेः । न चान्यथोपपद्यमानं वाक्यं प्रपञ्चस्य ब्रह्मण्यारोपितत्वं प्रतिपादयितुं शक्नोति ।

नन्वेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्ताकाङ्क्षायामुच्यते 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इत्यादि । तत्र हि कार्यस्य कारणव्यतिरेकेणासत्त्वमवगम्यते । अतः कथमेकविज्ञानेन सर्वविज्ञानमन्यथा व्याख्यायत इति । मैवम् । यथा सोम्येत्यादिदृष्टान्त-वाक्येष्वपि पराभिमतस्यार्थस्याप्रतिभासात् । न हि तत्र तत्सूचकं किमप्यस्ति ।

नन्वेतानि दृष्टान्तवाक्यानि 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादि-वाक्यैर्व्युत्पादितानि । यतो वाचा केवलमस्तीत्यारभ्यते विकारः घटः शरावः उदञ्चनं चेति न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्रं ह्येतदनृतम् । मृत्तिकेत्येव सत्यम् । अत एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं

मृण्मयं घटशरावोदञ्चनादिकं मृदात्मकत्वा-विशेषाद्विज्ञातं भवेदिति । तत्कथं यथा सोम्येत्यादिदृष्टान्तानां कारणव्यतिरेकेण कार्यासत्त्वे तात्पर्याभावः । कथं चैकविज्ञानेन सर्वविज्ञानमन्यथा व्याख्यात इति ।

## श्रीविजयीन्द्रभिक्षु

दृश्यत्वानुमानदूषणावसरे वाचारम्भणश्रुत्यर्थकथनमयुक्तमित्याशङ्क्यावतारयितुमाह- माभूदिति ।। न च सर्वस्येति ।। अन्यज्ञानस्यान्यज्ञानत्वायोगादिति भावः । तदिति ।। ब्रह्मविज्ञानेन सर्वविज्ञानवचनमित्यर्थः । नन्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञया सर्वस्य ब्रह्माभिन्नत्वेन परमार्थ-सत्त्वमेव सिद्धम् । न मिथ्यात्वमित्यत आह- तेनेति ।। ब्रह्माभिन्नत्वमिह ब्रह्मव्यतिरेकेणासत्त्वं विवक्षितम् । न स्वरूपात्मकत्वम् । जडाजडयोस्तदसम्भवादिति न जगतः सत्यत्वसिद्धिरिति भावः । ब्रह्मव्यतिरेकेण जगदसदिति वदताऽपि न स्वरूपेणासदित्युच्यते । अत्यन्तासत्त्वापा-तात् । किन्तु ब्रह्मसत्ताव्यतिरेकेण सत्ता नास्तीति । तथा च ब्रह्मातिरिक्तस्य जगत्स्वरूपस्य सत्त्वात्कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिरिति शङ्कावारणायोक्तम् । वियदादिकन्तु तत्राऽ-रोपितमिति । अध्यस्तस्याधिष्ठानव्यतिरेकेण स्वरूपाभावाद्ब्रह्मैव सर्वस्य स्वरूपमिति तज्ज्ञानेन सर्व-विज्ञानप्रतिज्ञोपपद्यत इति भावः । अस्येति ।। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावचनस्येत्यर्थः ।

भवतु वियदादिप्रपञ्चस्य ब्रह्मव्यतिरेकेण परमार्थसत्त्वम् । न चैवं तद्विज्ञानेन सर्वविज्ञान-प्रतिज्ञानुपपत्तिः । सादृश्यप्राधान्याभ्यामेव तदुपपत्तेः । 'प्रधानपुरुषे ज्ञाते ग्रामो ज्ञातो भवति' 'एकस्मिन् गवि विज्ञाते तत्सदृशगवान्तरमपि ज्ञातं भवति' इति व्यवहारस्य लोके सिद्धत्वादिति परिहरति- मैवमिति ।। नन्वेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनार्थं यथा सोम्येत्यादिना मृत्पिण्डादिदृष्टान्तोपादानं क्रियते । तत्रोपादेयस्य घटशरावादेः मृद्रूपोपादानव्यतिरेकेणासत्त्व-दृष्टान्तानुसाराद् वियदादिरूपोपादेयस्य ब्रह्मरूपोपादानव्यतिरेकेणासत्त्वमेव सिद्ध्यति । एतच्च वियदादेः ब्रह्मण्यारोपितत्वं विना नोपपद्यत इति सर्वविज्ञानप्रतिज्ञावाक्यस्यापि स एवार्थोऽङ्गी-कर्तुमुचित इत्याशयेन शङ्कते- नन्विति ।। न चोपादानोपादेयभावापन्नमृत्पिण्डादि-दृष्टान्तोपादानबलेन ब्रह्मणोऽप्यविद्योपादानत्वं वाच्यम् । तच्च वियदादिविवर्ताधिष्ठानत्व-मेवान्यस्यासम्भवादिति वाच्यम् । मृद्घटादेर्वस्तुत उपादानोपादेयभावापन्नत्वेऽपि तत्पुरस्कारेणापि दृष्टान्तत्वे मानाभावात् । एकमृत्पिण्डस्य सर्वमृन्मयोपादानत्वाद्यसम्भवात् । नखनिकृन्तनस्यान्त्या-वयवित्वेनोपादानत्वस्यैवासम्भवाच्च । तथा च प्रतिज्ञावाक्यस्य त्वदुक्तार्थपरत्वासम्भवेन अस्मदुक्तव्याख्यानमेवाऽदरणीयमिति भावः ।

ननु यथा सोम्येत्यादिदृष्टान्तवचनस्योपादानव्यतिरेकेणोपादेयासत्त्वप्रतिपादन एव तात्पर्यम् । वाचारम्भणमित्यादिवाक्यैस्तथैव तद्व्युत्पादनात् । तत्र हीत्थमर्थः प्रतीयते । वाचारम्भणं वाचा केवलमस्तीत्यारभ्यते । वाचा व्यवहारमात्रम् । विकारो घटः शराव उदञ्चनं चेति नामधेयं नाममात्रं ह्येतत्, शब्दव्यतिरेकेण वस्तुतो विकारः कोऽपि नास्ति, मिथ्येति यावत् । किं तर्हि सत्यम् । मृत्तिकैव । तथा च प्रतिज्ञावाक्यं यथाश्रुतार्थपरमेवाङ्गीकर्तुं युक्तम् । न तूक्तरीत्याऽर्थान्तरपरमिति शङ्कते- नन्वेतानीति ।।

## श्रीवेदेशतीर्थ

श्रुत्येति ।। वाचारम्भणश्रुत्येत्यर्थः । तस्या एव पूर्वमुदाहृतत्वात् । ‘उत तमादेशम्’ इत्यादिश्रुतिविचारस्तूपोद्घातसङ्गत्येति भावः । न चेति ।। अन्यज्ञानेनान्यज्ञानायोगादिति भावः । तदिति ।। ब्रह्मज्ञानेन सर्वज्ञानवचनमित्यर्थः ।

नन्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञया सर्वस्य ब्रह्मभिन्नत्वेन परमार्थसत्त्वमेव सिद्ध्येन्न मिथ्यात्व-मित्यत आह- तेनेति ।। ब्रह्माभिन्नत्वमिह ब्रह्मव्यतिरेकेणासत्त्वमेव विवक्षितम् । न स्वरूपाभिन्न-त्वम् । जडाजडयोस्तस्यासम्भवादिति भावः । सर्वविज्ञानमिति ।। तत्प्रतिपादकं वाक्यमित्यर्थः । एवमुत्तरत्रापि ।

## द्वैतद्युमणि

उत तमादेशमिति ।। सिद्धान्ते ‘आदिश्यते’ इत्यादेशो भगवान् । तमप्राक्ष्यस्तद्विषयक-प्रश्नमकरोः किमित्यर्थः । परमते आदेशो नामोपदेशः । तमुद्दिश्य प्रश्नं कृतवांस्त्वं किमित्यर्थः । येनेत्यादि ।। येन परमात्मना श्रुतेन मतेन विज्ञातेनेति योज्यम् । यथाक्रममन्वयः । अन्यमते येन यादृशोपदेशेनेत्यर्थः । यद्वा ‘ब्रह्मविद्याभरणो’क्तरीत्या आदिश्यते इति व्युत्पत्त्यनुसारेण आदेशपदं ब्रह्मवाच्येव । उत्तरत्र येनेत्यस्य ब्रह्मणैवेत्यर्थोऽनुसन्धेयः । ब्रह्मज्ञानेनेति ।। ब्रह्मज्ञानाभिन्नं सर्वज्ञानमित्यर्थः । ब्रह्मोपदेशेनैव सर्वेषामपि श्रुतत्वादिकस्योक्तौ ब्रह्मज्ञानमेव सर्वज्ञानमिति पर्यवसितम् । ब्रह्मव्यतिरेकेणेति ।। ब्रह्मात्यन्तभिन्नत्वेनेत्यर्थः । जगति ब्रह्मतादात्म्यसत्त्वेन भेदाभेदयोरङ्गीकारादभेदमात्रेण ब्रह्मज्ञानस्य सर्वज्ञानात्मकत्वोपपत्तेरित्थं व्याख्यातम् । तर्हि परमार्थसत्त्वनिषेधोऽनुपयुक्तः । ब्रह्मात्यन्तभेदनिराकरणस्यैवैकविज्ञानेन सर्वविज्ञानोपयोगादिति चेत् । ब्रह्मात्यन्तभेदनिराकरणार्थमेव परमार्थसत्त्वनिराकरणात् । अन्यथा परमार्थतोऽत्यन्तभेद-वन्नानापदार्थसार्थस्य जगतोऽद्वितीयैकब्रह्माभेदायोगात् । एवञ्च व्यतिरेकेणेति तृतीयायाः व्यापकत्वरूपमवच्छिन्नत्वं प्रयोजकत्वं चार्थः । व्यतिरेकस्य व्याप्यत्वञ्च स्वस्वरूपत्वसहितस्यातो न तुच्छे व्यभिचार इति बोध्यम् । ब्रह्मव्यतिरेकप्रयोजकस्य तद्व्यापकस्य च जगन्निष्ठपारमार्थिक-सत्त्वस्याङ्गीकारो न युक्त इति जगतः पारमार्थिकत्वनिषेधे जगतो ब्रह्मतादात्म्यापादनद्वारा ब्रह्मज्ञानस्य सर्वज्ञानात्मकत्वोपयोगीति तत्र श्रुतेस्तात्पर्यमवश्यमङ्गीकार्यमित्यर्थः ।

ननु परमार्थसत्त्वशून्यस्य जगतो ब्रह्मात्मकत्वं शशविषाणादिरूपतुच्छस्येवानुपपन्नमतस्तज्ज्ञानं न सर्वज्ञानरूपं भवतीत्याशङ्क्य ब्रह्मव्यतिरेकेणेत्युक्तम् । तथा च ब्रह्मव्यतिरेकप्रयोजक-पारमार्थिकसत्त्वमेवैकविज्ञानस्य सर्वविज्ञानत्वविरोधीति तन्निषेधे विशेषनिषेधस्वारस्येन सामान्यतः पारमार्थिकसत्त्वमनुमतं स्यात् । तच्च ब्रह्मतादात्म्यापन्नत्वेनैव वाच्यम् । तच्च तादात्म्यं न ब्रह्मसमसत्ताकम् । स्वसमानसत्ताकानन्तजगत्तादात्म्ये ब्रह्मणोऽनन्तत्वापत्त्याऽद्वितीयश्रुति-विरोधापत्तेः । अतस्तन्न्यूनसत्ताकमेव ब्रह्मजगत्तादात्म्यमित्यायातम् । तन्न्यूनसत्ताकतन्निष्ठ-तादात्म्यप्रतियोगिकत्वञ्च तत्रारोपितस्यैव । अतो ब्रह्मण्यारोपिततया तदीयपरमार्थसत्त्ववतो जगतः पारमार्थिकस्वरूपं ब्रह्मैव रजतस्य शुक्तिरिव । अतो ब्रह्मज्ञानमेव सर्वज्ञानम् । शशविषाणादि-रूपतुच्छस्य तु सर्वथा परमार्थसत्त्वं नास्तीति तेषां न ब्रह्मात्मकत्वमिति भावः ।

## श्रीराघवेन्द्रतीर्थ

उतेति ।। येनाश्रुतं श्रुतं भवतीत्यादिरूपं तमादेशम् उपदेशम् अप्राक्ष्यः पृष्टवानभूः उत किमित्यर्थः । तत्रारोपितमित्यस्यार्थः, 'तद्व्यतिरेकेण नास्तीत्यर्थोऽस्य वाक्यस्य' इति । सादृश्यप्राधान्याभ्यामिति ।। एकगोज्ञाने तत्सदृशगवान्तरेषु ज्ञानमिव ब्रह्मज्ञानेऽबाधितत्वादि-सादृश्येन जगज्ज्ञानं भवति । ग्रामे प्रधानपुरुषज्ञानेऽप्रधानपुरुषज्ञानमिव प्रधानब्रह्मज्ञानेऽप्रधान-जगज्ज्ञानं भवतीत्यर्थः । फलापेक्षयैतद्ध्येयम् । अन्यथेति ।। सादृश्यादिना व्याख्यायत इत्यर्थः । न हि तत्रेति ।। यथा सोम्येति वाक्ये कारणव्यतिरेकेण कार्यासत्त्वसूचकं किमपि न ह्यस्तीत्यर्थः । लोहमण्याद्युपरितनदृष्टान्तद्वयाभिप्रायेणोक्तम्- एतानि दृष्टान्तवाक्यानीति ।। इत्यादीति ।। लोहमणिरित्येव सत्यं कार्ष्णायसमित्येव सत्यमिति वाक्यद्वयमादिशब्दार्थः । फलितार्थमाह - अनृतमिति ।। घटशरावादिकमित्यनुषङ्गः ।शुक्तिकाया एवेति । यत्सन्निकृष्टेनेत्यादि१ विषयत्वं शुक्तिकायामेवास्ति न रजते ; असता सन्निकर्षायोगादिति भावः । असिद्धेरित्यनूद्य अदृश्यत्वादिति व्याख्यातम् । तथा च दृश्यत्वासिद्धेरित्यर्थो द्रष्टव्यः । असिद्धिरित्यस्यार्थमाह- अनुपपत्तिरिति ।। वस्तुवृत्तेनेति पारमार्थ्येनेत्यर्थः ।

## गुरुराजीया

श्रुत्येत्युक्तां श्रुतिमेवोदाहरति- उत तमादेशमिति ।। पूर्वम् अनुमानानुग्राहकत्वेन वाचारम्भणवाक्योदाहरणं तु, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य मृत्पिण्डादिदृष्टान्तवाक्यानां च विकारविवर्ताभिप्रायकत्वस्य तद्वाक्यात् स्पष्टमप्रतीत्या वाचारम्भणमिति तदुपपादकवाक्यबलेनैव वक्तव्यत्वात् कृतम् । न तु तन्मात्रस्य मिथ्यात्वसाधकत्वाभिप्रायेण । एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञायाः मृत्पिण्डादिदृष्टान्तानां च वक्ष्यमाणप्रकारेण तत्साधकत्वादिति द्रष्टव्यम् ।

ननु मिथ्यात्वस्यात्राश्रुतत्वात् कथमनेन वाक्येन तल्लाभ इत्यतः श्रुत्या तल्लाभासम्भवेऽप्यर्थ-तस्तदवगमकत्वात् तत्साधकत्वमक्षतमेवेत्यभिप्रेत्य तदुपदर्शयति- न चेति ।। तदुपपद्यत इति ।। लोकेऽन्यज्ञानेनान्यज्ञानस्यादृष्टत्वादिति भावः । मैवमिति ।। तथा चैकविज्ञानेन सर्वविज्ञानस्य ब्रह्मव्यतिरेकेण प्रपञ्चस्य २सत्त्वेऽप्युपपन्नत्वेन नार्थतोऽप्यस्य वाक्यस्य तदवगमकत्वमिति नानेन वाक्येन प्रपञ्चमिथ्यात्वसिद्धिरिति भावः । सादृश्यप्राधान्याभ्याम् एकविज्ञानेन सर्वविज्ञानोप-पादनस्य दृष्टान्तवाक्यविरुद्धतया व्याख्यातुमशक्यतया उक्तरीत्यैव व्याख्येयत्वेन तदवगमकत्वं युक्तमेवेत्यभिप्रेत्य शङ्कते- नन्विति ।। तत्कुत इत्यतस्तद्वाचकपदस्यात्राश्रवणादिति भावेनाऽह- न हीति ।।

## गोविन्दीया

उत तमिति ।। येन श्रुतेन मतेन विज्ञातेन अश्रुतम् अमतमविज्ञातं सर्वं जगत् श्रुतं मतं विज्ञातं भवति तम् आदिष्टं ब्रह्म अप्राक्ष्य उत । जानासि किमित्यर्थः । मैवमिति ।। सर्वस्यासत्त्वाभावेऽप्येकविज्ञानेन सर्वविज्ञानस्य सादृश्यप्राधान्याभ्युपपत्तेरित्यर्थः । एकस्मिन् सदृशवस्तुनि दृष्टे सति तत्सदृशान्यानि वस्तूनि

दृष्टान्येव तथा एकस्मिन् प्रधानपुरुषे ज्ञाते सति अप्रधानाः सर्वे ज्ञातप्राया एवेति भावः । अन्यथोपपद्यमानमिति ।। प्रकारान्तरेणोपपद्यमानमि-त्यर्थः । व्युत्पादितानीति ।। व्याख्यातानीत्यर्थः । मृदात्मनेति ।। कारणात्मनेत्यर्थः ।

### जनार्दनभट्टीया

ननूच्यतां नाम ब्रह्मज्ञानेन सर्वज्ञानम् । तावता कथं सर्वमिथ्यात्वसिद्धिः? इत्यत आह – न चेति ।। यथा भेदवादिमते घटस्य पटव्यतिरिक्तत्वात् पटज्ञाने सति न घटज्ञानम्, एवं प्रपञ्चस्य ब्रह्मव्यतिरेकेण सत्त्वे ब्रह्मज्ञानेन सर्वविज्ञानं नोपपद्यत इति भावः । तेनेति ।। श्रुतावेकविज्ञानेन सर्वविज्ञानप्रतिपादनेनेत्यर्थः । वियदादिकमिति ।। वियदादिकं तद्व्यतिरेकेण नास्तीति प्रथममन्वयः ।

ननु तद्व्यतिरेकेण वियदादेरसत्त्वे कथं प्रत्यक्षादिना प्रतीतिः? इत्यत आह–तत्राऽरोपितमिति ।। एवञ्च सति यथा घटव्यतिरेकेण करीरस्य अभावात् घटज्ञाने सति करीरज्ञानं भवति१ । तथा ब्रह्मज्ञाने सति न प्रपञ्चज्ञानमुपपद्यत इति भावः । इत्यादीति ।। इत्यादिपदेन 'यथा सोम्य एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् ।' 'यथा सोम्य एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इति वाक्ययोर्ग्रहणम् । तत्सूचकं बहु अस्तीति आशयेन शङ्कते – नन्वेतानीति ।।

## वाचारम्भणं विविधप्रकारः ..

**वाचारम्भणमित्यादेः स्वाभिमतार्थसङ्कीर्तनम्**

### श्रीमज्जयतीर्थटीका

स्यादेवम् । यदि वाचारम्भणमित्यादिवाक्यमुक्तार्थं स्यात् । इदं त्वर्थान्तरपरमित्या-शयवान् व्याचष्टे-

## मूल

***वाचारम्भणं विविधप्रकारः ।***

वाचा वागिन्द्रियेणाऽरम्भणमुत्पादनं यस्य तद्वाचारम्भणं साङ्केतिकनाम्नः सञ्ज्ञैषा । तद्विकारः विविधप्रकारः । प्रकारप्रकारिणोरभेदात् । विविधप्रकारवदिति । साङ्केतिकानि नामानि पुरुषमतिवैचित्र्येण विविधप्रकाराणि भवन्तीत्यनित्यानि । न हि नित्यं पुरुषोत्प्रेक्षयाऽनेकविधं भवतीत्युक्तं भवति ।

**मूल**

***नाम धेयं नित्यं धार्यं नाम मृत्तिकेत्यादिवैदिकमेव***

इतिशब्दो वैपरीत्ये वर्तते । ततश्च शब्दादर्थे सम्प्रत्यय इति मृत्तिकाशब्दात्तदर्थे प्राप्ते शब्द-पदार्थकं तमवस्थापयति । आदिशब्देन लोहमणिकार्ष्णायसशब्दयोर्ग्रहणम् । एतच्चोपलक्षणम् । उपलक्षणं च समानस्य भवतीत्यवच्छेदकमुक्तम्- वैदिकमिति ।। मृत्तिकेत्यादिवैदिकमेव धेयं नाम नित्यं धार्यं नाम सर्वदा ज्ञातव्यमित्यनेन संस्कृतनाम्नां नित्यत्वमभिप्रैति ।

**मूल**

***इत्येतद्वचनं सत्यमिति श्रुत्यर्थः ।***

सत्यमर्थाव्यभिचारि । एवं प्राकृतादिभाषाणामनित्यत्वं संस्कृतभाषायाश्च नित्यत्वमुक्तम् ।

ततः किं प्रकृत इत्यत आह-

**मूल**

***अनित्यत्वात्साङ्केतिकं नामाप्रधानं नित्यत्वान्मृत्तिकादिनामैव प्रधानम् ।***

नित्यं ह्यर्थेनौत्पत्तिकसम्बन्धवत्त्वात्परानपेक्षं प्रधानम् । अनित्यं तु काल्पनिकशक्तित्वात् तदपेक्षमप्रधानं भवति ।

अस्तु नित्यत्वानित्यत्वप्रतिपादनं प्राधान्याप्राधान्यज्ञापनार्थम् । प्राधान्यादिज्ञापनमपि कुत्रोप-युज्यत इत्यत आह-

**मूल**

***प्रधानज्ञानादप्रधानमपि ज्ञातार्थमिव भवति ।***

संस्कृतज्ञानात्प्राकृतादिकं ज्ञातार्थं भवतीत्येतत्प्रमाणविरुद्धमत उक्तं ज्ञातार्थमिवेति । तज्ज्ञानप्रयोजनलाभश्चोपमार्थः ।

## श्रीविजयीन्द्रभिक्षु

मूलमवतारयति- स्यादेवमिति ।। विशब्दार्थो विविधेति । प्रकार इति कारप्रत्ययस्य व्याख्यानम् । वाचारम्भणमित्येकं पदम् । वाचाशब्दष्टाबन्तो वागिन्द्रियवाची ।

‘वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

टापं चैव हलन्तानां यथा वाचा दिशा निशा ।।’

इति स्मरणात् । आरम्भणशब्दो भावे ल्युडन्तः । तथा च वाचया आरम्भणं उत्पादनं यस्य तत्तथा । वाचा वागिन्द्रियेण इत्युक्तिस्तु यथाकथञ्चित्समासार्थप्रदर्शनपरा । 'नासमानाधि-करणानां बहुव्रीहिरिष्यते' इति वचनन्तु प्रायिकाभिप्रायमिति न तद्विरोधः । वाचया आरम्भणं यस्येति प्रदर्शनमुपलक्षणम् । आरम्भणमिति करणे ल्युडन्तम् । वाचा आरम्भणमुत्पादनं यस्येत्यपि द्रष्टव्यम् ।

'वाचारम्भणं विकारः' इति समानाधिकरणनिर्देशानुपपत्तिः । प्रत्युत तथात्वे वाचारम्भणो विकार इत्येव निर्देशापत्तिः । 'छान्दसत्वेन लिङ्गव्यत्यय' इति परिहारस्य चानन्यगतिकत्वादित्या-शङ्कापरिहारायाऽह- साङ्केतिकेति ।। नाम्नोऽन्यपदार्थत्वाद्विकारशब्दस्य नित्यपुल्लिङ्गत्वाच्च न सामानाधिकरण्यानुपपत्तिरिति भावः ।

ननु तथाऽपि वाचारम्भणं विकार इति निर्देशानुपपत्तितादवस्थ्यम् । न हि वाचारम्भण-शब्दार्थभूतं साङ्केतिकं नाम विविधप्रकारो भवति । किन्तु विविधप्रकारवदेव । न च विकारशब्दे विविध आकारः प्रकारो यस्येति बहुव्रीह्याश्रयणं युक्तम् । तथा सति विकारमिति निर्देशापत्तेः । इत्याशङ्कापरिहारायाऽह- प्रकारप्रकारिणोरिति ।। तद्विकार इति ।। तत् वाचारम्भणम् । साङ्केतिकनाम्नां विविधप्रकारत्वमुपपादयन् तदुक्तेः फलं दर्शयति- साङ्केतिकानीति ।। इत्यनित्यानीति ।। इतिशब्दो हेतौ । विविधप्रकारत्वादनित्यानीत्युक्तं भवतीत्यर्थः ।

ननु श्रुतौ विविधप्रकारोक्तिमात्रेण कथमनित्यत्वावगतिरित्यत आह- न हीति ।। नाम धेयमित्येतत्पदद्वयमित्यभिप्रायेण व्याचष्टे- नित्यं धार्यं नामेति ।। धारणार्थाद्धधातेः 'अचो यत्'१ इति कर्मणि यत्प्रत्यये 'ईद्यति'२ इति धात्वर्थाकारस्य ईकारे गुणे च धेयमिति भवतीत्याशयेन धार्यमिति व्याख्यानम् । धेयमिति विधेः कालविशेषानुक्तेः सङ्कोचायोगाच्च नित्यमित्युक्तमिति मूलार्थः ।'शब्दादर्थे सम्प्रत्यय' इति न्यायेन श्रुतिगतेतिशब्दतः उपात्तार्थग्रहणमेवोचितम् । न तु मृत्तिकाशब्दग्रहणम् । मानाभावादित्यत आह- इतिशब्द इति ।। अर्थप्रकरणे पठित इतिशब्दः वैपरीत्ये स्वाभिधेयप्रच्यावनेन स्वरूपार्थकत्वे वर्तते । यथा 'न वेति विभाषा'३ इत्यत्र इतिशब्द इति ज्ञातव्यम् । व्यवस्थापयतीति ।। इतिशब्द इत्यनुषङ्गः । मृत्तिकेत्यादीत्यादिपदस्यार्थमाह- आदिशब्देनेति ।।

ननु श्रुतौ मृत्तिकापदस्यैव श्रवणाद् आदिपदाभावेन एवं व्याख्यानमयुक्तमित्यत आह- एतच्चेति ।। मृत्तिकाशब्दग्रहणमित्यर्थः । ननु यद्युपलक्षणतया व्याख्यायते तदा शब्दमात्र-ग्रहणापत्तिः । न च वैदिकशब्दत्वस्योपलक्ष्यतावच्छेदकत्वान्नैवमिति वाच्यम् । सामान्यरूपतया शब्दत्वस्यैव तदवच्छेदकत्वसम्भवादित्यत आह- उपलक्षणं चेति ।। वैदिकशब्दत्वमेवोप-लक्ष्यतावच्छेदकम् । न तु शब्दत्वम् । न च विनिगमनाविरहः । बाधकं विना स्वसमानजातीयत्वस्यैव विनिगमकत्वात् । न ह्युपलक्षणाभिप्रायेण देवदत्तमामन्त्रयेत्युक्ते शूद्रस्याऽमन्त्रणं प्रसज्यत इति भावः ।

वैदिकनाम्नां धारणं दण्डादेरिवासम्भवीति व्याचष्टे- नाम सर्वदा ज्ञातव्यमिति ।। संस्कृत-नाम्नामिति । साधुशब्दानामित्यर्थः । यद्यपि वैदिकशब्दत्वमेव पूर्वमुपलक्ष्यतावच्छेदकमुक्तम् । तथाऽपि वैदिकशब्देनापि साधुशब्दत्वमेवावच्छेदकीकृतमित्यविरोधः । सदा धार्यत्वव्युत्पादनस्य फलमाह- नित्यत्वमभिप्रैतीति ।। मूले

श्रौतसत्यपदं न व्याख्यातमिति स्वयं व्याचष्टे- इत्येतद्वचनमिति ।। सन्निधानाद्वाचारम्भणमित्येतद्वचनमित्यर्थः । नित्यत्वानित्यत्वयोः प्राधान्या-प्राधान्ययोः हेतुत्वं मूलोक्तमुपपादयति- नित्यं हीति ।। औत्पत्तिकेति ।। अनादीत्यर्थः । 'औत्प-त्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति जैमिन्युक्तेरिति भावः । काल्पनिकशक्तित्वादिति ।। एतस्माच्छब्दादयमर्थो बोध्यत इति पुरुषबुद्धिकल्पितशक्तित्वादित्यर्थः । प्रमाणविरुद्धमिति ।। संस्कृतज्ञानसद्भावेऽपि भाषाशब्दापरिज्ञानानुभवबाधित इत्यर्थः ।

## श्रीवेदेशतीर्थ

आरम्भणशब्दस्य भावे ल्युडन्तत्वमलुक्समासत्वं चाभिप्रेत्याऽह- वाचेति ।। गमक-त्वाद्व्यधिकरणो बहुव्रीहिः । वाचारम्भरणशब्दादेव विकारशब्दार्थलाभाद्विकार इति पुनरुक्तं स्यादतस्तात्पर्यमाह- साङ्केतिकेति ।। इदमुक्तं भवति । वाचारम्भणशब्देन साङ्केतिकनामैव वाच्यं स्यात् । अवयवार्थकथनन्तु वैशद्यार्थमेव । यथा चष्टेऽनेनेति चक्षुरिति निर्वचनलभ्येऽपि दर्शन-करणत्वे चक्षुषा पश्यतीति नोक्तार्थता । तस्यां दशायामवयवार्थस्याविवक्षितत्वात्तथा वाचारम्भण-शब्दोऽपि साङ्केतिकपर्याय इत्यस्यां दशायां तदवयवार्थोऽविवक्षित एवातो न पौनरुक्त्यमिति । वि-शब्दार्थो विविधेति, कारशब्दव्याख्यानं प्रकार इति, इत्यभिप्रेत्य मूले विविधप्रकार इत्युक्तम् । तद्व्याख्येयेन श्रौतपदेन सङ्गमयति- तद्विकार इति ।।

ननु तथाऽपि वाचारम्भणं विकार इति सामानाधिकरण्येन निर्देशानुपपत्तिः । न हि वाचारम्भण-शब्दार्थभूतं साङ्केतिकं नाम विविधप्रकारो भवतीत्यत आह- प्रकारप्रकारिणोरिति ।। साङ्केतिकनाम्नि विविधप्रकारत्वमुपपादयंस्तदुक्तेः फलञ्च दर्शयति- साङ्केतिकानीति ।। इत्यनित्यानीत्यत्रेतिशब्दो हेतौ । तथा च विविधप्रकारत्वादनित्यानीत्युक्तं भवतीत्यर्थः । अत्राप्रयोजकतां परिहरति- न हीति ।। नाम धेयं मृत्तिकेत्येव सत्यमिति श्रुत्यंशं व्याख्यातुं नाम धेयमित्यनुवादः । नित्यमिति सत्यपदार्थकथनम् । तच्च नैरन्तर्यवाचि, न नामविशेषणम् ।

नाम धेयमित्यनूदितपदद्वये धेयमित्यस्यार्थं वदन्नन्वयमाह- धार्यं नामेति ।। दधातेः 'अचो यत्' इति कर्मणि यत्प्रत्यये 'ईद्यति' इति धात्वाकारस्येकारे गुणे च सति धेयमिति रूपस्य निष्पन्न-त्वात् । अत्र मृत्तिकेत्यादि वैदिकमेव नामेति श्रौतमृत्तिकादिशब्दानां शब्दपदार्थकत्वमुक्तम् । तदुप-पादयितुम् आह- इतिशब्द इति ।। मृत्तिकेत्येवेति श्रौत इतिशब्द इत्यर्थः । वैपरीत्य इति ।। प्रसक्तार्थपदार्थकत्ववैपरीत्ये शब्दपदार्थकत्व इत्यर्थः । एतदेवोपपादयति- ततश्चेति ।। गौरित्ययमाहेत्यादाविवेति भावः । एतच्चेति ।। श्रौतशब्दत्रयमित्यर्थः । समानस्य एक-धर्मावच्छिन्नस्य दध्युपघातकत्वादिरूपैकधर्मावच्छिन्नस्य काकादिपदोपलक्ष्यत्वादिति भावः ।

मूलेऽन्वयं दर्शयन्नेव न दण्डादेरिव नाम्नो धारणं सम्भवतीत्याशङ्कामप्यपाकुर्वन् फलितमाह- मृत्तिकेत्यादीति ।। इतिशब्दसत्यशब्दयोरावृत्त्यभिप्रायेणार्थान्तरमाह- इत्येतद्वचनमिति ।। तत्र श्रौतेतिशब्दार्थ एतद्वचनमिति । वाचारम्भणमित्यादिनोक्तं मदीयं वचनं सत्यमर्थाव्यभिचारीति वेदपुरुषवचनमिदं इति श्रुत्यर्थ इत्याचार्याणां श्रुत्यर्थकथनोपसंहारवाक्यमिति विवेको द्रष्टव्यः । सत्यपदस्यैतद्व्याख्यानुगुणमर्थं दर्शयति- सत्यमिति ।।

नित्यत्वानित्यत्वयोः प्राधान्याप्राधान्य-योर्हेतुत्वं मूलोक्तमुपपादयति- नित्यं हीति ।। औत्पत्तिकेति ।। अनादीत्यर्थः । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति जैमिन्युक्तेरिति भावः । काल्पनिकशक्तित्वादिति ।। एतस्माच्छब्दाद् अयमर्थो बोद्धव्य इति पुरुषबुद्धिकल्पितशक्तिकत्वादित्यर्थः ।

## द्वैतद्युमणि

परोक्तार्थानुसरणे वाचारम्भणमिति वाक्यस्यैव मूलत्वात् तदेव मूलकारैर्व्याख्यायत इत्याशयेनाऽह - स्यादेवमिति ।। वाचेत्यादि ।। बहुव्रीहिसमासे तृतीयालोपाभावश्छान्दस इति हृदयम् । वाचया आरम्भणमुत्पादनं यस्येति बहुव्रीहिः । वाचाशब्दस्तु टाबन्तः ।

'टापं चापि हलन्तानां यथा वाचा निशा दिशा ।'

इति वचनादिति प्रकारान्तरमपि सुधायामेवोक्तम् ।

तद्विकार इति ।। तदिति छेदः । साङ्केतिकनामेत्यर्थः । मौलपदव्याख्येयं श्रौतपदमनुवदति विकार इति ।। 'णेरणा'विति सूत्रस्थमहाभाष्ये क्वचिदुद्देश्यलिङ्गाः क्वचिद्विधेयलिङ्गाश्च भवन्तीत्युक्त-त्वेनोभयथाऽपि प्रयोगे बाधकाभावाच्छ्रौतवाचारम्भणशब्दार्थपरामर्शत्वस्य स्फुटप्रतिपत्तये तदिति नपुंसकनिर्देश एव कृतो न तु विधेयसमर्पकीभूतविकारशब्दानुसारेण पुल्लिङ्गनिर्देशः कृत इत्यवधेयम् । अभेदादिति ।। न चैवं घटत्वं घट इति वाक्यस्य प्रामाण्यापत्तिः । एतन्मते तस्येष्टत्वात् । न च विविधः कारः प्रकारः यस्येति बहुव्रीहिः कुतो नाश्रितः । सर्वमतसाधारण्यादिति वाच्यम् । तथात्वे तस्य नियतलिङ्गत्वाभावेन विशेष्यनिघ्नत्वान्नपुंसकलिङ्गत्वापत्तेः ।

ननु संस्कृतनाम्नामप्यनेकविधत्वात् किं विशेष्योच्यते साङ्केतिकनाम्नामनेकप्रकारोपेतत्वमित्यत आह- साङ्केतिकेति ।। उक्तं भवतीति ।। पर्यवसितं भवतीत्यर्थः । वाचारम्भणपदस्य योगरूढ-त्वादवयवशक्त्या वागिन्द्रियजन्यत्वं लभ्यते । वाक्यस्योत्पत्तिमात्ररूपं जन्यत्वं न लौकिकवैदिक-व्यवहारेषु प्रतीयते । वेदस्यापि पुरुषोच्चारणजन्यत्वेन पौरुषेयत्वव्यवहारापत्तेः । अपौरुषेयत्व-बोधक'वाचा विरूप नित्यया' इत्यादिवाक्याप्रामाण्याऽपत्तेश्च । लोकेऽप्यन्यप्रणीतवाक्यस्यो-च्चारणकर्तरि 'अयमस्य प्रणेता' इति व्यवहारप्रसङ्गाच्च । तदुच्चारणजन्यस्य तज्जन्यत्वानपायात् । अतः स्वसजातीयानुपूर्वीज्ञानाधीनज्ञानजन्यत्वमेव प्रतीयते । वाचा जन्यत्वं मनसा सङ्कल्पपूर्वकं वागिन्द्रियेणोत्पद्यमानत्वम् । तत्सूचनायैव वाचेति पदमपि श्रुतौ सार्थकम् ।

'मनसा वाऽग्रे सङ्कल्पयत्यथ वाचा व्यवहरति'

इति श्रुतेः । तथा च स्वोत्प्रेक्षामात्रेणार्थबोधनार्थं सजातीयानुपूर्वीज्ञानानधीनज्ञानजन्यत्व-मित्यवयवशक्त्या लभ्यते । रूढिनिरूपकतावच्छेदकं शक्तिरहितत्वे सति सङ्केतमात्रेणार्थबोधक-शब्दत्वात् । अपभ्रष्टानां शक्तेरनङ्गीकारात् । एतादृशशब्दानां चानेकविधत्वमेव । एतत्कल्पे मृत्तिकाबोधनार्थं 'मण्णू, माति' इति

शब्दः सङ्केतितः । कल्पान्तरे तु पुरुषविशेषैस्तत्रान्यादृश्या एवानुपूर्व्याः सङ्केतसम्भवात् । प्रतिकल्पमेकजातीयशब्दोच्चारे मानाभावात् संस्कृताविशेष-प्रसङ्गाच्च । संस्कृतानां तु नैतादृशमनेकत्वमिति भावः ।

## श्रीराघवेन्द्रतीर्थ

व्याचष्टे- वाचा वागिन्द्रियेणेति ।। अलुक्समासोऽयम् ।

केचित्तु 'विग्रहप्रदर्शनमात्रमेतत् ।

'टापं चैव हलन्तानां यथा वाचा दिशा निशा ।'

इत्युक्तेर्वाचयाऽऽरम्भणं यस्य तद्वाचारम्भणमित्येव समासो ध्येयः। तथैव न्यायामृतोक्तेः' इत्याहुः । 'समानाधिकरणानां बहुव्रीहिरिष्यते' इत्यस्य प्रायिकत्वादिति भावः । कोऽन्यपदार्थ इत्यतो भाषा-शब्द इति भावेनाऽह- साङ्केतिकेति ।। तथा च कोऽर्थ इत्यत आह- तदिति ।। वाचारम्भणशब्दितं साङ्केतिकनामेत्यर्थः । फलितार्थमाह- साङ्केतिकानीति ।। मृत्तिकेत्यस्य नामपदसामानाधिकरण्य-लाभप्रकारं दर्शयन् मूलवाक्यं व्याचष्टे- इतिशब्द इत्यादिना ।। प्रकरणप्राप्तार्थप्रच्यावनेनार्थान्तर-परत्वसम्पादनेऽर्थे वर्तत इत्यर्थः । इति मृत्तिकाशब्दादिति । इति न्यायान्मृत्तिकाशब्दान्मृद्रूपेऽर्थे प्रतीते इत्यर्थः । तमिति ।। मृत्तिकाशब्दमित्यर्थः । लोहमणीति । मृत्पिण्डदृष्टान्तवाक्यादुत्तर-दृष्टान्तवाक्यद्वयगतशब्दयोरित्यर्थः । एतच्चेति ।। आदिपदगृहीतशब्दद्वयमित्यर्थः ।

कस्येत्याकाङ्क्षायामाह- उपलक्षणं चेति ।। समानस्य समानजातीयस्येत्यर्थः । वैदिकमेवेति ।। संस्कृतमेवेत्यर्थः । मूलशेषमुदाहृत्य तत्र सत्यशब्दार्थमाह-इत्येतद्वचनं सत्यमिति श्रुत्यर्थ इति ।। नित्यत्वानित्यत्वयोः प्राधान्याद्युपपादकत्वं मूलोक्तं व्यनक्ति- नित्यं हीति ।। औत्पत्तिकेति ।। स्वाभाविकसम्बन्धवत्त्वादित्यर्थः । तदपेक्षमिति ।। कल्पकपुरुषापेक्षमित्यर्थः । प्राधान्याप्राधा-न्येति ।। वैदिकावैदिकशब्दानामिति योज्यम् । इवेति कस्मादुक्तं मूल इत्यतः प्रधानाप्रधानपदार्थ-विवृतिपूर्वं तत्कृत्यमाह- संस्कृतेति ।। उपमार्थ इति ।। प्राकृतभाषाशब्दादिज्ञानाद्यत्फलं तत्फलं संस्कृतशब्दज्ञानाद् भवतीत्येषोऽर्थ इवेत्यनेनाभिहित इत्यर्थः ।विविधप्रकाराणीति । मण्णु-माति-गवि-गाव्यादिरूपेणानेकप्रकाराणीत्यर्थः । मूले नाम धेयमिति पदद्वयं मन्तव्यम् । वैपरीत्य इति ।। अर्थप्रकरणे पठित इतिशब्दः प्रसक्तमर्थपदार्थकत्वं निवार्य शब्दपदार्थत्वं व्यवस्थापयति । यथा गौरित्ययमाहेति । गोशब्दमुच्चारयतीत्यर्थः । शब्द-प्रकरणे पठितस्त्वितिशब्दः प्रसक्तं शब्दपदार्थकत्वं निवार्यार्थपदार्थकत्वं व्यवस्थापयति । यथा न वेति विभाषेति । न वेत्यर्थकाः ये शब्दाः अथवा यद्वेत्यादयस्ते सर्वे विभाषासञ्ज्ञाः स्युरित्यर्थः । अन्यथा न वेत्यस्यैव विभाषासञ्ज्ञाप्राप्त्या यद्वेत्यादीनां सा न स्यादित्येवं वैपरीत्ये वर्तत इत्यर्थः । तदर्थे प्राप्त इति ।। अस्याप्यर्थप्रकरणत्वेन मृत्तिकाशब्दवाच्यमृत्तिकारूपार्थे प्राप्ते सतीत्यर्थः । अर्थ-पदार्थकत्वं निवार्येति शेषः । तं मृत्तिकाशब्दम् । सजातीयस्येति ।। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र

काकपदं दध्युपघातकद्रव्यरूपमार्जारादेरेवोपलक्षकं न तु विजातीयघटादेरित्यर्थः । इतीत्यस्याऽवृत्तिमभिप्रेत्य मूले इत्येतद्वचनमित्युक्तमिति मन्तव्यम् । औत्पत्तिकेति ।। स्वाभाविक-भूतवाच्यवाचकभावरूपसम्बन्धवत्त्वादित्यर्थः ।

## गुरुराजीया

वाक्शब्दार्थस्य इन्द्रियस्य करणत्वेन कर्तृत्वकर्मत्वयोरभावान्न षष्ठीप्रसङ्गः । 'ओजस्सहोम्भस्तमसस्तृतीयायाः'[१] इत्यत्राञ्जसा कृतमित्यभियुक्तप्रयोगसंरक्षणायाञ्जस्शब्दस्येव वाक्शब्दस्यापि उपसङ्ख्यानात् ततः परस्याः तृतीयाया अलुक् । भागुरिवचनादाबन्त एव वा वाचाशब्दः । ततश्च वाचयेति तृतीयाया लुक् । आरम्भः आरम्भणमिति आरम्भणशब्दो भावे ल्युडन्तः । गमकत्वाद्व्यधिकरणो बहुव्रीहिश्च समास इत्यभिप्रेत्य वाचारम्भणशब्दं व्याख्याति- वाचेति ।। वाचारम्भणशब्दादेव विकारत्वलाभाद्विकार इति पुनरुक्तं स्यादित्यतः [२]साङ्केत्यनाम स्यादित्यनुव्याख्यानानुसारेण तात्पर्यमाह- साङ्केतिकनाम्नः सञ्ज्ञैषेति ।। इदमुक्तं भवति । वाचारम्भणशब्देन साङ्केतिकनामैव वाच्यं स्यात् । अवयवार्थकथनं तु वैशद्यार्थमेव । यथा चष्टेऽनेनेति चक्षुरिति निर्वचनलभ्येऽपि दर्शनकरणत्वे चक्षुषा पश्यतीति नोक्तार्थता । तस्यां दशायामवयवार्थस्याविवक्षितत्वात् । तथा वाचारम्भणशब्दोऽपि साङ्केतिकपर्याय इति ।

वि इत्यस्य व्याख्यानम्- विविध इति ।। कारशब्दस्य व्याख्यानं प्रकार इत्यभिप्रेत्य मूले विविधः प्रकार इत्युक्तम् । तद्व्याख्येयेन श्रौतपदेन सङ्गमयति- तद्विकार इति ।। ननु वाचारम्भणशब्दार्थस्य साङ्केतिकनाम्नः विविधप्रकारवत्त्वेऽपि विविधप्रकारत्वाभावात् कथं वाचारम्भणं विकार इति सामानाधिकरण्यमित्यतस्तदुपपादयति- प्रकारप्रकारिणोरिति ।। साङ्केतिकनाम्नां विविधप्रकारवत्त्वं निमित्तोक्त्या उपपादयन् तदुक्तेः फलं च दर्शयति- साङ्केतिकानीति ।। विविधप्रकाराणीति ।। हेत्वर्थ इतिशब्दः । तथा च[३] विविधप्रकारवत्त्वादनित्यानीत्यर्थः । अप्रयोजकत्वं परिहरति- न हीति ।। नाम धेयं मृतिकेत्येव सत्यमिति श्रुत्यंशव्याख्यानपरं नाम धेयमित्यादि । मूले[४] नित्यमिति सत्यशब्दार्थकथनम् ।

'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः'[५]

इत्यनुव्याख्यानोक्तेः । धेयमित्यस्यार्थकथनम्- धार्यमिति ।। दधातेः 'अचो यत्' इति कर्मणि यत्प्रत्यये 'ईद्यति' इति धात्वाकारस्य ईकारे गुणे च सति धेयशब्दस्य निष्पन्नत्वात् । श्रौत-मृत्तिकादिशब्दानामुक्तं शब्दपदार्थकत्वं उपपादयितुमाह- इतिशब्द इति ।। मृत्तिकेत्येवेत्यादिश्रौत इतिशब्द इत्यर्थः । वैपरीत्य इति ।। गौरित्ययमाहेत्यादाविव प्रसक्तार्थपदार्थकत्ववैपरीत्ये शब्दार्थकत्वे[६] इति यावत् । तस्यैवोपपादनम्- ततश्चेति ।। समानस्येति ।। समानस्य एकधर्मावच्छिन्नस्येत्यर्थः । दध्युपघातकत्वादिरूपैकधर्मावच्छिन्नस्य काकादिपदोपलक्ष्यत्वादिति भावः ।

मूलेऽन्वयप्रदर्शनपूर्वकं फलमाह- मृत्तिकेत्यादीति ।। इतिशब्दसत्यशब्दयोरावृत्तिमभि-प्रेत्यार्थान्तरमाह- इत्येतद्वचनमिति ।। अत्र श्रौतेतिशब्दार्थकथनम्- इत्येतद्वचनमिति ।। वाचारम्भणमित्यादिनोक्तं मदीयं वचनं

सत्यम् अर्थाव्यभिचारीति १वेदपुरुषवचनमिदमिति श्रुत्यर्थ इत्याचार्याणां श्रुत्यर्थकथनोपसंहारः । सत्यशब्दार्थकथनमर्थाव्यभिचारीति । ततः किं प्रकृत इतीति ।। तावता प्रकृते किं लब्धं न किमपि येन तदुक्तिरर्थवती स्यादित्यर्थः । साङ्केतिक-नाम्नामुत्पत्तिनाशवत्त्वकथनस्य संस्कृतनाम्नामनादिनित्यत्वकथनस्य च परमप्रकृते ब्रह्मविज्ञानेन सर्वविज्ञानेऽवान्तरप्रकृतेऽस्माकमिव दृष्टान्ते वा उपयोगाभावात्तदभिधानमनर्थकमिति भावः ।

साक्षान्नित्यत्वाद्यभिधानस्य२ प्रकृतानुपयोगेऽपि प्राधान्याप्राधान्यज्ञापनद्वारा तदुपयोगित्वान्न तदानर्थक्यमिति भावेन अप्रयोजकताशङ्कापरिहारपूर्वकं प्राधान्यादिज्ञापकतामुपपादयति- औत्पत्तिकेति ।। अनादिवाच्यवाचकभावसम्बन्धवत्त्वादित्यर्थः । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति जैमिन्युक्तेरिति भावः । काल्पनिकशक्तिमत्त्वादिति३ ।। 'एतस्माच्छब्दादयमर्थो बोध्यः' इति पुरुषबुद्धिकल्पितशक्तिकत्वादित्यर्थः ।

भवेत् प्राधान्यादिज्ञापनद्वारा नित्यत्वादिकथनस्य प्रकृतोपयोगित्वम् । यदि प्राधान्यादिज्ञापनस्य प्रकृतोपयोगित्वं स्यात् । न च तदस्ति । नित्यत्वादिकथनस्येव प्राधान्यकथनस्यापि परम-प्रकृतेऽवान्तरप्रकृते चोपयोगाभावेन तद्द्वाराऽपि नित्यत्वादिकथनस्य तदुपयोगित्वकथनस्या-युक्तत्वादित्याशयेन शङ्कते- अस्त्विति ।।

## गोविन्दीया

स्यादेवमिति ।। यदि वाचारम्भणमित्यादिवाक्यमुक्तार्थं कार्यं सत्त्वपरं स्यात् । तर्ह्येवं यथा सौम्येत्यादिदृष्टान्तवाक्यानां कार्यसत्त्वे तात्पर्यं स्यादित्यर्थः । इदं त्विति ।। वाचारम्भण-मित्यादिवाक्यं त्वित्यर्थः । उत्पादनमिति ।। जननमित्यर्थः । नित्यमिति ।। नित्यं नामेत्यर्थः । वैपरीत्येति ।। अर्थवैपरीत्ये इत्यर्थः । शब्दादिति ।। शब्दादर्थे अर्थरूपपदार्थे सम्प्रत्ययः ज्ञानमिति प्रमाणात् मृत्तिकाशब्दान्मृत्तिकारूपार्थे प्राप्ते इतिशब्दस्तं मृत्तिकाशब्दं शब्दपदार्थकं नाम-रूपशब्दपदार्थकमवस्थापयतीत्यर्थः । तच्चेति१ ।। श्रुतिश्च । मृत्तिकापदमुपलक्षणम् जहल्लक्षणं स्वार्थान्यार्थोपलक्षकमित्यर्थः । उपलक्षणं चेति ।। अजहल्लक्षणं पदं केनचिद्धर्मेण समानस्यार्थस्योप-लक्षकं भवतीत्यवच्छेदकम् । वैदिकत्वरूपधर्मः वैदिकमिति पदेनोक्तमित्यर्थः । किं तत इति ।। उभयोर्भाषयोर्नित्यत्वानित्यत्वकथनेन प्रकृतजगतो सत्त्वविषये किमायातमित्यर्थः । औत्पत्तिक-सम्बन्धवत्त्वादिति ।। स्वाभाविकसम्बन्धवत्त्वादित्यर्थः । तदपेक्षमिति ।। परापेक्षं नामाप्रधानमि-त्यर्थः । प्रमाणविरुद्धमिति ।। प्राकृतनाम्नामपरिज्ञाने तदर्थज्ञानमपि दुःशकमतो ज्ञातार्थं भवती-त्येतत्प्रमाणविरुद्धमित्यर्थः । उपमार्थ इति ।। इवेत्युपमाशब्दस्यार्थः । प्राकृतनामज्ञानप्रयोजनलाभ इत्यर्थः ।

## नारोपन्तीया

औत्पत्तिकसम्बन्धवत्त्वादिति । अनादिवाच्यवाचकभावरूपसम्बन्धवत्त्वादित्यर्थः । अत एव जैमिनिसूत्रमपि- 'औत्पत्तिकश्चार्थेन सम्बन्धः'२ इत्यादि ।

## जनार्दनभट्टीया

'वाचारम्भणं विकारो नामधेयम्' इति श्रुतौ (वाचारम्भणमिति) समास इत्यभिप्रेत्य प्रकृते 'वाचारम्भणं विविधप्रकारः' इति मूले 'वाचा' इत्यस्यार्थमाह – वाचा वागिन्द्रियेणेति ।।

ननु वागिन्द्रियेण उच्चारणापरपर्यायम् आरम्भणं वैदिकमृत्तिकादिनामसाधारणमित्याशङ्क्य न केवलं साङ्केतिकनाम्नि यौगिको वाचारम्भणशब्दः । येन वैदिकनाम्नि अतिप्रसङ्गः । किन्तु रूढोऽपीत्याह– साङ्केतिकेति ।। 'मृत्तिका' इत्यादिमूले इत्यादिशब्देन मृदादिरूपार्थस्य वैदिकत्वं प्रतीयते । अर्थप्रकरणबलात् । अतः 'इति'शब्दं व्याख्याति – इतिशब्द इति ।। 'मृत्तिकेत्येव' इति श्रुतौ विद्यमान इतिशब्दः स्वशिरस्कस्य मृत्तिकाशब्दस्य अर्थप्रकरणवशान्मृदादिरूपार्थे प्राप्ते तं परिहृत्य मृत्तिकाशब्दपरत्वं व्यवस्थापयति । प्रकृते अर्थान्तरस्यासम्भवात् । इदमेव वैपरीत्ये वर्तनमित्यर्थः । तथाहि क्वचित् शब्दप्रकरणे इतिशब्दः प्रकरणप्राप्तं शब्दपदार्थकत्वं परिहृत्य अर्थपदार्थकत्वं व्यवस्थापयति स्वशिरस्कपदस्य । यथा 'न वेति विभाषा'३ इत्यादौ । अर्थप्रकरणे तु प्राप्तम् (प्रसक्तम्) अर्थपदार्थकत्वं निवार्य शब्दपदार्थकत्वं व्यवस्थापयति । यथा 'गौः शुक्लः' इत्यर्थप्रकरणे 'गौरित्यय-माह' इत्यनुवादकवाक्य इति भावः । इतिशब्दव्याख्यानबीजं स्वयमेवाऽह – ततश्चेत्यादि ।। १शब्दपदार्थकं व्यवस्थापयतीति ।। तं = मृत्तिकाशब्दम्, शब्दपदार्थकं व्यवस्थापयतीत्यर्थः । एतच्चेति ।। मृत्तिकापदमित्यर्थः । समानस्येति ।। एकोपलक्ष्यतावच्छेदकेन क्रोढीकृतस्येत्यर्थः । नाम धेयं मृत्तिका इति त्रयाणां पदानां एकान्वयस्य दर्शितत्वात् श्रुतौ सत्यपदमात्रम् उर्वरितम्२ । तस्य च पदान्तराभावेनान्वयाप्रतीतौ वचनपदाध्याहारेण 'इत्येतद् वचनम्' इति मूलेऽन्वयो दर्शितः । तत्र सत्यपदेन पारमार्थिकमित्यन्यथाप्रतीतेराह- सत्यमर्थाव्यभिचारीति ।। अयथार्थप्रतिपादनं न भवती-त्यर्थः । नित्यत्वानित्यत्वयोः नामधेयप्राधान्याप्राधान्यहेतुत्वम् उपपादयति – नित्यं हीत्यादिना ।। प्राधान्यादिति ।।

प्राधान्यात् तत्परिज्ञानात् इति पञ्चमी व्यधिकरणे । तत्परिज्ञानात् = संस्कृतनामपरिज्ञानात् । प्राकृताज्ञः, आन्ध्रादिभाषानभिज्ञः ।

# एवं प्रधानस्य परमात्मनो ..

**वाचारम्भणमित्यादेः प्रकृतोपयोगसमर्थनम्**

## श्रीमज्जयतीर्थटीका

तथाऽपि न प्रकृतोपयोगं पश्याम इत्यत आह-

## मूल

*एवं प्रधानस्य परमात्मनो ज्ञानादप्रधानं ज्ञातमिव भवति ।*

अनेन यत्, प्राधान्यात् ब्रह्मज्ञानेनाप्रधानस्य जगतो ज्ञानं भवतीति प्रागभिप्रेतम् । तत्र दृष्टान्तप्रदर्शनपरमेवेदं वाक्यम् । न तु मृत्पिण्डादिदृष्टान्तव्युत्पादनाय मृदादिव्यतिरेकेण मृण्मयाद्यसत्त्वपरमित्यतो न मृत्पिण्डादिदृष्टान्तस्य परोक्तार्थे तात्पर्यमित्युक्तं भवति । यथोक्तम्-

'प्राधान्यात्तत्परिज्ञानात्प्राकृताज्ञोऽपि पूरुषः ।

विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ।।'३ इति ।

ननु यदि कारणव्यतिरेकेण कार्यासत्त्वमत्र न विवक्षितं स्यात्तदा 'सदेव सोम्येदमग्र आसीत्, तत्तेजोऽसृजत, सन्मूलाः सोम्येमाः सर्वाः प्रजाः' इत्यादिना यदादौ ब्रह्ममात्रावस्थानं तस्मादेव जगतः सृष्टिस्तदायतनत्वमित्याद्युक्तम्, तदसङ्गतं स्यात् । तद्धि जगतो ब्रह्मविवर्तत्वोपपादनेन कार्यस्य पृथगसत्त्वपरं भवतीत्यत आह-

**मूल**

***प्राधान्यज्ञापनार्थमेव सृष्ट्यादिकथनम् ।***

स्यादिदं सृष्ट्यादिकथनमस्मन्मतेऽसङ्गतम् । यदि ब्रह्मविवर्तादिपरं स्यात् । न चैवं किं तु यद्वाचारम्भणदृष्टान्तेन प्राधान्याद्ब्रह्मज्ञानेनाप्रधानप्रपञ्चज्ञानमुक्तम् । तत्र कथं जगदपेक्षया ब्रह्मणः प्राधान्यमित्यपेक्षायां जगन्निमित्तकारणत्वादिना तज्ज्ञापनार्थमेवेति कथमसङ्गतिः ।

## श्रीविजयीन्द्रभिक्षु

प्रकृतोपयोगस्य मूले स्फुटमप्रतीतेस्तात्पर्यतो व्याचष्टे- अनेनेति ।। उक्तमर्थमाचार्य-सम्मत्या द्रढयति- यथोक्तमिति ।। यथा प्रधानभूतसंस्कृतज्ञानी प्राकृतभाषाद्यपरिज्ञोऽपि विद्वानित्युच्यत एवं प्रधानपरमात्मज्ञानी प्राकृतप्रपञ्चाज्ञोऽपि सर्वज्ञ इत्युच्यत इति तदर्थः ।

ननु वाचारम्भणवाक्यमुपादानव्यतिरेकेणोपादेयासत्वप्रतिपादनपरमेव वाच्यम् । न त्वदुक्तार्थ-परम् । तथात्वे 'सदेव सोम्येदमग्र आसीत्तत्तेजोऽसृजत । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्यादिनोच्यमानं सर्गाद्यसमये ब्रह्ममात्रावस्थानं तस्मात्तेजःप्रभृति-जगत्सृष्टिः तदायतनत्वं तल्लीनत्वं चासङ्गतं स्यात् । सर्गाद्यसमये अविद्याकर्मादेः सत्त्वेऽपि ब्रह्ममात्रावस्थानप्रतिपादनेनेतरनिषेधस्यैवावगमात् । उत्पत्तिस्थितिलयाधारत्वप्रतिपादनस्य चोपादानाभिप्रायकत्वात् । लोके उत्पत्तिस्थितिलयाधारस्य मृदादेर्घटाद्युपादानत्वस्य दर्शनात् । उपादानत्वं ब्रह्मणो न मृदादिवत्परिणामित्वम् । सच्चिदानन्दात्मकस्य

निर्विकारस्य जडप्रपञ्चात्मना परिणामायोगात् । किन्तु विवर्ताधिष्ठानरूपत्वमेव । तच्च जगतो ब्रह्मसमत्वेऽनुपपन्नम् । अतात्विक-भावस्यैव विवर्तत्वात् । शुक्तिरजतादौ तथैव दर्शनादिति शङ्कते- नन्विति ।। उत्पत्तिस्थिति-लयाद्याधारत्वप्रतिपादनं नोपादानत्वज्ञापनार्थम् । तस्य ध्वंससाधारणकारणत्वप्रतिपादनमुखेन निमित्तत्वज्ञापकत्वात् । देशकालयोः घटाद्युत्पत्तिस्थितिलयाधारत्वेऽप्यनुपादानत्वात् । मृदादेर्घटा-धारत्वस्यासम्प्रतिपत्तेश्च । किन्तु जगन्निमित्तकारणत्वादिना प्राधान्यज्ञापनार्थमेवेति न तेन जगतो ब्रह्मव्यतिरेकेणासत्त्वसिद्धिः । नापि सदेवेति सर्गाद्यसमये ब्रह्ममात्रावस्थाप्रतिपादनेन तत्सिद्धिः । तस्यापि प्राधान्याभिप्रायकत्वेनैवोपपत्तेः । नासत्पुरुषमानयेत्यादावस्वतन्त्रेऽसत्त्वोक्तिदर्शनात् । वाचारम्भणवाक्योक्तदृष्टान्तप्रतिपन्नप्राधान्यज्ञापनार्थम् । अतो नासङ्गतिरित्यभिप्रायं मूलं शङ्कोत्तर-त्वेनावतार्य व्याचष्टे- अत आहेति ।। यदि जगतो ब्रह्मविवर्तत्वादिप्रतिपादनपरं स्यादित्यर्थः । निमित्तकारणत्वादिनेत्यादिपदेन तदायतनत्वादिपरिग्रहः । ज्ञापनार्थमेवेति ।। सृष्ट्यादिकथन-मित्यनुषङ्गः ।

## श्रीवेदेशतीर्थ

दृष्टान्तप्रदर्शनपरमेवेति ।। तदर्थं तनूर्वर्षिष्ठेत्यादिवत् 'यथा तेन तद्विज्ञातं स्यात्' इत्यावर्तनीयमिति भावः । तज्ज्ञानप्रयोजनलाभश्चोपमार्थ इत्युक्तम् । तत्र किं तज्ज्ञानस्य प्रयोजनं दृष्टान्तदार्ष्टान्तिकयोर्यल्लाभ उपमार्थ इत्याशङ्कायामुभयत्रापि तज्ज्ञानप्रयोजनप्रदर्शनाय अनु-व्याख्यानम् एवोदाहरति- यथोक्तमिति ।। कृतकत्वादनित्यत्वाच्च परापेक्षत्वेन साङ्केतिकं नामाप्रधानम् अनादिनित्यत्वात् परापेक्षत्वेन संस्कृतं प्रधानं तत्र यथा प्राधान्यात् संस्कृतज्ञानमात्रेण साङ्केतिकज्ञानं भवति । तज्ज्ञानेन यत्फलं विद्वद्व्यवहारगोचरत्वादिकं तद्भवतीति यावत् । एवमनित्यत्वादिनाऽप्रधानस्य देवताकर्मादिमिश्रस्य सकलस्यापि जगतो ज्ञानेन यत्फलं स्वर्गादि, तत्समस्तमपि नित्यत्वादिना प्रधानस्य परमात्मनो ज्ञानाल्लभ्यते तत्फलेऽन्तर्भवतीति अनु-व्याख्यानार्थः। तद्धि जगत इति ।। जगदुत्पत्तिस्थितिलयाधिकरणत्वोक्त्योपादानत्वं तावद् ब्रह्मणो सिद्धम् । घटाद्युत्पत्तिस्थितिलयाधिकरणस्य मृदादेरुपादानत्वदर्शनात् तच्च मृदादिवन्न परिणामित्वेन ब्रह्मणो निर्विकारत्वात् । किन्तु शक्त्यादिवद्विवर्ताधिष्ठानत्वेन । तथा च कारणव्यतिरेकेण कार्यस्यासत्त्वमेव सृष्ट्यादिवाक्यार्थत्वेन प्राप्तमिति भावः । कथमसङ्गतिरिति ।। उत्पत्तिस्थिति-लयाधिकरणत्वोक्तिश्च देशकालयोरिव निमित्तकारणेऽप्युपपन्नेति मन्तव्यम् ।

## द्वैतद्युमणि

तदायतनत्वमिति ।। तदन्यतादात्म्येनाप्रतीयमानत्वमित्यर्थः । आदिपदेन सत्प्रति-ष्ठितत्वस्य ग्रहणम् । ब्रह्मविवर्तत्वमिति ।। तत्सत्तान्यूनसत्ताकतत्तादात्म्यापन्नत्वमेव तद्विवर्तत्वम् । वाचारम्भणदृष्टान्तेनेति ।। यथा च यथेतिपदं वाचारम्भणवाक्यादपि प्रागावर्तनीयम् । 'तेन तद्विज्ञानं स्यात्' इति अन्त्येऽननुषञ्जनीयम् । 'वाचारम्भणं विकारोऽतोऽप्रधानम् । मृत्तिकेत्यादि नाम नित्यं धार्यत्वेन नित्यत्वात् प्रधानम् । तेन संस्कृतेन ज्ञातेन तत्सर्वं प्राकृतं विज्ञातं ज्ञातफलं भवति यथा, एवं सोम्य स आदेशो भवतीत्यर्थः' इत्यन्यत्रोक्तयोजना स्मारिता भवति ।

## श्रीराघवेन्द्रतीर्थ

मूलं स्पष्टार्थं मत्वा तात्पर्यार्थमाह- अनेनेति ।। अनित्यत्वादित्यादिग्रन्थेनेत्यर्थः । प्रागिति ।। वाचारम्भणं विविधप्रकारमित्यादिना श्रुत्यर्थोक्तिप्रस्ताव इत्यर्थः । तदवतारिका-यामस्माभिस्तथैवोत तमादेशमित्यादिना तदभिप्रायो वर्णित इत्यभिप्रेतमित्युक्तम् । इदमिति ।। वाचारम्भणमित्यादिवाक्यमित्यर्थः । परोक्तार्थ इति ।। उपादानादन्यदुपादेयं नेत्यर्थ इत्यर्थः। यथोक्तमिति ।। अनुव्याख्याने । उत्तरवाक्यमवतारयितुं शङ्कामाह- नन्विति ।। अत्रेति ।। मृत्पिण्डादिदृष्टान्तेष्वित्यर्थः । यदादाविति ।। यच्छब्दस्य यदुक्तं तदसङ्गतमिति तच्छब्देनान्वयः । ब्रह्मविवर्तत्वेति ।। ब्रह्मण्यारोपितत्वोपपादनेनेत्यर्थः ।

परिष्कारपूर्वं मूलवाक्यं व्याचष्टे- स्यादिदमित्यादिना ।। ब्रह्मविवर्तादीति ।। कार्यस्य कारणात् पृथगसत्त्वमादिपदार्थः । निमित्तकारणत्वादिनेति ।। स्थितिलयादिकारणत्वं सदायतनादि-वाक्योक्तमादिपदार्थः । तदिति ।। प्राधान्यज्ञापनार्थमेव । इतीति ।। हेतोरित्यर्थः । विद्वानित्युच्यत इति ।। विद्वद्व्यवहारगोचरो भवतीत्यर्थः ।

## गुरुराजीया

दृष्टान्तप्रदर्शनपरमेवेति ।। तदर्थं च तनूर्वर्षिष्ठेत्यादिवद् यथा तेन तद्विज्ञातं स्यादिति प्रकृतानुवृत्तिराश्रयणीयेति भावः । यदुक्तं ‘तज्ज्ञानप्रयोजनलाभश्चोपमार्थः’ इति । तत्र किं तज्ज्ञानप्रयोजनं दृष्टान्तदार्ष्टान्तिकयोर्यल्लाभ उपमार्थ इत्याशङ्कायाम् उभयत्रापि तज्ज्ञानप्रयोजन-प्रदर्शनाय अनुव्याख्यानमेव उदाहरति- यथोक्तमिति ।। कृतकत्वादनित्यत्वाच्च परापेक्षत्वेन साङ्केतिकं नामाप्राधानम् । अनादिनित्यत्वात् परानपेक्षत्वेन संस्कृतं प्रधानम् । तत्र यथा प्राधान्यात् संस्कृतज्ञानमात्रेण साङ्केतिकं ज्ञातं भवति । तज्ज्ञानेन सकलस्यापि यत्फलं विद्वद्व्यवहारगोचरत्वादिकं तद्भवतीति यावत् । एवमनित्यत्वादिनाऽप्रधानस्य देवताकर्मादिमिश्रस्य १जगतो ज्ञाने यत्फलं तत् समस्तमपि नित्यत्वादिना प्रधानस्य परमात्मनो ज्ञानाल्लभ्यते । तत्फलेऽन्तर्भवति । पामराः विद्वानिति न व्यवहरन्तीत्यतः सद्भिरित्युक्तम् ।

नन्विति ।। लयाद्यधिकरणत्वोक्त्योपादानत्वं तावद् ब्रह्मणः सिद्धम् । घटाद्युत्पत्तिस्थिति-लयाधिकरणस्य मृदादेस्तदुपादानत्वदर्शनात् । तच्च मृदादिवन्न परिणामित्वेन । ब्रह्मणो निर्विकार-त्वात् । किन्तु शुक्त्यादिवद् विवर्ताधिष्ठानत्वेन । तथा च कारणव्यतिरेकेण २कार्यस्यासत्त्वमेव सृष्ट्यादिवाक्यार्थत्वेन प्राप्तमिति भावः ।

## गोविन्दीया

एवमिति ।। यथा प्रधानसंस्कृतनामज्ञानादप्रधानप्राकृतनाम ज्ञातार्थमिव भवति तथे-त्यर्थः । इदं वाक्यमिति ।। वाचारम्भणमित्यादिवाक्यमित्यर्थः । यथोक्तमिति ।। तत्परिज्ञानात् संस्कृतनामपरिज्ञानात् प्राकृताज्ञोऽपि साङ्केतिकनामाज्ञानवानपि पुरुष इत्यर्थः । अत्रेति ।। वाचारम्भणमित्यादिवाक्यमित्यर्थः । तद्धीति ।। ‘सदेव सोम्येदमग्र आसीत्’ इत्यादिवाक्यं जगतः ब्रह्मण्यारोपितत्वोपपादनेन कार्यस्य पृथक्सत्त्वाभावप्रतिपादकं भवतीत्यर्थः । न चैवमिति ।। सृष्ट्यादिकथनं ‘सदेव सोम्येदमग्र आसीत्’ इत्यादिवाक्यं जगतः

ब्रह्मण्यारोपितत्वप्रतिपादकं न चेत्यर्थः । किन्त्विति ।। वाचारम्भणदृष्टान्तेन जगन्निमित्तकारणत्वादिना ब्रह्मणि प्राधान्य-ज्ञापनार्थमित्यर्थः ।

## यथा सोम्येत्याद्यपि सादृश्यकथनम् ..

**यथा सोम्यैकेनेत्यादेः स्वाभिमतार्थसङ्कीर्तनम्**

### श्रीमज्जयतीर्थटीका

ननूपादानादुपादेयस्य पृथगसत्त्वे न चेन्मृत्पिण्डादिदृष्टान्तस्तर्हि व्यर्थ एव स्यात् । तात्पर्यान्तराप्रतीतेरित्यत आह-

## मूल

***यथा सोम्येत्याद्यपि सादृश्यकथनम् ।***

सादृश्यप्राधान्याभ्यां हि ब्रह्मज्ञानेन जगज्ज्ञानमभिमतम् । तत्र यथा सोम्येत्यादिवाक्यं सादृश्यादेकविज्ञानेन सर्वविज्ञानोपपादनाय दृष्टान्तकथनपरमिति कथं तस्य वैयर्थ्यमिति । न केवलं सदेव सोम्येत्याद्यसन्मते न व्यर्थम् । अपि तु यथा सोम्येत्याद्यपीति सम्बन्धः ।

### श्रीविजयीन्द्रभिक्षु

सादृश्यकथनरूपत्वेऽपि प्रकृतानुपयोगाद्वैयर्थ्यमित्याशङ्क्य प्रकृतोपयोगं दर्शयितुमाह- सादृश्यप्राधान्याभ्यामिति ।। यथा सोम्येत्याद्यपीत्यपिशब्दघटनायापेक्षिताध्याहारपूर्वकं योजना-माह- न केवलमिति ।।

### श्रीवेदेशतीर्थ

सादृश्यकथनरूपत्वेऽपि प्रकृतानुपयोगाद्वैयर्थ्यतादवस्थ्यमित्याशङ्कायां प्रकृतोपयोगं दर्शयितुमाह- सादृश्यप्राधान्याभ्यां हीति ।। मूलेऽपिशब्दघटनायापेक्षिताध्याहारपूर्वकं योजनामाह-न केवलमिति ।।

### द्वैतद्युमणि

नन्विति ।। 'पृथगसत्त्वे' इति सप्तम्यन्ततया छेदः । मूले आदिपदेनैव लोहमण्यादिवाक्ययोः सङ्गृहीतत्वात्, अपिपदस्य तत्समुच्चायकत्वायोगः । वाचारम्भणवाक्यसमुच्चायकत्वे तस्य सादृश्या-भिप्रायेणाप्रसक्तत्वादसङ्गतिरत आह- न केवलमिति ।। सदेवेत्यादिवाक्यसमुच्चायकत्वमपि न । तद्वाक्यस्य सादृश्यपरत्वाभावात् । अतः पूर्वमूलतात्पर्यविषयीभूतवैयर्थ्याभावांशे समुच्चायकत्व-मित्याशयेनाऽह- न व्यर्थमिति ।।

## श्रीराघवेन्द्रतीर्थ

अपिपदसमुच्चेयं दुर्गमत्वाद्व्यनक्ति - न केवलमिति ।।

## गुरुराजीया

सादृश्यकथनरूपत्वेऽपि प्रकृतानुपयोगाद् वैयर्थ्यतादवस्थ्यमित्यतोऽत्र प्रकृतोपयोगं दर्शयितुमाह- सादृश्यप्राधान्याभ्यां हीति ।। मूले 'यथा सोम्येत्यादि' इत्येतावता पूर्तेरपिशब्द-वैयर्थ्यमित्यतः तत्समुच्चेयप्रदर्शनेन तत्परिहरति- न केवलमिति ।।

## गोविन्दीया

नन्विति ।। ब्रह्माधिष्ठिताज्ञानरूपोपादानादुपादेयस्य जगतः पृथगसत्त्वं न चेत् कार्यस्य पृथगसत्त्वं वदतां मृत्तिकादिदृष्टान्तानां वैयर्थ्यमेव स्यात् । तात्पर्यभूतार्थान्तरस्य पृथक् कार्यसत्त्व-स्याप्रतीतिरित्यर्थः । न केवलमिति ।। सदेव सोम्येत्यादिवाक्यं ब्रह्मणो निमित्तकारणत्वादिना प्राधान्यज्ञापकत्वात् केवलं न व्यर्थं न, अपि तु यथा सोम्येत्यादिवाक्यमिति ब्रह्मजगतोः सादृश्योपपादनाय दृष्टान्तपरत्वान्न व्यर्थमित्यर्थः ।

# न चैकनखनिकृन्तनविकारः सर्वं कार्ष्णायसम् ..

**उत तमादेशमित्यादीनां पराभिमतार्थखण्डनम्**

## श्रीमज्जयतीर्थटीका

अत्र येनाश्रुतं श्रुतं भवति, यथा सोम्यैकेन, वाचारम्भणं विकारः, सदेव सोम्येति चतुर्णां वाक्यानां पराभिप्रेतार्थमनादृत्यार्थान्तरमुक्तम् । न च तद्युक्तं निर्निबन्धनत्वादित्यतो यथा सोम्येत्यादिदृष्टान्तवाक्यानां तावत्पराभिमतार्थे बाधकमाह–

# मूल

*न चैकनखनिकृन्तनविकारः सर्वं कार्ष्णायसम् ।*

यद्येते दृष्टान्ताः कार्यकारणभावविवक्षया स्युः । तदैकमृत्पिण्डादिशब्दाः व्यर्थाः स्युः एकमृत्पिण्डादिविकारत्वाभावात्सर्वमृण्मयादीनाम् । इदं तु सर्वथाऽनुपपन्नम् । 'यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इति । मृत्पिण्डादेर्हि मृन्मयादिकं प्रति कारणत्वमात्रस्येव । नखनिकृन्तनस्य तु स्वयमपि कार्यस्य कार्ष्णायसं प्र(ति तदपि)तीदमपि नास्ति । किमुतैकनखनिकृन्तनविकारः सर्वं कार्ष्णायसं न भवतीति । अतो ज्ञायते 'नैते दृष्टान्ताः कार्यकारणत्वविवक्षया' इति । सादृश्यं तु मृत्पिण्डादीनां मृन्मयादीनां चास्त्येवेत्यादि-स्वार्थोपोद्बलकं च वक्तव्यम् ।

येनाश्रुतमित्येतत्प्राधान्यसादृश्याभ्यामित्येतत्कुत इति चेत्, लोकव्यपदेशानुगुण्यादित्याह-

**मूल**

***प्रधानपुरुषज्ञानाद्ग्रामो ज्ञात इति व्यपदेशोऽस्ति ।***

एवं सादृश्यादेकगोज्ञानाद्गवान्तरज्ञानमुदाहर्तव्यम् । मुख्यत एवैकविज्ञानेन सर्वविज्ञाने परोक्तरीत्या सम्भवति किमनेनामुख्येनेत्यत आह-

**मूल**

***न हि सत्यज्ञानेन मिथ्याज्ञानं भवति ।***

शुक्तिज्ञानेन रजतज्ञाननिवृत्तेरेव दर्शनादिति हिशब्दार्थः । एवं वाचारम्भणं सदेव सोम्येति वाक्ययोरपि स्वपरविवक्षितानुगुण्यवैगुण्ये दर्शनीये । तथा 'नान्योऽतोऽस्ति द्रष्टा' इत्याद्यात्मैक्य(वाक्य)विचारोऽपि ग्रन्थान्तरानुसारेणात्र कर्तव्यः ।

ननु प्रपञ्चमिथ्यात्वाद्यागमानां प्रतीतार्थानुपपत्त्यादि वर्णितं प्राक् तत्किमनेनेति । सत्यम् । बाह्यानुपपत्तिमेव प्रदर्श्यान्यार्थकल्पना कार्येत्येव तत्रोक्तम् । अर्थान्तरव्याख्यानमान्तरानुप-पत्त्यादिप्रदर्शनं चात्र क्रियत इत्यदोषः । तत्प्रदर्शनार्थमेव शङ्कोत्थापनमिति । तदेवं प्रपञ्च-मिथ्यात्वादेः कथमप्यसिद्धेः न मुक्तत्वानुमानस्यासिद्धिः प्रमाणविरोधश्चेति स्थितम् ।

## श्रीविजयीन्द्रभिक्षु

जगन्मिथ्यात्वे श्रुतेः प्रमाणभावस्यार्थान्तरवत्त्ववर्णनेनैव निरस्तत्वात् 'न चैकनख-निकृन्तनविकार' इत्याद्युत्तरग्रन्थवैयर्थ्यमाशङ्क्यावतारयति- अत्रेति ।। न चैकेति वाक्यमुप-लक्षणपरतया व्याचष्टे- यद्येत इति ।। दृष्टान्तक्रमोल्लङ्घनेन दूषणाभिधाने किं कारणमित्यत आह- इदन्त्विति ।। अत्यन्तदुष्टत्वज्ञापनं क्रमोल्लङ्घनप्रयोजनमिति भावः । अत्यन्तदुष्टत्वमेवोपपादयति- मृदादेर्हीति ।। एकस्य मृत्पिण्डस्य सर्वमृण्मयं प्रति कारणत्वाभावेऽपि यत्किञ्चित्प्रति तदस्ति । नखनिकृन्तनस्य तु तदपि नास्ति । न च तस्य कार्यत्वेऽपि तत्कार्यं प्रति कारणत्वं स्यादिति वाच्यम् । अन्त्यावयवित्वेन तत्कार्यस्याप्यसम्भवादिति भावः ।

न केवलं परोक्तार्थे बाधकसत्त्वमात्रेणास्मदुक्तार्थे आदरः । किन्तूपोद्बलकसत्त्वादपीत्याह- सादृश्यन्त्विति ।। उत्तरवाक्यस्य दृष्टान्तदूषणत्वासम्भवात्प्रकृतानुपयुक्तत्वमाशङ्क्यावतारयितुमाह- येनाश्रुतमित्येतदिति ।। प्रधानज्ञानादप्रधानं ज्ञातं भवतीत्यत्रैवोदाहरणमुक्तम् । न तु सदृशैकज्ञानात् सदृशान्तरं ज्ञातं भवतीत्यत्र । तथा च न्यूनतेत्याशङ्क्य पूरयति- एवमिति ।। शुक्तिज्ञानेनेति ।। शुक्तित्वेन शुक्तिसाक्षात्कारेण रजतभ्रमनिवृत्तेर्दर्शनादित्यर्थः । यद्यपि शुक्तित्वरजतत्वयोः परस्परविरहव्याप्तत्वरूपविरोधाप्रतिसन्धानदशायां

शुक्तेः साक्षात्कारेणापि न रजतभ्रमनिवृत्तिः । शुक्ती रजतञ्चेति समुच्चयभ्रमस्यैव दर्शनात् । तथाऽपि तत्प्रतिसन्धानदशायां तेन रजतभ्रमनिवृत्तिः सर्वानुभवसिद्धेति भावः ।

नन्वेतावता प्रबन्धेन 'येनाश्रुतम्' 'यथा सोम्य' इति वाक्ययोरेव स्वपरपक्षविवक्षितार्थानु-गुण्यवैगुण्ये दर्शिते । न तु 'वाचारम्भणं, सदेव सोम्येति' वाक्ययोः । तथा च न तयोरर्थान्तर-परत्वाश्रयणं युक्तम्, निर्निबन्धनत्वादित्यत आह- एवमिति ।। दर्शनीय इति ।। साङ्केतिकं नाम विविधप्रकारवत् । संस्कृतनामैव नित्यं धार्यमित्यस्मदुक्तेऽर्थे साङ्केतिकनाम्नः पुरुषमतिवैचित्र्य-कल्प्यत्वाद् विविधप्रकारत्वमुपपन्नम् । संस्कृतनाम्नः औत्पत्तिकसम्बन्धवत्त्वान्नित्यं धार्यत्वञ्च युक्तमित्येवंरूपानुगुण्यम् । वाचारम्भणं वाचा व्यवहारमात्रं मिथ्येति यावत् । घटः शराव उदञ्चनं चेति विकारः नामधेयं नाममात्रं ह्येतत् । वस्तुतो विकारः कोऽपि नास्ति । किं तर्हि सत्यम् । मृत्तिकेत्येव उपादानभूतं ब्रह्मैवेति परोक्तेऽर्थे तु -

'वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।

पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ।।'१

इत्येवंरूपवैगुण्यञ्च दर्शनीयम् । एवं सदेव सोम्येत्यस्य इदमग्रे सृष्टेः प्राक् ब्रह्मैवाऽसीदित्युक्तार्थे, तत्काले प्रकृत्यादेः सत्त्वेऽपि अस्वातन्त्र्यादेवेत्यवधारणमुपपन्नम् । लोकेऽस्वतन्त्रेऽसत्त्वोक्ति-दर्शनादित्येवंरूपानुगुण्यम् । इदमग्रे सृष्टेः प्राक् सदेवाऽसीत् ब्रह्मैवाऽसीदिति परोक्तार्थे तु जडाजडयोरत्यन्ताभेदासम्भवः । सम्भवे वा ब्रह्मवत्पारमार्थिकत्वापत्तिः । ब्रह्मव्यतिरेकेण इदं किमपि नाऽसीदित्यर्थपरत्वाश्रयणे त्वश्रुतकल्पनम् । कालविशेषप्रापकाग्र इति स्वपदविरोध-श्चेत्यादिरूपानानुगुण्यञ्च दर्शनीयमित्यर्थः । विचारः कर्तव्य इति ।। स्वरूपेणान्यद्रष्टृनिषेधपरत्वे जीवस्वरूपस्यापि जडवन्मिथ्यात्वप्रसङ्गात् परमात्मा यथास्वपरगताशेषविशेषज्ञस्तद्वद् अन्यो नेत्येवमर्थपरमभ्युपगन्तव्यमिति विचारः कर्तव्य इत्यर्थः । प्रपञ्चितञ्चैतच्छ्रुत्यर्थोऽस्माभिः श्रुत्यर्थसार इति नेह प्रपञ्च्यते ।

नन्वनिर्वचनीयत्वनिराकरणप्रस्तावे प्रपञ्चमिथ्यात्वागमानां प्रतीतार्थेऽनुपपत्तेरुक्तत्वादिह पुनस्तदुक्तिर्व्यर्थेत्याशङ्क्ते-नन्विति ।। आन्तरानुपपत्त्यादिप्रदर्शनं चेति ।। परोक्तार्थ इति शेषः । शङ्कोत्थापनमिति ।। माभूदनुमानात्प्रपञ्चमिथ्यात्वसिद्धिरित्यादिशङ्कोत्थापनमित्यर्थः । यद्यपीयं शङ्का न आचार्यैः दर्शिता । तथाऽपि परिहारवाक्यदर्शनेनोन्नीताऽपि शङ्का आचार्याभिमतेत्येव-मुक्तमित्यवधेयम् । उत्तरग्रन्थे मुक्तस्य संसारः स्यादित्यादिदूषणमुच्यते । तर्कस्य प्रपञ्चमिथ्यात्व-दूषणत्वाभावादयुक्तमित्याशङ्क्य तदवतारणाय परमप्रकृतमुपसंहरति- तदेवमिति ।। मिथ्यात्वादे-रित्यादिपदेनानिर्वचनीयत्वपरिग्रहः । मुक्तत्वानुमानस्येति ।। विमतो भिन्नो मुक्तत्वादित्यस्ये-त्यर्थः । प्रमाणविरोधश्चेति ।। 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिप्रमाणविरोधश्चेत्यर्थः ।

## श्रीवेदेशतीर्थ

‘एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ।

विकारित्वविवक्षायाम् ...... ............ ।।’१

इत्यनुव्याख्यानं मनसि निधाय मूलमुपलक्षणतया योजयति- यद्येत इति ।। क्रमोल्लङ्घनेन दूषणाभिधाने किं कारणमित्यत आह- इदं त्विति ।। अत्यन्तदुष्टत्वज्ञापनं क्रमोल्लङ्घनप्रयोजनमिति भावः । वक्तव्यमिति ।। न हि परार्थे बाधकोक्तिमात्रेण स्वार्थनिश्चयः । अतो न्यूनतापरिहाराय स्वार्थोपोद्बलकमध्याहार्यमिति भावः ।

शुक्तिज्ञानेनेति ।। शुक्तित्वेन शुक्तिज्ञानेनेत्यर्थः । ननु येनाश्रुतं श्रुतं भवति । यथा सोम्येत्यादिवाक्ययोरेव स्वपरपक्षविवक्षितार्थयोरानुगुण्यवैगुण्ये दर्शिते । न तु वाचारम्भणं सदेव सोम्येतिवाक्ययोरतो न्यूनतेत्यत आह- एवमिति ।। वाचारम्भणवाक्ये साङ्केतिकनाम्नां पुरुष-मतिवैचित्र्यकल्पितत्वेन विविधप्रकारत्वं प्रसिद्धमतो नानुपपन्नम् । संस्कृतनाम्नां नित्यत्वञ्च तदेवेदं पदमित्यादिप्रत्यभिज्ञाप्रत्यक्षेणास्मत्पूर्वेषां तत्पूर्वेषामेवं सृष्ट्यादावपि जायमानेन सिद्धमिति स्वार्थानुगुण्यम् ।

‘वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।

पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ।।’२

इत्यनुव्याख्यानोक्तपरार्थवैगुण्यञ्च द्रष्टव्यम् । तथा सदेव सोम्येति वाक्ये इदमग्रे जगतः सृष्टेः प्राक् सच्छब्दवाच्यं ब्रह्मैवाऽसीदित्यर्थके प्रकृतिजीवकालादेः सत्त्वेऽपि तेषामस्वातन्त्र्याल्लोकेऽ-स्वतन्त्रेऽसत्त्वोक्तिदर्शनात् नान्यत्किञ्चन मिषदिति श्रुत्यन्तरसमाख्यानाच्चावधारणोपपत्तिरिति स्वार्थानुगुण्यम् । पराभिमतार्थे त्वग्र इत्यादिस्वपदविरोधः । प्रत्यक्षादिविरोधश्चेत्याद्यनानुगुण्यं द्रष्टव्यमिति भावः ।

ऐक्यविचारोऽपीति ।। अन्यद्रष्टृनिषेधस्य प्रत्यक्षादिबाधितत्वेन स्वातन्त्र्येणान्यद्रष्टृनिषेध एवास्य वाक्यस्यार्थो बृहदारण्यकभाष्यानुसारेण वक्तव्यः । आदिपदेन च यदि तत्त्वमस्यादि-वाक्यमुपादीयते तर्हि तस्यापि तद्भाष्यानुसारेण विचारः कर्तव्य इति ज्ञापयति । प्रतीतार्थानु-पपत्त्यादीत्यादिपदेनाप्रामाण्यपरिग्रहः । तथाऽनुमानस्याप्रामाण्यमागमस्यापि वेदाननुसारिणो विप्रलम्भादिमूलकत्वेनाप्रामाण्यमेव । वेदस्य वेदानुसारिणो वाऽऽगमस्य प्रतीतार्थप्रच्यावनमात्रं न तु सर्वथाऽप्रामाण्यमविरुद्धार्थान्तरकल्पनाऽपि कार्येत्यादि प्राक् ‘ईशोऽनीशः’ इति प्रमाणोदा-हरणेन प्रदर्शितमिति भावः ।

अनेनेति ।। प्रतीतार्थेऽनुपपत्तिप्रदर्शनेनार्थान्तरप्रदर्शनेन चेत्यर्थः। ततश्च मिथ्यात्वानुमानागमानां प्रागुदाहृतस्मृत्यैव दूषितत्वात् ‘मा भूदनुमानात् प्रपञ्चमिथ्यात्वसिद्धिः । श्रुत्या तु भविष्यति’ इति शङ्कैवानुपपन्नेति भावः । बाह्यानुपपत्तिमेवेति ।।

‘एवमादिविरुद्धानि वचनान्यथ युक्तयः ।

प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ।।'

इति बहुप्रमाणविरोधरूपबाह्यानुपपत्तिमेव प्रदर्श्येत्यर्थः । अन्यार्थकल्पनेति ।।

'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।'

इति सामान्यत एवोक्तत्वादिदिति भावः । अर्थान्तरव्याख्यानमिति ।। विशेषाकारेणेति शेषः । आन्तरानुपपत्त्यादीत्यादिपदेन स्वार्थानुगुण्यप्रदर्शनपरिग्रहः । शङ्कोत्थापनमिति ।। यद्यप्युक्तरीत्या शङ्का न सम्भवति । तथाऽप्यर्थान्तरव्याख्यानादि कर्तुमुक्ताच्छादनेन शङ्कोत्थापनीयेति भावः । मिथ्यात्वादेरित्यत्रादिपदेन भेदाभावो ग्राह्यः । प्रमाणविरोधश्चेति ।। 'नान्योऽतोऽस्ति द्रष्टा' इत्यदिप्रमाणविरोधश्चेत्यर्थः । नञनुकर्षार्थश्चकारः ।

## द्वैतद्युमणि

व्यर्थाः स्युरिति ।। विरुद्धार्थाः निष्प्रयोजनकाश्च स्युरित्यर्थः । विरुद्धार्थकत्वमुपपाद-यति- एकेति ।। मृद एवोपादानत्वान्मृदा विज्ञातयेत्येतावता पूर्णत्वात् तत्रैकशब्दस्य विरुद्धार्थक-त्वम् । सर्वमृन्मयादीनामेकमृत्कार्यत्वाभावात् । जातिविवक्षयैकत्वस्य चैकवचनेनैव बोधितत्वादेक-शब्दस्य वैयर्थ्यमेव । मन्मते चैकवचनेन जातिनिष्ठैकत्वबोधनसम्भवात् । तथात्वे च प्रकृतदृष्टान्त-वैषम्यपरिहारायैकशब्दस्य सार्थक्यम् । पुनस्तत्प्रयोगबलेनैव 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेनैव व्यक्त्यैक्यलाभात् । 'पिण्ड'पदमपि भवत्पक्षे विरुद्धार्थकं व्यर्थं च । तस्य कार्य-व्यक्तिवाचित्वेन सर्वमृन्मयानां तत्कार्यत्वाभावाद् विरुद्धार्थकत्वम् । मृत्कार्यत्वेन मृदभेदस्यैवेदानीं बोध्यत्वेनाभिधित्सिततया पिण्डशब्दवैयर्थ्यम् । आदिपदेन लोहमणिवाक्यस्थमणिपदस्य वाक्यत्रयस्थेतिशब्दानां नामधेयशब्दस्य च ग्रहणम् । ग्रन्थान्तरेषु तेषामपि वैयर्थ्यस्योक्तत्वात् । मणिशब्देन लोहकार्यविशेषस्यैव बोधितत्वात् तत्कार्यत्वस्य सर्वलोहकार्येष्वभावादुक्तरीत्या विगतार्थकत्वं विरुद्धार्थकत्वम् । अर्थप्रकरणपठितार्थविपर्यासकारीतिशब्दैर्मृदादिशब्दानामेव बोधितत्वेन भवदुक्तार्थे तस्यानुपयोगो विरुद्धत्वञ्च । वाचारम्भणशब्देनैवोक्तस्य नामधेयशब्देन प्रतिपादनात् तत्रापि स्वार्थे धेयप्रत्ययस्याङ्गीकाराच्च वैयर्थ्यं चेत्यर्थः ।

एवं नखनिकृन्तनवाक्यस्य चरमत्वात् तस्यैव कण्ठत उपादानम् । अन्यस्य तूपलक्षणया ग्रहणं मूलकृतोऽनुचितमित्याशङ्क्यानुपपन्नत्वांशे इतरेभ्य आधिक्यमेव तद्बीजमित्याशयेनाऽह - इदं त्विति ।। कारणत्वमात्रमिति ।। किञ्चिन्मृन्मयं प्रतीत्यर्थः । मात्रपदेन पराभिमतसर्वमृन्मयकारणत्व-व्यवच्छेदः ।। स्वयमपि कार्यस्येति ।। अन्त्यावयवविरूपस्येत्यर्थः ।

## श्रीराघवेन्द्रतीर्थ

अर्थान्तरमुक्तमिति ।। 'प्रधानज्ञानादप्रधानं ज्ञातार्थमिव भवति' इति वाक्येन तात्पर्यगत्या 'येनाश्रुतम्' इति वाक्यार्थस्य, 'यथा सोम्येत्याद्यपि' इति वाक्येन द्वितीयवाक्यार्थस्य, 'वाचारम्भणं विविधप्रकारः' इत्यनेन तृतीयवाक्यार्थस्य, 'प्राधान्यज्ञापनार्थमेव' इत्यनेन चतुर्थ-वाक्यार्थस्योक्तत्वादिति भावः । इत्यादिदृष्टान्तवाक्यानामिति ।। यथा सोम्यैकेन लोहमणिना विज्ञातेन सर्वं लोहमयं विज्ञातं स्यात् । यथा सोम्यैकेन नखनिकृन्तनेन विज्ञातेन सर्वं कार्ष्णायसं विज्ञातं स्यादिति वाक्यद्वयमादिपदार्थः । कार्ष्णायसं प्रतीदमपीति ।। कृष्णायोविकारस्य विकारं प्रति कारणत्वमपीत्यर्थः । स्वमते कथमुपपत्तिरित्यत आह- सादृश्यं त्विति ।।

मूलोक्तिरुपलक्षणमिति भावेनाऽह- एवं सादृश्यादिति ।। पर(रोक्त)रीत्येति ।। ब्रह्मैव परमार्थसद्वियदादिकन्तु तत्राऽरोपितं तद्व्यतिरेकेण नास्तीत्यर्थ इत्युक्तेरित्यर्थः । किमनेनामुख्ये-नेति ।। प्रधानज्ञानादप्रधानं ज्ञातार्थमिव भवति । 'तज्ज्ञानप्रयोजनलाभश्चोपमार्थः' इत्युक्तदिशेति भावः । एवमिति ।। येनाश्रुतं श्रुतमिति यथा सोम्येति वाक्ययोरिवेत्यर्थः । दर्शनीये इति ।। वाचारम्भणं विविधप्रकारः नाम धेयं नित्यं धार्यं नाम मृत्तिकेत्यादिवैदिकमेवेत्येतद्वचनं सत्यमिति श्रुत्यर्थ इति प्रागुक्तदिशा स्वाभिप्रेतार्थे सर्वपदानामस्त्वानुगुण्यं, वाचा केवलमस्तीत्यारभ्यते विकारो घटः शराव उदञ्चनं चेत्यादिप्रागुक्ते पराभिप्रेतेऽर्थे,

'वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पना ।

पुनरुक्तिर्नाम धेयमितीत्यस्य निरर्थता ।।'

इत्यानुमानिकपादीयानुव्याख्यानसुधाद्युक्तरीत्या वैगुण्यं दर्शनीयम् । तथा इदमग्रे अस्य प्रपञ्चस्याग्रे प्रलये सदेव ब्रह्मैवासीदित्यस्मदर्थे प्रकृत्यादेः सत्त्वेऽपि स्वातन्त्र्येण ब्रह्मैवाऽसीदित्यवधारणोपपत्तेः पदानामानुगुण्यमिदं जगदग्रे सदेव ब्रह्मात्मकमेवाऽसीदिति परोक्तार्थे जडाजडयोरत्यन्ताभेदा-सम्भवः सम्भवे वा ब्रह्मवज्जगतः सत्त्वापत्तिः । ब्रह्मव्यतिरेकेण किमपि नास्तीत्यर्थपरत्वे त्वश्रुतकल्पनम् । अग्र इति कालप्रापकपदविरोधश्चेत्यादिरूपेण वैगुण्यं ध्येयमिति भावः ।

एवं ब्रह्मणो वियदादिप्रपञ्चैक्यश्रुतिविचारो मूलकृत्कृत उपलक्षणम् । दृश्यत्वाद्यनुमानेष्वप्येत एव दोषा इत्येतद्वाक्यावतारिकायां पूर्वपक्षिशङ्कितजीवात्मैक्योक्तिपरश्रुतिविचारोऽपि बृहद्भाष्यानु-सारेण कर्तव्य इत्यर्थः । तथा हि- वाजसनेये, अन्तर्यामिप्रकरणस्थे 'नान्योऽतोऽस्ति द्रष्टा' इति वाक्ये तथाऽक्षरप्रकरणस्थे 'नान्यदतोऽस्ति द्रष्टृ' इति वाक्ये चात इत्यनेन प्रस्तुतं सर्वनियन्तारं परामृश्यान्यो द्रष्टा नास्तीत्युक्ते सर्वनियामकद्रष्ट्रन्तरनिषेधस्यैव प्रतीत्यैक्यस्याप्रतीतेः । अन्यथा जडस्यैव जीवस्वरूपस्यैव निषेधेन तस्य मिथ्यात्वापत्तिः । तद्भेदेन नास्तीत्यध्याहारादिना कथञ्चिदैक्यपरत्वकल्पने चान्तर्यामिवाक्ये 'यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति' इति पूर्ववाक्येन, 'एष त आत्मान्तर्याम्यमृतः । अतोऽन्यदार्तम्' इत्युत्तरवाक्येन विरोधः । अक्षरवाक्ये च 'एतस्य वा अक्षरस्य

प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति पूर्ववाक्येन विरोधः स्यादित्यादिरूपेण विचारः कर्तव्य इत्यर्थः ।

पूर्वोक्तेन 'ईशोऽनीशो जगन्मिथ्या' इत्यादिग्रन्थेन वाचारम्भणं विविधप्रकार इत्यादिग्रन्थस्य गतार्थतामाशङ्क्य निराह- ननु प्रपञ्चेति ।। बाह्येति ।। 'प्रत्यक्षबाधितञ्च जगन्मिथ्यात्वम्' 'न च जगतोऽज्ञानजन्यत्वे किञ्चिन्मानम्' 'न च मायाविना माया दृश्यते' इत्यादिना मानाभाव-प्रत्यक्षादिबाधरूपानुपपत्तिमित्यर्थः। अन्तरानुपपत्त्यादीति ।। अश्रुतकल्पनम्, पौनरुक्त्यम्, एकपिण्डादिपदवैयर्थ्यम्, नखनिकृन्तनदृष्टान्तासङ्गतिरित्यादिरूपमित्यर्थः । आदिपदेन स्वाभि-मतार्थे सर्वानुगुण्यं ग्राह्यम् । शङ्कोत्थापनमिति । 'वाचारम्भणं विविधप्रकारः' इति वाक्या-वतारिकायां माभूदनुमानादित्यादिनोक्तशङ्कोत्थापनमर्थान्तराद्युक्त्यर्थमेवेत्यर्थः । 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इत्येतदवतारिकायां 'अथापि स्यात्' इत्यादिना शङ्कितयोर्मुक्तत्वहेतोरसिद्धिप्रमाणविरोधयोरियता ग्रन्थेनोक्तं परिहारमुपसंहरति- तदेवमिति ।। तदित्यस्य विवरणमसिद्धेरित्यन्तेन । आदिपदेनानिर्वचनीयत्वजीवब्रह्मैक्याऽऽविद्यकत्वग्रहः । कथमपीति ।। अनुमानसिद्धत्वेनागमसिद्धत्वादिना केनापि प्रकारेणेत्यर्थः । एवं दृश्यत्वाद्यनु-मानेष्वित्यादिनोक्तप्रकारेणेत्यर्थः। प्रमाणेति ।। 'विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते' इत्यादिप्रागुक्तानुमानेन 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्या च विरोधश्च मुक्तत्वानुमानस्य नास्तीत्यर्थः ।

निर्निबन्धनत्वादिति ।। निर्निमित्तत्वादित्यर्थः । स्वयमपि कार्यस्येति ।। अन्त्यावयविन इत्यर्थः । कार्ष्णायसम् एकमपि कार्ष्णायसरूपकार्यं प्रतीत्यर्थः । तदपि कारणत्वमात्रमपि । सर्वमिति ।। सर्वं कार्ष्णायसं प्रति कारणत्वं नास्तीति किमु वक्तव्यमित्यर्थः । तथा च नखनिकृन्तनदृष्टान्तस्त्वत्यन्तासम्बद्ध इत्याशयः । सादृश्यं मृत्त्वेन । येनाश्रुतमित्येतदिति ।। येनाश्रुतमित्यादिवाक्योक्तमेकविज्ञानेन सर्वविज्ञानमित्यर्थः । सम्भवति सति ।। अत्रेदं ज्ञात-व्यम् । तथा हि । अत्र सादृश्ये दृष्टान्तत्रयम् । तत्र सदृशज्ञानात् सदृशज्ञानं भवतीत्यत्र मृत्पिण्डमृण्मयदृष्टान्तः । प्रधानसदृशज्ञानादप्रधानसदृशज्ञानं भवतीत्यत्र लोहमणिदृष्टान्तः 'मणिर्मुखं प्रधानं चेत्युत्तमस्य वचो भवेत्' इति वचनात् लोहेषु प्रधानं सुवर्णं लोहमणिशब्देनो-च्यते । अल्पसदृशज्ञानाद् बहुसदृशज्ञानं भवतीत्यत्र नखनिकृन्तनदृष्टान्तः । मृत्तिकादिशब्दत्रयं प्राधान्ये दृष्टान्तः । ननु सादृश्ये दृष्टान्तत्रयमेकत्रैव सङ्गृह्योक्त्वा प्राधान्ये दृष्टान्तत्रयं एकत्रैव सङ्गृह्य कस्मान्नोच्यत इति चेत्सत्यम् । तत्तदर्थप्रसङ्गायातं तत्तन्नाम धेयं तत्र तत्रैव दृष्टान्तत्वेनोक्तमित्यदोष इति । प्रागिति ।। ईशोऽनीश इत्यादिनेत्यर्थः । अनेनेति ।। वाचारम्भणं विविधप्रकार इत्यादिग्रन्थेनेत्यर्थः । बाह्यानुपपत्तीति ।। ईशोऽनीश इत्यादेर्बहुप्रमाणविरोधरूपबाह्यानुपपत्ती-त्यर्थः । अत एवोक्तं 'प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः' इति । अन्यार्थेति ।। 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इत्युक्तत्वादित्यर्थः । अर्थान्तरेति ।। प्रपञ्चमिथ्यात्वे परोदाहृतानां वाचारम्भणमित्याद्यागमानां वाचारम्भणं विविधप्रकार इत्यादिनाऽर्थान्तरव्याख्यानमित्यर्थः । आन्तरानुपपत्तीति । एकपिण्डमणिपदवैयर्थ्यसर्वकार्ष्णायस्यैकनखनिकृन्तनकार्यत्वाभाव रूपान्त-रानुपपत्तीत्यर्थः ।। तत्प्रदर्शनार्थमिति । अर्थान्तरव्याख्यानान्तरानुपपत्तिप्रदर्शनार्थमित्यर्थः । शङ्कोत्थापनमिति ।। मा भूदनुमानात् प्रपञ्चमिथ्यात्वसिद्धिः, श्रुत्या तु भविष्यतीत्यादिना शङ्कोत्थापनं कृतमित्यर्थः ।

असिद्धिरिति ।। प्रमाणविरोधश्चेति ।। दृश्यत्वानुमानानुग्राहक-तयोक्तवाचारम्भणमित्यादिप्रमाणविरोधश्च नेत्यर्थः ।

## गुरुराजीया

‘एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ।

विकारित्वविवक्षायाम्........।।’

इत्यनुव्याख्यानं मनसि निधाय मूलमुपलक्षणतया व्याचष्टे- यद्येत इति ।। व्यर्थाः विगतार्था विरुद्धार्थाश्चेत्यर्थः । तत्कथमित्यतः मृदा विज्ञातया मृण्मयं१ विज्ञातं स्यादित्येतावता पूर्णत्वाद् विगतार्थत्वस्य स्पष्टत्वात् शिष्यैरेव तदूह्यतामिति भावेन विगतार्थत्वं स्वयमनुपपाद्य विरुद्धार्थत्व-मेवोपपादयति- एकेति ।। इदमित्युक्तमेव दर्शयति- यथेत्यादिना इतीत्यन्तेन ।। तस्य सर्वथाऽ-युक्ततामेव दर्शयति- मृत्पिण्डादेर्हीत्यादिना ।। कार्यस्येति ।। अन्त्यावयविन इत्यर्थः । तदपीति ।। कारणत्वमपीत्यर्थः । द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवीति तल्लक्षणादिति भावः । वक्तव्यमिति ।। परोक्तार्थे२ बाधकोक्तिमात्रेण तन्निराससिद्धावपि स्वार्थोपोद्बलकानुक्तौ तदसिद्धेरिति भावः ।

किमनेनामुख्येनेति ।। ‘प्राकृताज्ञोऽपि’ इति मुख्यार्थदर्शनरूपफलापेक्षया एकविज्ञानेन सर्वविज्ञानस्य समर्थितत्वादिति भावः । शुक्तिज्ञानेनेति । शुक्तित्वप्रकारकशुक्तिज्ञानेनेत्यर्थः ।

ननु ‘येनाश्रुतं श्रुतं भवति’, ‘यथा सोम्य’ इति वाक्ययोः स्वपरविवक्षितार्थानुगुण्यवैगुण्योप-पादनवत् ‘वाचारम्भणम्’, ‘सदेव सोम्य’ इत्यादिवाक्ययोरपि स्वपरविवक्षितार्थयोरानुगुण्यवैगुण्य-व्युत्पादनस्यानुगुण्यवैगुण्ययोरवश्यमुपदर्शनीययोरनुपदर्शनान्न्यूनतामाशङ्क्य परिहरति- एवमिति ।। वाचारम्भणवाक्ये साङ्केतिकनाम्नां पुरुषमतिवैचित्र्यकल्पितत्वेन विविधप्रकारत्वं सिद्धम् । संस्कृतनाम्नां नित्यत्वं च तदेवेदं वचनमित्यादिप्रत्यभिज्ञयेत्यादि स्वार्थोपोद्बलकम्१ ।

‘वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।’

इत्याद्यनुव्याख्यानानुसारेण परविवक्षितार्थे वैगुण्यं द्रष्टव्यमित्यर्थः । तथा ‘सदेव सोम्य’ इत्यादिवाक्ये इदमग्रे जगतः सृष्टेः प्राक् सच्छब्दवाच्यं ब्रह्मैवाऽसीदित्यर्थके प्रकृतिजीवकालादेः सत्त्वेऽपि तेषामस्वातन्त्र्यात् लोके अस्वतन्त्रेऽसत्त्वोक्तिदर्शनात् ‘नान्यत् किञ्चन मिषत्’ इति श्रुत्यन्तरसमाख्यानाच्चावधारणोपपत्तिरिति स्वार्थानुगुण्यं पराभिमतार्थे तु ‘अग्र’ इत्यादिस्वपद-विरोधः प्रत्यक्षादिविरोधश्चेत्यनानुगुण्यं द्रष्टव्यमित्यर्थः ।

ग्रन्थान्तरानुसारेणेति ।। अन्यद्रष्टृनिषेधस्य प्रत्यक्षादिबाधितत्वेन स्वातन्त्र्येणान्यद्रष्टृनिषेध एव वाक्यस्यार्थो बृहदारण्यकभाष्यानुसारेण वक्तव्यः२ । आदिपदोपात्ततत्त्वमस्यादिवाक्यविचारोऽपि तद्भाष्यानुसारेण कर्तव्य इत्यर्थः । अनुपपत्त्यादीत्यादिपदेनाप्रामाण्यपरिग्रहः । प्रागिति ।। ‘प्रत्यक्षबाधितं च,

‘वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना’

इत्यादिनेत्यर्थः । अनेनेति ।। प्रतीतार्थेऽनुपपत्तिप्रदर्शनेनार्थान्तरप्रदर्शनेन चेत्यर्थः । तथा च माभूदनुमानान्मिथ्यात्वसिद्धिः, श्रुत्या तु भविष्यतीति शङ्कानवकाश इति भावः । बाह्यानुपपत्तिमेवेति ।।

‘एवमादिविरुद्धानि वचनान्यथ युक्तयः ।

प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ।।’

इति बहुप्रमाणविरोधरूपबाह्यानुपपत्तिमेव प्रदर्श्येत्यर्थः । अन्यार्थकल्पनेति। अर्थान्तरमप्रदर्श्य

‘वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।’

इत्येवोक्तत्वादिति भावः । अर्थान्तरव्याख्यानमिति ।। ‘वाचारम्भणं विविधः प्रकारः, सादृश्याद्यर्थान्येव योजनीयानि’ इत्यादिरूपेण विशेषतोऽर्थान्तरकथनमित्यर्थः । आन्तरेति ।।

‘एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ।’

इत्यादिरूपान्तरानुपपत्तिप्रदर्शनमित्यर्थः । तत्प्रदर्शनार्थमेवेति ।। विशेषव्याख्यानान्तरानुपपत्ति-प्रदर्शनार्थमेवेत्यर्थः । शङ्केति ।। यद्यप्युक्तरीत्या शङ्का न सम्भवति । तथापि अर्थान्तर-व्याख्यानादिकर्तुमुक्ताच्छादनेनैवेदं मा भूत् प्रपञ्चस्यानुमानेनेत्यादिशङ्कोत्थापनमित्यर्थः । मिथ्या-त्वादेरिति ।। आदिपदेन भेदाभावपरिग्रहः । कथमपीति ।। अनुमानेन श्रुत्या वेत्यर्थः । प्रमाण-विरोधश्चेति ।। विमता आत्मानः परमात्मनस्तत्वतो न भिद्यन्ते आत्मत्वात् परमात्मवदि-त्यनुमानेन, ‘नान्योऽतोऽस्ति द्रष्टा’ इति तदनुग्राहकत्वेनोक्तश्रुत्या चेत्यर्थः ।

## गोविन्दीया

निर्निबन्धनत्वादिति ।। अर्थान्तरकथनस्य बाधकरूपकारणरहितत्वादित्यर्थः । स्वाभिमतार्थे साधकं च वक्ष्याम इति तावच्छब्दार्थ इति भावः । इदमिति ।। नखनिकृन्तनवाक्यं सर्वथाऽनुपपन्नमित्यर्थः । सादृश्यमिति ।। पराभिमतार्थे ऐक्ये बाधकोक्तिः । स्वार्थस्य ब्रह्म-जगद्भेदस्य निश्चायका अपि तु मृत्तिकादीनां मृण्मयादीनां च सादृश्यमस्त्येवेति कृत्वा सादृश्योक्तिः आदिपदगृहीता प्राक्तननामापेक्षया संस्कृतनाम्नः प्राधान्योक्तिश्च स्वार्थोपोद्बलकं स्वार्थसाधकेति वक्तव्यमित्यर्थः । येनाश्रुतमिति ।। येनाश्रुतमित्येतद्वाक्यं यथा सौम्येति वाक्यं जगतः कार्यस्य चासत्त्वाभावोऽपि प्राधान्यसादृश्याभ्यामुपपन्नमित्येतत् कुतोऽवगतमिति चेदित्यर्थः । लोकव्यपदेशेति ।। लोकप्रयोगेणानुगुण्यादित्यर्थः । मुख्यत एवेति ।। कारणव्यतिरेकेण कार्यस्य पृथगसत्त्वमस्तीति परोक्तरीत्या कार्यकारणयोरभेदेन कारणभूतैकविज्ञानेन कार्यभूतसर्वज्ञाने मुख्यत एव साक्षादेव सम्भवति सति सादृश्यप्राधान्याभ्यामुपपन्नेन मुख्यज्ञानेन किमित्यर्थः । न हीति ।।

सत्यभूतब्रह्मज्ञानेन मिथ्याभूतजगज्ज्ञानं न हि भवति । उभयोर्विरुद्धधर्माधिकरणत्वादि-त्यर्थः । एवमिति ।। 'येनाश्रुतं', 'यथा सोम्य' इति वाक्यद्वयवत् । 'वाचारम्भणं' 'सदेव सोम्य' इति वाक्ययोरपि स्वविवक्षितार्थे भेदे आनुगुण्यं परविवक्षितार्थे ऐक्ये वैगुण्यं दर्शनीयमित्यर्थः । तथेति ।। अतः ब्रह्मणः सकाशादन्यो द्रष्टा नास्तीत्यन्यद्रष्टुर्निषेधात् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्ये प्रतीतात्मैक्यस्य विचारोऽपि अन्यस्मिन् अस्वतन्त्रद्रष्टरि विद्यमानेऽपि स्वतन्त्रोऽन्यो द्रष्टा नास्तीति ग्रन्थान्तरानुसारेणात्र कर्तव्य इत्यर्थः । नन्विति ।। प्रपञ्चमिथ्यात्वा-सत्यत्वानिर्वचनीयत्वाभिधायकानामागमानां मध्ये केषाञ्चिदपौरुषेयाणां तदनुकूलानां च प्रतीतार्थानुपपत्तिः । विप्रलम्भादिमूलकानां पौरुषेयाणामादिपदसङ्गृहीतमप्रामाण्यं प्राग् ईशोऽनीश इत्यादिना चर्चितम् । तत्किमनेन ग्रन्थेनेत्यर्थः । तत्रेति ।। ईशोऽनीश इत्यादिवाक्ये इत्यर्थः । अत्रेति ।। अस्मिन्नुत्तरग्रन्थे इत्यर्थः । तदिति ।। पूर्वोत्तरग्रन्थयोर्विषयभेददर्शनार्थमेव शङ्कोत्थाप-नमित्यर्थः ।

## नारोपन्तीया

ब्रह्मविवर्ततोपपादनेनेति । अविद्यमानोऽन्यथाकारो विवर्तः । तत्त्वोपपादनेनेत्यर्थः । ग्रन्थान्तरानुसारेणेति । 'नान्योऽतोऽस्ति द्रष्टा' इति वाक्यं परमेश्वरस्य मुख्यद्रष्टृत्वपरमेव । पार्थादन्यो धनुर्धरो नास्तीति वाक्यवत् । न हि तत्र धनुर्धरान्तरस्य मिथ्यात्वं वा सर्वधनुर्धरैः सह पार्थस्यैक्यं वा वाक्यार्थः । एवं प्रकृतेऽपीति ज्ञातव्यम् । उत्कृष्टत्वाप्रकृष्टत्वाभ्यामिति । 'यस्मात् क्षरमतीतोऽहम्' इत्यनेन

'ब्रह्मादिजीवाः सर्वेऽपि शरीरक्षरणात् क्षराः ।

लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ।।'

इति समाख्याबलाच्चेतनोत्तमत्वं लभ्यते । जडोत्तमत्वं तु अर्थात् कैमुत्येन सिद्धम् । तथा च- क्षरं ब्रह्मादिजीवगणं, अतीतः अतिक्रम्य, वर्ते तदपेक्षयाऽधिकदेशे तिष्ठामीत्यर्थः । जीवानाम् अणुत्वाद् भगवतश्च विभुत्वात् । न च एतल्लक्ष्म्याः सम्भवति, तस्याः भगवता समं व्याप्तत्वादित्यतः, क्षरमक्षरं चातीतमित्यनुक्त्वा अक्षरादुत्तम इत्युक्तम् । तदपेक्षया गुणैर्ज्यायानित्यर्थः । गुणैरुत्तमत्वं न केवलमक्षरा-देव । किन्नाम ? क्षरादपीत्यपिशब्देनाऽचष्टे । तथा च- जीवापेक्षया गुणतो देशतश्च व्याप्तत्वरूपोत्कृष्टत्वं, लक्ष्म्यपेक्षया गुणव्याप्तत्वरूपोत्कृष्टत्वमनेनोच्यत इत्युक्तं भवति ।

## जनार्दनभट्टीया

निर्निबन्धनत्वादिति ।। 'पराभिमते अर्थे अनादरस्य' इति शेषः । 'न चैक' इति मूले पराभिमतार्थे बाधकापादनाप्रतीतेः तर्कपरतया योजयति – यदीत्यादिना ।। अथवा मूले एकपदवैयर्थ्यमाशङ्क्य आपाद्यसमर्पकतया उपयोग इति मनसि निधाय मूलसूचिततर्कं दर्शयति – यदीत्यादिना ।।

ननु नाऽयं मूलसूचितः तर्कः । 'न चैक' इति मूले तर्कशरीरप्रविष्टमृत्पिण्डादिपदानामभावात् इति चेत्, न । न्यायसाम्येन मृत्पिण्डलोहमणिवाक्ययोरपि अस्य तर्कस्य प्रसारात्१ । व्यर्था स्युरिति ।। २विगतप्रयोजनाः

विरुद्धप्रयोजनाश्च स्युरित्यर्थः । यदा 'लोहेन कार्ष्णायसेन' इत्येतावता पूर्णत्वेन विगतप्रयोजनत्वात् सर्वेषां लोहमयकृष्णायसानां एकलोहमणिनखनिकृन्तनविकारत्वाभावात् इति भावः ।

ननु त्रिष्वपि दृष्टान्तेषु तत्तद्विकारमात्रं सर्वशब्देनोच्यते । अतो नोक्तदोष इति चेत्, न । तथा सति सर्वपदवैय्यर्थ्यापातात् । मृण्मयम् इत्यादिनैव पूर्णत्वात् । ननु त्रिष्वपि मृत्पिण्डादिवाक्येषु एकादिपदवैय्यर्थ्यापादकतर्कस्य प्रवृत्तौ सम्भवत्यां 'न चैक' इति मूले नखनिकृन्तनवाक्यमात्रे एकपदवैय्यर्थ्यस्य कण्ठत आपादने को विशेषहेतुः? इत्यत आह – इदं त्वित्यादिना ।। स्वयमपि कार्यस्येति ।। घटादिवद् अन्त्यावयविन इत्यर्थः । अन्त्यावयविनो घटादेः द्रव्यान्तरानुपादानत्वस्य नियमेन दर्शनाद् इति भावः । 'नचैक' इति मूले शब्दसूचितां स्वार्थे उपपत्तिं चाऽह – सादृश्यं त्वित्यादिना ।।

अत्र अयमाशयः टीकाकाराणाम् – अस्मन्मते 'यथा सोम्य' इति वाक्यस्य सादृश्यकथनपरत्वात् सादृश्यप्रतियोगिनीनां च मृदाम् अनन्तत्वेन तद्ज्ञानासम्भवात् तद्घटनाय एकपदं सार्थकम् । 'एकया मृदा' इत्येवोक्ते परमाण्वादिरूपाया मृदः श्वेतकेतुना प्रत्यक्षेण ज्ञातुमशक्यत्वात् प्रत्यक्षीकृत्य शृङ्गिग्राहिकतया दृष्टान्तप्रदर्शनाय पिण्डशब्दश्च सार्थकः । किञ्च वाचारम्भणवाक्यस्य मिथ्यात्वे प्रमाणत्वेन उदाहरणमप्यनुपपन्नम् । तत्र मिथ्यात्ववाचिपदाभावात् ।

न च वाचारम्भणपदमेवास्तीति वाच्यम् । तत् किं मिथ्यात्वे रूढम् उत यौगिकम्? नाऽद्यः । अभिधानाद्यभावात् । न द्वितीयः । अवयवशक्त्या मिथ्यात्वस्यालाभात् । ननु यथा 'अन्नमात्रं भुक्तम्' इत्युक्ते व्यञ्जनाभावो लभ्यते तथा 'वाचारम्भणम्' इत्युक्ते वस्तुतो घटादिविकारो नास्तीति मिथ्यात्वसिद्धिरिति चेत् । भवेदेतदेवम् । यद्यत्र मात्रशब्दः श्रूयेत । न चैवम् । तथा च अश्रुतकल्पना दोषः स्यात् । न च अब्भक्षो, वायुभक्षः इतिवत् मात्रपदकल्पकमत्र किमपि अस्ति । येन मिथ्यात्वलाभः स्यात् । किञ्चैवम् अवधारणाध्याहारेण वाचारम्भणशब्दमिथ्यात्वलाभाङ्गीकारे नामधेयपदं पुनरुक्तत्वेन व्यर्थं स्यात् । तस्यापि नामैव केवलं न विकारो नाम वस्त्वस्तीति त्वया व्याख्यातत्वात् । किञ्च मृत्तिकेत्येव सत्यमित्यत्र इतिशब्दश्च व्यर्थः स्यात् । अस्मन्मत इव मिथ्यात्ववादिमते तस्य पदार्थविपर्यासार्थत्वाभावात् । उक्तं हि अनुव्याख्याने –

'वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।

पुनरुक्तिर्नाम धेयम् इतीत्यस्य निरर्थता ।

एको पिण्डो मणिश्चेति पदवैय्यर्थ्यमेव च ।।' – इति ।

तदेतत् सर्वं मनसि निधायाऽह – इत्यादिस्वार्थोपोद्बलकं च वक्तव्यमिति१ ।। न केवलं परोक्तार्थे बाधकम् । किन्तु२ स्वोक्तार्थे उपोद्बलकमपीत्यर्थः । प्रागिति ।। प्रत्यक्षबाधितं च जगन्मिथ्यात्वमित्यादावपीत्यर्थः । बाह्यानुपपत्तिमेवेति ।। विजातीयं यत् प्रत्यक्षादिकं तद्विरोधरूपानुपपत्तिमेवेत्यर्थः । तत्रेति ।।

वेदवेदानुसारिष्वित्यर्थः३ । आन्तरेति ।। तद्वाक्यगतैकमृत्पिण्डादिपदवैय्यर्थ्यरूपामान्तरानुपपत्तिमित्यर्थः । अत्र चेति ।। वाचारम्भणमित्यादावित्यर्थः ।

## मुक्तामुक्तयोर्भेदाभावे मुक्तस्य ..

**मुक्तत्वानुमानस्य विपक्षे बाधकोक्तिः**

### श्रीमज्जयतीर्थटीका

नन्वस्तु मुक्तत्वं, भेदस्तु मा भूत् किं बाधकम् । तथा च विपक्षे बाधकाभावादप्रयोजको मुक्तत्वहेतुर्भिन्नत्वस्येति तत्राऽह-

## मूल

***मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो मुक्तत्वं वा स्यात् ।***

यदि मुक्तस्य भेदो न स्यात्तदा संसारिणोऽपि तादात्म्यमुक्तं स्यात्ततश्च मुक्तस्य संसारिणैकीभूतस्य तद्वतः संसारः प्रसज्येत । तथा च मुक्तत्वमेव न स्यात् । अथवा मुक्तेनैकी-भूतस्य संसारिणो मुक्तत्वं स्यात् । तथा च मुक्तामुक्तव्यवस्थाभावः प्रसज्येत । न हि स एव तदैव मुक्तोऽमुक्तश्चेति युज्यते । अतः कथं विपक्षे बाधकाभावः ।

ननु मुक्तस्य संसारः स्यादिति किं संसाराधिकरणस्वरूपैक्यमापाद्यते उत संसारानुभवः । नाऽद्यः । इष्टापादनात् । आपाद्याऽपादकयोर्भेदाभावाच्च । न द्वितीयः । अनुभवस्यान्तः-करणादिसापेक्षत्वात् । अन्तःकरणादेश्चाज्ञानकृतत्वात् निवृत्ताविद्यस्य च तदन्वयायोगात् । एवं संसारिणो मुक्तत्वं स्यादिति कोऽर्थः । किं संसाराधिकरणस्वरूपस्यैव मुक्तत्वं स्यादिति । किं वा संसारिण एव सतो मुक्तत्वानुभवः स्यादिति । न तावत्प्रथमः । पूर्ववदिष्टापादनादिप्रसङ्गात् । न द्वितीयः । संसारिणो मुक्ताद्भेदसद्भावात् । मुक्तस्य संसारिणो भेदाभावे कथं संसारिणो मुक्ताद्भेद इति चेत् । स्यादप्येषा अनुपपत्तिः । यद्ययं भेदो वास्तवः स्यात् । अज्ञानकृतो हि मुक्तात्संसारिणो भेदः । सोऽज्ञानिनः संसारिणः प्रतीयते । न निवृत्ताज्ञानस्य मुक्तस्य । अतः काऽनुपपत्तिरित्याशङ्क्याऽह-

**मूल**

***यद्यज्ञानकृतो भेदस्तर्हीश्वरस्याज्ञानाभावात्संसारिणैक्यं तेनानुभूयेत ।***

अत्र भिद्यत इति भेदोऽन्तःकरणादिकमुच्यते । यद्यनुभवनिमित्तमन्तःकरणादिकमज्ञान-कृतमिति निवृत्ताज्ञानस्य तदभावात् संसारानुभवो न प्राप्नोति । यदि वाऽज्ञानकृतो भेदो मुक्तात्संसारिणोऽस्तीति न तस्य

मुक्तत्वानुभवप्रसङ्गः । तथाऽपीश्वरेण संसारिणैक्यमनुभूयेतेति विपक्षे बाधकमस्त्येव । कुतः । ईश्वरस्याज्ञानाच्छादनाभावाद् विक्षेपसद्भावाभ्युपगमाच्च ।

नन्विदमसङ्गतम् । मुक्तस्य भेदाभावे बाधकमुपक्रान्तम् । ईश्वरस्य संसारिणैक्यानुभवस्त्वा-पाद्यते । मैवम् । मुक्तशब्देनेश्वरस्याप्यत्र सङ्ग्रहणादिति । उक्तं चैतत् प्राक् 'ईश्वरोऽपि विमतपदेन गृह्यते' इति । 'यदुक्तं मुक्तस्यान्तःकरणाद्यभावान्न संसारानुभवप्राप्तिरिति । तदसत् । निर्विशेषैकरसे चैतन्ये अन्तःकरणसंसर्गभावाभावयोरप्ययोगात् । अज्ञानसदसद्भावाभ्यामिति चेत् । एतदपि तादृगेव । एवं संसारिणोऽज्ञानकल्पितभेदसद्भावोऽपि परास्तः । मुक्तस्यापि प्रसङ्गात् । बिम्बप्रतिबिम्बयोरिवावदातत्वमलिनत्वे मुक्तामुक्तयोर्व्यवस्था किं न स्यादिति चेत् न । विप्रतिपत्तेः' इति यद्यपि पूर्वोक्तावतिप्रसङ्गौ शक्योपपादनौ । तथाऽपि शिष्यैरेव तदूह्यता-मित्यतिप्रसङ्गान्तरमेतदुक्तमिति ज्ञातव्यम् । अन्यथा नावक्ष्यदेवेति ।

## श्रीविजयीन्द्रभिक्षु

संसारिणोऽपीति ।। संसारिणोऽपि मुक्तेनैक्यमङ्गीकृतं स्यादित्यर्थः । 'संसारिणो मुक्तत्वं वेति' मूलावयवं व्याचष्टे- अथवेति ।। आपाद्यत इति ।। मुक्तस्य यदि भेदो न स्यात्तदा संसाराधिकरणचैतन्यस्वरूपैक्यं स्यादित्यापाद्यत इत्यर्थः । आपाद्यापादकयोरिति ।। भेदाभाव-स्यैवैक्यरूपत्वादित्यर्थः । संसाराधिकरणेति ।। संसारोपलक्षितेत्यर्थः । संसारिण एवेति ।। संसारसहितस्येत्यर्थः । भेदसद्भावादिति ।। उपाधेर्भेदकत्वादिति भावः । अज्ञानकृत इति ।। अविद्योपाधिक इत्यर्थः । 'यद्यज्ञानकृतो भेदः' इति वाक्यैकदेशप्रदर्शितं तर्हीत्यादिमूल-निवर्त्याशङ्काद्वयस्वरूपं दर्शयन्नेव तच्छङ्कानिवर्तकपरतया तर्हीत्याद्यंशं व्याचष्टे- अत्रेत्यादिना ।।

नन्वीश्वरस्यान्तःकरणाभावे कथं संसार्यैक्यानुभवापादनमित्यत आह- विक्षेपेति ।। तथा चेश्वरस्यान्तःकरणाभावेऽपि अविद्यावृत्तिसद्भावात् संसार्यैक्यानुभवापत्तिरिति भावः । प्रागिति ।। विमतो भिन्नो मुक्तत्वादित्यनुमानोपन्यासावसर इत्यर्थः। अयोगादिति ।। अवच्छेदकभेदं विना भावाभावयोरेकत्र विरोधादित्यर्थः ।

नन्वज्ञानतदभावावच्छेदकसत्त्वान्न विरोध इति शङ्कते- अज्ञानेति ।। निर्विशेषचैतन्ये अवच्छेदकभेदं विनाऽज्ञानसदसद्भावावप्ययुक्तावित्याह- एतदपीति ।।

यदप्युक्तं 'संसारिणो न मुक्तत्वानुभवः । तस्य मुक्तादज्ञानकल्पितस्य भेदस्य सत्त्वादिति ।' तदप्यसत् । कल्पितभेदस्याकिञ्चित्करत्वेन मुक्ते संसारानुभवस्य संसारिणि मुक्तत्वानुभवस्य च प्रसङ्गादित्याशयेनाऽह- एवमिति ।। ननु कल्पितभेदोऽपि व्यवस्थादिहेतुः । बिम्बप्रतिबिम्बयोर्भेदस्य कल्पितत्वेऽप्यवदातत्वमलिनत्वयोर्व्यवस्थादर्शनादित्याशयेन शङ्कते- बिम्बप्रतिबिम्बयोरिवेति ।। बिम्बप्रतिबिम्बभेदस्य कल्पितत्वासिद्धेरित्यर्थः । अन्यथेति ।। शिष्यैरूहितुमशक्यत्व इत्यर्थः ।

## श्रीवेदेशतीर्थ

ननु भेदस्तु मा भूदिति भेदाभावमात्रमाक्षिप्तम् । एवं च यदि मुक्ते भेदो न स्यात्तर्हीदं स्यादिति वक्तव्यम् । मुक्तामुक्तयोर्भेदाभाव इत्यादिकं तु क्वोपयुज्यते ? अतोऽसङ्गतमेतदित्यत आह- यदि मुक्तस्येति ।। आपाद्यापादकयोरिति ।। यदि मुक्तस्य संसारिणोऽपि तादात्म्यं स्यात्तर्हि संसाराधिकरणस्वरूपेणैक्यं स्यादित्यापाद्यापादकयोरित्यर्थः । यद्यज्ञानकृतो भेदः इति मूले द्वितीयतर्कपरिहारानुवाद एव प्रतीयते, नाद्यतर्कपरिहारानुवादोऽप्यत आह- अत्रेति ।। यद्यज्ञानकृतो भेद इत्यस्योक्तपरिहारद्वयानुवादरूपत्वं विशदयन् वाक्यार्थमाह- यदीत्यादिना ।।

नन्वीश्वरस्यान्तःकरणाद्यभावात् कथमनुभव आपाद्यत इत्यत आह- विक्षेप इति ।। तथा चान्तःकरणाद्यभावेऽतदाकारप्रतिभासरूपविक्षेपोऽपि न स्यादिति भावः । अयोगादिति ।। अवच्छेदकभेदं विना भावाभावयोरेकत्र विरोधात् । प्रकृते चैतन्यस्य निर्विशेषत्वेनावच्छेदक-भेदासम्भवादिति भावः ।

नन्वज्ञानतदभावरूपादवच्छेदकभेदसम्भवान्न विरोध इत्याशङ्कते- अज्ञानेति ।। निर्विशेषचैतन्ये अवच्छेदकभेदाभावेऽज्ञानतदभावावप्ययुक्ताविताह- एतदपीति ।। यदप्युक्तं संसारिणो न मुक्तत्वानुभवः । तस्य मुक्तादज्ञानकल्पितभेदवत्त्वादिति । तदप्यतिदेशेन दूषयति- एवमिति ।। निर्विशेषचैतन्येऽवच्छेदकभेदं विना भेदतदभावयोरज्ञानतदभावयोर्वाऽयोगादिति भावः । एतदेव दर्शयति- मुक्तस्यापीति ।। संसारिणो भेदसत्त्वे मुक्तस्यापि भेदः स्यात् । न तु भेदाभावः । निर्विशेषेऽवच्छेदकभेदाभावादिति भावः ।

ननु यथा बिम्बप्रतिबिम्बयोरैक्येऽपि तत्रावच्छेदकभेदं विनाऽवदातत्वमलिनत्वे उपाधि-सम्बन्धतदभावौ वा वर्तेते । एवमवच्छेदकभेदाभावेऽपि मुक्तामुक्तयोर्भेदतदभावौ वा अज्ञान-तदभावौ वा स्यातामित्याशयेन शङ्कते- बिम्बप्रतिबिम्बयोरिति ।। अवदातत्वमलिनत्वे इवेति सम्बन्धः । विप्रतिपत्तेरितीति ।। बिम्बप्रतिबिम्बयोरैक्यस्यैवासम्मतेर्नेदमुदाहरणमिति भावः ।

## द्वैतद्युमणि

अज्ञानाच्छादनाभावादिति ।। आवरणशक्तिविशिष्टाज्ञानसम्बन्धाभावात् जैवदुःखादे-रीश्वरं प्रत्यनावृतत्वात् चिदैक्याच्चेति भावः । ननु चिदैक्येऽप्यनुभवप्रयोजकमायासम्बन्धाभावात् स्वतो निर्विशेषत्वान्नानुभवापादनं युक्तमित्यत आह- विक्षेपेति ।। ईश्वरस्य स्वरूपज्ञानेन वाऽविद्यावृत्त्या वा जगज्ज्ञानतदनुकूलेच्छाकृत्यादिनिर्वाहाय आवरणशक्तिविशिष्टाविद्या-सम्बन्धाभावेऽपि विक्षेपशक्तिविशिष्टाविद्यासम्बन्धस्य तत्राङ्गीकृतत्वादिति भावः । भास्करमतेऽ-पीश्वरस्य नित्यमुक्तत्वसर्वज्ञत्वादीनामङ्गीकृतत्वात् तं प्रत्यप्युक्तापादनं युक्तमेवेति द्रष्टव्यम् ।।

नन्वीश्वरस्य यदि जीवगतदुःखादिप्रत्यक्षमापद्यते तदेष्टापत्तिः । यदि च तत्रत्यताग्रह आपाद्यते तदाऽज्ञानरूपाच्छादनस्य तत्र हेतुत्वात् तदभावादेव तदापादनायोगः । असत्यतया अन्यधर्मत्वेन दुःखादिप्रत्यक्षस्य तदनुभवरूपत्वाभावात् । सत्यतया स्वधर्मत्वेन दुःखादिप्रत्यक्षस्यैव तदनुभव-रूपत्वाच्च ।

अन्यथा ईश्वरस्य सर्वज्ञत्वेन जैवदुःखादेः सत्त्वेन प्रत्यक्षस्यावर्जनीयतया त्वन्मतेऽ-प्यवगतेरिति चेन्न । जीवप्रतियोगिकभेदाभावस्य भेदसामान्याभावेनैव व्याप्त्या आच्छादनस्याप्य-वर्जनीयतया सत्यत्वेन स्वधर्मतया तद्ग्रहस्य बलादापत्तेः । विक्षेपशक्तेरविद्यमानाकार-प्रतिभासकत्वाच्च सुखदुःखादौ सत्यताभानस्यावर्जनीयत्वाच्च ।

## श्रीराघवेन्द्रतीर्थ

मुक्तत्वानुमाने हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकशङ्कानिरासकत्वेन मूलमवतार्य व्यवस्था-रूपविपक्षबाधकोक्तिपरत्वेन व्याचष्टे- नन्वस्तु मुक्तत्वमित्यादिना ।। अथवेत्यनन्तरं यदि मुक्तस्य भेदो न स्यादित्यापादकानुकर्षः । विपक्षे बाधकतयोक्तमुक्तामुक्तव्यवस्थाभावरूपतर्कस्याभासता-माशङ्क्य तन्निरासकतया मूलमवतारयति- ननु मुक्तस्येत्यादिना ।। आपाद्यापादकयोरिति ।। यदि भेदो न स्यात्तर्हि मुक्तामुक्तयोरैक्यं स्यादित्यापादकापाद्याभिप्रायेणेयमुक्तिः । 'तादात्म्यमुक्तं स्यात्' इति प्रागुक्तदिशैक्योक्त्याऽऽपादनपक्षे तु नायं दोष इति ज्ञेयम् ।

द्वितीये यदि भेदो न स्यादित्युक्तापादकस्याप्रयोजकत्वमाह- न द्वितीय इत्यादिना ।। पूर्ववदिष्टापादनादीति । आपाद्यापादकयोरविशेष आदिपदार्थः । अत्राप्यापादकस्याप्रयोजकत्व-माह- न द्वितीय इत्यादिना ।। यद्यज्ञानकृतो भेद इत्यंशं पूर्वोक्तापादनद्वयोद्धारानुवादपरत्वेन द्वेधा व्याचष्टे- अत्र भिद्यत इत्यादिना ।। 'भिद्लृ - विदारणे' इत्यतः कर्मणि घञ्प्रत्यये 'पुगन्त-लघूपधस्य च'१ इति गुणे, भेदेति २रूपसिद्धेः । प्रतिजीवं भिद्यमानमित्यर्थः । आदिपदेन ३शरीरेन्द्रियग्रहः ।

भावसाधनभेदशब्दमुपेत्याऽह - यदि वाऽज्ञानकृतो भेद इति ।। अन्तिमांशं व्याचष्टे- तथा-पीति ।। ईश्वरस्येत्यादिहेत्वंशमवतार्य व्याचष्टे- कुत इत्यादि ।। नन्वीश्वरस्यान्तःकरणाभावात् कथं संसारिणैक्यं तेनानुभूयेतेत्युक्तिरित्यत आह- विक्षेपेति ।। अन्तःकरणाभावेऽत्रापि परव्यामोहन-करशक्तिरूपविक्षेपसत्त्वाभ्युपगमात् स्यादेवानुभव इत्यर्थः । प्रागिति ।। विमतो भिन्न इत्यनुमान-परिष्कारप्रस्ताव इत्यर्थः । मुक्तामुक्तयोर्भेदाभाव इत्यादिनोक्तातिप्रसङ्गद्वयस्य परेण ननु मुक्तस्ये-त्यादिनोद्धारे शङ्किते ४तमनिरस्य 'यद्यज्ञानकृत' इत्यादिना ५तमनूद्य 'संसारिणैक्यं तेनानुभूयते' इत्यतिप्रसङ्गान्तरोक्त्या तयोः प्रसङ्गयोरशक्यसमर्थनत्वं प्रतीयते । तां प्रतीतिं स्वयं निराह- यदुक्तमित्यादिना ।। इति ज्ञातव्यमित्यन्तेन । संसर्गेति । संसारिजीवेऽन्तःकरणसंसर्गभावो, मुक्ते तदभाव इत्यस्य विरोधेनायोगादित्यर्थः ।

अधिकरणचित एकत्वेऽपि निर्विशेषतयाऽवच्छेदकान्तराभावेऽप्यज्ञानतदभावावच्छेदेनोपपन्नौ भावाभावावित्याशङ्क्य निराह- अज्ञानेति ।। तादृगेवेति ।। ऐक्यविरोधादयुक्तमेवेत्यर्थः । मुक्तस्या-पीति ।। दर्पणोपाधिकृतभेदस्य प्रतिमुख इव मुखेऽपि सत्त्वे तदज्ञानकृतभेदस्य संसारिणीव मुक्तेऽपि प्रसङ्गादिति वा अज्ञानकार्यसंसारप्रसङ्गादिति वार्थः । अज्ञानाश्रयचैतन्यस्यैकत्वादिति भावः ।

ननु दर्पणाद्युपाधेः प्रतिबिम्बपक्षपातित्वेन प्रतिमुखे स्वगतमालिन्यादिधर्माऽसञ्जकत्वमिव बिम्बे मुखे तदासञ्जकत्वाभावेन १अवदातत्ववदज्ञानरूपोपाधिः स्वकार्यभेदं संसारिण्येवाऽसञ्जयति न मुक्त इति भावेनाशङ्क्य निराह- २प्रतिबिम्बेति ।। विप्रतिपत्तेरिति ।। दर्पणाद्युपाधिरेव मुखादिसन्निधाने प्रतिमुखादिरूपवस्त्वन्तरात्मना परिणमत इत्यङ्गीकारेण त्वदुक्तप्रक्रियाया असम्मतेरित्यर्थः । शक्योपपादनाविति ।। ३यदुक्तमित्यादिना स्वोक्तरीत्येति भावः । इति शक्योपपादनौ पूर्वोक्ताति-प्रसङ्गौ यद्यपि तथापीति योजना । तदिति ।। शक्योपपादनत्वमित्यर्थः । अन्यथेति ।। शक्योप-पादनत्वानभिप्राये मुक्तामुक्तयोः भेदाभाव इत्यादिप्रसङ्गौ नावक्ष्यदेवेत्यर्थः । भिन्नत्वस्य साधको मुक्तत्वहेतुरित्यन्वयः । भेदाभावादिति ।। यदि मुक्तामुक्तयोर्भेदो न स्यादैक्यं स्यादिति यावत् । तर्हि मुक्तस्य संसाराधिकरणामुक्तस्वरूपेणैक्यं स्यादित्यापादनं न युक्तम् । आपाद्यापादकयो्र्भेदाभावादित्यर्थः । तदन्वयेति ।। अज्ञानकार्यान्तःकरणसम्बन्धायोगादित्यर्थः । संसारः दुःखम् । इष्टापादनादीत्यादि-पदेनाऽपाद्यापादकयोर्भेदाभावसङ्ग्रहः । अज्ञानिन इति ।। अज्ञानसम्बन्धवत इत्यर्थः । भिद्यत इत्यनन्तरं अनेनेति शेषः । उपक्रान्तमिति ।। तथा च यद्यज्ञानकृतो भेदस्तर्हि मुक्तस्याज्ञानाभावात् संसारिणैक्यं तेनानुभूयेतेत्यापादनीयं न त्वीश्वरस्येतीति भावः । ननु मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः, संसारिणो मुक्तत्वं वा स्यादिति प्रसङ्गद्वयमाचार्यैरभिहितं, तत्राऽद्यतर्के मुक्तस्य संसारानुभवो नास्ति अन्तःकरणाद्यभावादिति दूषणेऽभिहिते, द्वितीयतर्के संसारिणो मुक्ताद्भेदसद्भावात्संसारिणो मुक्तत्वानुभवो नास्तीति च दूषणेऽभिहिते, दूषणद्वयेन प्रसङ्गद्वयस्य दुष्टत्वमङ्गीकृत्य यद्यज्ञानकृत इत्यादिना प्रसङ्गान्तरमुच्यते । तदयुक्तम् । दुष्टस्य प्रसङ्गद्वयस्य भगवत्पादैरवक्तव्यत्वाद् इति चेत् । सत्यम् । दूषणद्वयपरिहारेण पूर्वोक्तावेवातिप्रसङ्गौ शक्योपपादनौ इति शिष्यैरेवोह्यतामित्यभि-प्रेत्यातिप्रसङ्गान्तरमुक्तम् । तत्रोक्तदूषणपरिहारेण कथं शिष्यैः पूर्वोक्तातिप्रसङ्गौ शक्योप-पादनावित्यतस्तं प्रकारं स्वयं दर्शयति - यदुक्तमित्यादिना ।। भावाभावयोरिति ।। संसारिणोऽन्तः-करणसम्बन्धभावः, मुक्तस्य तदभाव इत्यर्थः । अयोगादिति ।। उभयचैतन्यस्यापि निर्विशेषैक-रसत्वादित्यर्थः । अज्ञानेति । संसारिणोऽज्ञानसद्भावश्चैतन्यस्य तदभाव इत्यर्थः । एतदपीति ।। अज्ञानसंसर्गसत्त्वमसत्त्वं च । तादृगेव निर्विशेषचैतन्येऽन्तःकरणसंसर्गभावाभाववद् अयुक्तमेवे-त्यर्थः । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । द्वितीयप्रसङ्गे दूषणं परिहरति- एवमिति ।। भेदसद्भावः मुक्ताद्भेदसद्भावः । मुक्तस्यापीति ।। संसारिणो मुक्ताद्भेदसद्भावे मुक्तस्यापि संसारिणः सकाशादज्ञानकल्पितभेदसद्भावप्रसङ्गादित्यर्थः । ननु यथा बिम्बप्रतिबिम्बयोरैक्येऽपि बिम्बे अवदातत्वं प्रतिबिम्बे च मलिनत्वं च व्यवस्थयाऽस्ति । उपाधेः प्रतिबिम्बपक्षपातित्वात् । एवं मुक्तामुक्तयोर्भेदाभावेऽप्यज्ञानतदभावौ च व्यवस्थया स्याताम् । तथा हि । मुक्तस्य निर्विशेष-चैतन्यस्वरूपत्वेन बिम्बतयाऽन्तःकरणसंसर्गाभावेनाज्ञानसम्बन्धाभावेऽप्यमुक्तस्य तत्प्रतिबिम्बस्य युज्यत इत्यत आह- बिम्बेति ।। अवदातत्वमलिनत्वे इवेति सम्बन्धः । विप्रत्तिपत्तेरिति ।। बिम्बप्रतिबिम्बयोरैक्यस्यैवासम्मतत्वान्नायं दृष्टान्तो युक्त इत्यर्थः । अन्यथेति । पूर्वोक्तदूषण-परिहारेण प्रसङ्गद्वयस्य शक्योपपादनत्वं शिष्यैरेवोह्यतामित्यभिप्रायाभावे दुष्टं प्रसङ्गद्वयं भगवानाचार्यो नावक्ष्यदेवेत्यर्थः ।

ननु मुक्तत्वमस्तु भेदो मास्त्विति भेदमात्रस्याक्षिप्तत्वात् मुक्तभेदाभावे इदं स्यादित्येव पक्षे बाधकतया वक्तव्यम् । मुक्तामुक्तयोरित्यादेस्तु क्वोपयोगः ? इत्यसङ्गतिमाशङ्क्याऽह- यदि मुक्तस्येति ।। इष्टेति ।। मुक्तस्य संसाराधिकरणस्वरूपेणैक्यस्य मयाऽङ्गीकृतत्वादिति भावः । आपाद्यापदकयोरिति ।। मुक्तस्य संसारिणा तादात्म्यस्याऽपादकस्य, आपाद्यस्य संसाराधिकरण-स्वरूपेणैक्यस्य चाभिन्नतया भेदसापेक्षापाद्यापादकभावानुपपत्तेरित्यर्थः । इष्टापादनादीत्यादि-पदेनाऽपाद्यापादकयोरभेदपरिग्रहः । यद्यज्ञानकृतो भेद इति मूलस्य द्वितीयतर्कानुवादत्वप्रतीतावपि प्रथमतर्कपरिहारानुवादत्वाप्रतीत्याशङ्क्याऽश्लिष्टत्वमाशङ्क्य तर्कद्वयपरिहारानुवादत्वलाभाय तदनु-गुणतया भेदशब्दं व्याख्याति- अत्रेति ।। तर्कद्वयपरिहारानुवादत्वं विशदयन्नेव मूलं योजयति- यदीत्यादिना ।।

नन्वीश्वरस्य कथमैक्यानुभवापादनम् ? इत्यतस्तदनुभवाभावः किं संसारिवदज्ञानावरणाच्छादन-निमित्तो वा स्याज्जडवदनुभवशक्तिवैकल्यनिमित्तो वा स्यादिति विकल्पद्वयं मनसि निधायाऽ-द्यमसिद्ध्या दूषयति- ईश्वरस्येति ।। द्वितीयमप्यसिद्ध्या दूषयति- विक्षेपेति ।। अतदाकार-प्रतिभासरूपविक्षेपस्याङ्गीकृतत्वादित्यर्थः । पूर्वोक्तातिप्रसङ्गद्वयस्य दूषितत्वात् तत्परित्यागेन मूलकारीयं बाधकान्तरप्रदर्शनमिति भ्रान्तिनिरासाय स्वयं प्रागुक्तं प्रसङ्गद्वयमुपपादयति- यदुक्तमित्यादिना ।। अयोगादिति ।। भावाभावयोर्विरुद्धतयैकत्रावस्थानासम्भवाद् अवच्छेदक-भेदेनैव तदवस्थानं वाच्यम् । न च तत्सम्भवति । चैतन्यस्य निर्विशेषत्वेन तत्रावच्छेदकभेदस्या-योगादिति भावः१ ।

नन्वज्ञानावच्छेदेनान्तःकरणसंसर्गस्याज्ञानाभावावच्छेदेनान्तःकरणसंसर्गाभावस्य चोपपन्नत्वात् कथमन्तःकरणसंसर्गतदभावयोर्विरोध इति शङ्कते- अज्ञानेति ।। यद्यज्ञानभावाभावौ उपपन्नौ स्याताम् । न च तौ सम्भवतः । तयोरपि स्वतो विरुद्धतयाऽन्तःकरणसंसर्गाभावाभाव-योरिवावच्छेदकभेदेनैव व्युत्पाद्यतया निर्विशेषचैतन्ये चावच्छेदकभेदाभावेन वृत्त्यनुपपत्तेरित्याशयेन परिहरति- एतदपि तादृगेवेति ।। एवमाद्यं प्रसङ्गमुपपाद्य द्वितीयमप्युपपादयति- एवमिति ।। परास्त इति ।। निर्विशेषचैतन्ये कल्पितभेदभावाभावयोरज्ञानभावाभावयोश्च विरुद्धतयाऽनुपपन्नत्वेना-वच्छेदकभेदेनैव ग्राह्यतयाऽसति तस्मिन्नयोगादिति भावः । एतदेव प्रपञ्चयति- मुक्तस्यापीति ।।

ननु सत्यपि बिम्बप्रतिबिम्बयोरैक्ये तत्रावच्छेदकभेदं विनाऽवदातत्वमलिनत्वयोरुपाधि-सम्बन्धतदभावयोश्च व्यवस्थावत् मुक्तामुक्तयोरवच्छेदकभेदं विनाऽपि भेदतदभावयोरज्ञानतदभाव-योर्व्यवस्था किं न स्यादिति शङ्कते- बिम्बप्रतिबिम्बयोरिति ।। विप्रतिपत्तेरिति ।। साधक-प्रमाणाभावबाधकप्रमाणसद्भावव्युत्पादनेन तत्वनिर्णयादौ तयोरभेदस्य दूषितत्वेन तदैक्यस्य विप्रतिपन्नत्वादिति भावः । यदुक्तमित्यादिनोक्तं प्रसङ्गद्वयोपपादनमुपसंहरति- इतीति ।। तर्हि प्रागुक्ताभ्यामेव प्रसङ्गाभ्यामप्रयोजकताशङ्कापरिहारसिद्धेर्मूलकारीयम् अतिप्रसङ्गान्तराभिधान-मनर्थकमित्यतः तदभिप्रायमाह- तथापीति ।। किमभिप्रायान्तरकल्पनया ? दुष्टत्वाभिप्रायकत्वमेव किं न स्यादित्यत आह- अन्यथेति ।।

## गोविन्दीया

अप्रयोजक इति ।। भिन्नत्वस्य साधक इत्यर्थः । मुक्तामुक्तव्यवस्थाभाव इति ।। मुक्तामुक्तमर्यादाभाव इत्यर्थः । न हीति ।। स एव पुरुषः । तदैव एकस्मिन्नेव काले मुक्तोऽमुक्तश्चेति न हि युज्यत इत्यर्थः । इष्टापादनादिति ।। संसाराधिकरणस्वरूपेण मुक्तस्यैक्यमिष्टमेव तदापादनरूपस्येष्टापादनरूपत्वादित्यर्थः । आपाद्यापादकयोरिति ।। यदि मुक्तस्य संसारिणो ऐक्यं स्यात्तदा संसाराधिकरणस्वरूपेण मुक्तस्यैक्यं स्यादित्याद्यापादकयोर्भेदाभावाच्चेति दूषणान्तर-मित्यर्थः । तदन्वयेति ।। अन्तःकरणसम्बन्धायोगादित्यर्थः । पूर्ववदिति ।। मुक्तस्य संसारापादने यथा दोषः तद्वत् संसारिणो मुक्तत्वापादने इष्टापादनमापाद्यापादकायोर्भेदाभावश्चेति दोषद्वयप्रसङ्गादित्यर्थः । संसारिण इति ।। मुक्तात् संसारिणो भेदसद्भावात् । तस्य संसारित्वानुभव एव वर्तते न तु मुक्तत्वानुभव इत्यर्थः । तथापीति ।। मुक्तसंसारिणो क्रमात् संसारानुभव-मुक्तत्वानुभवयोरभावेऽपि ईश्वरेण संसारिणैक्यमनुभूयेत । तस्य भेदकारणाज्ञानाच्छादनाभावात् । तथा च यदि मुक्तस्य भेदो न स्यात्तर्हि ईश्वरेण संसारिण्यैक्यं स्यादिति विपक्षे बाधकमस्त्येवे-त्यर्थः । विपक्षेति ।। ईश्वरस्याज्ञानाच्छादनाभावेन तत्कृतान्तःकरणस्याभावात् कथमैक्यानुभव इत्याशङ्क्य तस्याज्ञानाभावेऽपि अतदाकारप्रतिभासरूपविक्षेपस्य स्वस्य संसारित्वारोपरूप-विक्षेपस्येति यावत् । सद्भावाभ्युपगमान्न शङ्कावकाश इत्यर्थः । मुक्तस्येति ।। मुक्तस्य भेदाभावे बाधकमुपक्रान्तं तदनुसारेण तस्यैव संसारिण्यैक्यानुभवापादानं वक्तव्यम् ईश्वरस्य संसारिण्यैक्या-नुभवस्तु कथमापाद्यत इत्यर्थः । निर्विशेषेति ।। निर्विशेषैकरसे चैतन्ये यथाऽन्तःकरणसंसर्गस्यायोगः तथा तदभावस्याप्ययोगादित्यर्थः । अज्ञानेति ।। अज्ञानसदसद्भावाभ्यामुभौ संसर्गतदभावौ स्यातामिति चेदित्यर्थः । एतदपि तादृगेवेति । निर्विशेषचैतन्येऽज्ञानतदभावयोरयोगात् । एतदपि चोद्यमसदित्यर्थः । एवमिति ।। यथा मुक्तस्य संसारानुभवप्राप्त्यभावः परास्तः, एवं यदि मुक्तात् संसारिणो भेदः स्यात्तर्हि संसारिणः सकाशान्मुक्तस्यापि भेदप्रसङ्गात् संसारिणोऽज्ञानकल्पित-भेदसद्भावोऽपि परास्त इत्यर्थः । उभयोरैक्यान्मुक्तस्य भेदाभावः संसारिणस्तु भेद इति धर्म-द्वयाङ्गीकारो नोचित इति भावः । बिम्बेति ।। बिम्बप्रतिबिम्बयोरैक्येऽपि अवदातत्वमलिनत्वे यथावस्थापके तथा मुक्तामुक्तयोरैक्येऽपि भेदाभावभेदौ अज्ञानाभावाज्ञानेऽप्यवस्थापकौ किं न स्यातामिति चेदित्यर्थः । विप्रतिपत्तेरिति ।। बिम्बप्रतिबिम्बयोरैक्यस्यैवासम्मतेस्तद्दृष्टान्तेन मुक्तामुक्तयोरैक्येन अवस्थापकधर्माङ्गीकारः शक्योपपादनः स्यादित्यर्थः । पूर्वोक्तावतिप्रसङ्गौ ।। अज्ञानकृतो हि मुक्तात् संसारिणो भेदः । सो ज्ञानिनः संसारिणः प्रतीयते न तु निवृत्ताज्ञानस्य मुक्तस्येति काऽनुपपत्तिरिति शङ्कायां यदि मुक्तस्य संसारिणः सकाशाद् भेदो न स्यात्तर्हि संसारिगतसंसारः प्रसज्येतेति । यदि संसारिणो मुक्ताद् भेदः स्यात्तर्हि मुक्तस्यापि भेदः स्यादिति पूर्वोक्तावपि प्रसङ्गौ शक्योपपादनौ । तथापि शिष्यैरेव तदूह्यतामिति यद्यज्ञानकृतो भेद इत्यादिना वाक्येनेश्वरस्याज्ञानाभावात् संसारिण्यैक्यं स्यादित्येतत् प्रसङ्गान्तरमाचार्येणोक्तमिति ज्ञातव्य-मित्यर्थः । अन्यथा ।। तयोः प्रसङ्गयोः शिष्यैरूहनाभावे स्वयमेवावक्ष्यत् । प्रसङ्गान्तरं नावक्ष्यदेवेत्यर्थः ।

## जनार्दनभट्टीया

तदन्वयेति ।। अन्तःकरणसम्बन्धेत्यर्थः । संसारिण इति ।। एवं च सति मुक्तसंसारिणोः मुक्तत्वसंसारित्वानुभवाननुभवावुपपादयति – अज्ञानकृतो हीत्यादिना ।। यदि अज्ञानेति वाक्ये पूर्वोक्तप्रसङ्गे बाधकोद्धारपुरःसरं प्रसङ्गान्तरपरतया योजयितुं भेदशब्दम् अर्थान्तरपरतया व्याचष्टे – अत्रेति ।। अथवा 'यदि अज्ञानकृतः' इति मूले भेदशब्दस्य अन्योन्याभावपरत्वे अन्तःकरणादेश्च अज्ञानकृतत्वादिति प्राप्तशङ्कानुवादरूपतानुपपत्तिं 'यद्यज्ञानकृत' इति मूलस्येत्यत आह–अत्रेति ।। स्वव्याख्यानानुसारेण पूर्वोक्तप्रसङ्गे बाधकमुद्धरति – यदीत्यादिना ।। प्रसङ्गान्तरमाह – तथाऽपीत्या-दिना ।।

ननु उत्तरत्र 'भेदाद्यनुभवस्य भ्रान्तित्वाङ्गीकारे' इति वाक्यावतारिकासमये 'तथाऽपि विक्षेप-सद्भावात्' इति वाक्ये ईश्वरेऽपि विक्षेपाख्यशक्त्यभ्युपगमात् तस्याश्च स्वाश्रयीभूताज्ञानमन्तरेण निराश्रयाया अवस्थानायोगात् 'अज्ञानकृत' इति मूले कथमज्ञानाभावादित्युक्तम्? इत्यत आह – अज्ञानाच्छादनाभावादिति ।। परैः तथा अभ्युपगमाद्् इति भावः । अज्ञानस्य आवरणं विक्षेपश्चेति शक्तिद्वयम् । तत्र विद्यमानस्य प्रतिभासप्रतिबन्धिका आवरणशक्तिः । तस्य अभावात् संसारिणा ऐक्यम् अनुभूयेत इति भावः । इतोऽप्यवश्यं संसारिणैक्यमीश्वरेणानुभूयत इत्याह- विक्षेपेति ।। अस्येश्वरेण संसारिणैक्यमनुभूयत इति पूर्वेण सम्बन्धः । चैतन्यमात्रैक्यस्य परमते पारमार्थिकत्वेऽपि संसारावच्छिन्नेन साकमैक्यस्य कल्पितत्वाद् विक्षेपस्य च कल्पितानुभवानुकूलत्वरूपं संसारिणैक्य-मनुभूयत इति भावः । असङ्गतिमुपपादयति – मुक्तस्येति ।। प्रागिति ।। 'विमतो भिन्नः मुक्तत्वात्' इत्यादिवाक्यव्याख्यानावसर इति भावः । एतदपीति ।। अज्ञानस्य सदसद्भावकथनमपि निर्विशेषैकरसे चैतन्ये विरुद्धमेवेत्यर्थः। परास्त इति ।। अज्ञानाभावादेवेति भावः । दूषणान्तरमाह–मुक्तस्यापीति ।। ईश्वरस्यापीत्यर्थः । विप्रतिपत्तेरिति ।। ईश्वरजीवयोः बिम्बप्रतिबिम्बभाव एव आवयोः विवादादिति भावः । पूर्वोक्ताविति ।। 'मुक्तामुक्तयोः' इति वाक्योक्तावित्यर्थः । शक्योपपादनाविति१ ।। आश्रयाभावाद् विषयाभावाच्च परमते अज्ञानस्यैव अभावेन मुक्तसंसारिणोराविद्यकभेदस्यापि वक्तुमशक्यत्वात् शक्यप्रतिपादनाविति भावः । एतदिति ।। ईश्वरेणैक्यम् अनुभूयते एतदित्यर्थः । अन्यथेति ।। अशक्यप्रतिपादनत्व इत्यर्थः । आचार्यैः, पूर्वोक्तावतिप्रसङ्गाविति च शेषः ।

## ततश्च दुःखित्वं स्यात् ..

**ईश्वरस्य संसारिणैक्याननुभवसमर्थनम्**

### श्रीमज्जयतीर्थटीका

नन्वीश्वरेण संसारिणैक्यमनुभूयत एव । अतो नैतदनिष्टापादनमित्यत आह-

## मूल

***ततश्च दुःखित्वं स्यात् ।***

ईश्वरस्येति वर्तते । 'यो दुःखिनैक्यमनुभवति स दुःखी । यथा सम्प्रतिपन्नः' इति व्याप्तेः । यदीश्वरः संसारिणैक्यमनुभवेत्तदा दुःखी प्रसज्येत । न चैवम् । ततो नेश्वरस्य संसारि-णैक्यानुभवोऽङ्गीकर्तुमुचितः ।

## श्रीविजयीन्द्रभिक्षु

ईश्वरस्य दुःखित्वं स्यादित्येतदुपपादयति- यो दुःखिनेति ।। दुःखी दुःखानुभव-प्रयुक्तापकर्षभाक् प्रसज्येतेत्यर्थः । नन्वीश्वरस्य संसार्यैक्यानुभवसत्त्वेऽपि न दुःखित्वप्रसङ्गः । तत्कर्मार्जितत्वस्यैव तदीयत्वप्रयोजकत्वात् । ईश्वरस्य च कर्माभावादिति चेन्न । ईश्वरस्य संसारिणा वास्तवैक्ये कर्मणां तदीयत्वस्याप्यापाद्यत्वात् ।

## श्रीराघवेन्द्रतीर्थ

ईश्वरो दुःखीभवितुमर्हति दुःखिनैक्यानुभवितृत्वात् । चैत्रेणैक्यानुभवयुक्तचैत्रवदेवेति साधनाभिप्राये बाधापसिद्धान्तौ स्यातामित्यतिप्रसङ्ग एवात्राभिप्रेत इति भावेनाऽह- यदीश्वर इति ।।

## गुरुराजीया

ततश्चेति मूले अप्रयोजकत्वमाशङ्क्य परिहरति- य इति ।।

## गोविन्दीया

सम्प्रतिपन्न इति ।। अर्जुनाख्यांशवानिन्द्र इत्यर्थः ।

# तान्यहं वेद सर्वाणि ..

**ईश्वरस्य संसारिणः स्वस्य भेदानुभवसमर्थनम्**

## श्रीमज्जयतीर्थटीका

किञ्चेश्वरवचनैस्तस्य संसारिभेदानुभव एवानुमीयते । कुतस्तत्राभेदानुभवप्रत्याशेत्या-शयवानाह-

# मूल

***तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ।१***

तानि व्यतीतानि जन्मानि । अत्र ज्ञानित्वाज्ञानित्वाभ्यां भेदोऽभिधीयते ।

**मूल**

*सुखं दुःखं भवो भावो भयं चाभयमेव च ।*

*अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।।*

*भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ।१*

भव उत्पत्तिः, भावः सत्ता, समता द्वन्द्वेषु निर्विकारत्वं, तुष्टिर्विषयालम्बुद्धिः, भावाः धर्माः । अत्रेश्वरत्वेशितव्यत्वाभ्यां भेदोक्तिः ।

**मूल**

*यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।*

*अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।२*

अत्राप्युत्कृष्टत्वापकृष्टत्वाभ्यां भेदवचनम् ।

**मूल**

*इत्यादिनेश्वरेणापि भेदस्यैवानुभूयमानत्वाच्च ।*

ईश्वरेणापीत्यपिशब्दस्योपर्युपयोगः । भेदस्य संसारिभिरिति शेषः । न हीश्वरोऽर्जुनस्यानाप्तः । येनाननुभूतमपि वदेदिति सम्भावयामः । तदेवं विपक्षे बाधकसद्भावान्नायमप्रयोजको हेतुरिति सिद्धम् ।

## श्रीविजयीन्द्रभिक्षु

उत्तरत्र गीतावचनोदाहरणस्यानुपयोगं मन्वानोऽवतारयति- किञ्चेति ।। उदाहृतवचने भेदस्याप्रतीतेः कथं भेदे इयं स्मृतिरित्याशङ्क्याऽह- अत्रेति ।। द्वन्द्वेष्विति ।। शीतोष्णसुख-दुःखादिष्वित्यर्थः । भेदस्येति ।। जीवाद्भेदस्यैवेश्वरेणानुभूयमानत्वस्यानुमीयमानत्वाच्चेत्यर्थः । अपिशब्दस्योपर्युपयोग इति ।। द्रष्टव्यमिति शेषः । उपयोगप्रकारमाह- भेदस्येति ।। भेदस्य संसारिभिरपि नाहमीश्वर इत्यनुभूयमानत्वादित्यपिशब्दोपयोगप्रकार इति भावः । ननूदाहृतवचनेन न तस्य भेदानुभवकल्पना युक्ता । विप्रलिप्सया तद्वचनोपपत्तेरित्यत आह- न हीति ।।

## श्रीवेदेशतीर्थ

'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।'

इति पूर्ववाक्यस्थं परामृश्यं दर्शयति- व्यतीतानीति ।। ननु भवभावशब्दयोर्भूधातुनिष्पन्नत्वेन सत्तार्थत्वात् पौनरुक्त्यमित्यतोऽर्थभेदमाह- भव इत्यादिना ।। द्वन्द्वेषु शीतोष्णसुखदुःखादिषु । सुखशब्देन पौनरुक्त्यभयादाह- तुष्टिरिति ।। भावशब्दस्यानेकार्थत्वात् प्रकृते विवक्षितमर्थमाह- भावा इति ।। अनुभूयमानत्वाच्चेति मूलम् । अनुभूयमानत्वावगमाच्चेत्यर्थः ।

नन्वीश्वरवचनेनेश्वरानुभव एवावगम्यते । नास्मदाद्यनुभवः । अतोऽत्रापिशब्दो व्यर्थ इत्यत आह- उपरीति ।। सत्यमत्र व्यर्थ इति । तथापि तत एवेत्युत्तरवाक्ये तत एवेत्यनेनेश्वरेणाप्यनुभूयमानत्वस्य परामर्शे तत्रानुमानान्तरसमुच्चायकत्वेन संसार्यनुभवसमुच्चायकत्वेन चोपयोगो भविष्यतीति भावः । मूले प्रतियोगिविशेषानुक्तेराह- संसारिभिरिति ।। ईश्वरेणापीति ।। अत्रानुभूयमानत्वादपीति सम्बन्धः । तथा चानुमानान्तरसमुच्चायकतयाऽपिशब्दोपयोग इत्युक्तं भवति । अथ वेत्युत्तर-योजनायां न केवलमस्मदादिभिरिति यथावस्थित एवापिशब्दः । तत्र च प्रत्यक्षबाधितं च जगन्मिथ्यात्वमित्यनेनोक्तभेदसाधकास्मदादिप्रत्यक्षसमुच्चयः । तत्र जगन्मिथ्यात्वशब्देन भेदाभाव-स्याप्युपलक्षितत्वादिति ध्येयम् ।

## श्रीराघवेन्द्रतीर्थ

‘बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।’

इति गीतास्थपूर्वार्धोक्तपरामर्शकं तानीति पदमित्युपेत्याऽह-ता(नि व्य)न्यतीतानि जन्मानीति ।। अप्रसिद्धपदानामर्थमाह- भव उत्पत्तिरित्यादि ।। द्वन्द्वेष्विति ।। सुखदुःखलाभालाभशीतोष्णा-दिषु । उत्कृष्टत्वापकृष्टत्वाभ्यामिति ।। भेदोक्तिरित्यनुषङ्गः । उपर्युपयोग इति ।। तत एवेत्यत्रेति भावेन उत्तरत्र तद्व्यनक्ति- तत एवेश्वरेणाप्यनुभूयमानत्वादिति ।। प्रत्यक्षोक्तिपरत्वेन योजनायां चेत्यर्थः । हेतुरिति ।। मुक्तत्वादिहेतुरित्यर्थः ।

अभेदानुभवेति ।। संसारिणैक्यं तेनानुभूयेतेत्युक्ता ऐक्यानुभवप्रत्याशेत्यर्थः । जन्मानि मदीयानवतारान् । मूले भेदस्यैवानुभूयमानत्वादिति ।। अनुभूयमानत्वावगमादित्यर्थः । पूर्वं संसारिभिर्भेदस्यानुभूयमानत्वानुक्तेरीश्वरेणापीत्यपिशब्दो व्यर्थ इत्यत आह- उपरीति ।। तत एवेत्युत्तरवाक्ये उपयोग इत्यर्थः । ननु ईश्वरस्यानाप्तत्वात्स्वाननुभूतमपि संसारिभेदमर्जुनं प्रति वदतीति चेत्तत्राऽह- न हीश्वर इति । हेतुनेति ।। विमतो भिन्नो मुक्तत्वादित्यनुमानेनेत्यर्थः । उपर्युपयोग इत्युक्तं दर्शयति- तत एवेति ।। तथा च तत एवेत्यनेन ईश्वरेणाप्यनुभूयमानपरामर्शेन मुक्तभेदसाधने अनुमानान्तरसमुच्चायकत्वमुक्तं भवतीति ज्ञातव्यम् ।

## गुरुराजीया

व्यतीतानीति ।।

‘बहूनि मे व्यतीतानि जन्मानि तव चार्जुन’

इति पूर्वत्र तेषामेव प्रकृतत्वादिति भावः । भेदवाचकशब्दस्यात्राश्रवणात्तदप्रतिपादकत्वमाशङ्क्य आगमतया तदनवगमकत्वेऽप्यर्थतस्तदवगमकत्वाद्युक्तमेतदुदाहरणमित्यभिप्रायेण तदुपदर्शयति- अत्रेति ।। अभिधीयते अवगम्यत इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । सत्तार्थकभूधातुनिष्पन्नत्वेन भावादिशब्दानां पुनरुक्तत्वमाशङ्क्यार्थभेदकथनेन तत्परिहरति- भाव इत्यादिना ।। सुखशब्देन पौनरुक्त्यभयात् तुष्टिशब्दमन्यथा व्याचष्टे- तुष्टिरिति ।। ननु ईश्वरवचनेनेश्वरानुभवसिद्धावप्य-स्मादादिभेदानुभवस्यासिद्धत्वेन तत्समुच्चायकत्वासम्भवात्तदर्थकापिशब्दवैयर्थ्यमित्यत आह- उपर्युपयोग इति ।। तत एवेतीत्युत्तरवाक्य इत्यर्थः ।

## गोविन्दीया

अभेदेति ।। तत्र वचनेषु अभेदानुभवप्रत्याशा कुत इत्यर्थः । उपर्युपयोग इति ।। उपरि तत एवेत्युत्तरवाक्योक्तेश्वरेणापीत्यपिशब्दस्योपयोग इत्यर्थः ।

## जनार्दनभट्टीया

‘तान्यहं वेद’ इति श्लोके ‘तानि’ इत्यस्य ‘बहूनि मे व्यतीतानि जन्मानि तव चार्जुन’ इति पूर्वोक्तजन्मपरामर्शित्वमित्यत आह- तानीति ।। भेदोऽभिधीयत इति ।। ‘घटेन जलमाहर’ इत्यत्र छिदेतरवत्ववद् योग्यतावच्छेदकतया प्रामाण्यम् इत्यर्थः । भवभावशब्दयोरेकार्थप्रतीतिं वारयति- भव इति ।। समतातुष्ट्योः भेदमाह- समतेत्यादिना ।। ‘इत्यादिना’ इति मूले भेदस्यापीत्यपिशब्देन अभेदस्यापीति प्रतीतिं वारयितुमाह- ईश्वरेणापीति ।। अपिपदस्य ईश्वरपदेनान्वयाङ्गीकारे वैयर्थ्यं स्यादित्यत आह- उपरीति ।। ‘तत एव’ इति उत्तरवाक्ये परामर्शसौकर्यार्थमित्यर्थः ।

# तत एवाभ्रान्तत्वान्न मुक्तस्यापि भेदनिवृत्तिः ..

**मुक्तावपि भेदस्यानिवृत्तिसमर्थनम्**

## श्रीमज्जयतीर्थटीका

एवं मुक्तत्वहेतुना मुक्तस्य भेदवत्तां प्रसाध्यानुमानान्तरेणापि साधयति–

## मूल

*तत एवाभ्रान्तत्वान्न मुक्तस्यापि भेदनिवृत्तिः ।*

तत एवेश्वरेणाप्यनुभूयमानत्त्वात् । अभ्रान्तत्वादीश्वरस्येति शेषः । इदमुक्तं भवति । विमतो भेदो मुक्तौ न निवर्तते । ईश्वरेणानुभूयमानत्वात् । स्वरूपवदिति ।

नन्वीश्वरेणानुभूयमानोऽपि ब्रह्मात्मभेदो मुक्तौ निवर्तताम् । किं विपक्षे बाधकमित्यत उक्तम्- अभ्रान्तत्वादिति ।। यदीश्वरेणानुभूयमानमपि बाध्येत तदेश्वरस्य भ्रान्तत्वं प्रसज्येत । बाध्यशुक्तिरजतद्रष्टृवत् । तस्य त्वभ्रान्तत्वान्न तेनानुभूयमानो ब्रह्मात्मभेदो निवर्तत इति । अथ वाऽनुमानेन मुक्तस्य परमात्मनो भेदं प्रसाध्य प्रत्यक्षेणापि तत्साधनायेदं वाक्यम् । यदुक्तमीश्वरेणापि भेदोऽनुभूयत इति तत एव ईश्वरप्रत्यक्षादेव मुक्तस्यापि भेदनिवृत्तिर्नास्तीति गम्यते ।

नन्वीश्वरेण स्वस्मात्संसारिणो भेदः प्रत्यक्षेण गृह्यते । मुक्तस्य भेदः साध्यते । किं केन सङ्गत-मित्यत उक्तम्- अभ्रान्तत्वादिति ।। भेदस्येति शेषः । ईश्वरेणानुभूयमानो हि स्वस्मात् संसारिणो भेदो न तावद् भ्रान्तः । ईश्वरस्य भ्रान्तिकारणाविद्यावरणाभावात् । ततश्च पारमार्थिक-भेदस्य मुक्तावप्यवस्थानमीश्वरप्रत्यक्षेणैव सिद्धं भवतीति ।

## श्रीविजयीन्द्रभिक्षु

मूले पक्षसाध्यहेतुविभागस्य स्फुटमप्रतीतेराह- इदमुक्तमिति ।। अभ्रान्त्वादित्यस्य वैयर्थ्यमाशङ्क्य विपक्षे बाधकसूचकत्वात् सार्थक्यमित्याह- नन्वित्यादिना ।। विपक्षे बाधकतर्क-सनाथेनैकेनैवानुमानेन सिषाधयिषितार्थसिद्धेरनुमानान्तरोपन्यासपरतया व्याख्यानस्यानतिप्रयो-जनतां मन्वान आह- अथवेति ।। भेदनिवृत्तिरिति ।। भेदबाध इत्यर्थः । ननु न भेदवाक्यं सिषाधयिषितार्थे प्रत्यक्षप्रमाणान्तरसद्भावप्रदर्शनपरम् । अनुमानस्य मुक्तभेदविषयत्वेन प्रत्यक्षस्य च संसारिभेदविषयत्वेन च भिन्नविषयत्वादित्याशङ्कते- नन्वीश्वरेणेति ।। शङ्कोत्तरत्वेन मूलमवतार्य व्याचष्टे- अत उक्तमिति ।। भ्रान्तो भ्रमविषयः । तथा च संसारिप्रतियोगिकभेदस्येश्वरप्रत्यक्ष-विषयस्याऽरोपितत्वाभावेन ज्ञानान्निवृत्त्यभावेन मुक्तावपि सत्त्वम् । अस्यैवानुमानविषयत्वान्न भिन्नविषयत्वमिति भावः ।

## श्रीवेदेशतीर्थ

मूले पक्षसाध्यहेतुविभागस्य स्फुटमप्रतीतेराह- इदमुक्तं भवतीति ।। अभ्रान्तत्वादित्यस्य वैयर्थ्यमाशङ्क्य विपक्षबाधकतर्कसूचकतया सार्थक्यं वक्तुमाह- नन्विति ।। अत्र मुक्तस्यापीत्यपि-शब्दस्वारस्यं नास्तीति प्रकारान्तरेण व्याख्याति- अथ वेति ।। निवृत्तिरिति ।। बाध इत्यर्थः । भ्रान्तिकारणेति ।। अनेनाभ्रान्तत्वादित्येतत्प्रकारान्तरेण योजितमिति ध्येयम् । पारमार्थिक-भेदस्येति ।। ईश्वरेणानुभूयमानस्य संसारिप्रतियोगिकभेदस्येत्यर्थः । मुक्तावपीति ।। संसारिण इति शेषः ।

## श्रीराघवेन्द्रतीर्थ

अनुमानप्रयोगस्यास्फुटत्वादाह - इदमुक्तमिति ।। विमत इति ।। इदानीमुपलभ्यमानो ब्रह्मात्मभेद इत्यर्थः । विपक्षे बाधकतर्कं स्वयमुक्त्वा विपर्ययपर्यवसानतया मूलशेषं योजयति - ईश्वरेणानुभूयमानमपीति ।। निर्बाधानुमानसिद्धेऽर्थेऽनुमानान्तरोक्तिमरोचयमान आह-अथ वेति ।। मुक्तत्वादित्यनुमानेनेत्यर्थः । इदमिति ।। तत एवेति वाक्यमित्यर्थः । ईश्वरेणापीत्यादिपूर्व-वाक्यार्थानुवादोऽयम् । यदुक्तमीश्वरेणापीत्यादि ।। ईश्वरस्याज्ञानाभावादिति प्राङ्गूलोक्तमेव हेतुमाह- ईश्वरस्य भ्रान्तिकारणेति ।। अत एवानुमानान्तरेणापि साधयतीत्युक्तम् । द्रष्टृपुरुषवदिति ।। तस्य यथाऽभ्रान्तत्वं तथेत्यर्थः । पारमार्थिकभेदस्येति ।। स्वस्मात् संसारिणो भेदस्येत्यर्थः । अवस्थानमिति ।। पारमार्थिकसत्यत्वस्य चानिवृत्तिरिति तत्पक्ष इति द्रष्टव्यम् ।

## गुरुराजीया

ईश्वरेणापीति ।। ईश्वरेणानुभूयमानत्वादपीत्यर्थः । तथा चानुमानद्वयसमुच्चयार्थत्वान्नापि-शब्दवैयर्थ्यमिति भावः । अनुमानान्तरेण भेदसाधनपरत्वे अभ्रान्तत्वादित्युक्त्यनपेक्षमूलवाक्येनैव तत्सिद्धेः अभ्रान्तत्वादित्यनर्थकमित्यतोऽप्रयोजकताशङ्कापरिहाराय विपक्षे बाधकोपदर्शनार्थत्वात् तस्य न वैयर्थ्यमिति भावेन तच्छङ्कापरिहारकतया तद्योजयितुमप्रयोजकताशङ्कामुत्थापयति- नन्विति ।। अनुमानान्तरेण भेदसाधनपरत्वे मूलवाक्यस्य१, प्रत्यक्षेण भेदसाधनालाभात् तदलाभप्रयुक्तग्रन्थकाराचातुर्यशङ्कानिरासाय प्रत्यक्षेण भेदसाधनपरतयैतदेव वाक्यं व्याख्याति- अथवेति ।। निवृत्तिरिति ।। बाध इत्यर्थः । अवस्थानमिति ।। पारमार्थिकस्वरूपवदेव अवस्थाननियमादिति भावः ।

## गोविन्दीया

तथा चेत्यादिना वाक्येनानुमानान्तरेणापि भेदस्यैवानुभूयमानत्वादिति भावः । न निवर्तत इति ।। न बाध्यत इत्यर्थः । तत एवेति ।। मुक्तगतभेदस्येश्वरप्रत्यक्षादेव तस्य निवृत्तिर्नास्तीति ज्ञायत इत्यर्थः । किं केन सङ्गतमिति ।। ईश्वरेण स्वस्मात् संसारिणो भेदः प्रत्यक्षेण गृह्यते, स एव विप्रतिपत्ति-विषयः । तस्यैव साधनमुचितम् । मुक्तभेदस्य प्रत्यक्षत्वाभावेन विप्रतिपत्त्यविषयत्वात् तत्साधनमनु-चितम् । इदानीं तु मुक्तस्य भेदः साध्यते किं केन सङ्गतमित्यर्थः । तावदिति ।। क्रमार्थः मुक्तगतभेदस्य प्रत्यक्षसिद्धत्वं वक्ष्याम इति भावः । ततश्चेति ।। मुक्तगतभेदः प्रत्यक्षसिद्धः, संसारिगत-भेदस्याभ्रान्तत्वादित्यनुमानं न पारमार्थिकभेदस्य मुक्तावप्यवस्थानमीश्वरप्रत्यक्षेण सिद्धं भवतीति कृत्वा तस्य च विप्रतिपत्तिविषयत्वेन साधनात् । न सङ्गत्यभाव इत्यर्थः ।

## नारोपन्तीया

न तावद्भ्रान्त इति । न भ्रमविषय इत्यर्थः ।

## जनार्दनभट्टीया

यदुक्तमिति ।। त्वदुक्तमित्यर्थः । ‘इत्यादिना ईश्वरेण भेदस्य’ इति पूर्ववाक्य इति शेषः । पूर्वम् ईश्वरस्य अभ्रान्तत्वादिति योजना कृता । अधुना भेदस्य अभ्रान्तत्वादिति योजयितुं तदनुसारिणीं शङ्काम् उत्थापयति – नन्वीश्वरेणेत्यादिना ।। ईश्वरप्रतियोगिकसंसारिकधर्मिको भेदः ईश्वरप्रत्यक्ष-विषयः । मुक्तजीवधर्मिको भेदो अनुमानसाध्यः । एवं प्रत्यक्षानुमानयोः भिन्नविषयत्वात् प्रत्यक्षेणापि तत्साधनाय ‘इदम्’ इति पूर्वोक्तानुपपत्तिरिति शङ्कितुराशयः । सत्यभेदमात्रम् अनङ्गीकुर्वाणां प्रति अनिर्धारितधर्मिविशेषभेदमात्रावस्थानम् अस्माभिः साध्यते । तावताऽपि पूर्तेरित्याशयेन परिहरति– ईश्वरेणेत्यादिना ।। आशयमाविष्करोति – ततश्चेति ।। पारमार्थिकेति स्वरूपकथनम् । मुक्तौ अवस्थानोक्त्यैव पारमार्थिकत्वलाभादिति ।

## न चोपाधिभेदमात्रेणेश्वरस्य दुःखाभावः ..

**जीवेश्वरयोर्भेदवादिमतनिरासः**

### श्रीमज्जयतीर्थटीका

अत्रापर आह- ‘नेश्वरेण स्वस्मात्संसारिणो भेददर्शनेऽपि मुक्तस्य भेदः सिद्ध्यति । न हि वयं मायावादिन इव जीवब्रह्मणोर्जीवानां वा भेदमपारमार्थिकं ब्रूमः । किं तूपाधिकृतमेव । अतः पारमार्थिकत्वादीश्वरेणानुभूयमानत्वं च युज्यते । उपाधिकृतत्वादुपाधिनाशे मुक्तौ तन्नाशात् स्वाभाविकाभेदश्च सिद्ध्यति’ इति । अत्रोच्यते । स्यादेवं यद्यभेदः स्वाभाविको भेदस्त्वौपाधिक इत्युपपद्येत । न चैवम् । अभेदस्य स्वाभाविकत्वे सुखदुःखाद्यनुसन्धानप्रसङ्गात् । न हि चैतन्यैक्ये स्वाभाविके वर्तमानसुखदुःखाद्यनुसन्धानं क्वचिद् दृष्टम् ।

ननु वयं जीवान् परब्रह्मणोंऽशानभ्युपगच्छामः । तत्रांशानामेव किमन्योन्यसुखदुःखाद्यनु-सन्धानमापाद्यते । उतांशिनः । नाऽद्यः । हस्तपादाद्यवच्छिन्नात्मांशानां तदभावात् । औपाधिक-भेदस्य विद्यमानत्वाच्च । अत एव न द्वितीयोऽपीति । मैवम् । अंशिनः परमेश्वरस्यैव स्वाभाविकाभेदे सकलजीवगतसुखाद्यनुसन्धानापादनात् ।

ननूक्तमत्र जीवेश्वरयोः स्वभावेनाभेदेऽप्युपाधिकृतभेदस्य सत्त्वान्न जीवगतसुखदुःखाद्यनु-सन्धानप्राप्तिरीश्वरस्येति, तत्राऽह-

## मूल

***न चोपाधिभेदमात्रेणेश्वरस्य दुःखाभावः ।***

उपाधिकृतो भेदः उपाधिभेदः । दुःखमित्युपलक्षणम् । सति स्वाभाविकाभेद इति मात्रशब्देन सूचयति ।

कुतो नेत्यत आह-

**मूल**

***हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वानुभवात् ।***

अत्राप्युपाधिकृतो भेदः उपाधिभेदः । भोक्तुरेकत्वानुभवादित्येकस्यैवांशिनः सर्वानुसन्धान-दर्शनादिति यावत् । इदमुक्तं भवति । यथा देवदत्तेन स्वगतं सुखाद्यनुसन्धीयते । तथेश्वरेणाप्यभेदे सति सकलजीवगतमनुभूयेतेत्यापादिते नोपाधिभेदादिति वदतः परस्य कोऽभिप्रायः । किं वैषम्यमात्रप्रदर्शनमुतानुसन्धाने नाभेदमात्रं प्रयोजकं, किन्नाम ? औपाधिकभेदाभावे सति । न चैतत्प्रयोजकं प्रकृतेऽस्तीति व्यापकनिवृत्त्या व्याप्यानुसन्धाननिवर्तनमिति । नाऽद्यः । तस्यानुप-युक्तत्वात् । न द्वितीयः । हस्तपादाद्युपाधिकृतभेदे सत्यप्यंशिनोऽनुसन्धानादौपाधिकभेदाभावस्य व्यापकत्वासिद्धेरिति ।

स्यादेवम् । यद्यौपाधिकभेदाभावे सत्यभेदमेवानुसन्धाने प्रयोजकं ब्रूमः । किन्तु विश्लिष्टोपाधि-कृतभेदाभावे सति । तथा च न व्यभिचारः । औपाधिकभेदसद्भावेऽप्येकस्मिन् शरीरे विश्लिष्टो-पाधिकृतभेदाभावात् । न चैतत्प्रयोजकं प्रकृतेऽस्ति । उपाधीनां विश्लेषात् । अतो नानुसन्धानमित्यत आह-

**मूल**

***उद्यतायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः ।***

***पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन् युधि ।।***

***इति भारतवचनान्न विश्लेषाद्विशेषः ।***

भारतवचनाद्विश्लिष्टोपाधिकृतभेदे सत्यप्यनुसन्धानप्रतीत्या तदभावस्य व्यापकत्वाभावादिति शेषः । विश्लेषादुपाधीनामिति शेषः । विशेषो हस्तपादादीत्युदाहरणादननुसन्धानलक्षणः ।

## श्रीविजयीन्द्रभिक्षु

'पारमार्थिकत्वान्न भेदो निवर्तते' इत्येतदसहमानस्य भास्करस्य मतमुत्थापयति- अत्रेति ।। ननु चैतन्यैक्यमात्रेण न सुखदुःखाद्यनुसन्धानं प्रसज्यते । जन्मान्तरीयसुखदुःखादेरस्माभिरप्यननु-भूयमानत्वादित्यत आह- न हि चैतन्यैक्य इति ।। अत एवेति ।। औपाधिकभेदस्य सत्त्वादेवे-त्यर्थः । अंशिन इति ।। उपलक्षणं चैतत् । आद्यपक्षाश्रयणेऽपि न दोषः । न च पादावच्छिन्नसुख-दुःखादेर्हस्तावच्छिन्नेनानुसन्धानप्रसङ्गः । पादलग्नकण्टकोद्धरणाय हस्तावच्छिन्नस्य प्रवृत्ति-दर्शनेनेष्टापादनरूपत्वादित्यपि द्रष्टव्यम् । भोक्तुरेकत्वानुभवस्यौपाधिकभेदस्य सुखदुःखाद्यनु-सन्धानाननुसन्धानव्यवस्थापकत्वाविघातित्वाद् अप्रयोजकतामाशङ्क्य व्याचष्टे- भोक्तुरेकत्वानु-भवादितीति ।।

मूले दृष्टान्तमात्रमुपपादितम् । न तु दार्ष्टान्तिकमिति तदुपपादनायाऽह- इदमुक्तं भवतीति ।। ईश्वरेणापीत्यस्यानन्तरं स्वस्य सकलजीवैरिति शेषः । सकलजीवगतमिति ।। अत्र सुखदुःखादीत्यनुषङ्गः । उपाधिभेदादिति ।। उपाधितो भेदादित्यर्थः । औपाधिकभेदाभावे सतीति ।। औपाधिकभेदाभावविशिष्टाभेदः प्रयोजक इत्यर्थः । तस्येति ।। वैषम्यमात्रप्रदर्शनस्ये-त्यर्थः । औपाधिकभेदाभावस्येति ।। यद्यप्यौपाधिकभेदाभावसहिताभेद एवानुसन्धानप्रयोजकत्वे-नोक्त इति तस्यैवानुसन्धानव्यापकत्वाभावो वर्णनीयः । तथाऽपि यत्रानुसन्धानं न तत्रौपाधिक-भेदाभावसहिताभेद इति व्यभिचारवर्णनं विशेषणाभावप्रयुक्तविशिष्टाभावमादायैव कर्तव्यमित्या-वश्यकत्वादौपाधिकभेदाभाव एव तद्व्यापकत्वाभाववर्णनं कृतमित्यविरोधः । इतीति ।। इतिकरणम् इदमुक्तं भवतीत्यनेन सम्बद्ध्यते ।

नन्वनुसन्धानव्यापकाभेदे औपाधिकभेदसामान्याभावो न विशेषणं, किन्तु तद्विशेषाभाव इति नोक्तव्यभिचार इति शङ्कते- स्यादेवमिति ।। औपाधिकेति ।। संश्लिष्टोपाधिकृतभेदसद्भावेऽपी-त्यर्थः । ननु हस्तपादाद्युपाधीनामपि शरीराङ्गहस्तपादादिना विश्लेषसद्भावादुक्तप्रयोजकाभावेन व्यभिचारतादवस्थ्यमित्यत उक्तम्- एकस्मिन्निति ।। उपाधीनामिति ।। तत्तच्छरीररूपाणामि-त्यर्थः । पतनादिरूपस्यैव विश्लेषकृतविशेषस्य सत्त्वान्न विश्लेषाद्विशेष इत्युक्तं मूले । पूर्वोक्तानु-सन्धानप्रयोजकस्य दूषणाप्रतीतेः शङ्कोत्तरत्वं चायुक्तमित्याशङ्क्याऽह- भारतवचनादित्यादि ।। तदभावस्येति ।। विश्लिष्टोपाधिकृतभेदाभावस्येत्यर्थः ।

विश्लेषस्य सम्बन्ध्यपेक्षत्वादाह- उपाधीनामिति ।। विश्लेषकृतस्य पतनादिरूपविशेषस्य सत्त्वान्न तन्निषेधो युक्त इत्याशङ्कां वारयन् विशेषस्य सावधिकत्वादवधिं दर्शयति- विशेष इति ।। तथा च विश्लिष्टोपाधिकृतभेदाभावोऽपि व्यभिचारान्नानुसन्धानव्यापक इति भावः ।

ननु संश्लेषानर्होपाधिकृतभेदाभाव एवानुसन्धानव्यापकविशेषणम् । भारतवचनप्रतिपन्नोऽयं विशेषो न संश्लेषानर्होपाधीनाम् । तत्र शिरःकबन्धयोः पूर्वं श्लिष्टत्वेन संश्लेषानर्हत्वाभावात् । अत एवेन्द्रदक्षप्रजापत्यादेरपि मेषवृषणछागशिरस्कत्वेऽपि तत्तदवयवगतसुखदुःखाद्यनुसन्धानमिति चेन्न । इन्द्रप्रजापत्यादेर्वृषणशिरःसंयोजनात् प्रागपि तत्तदवयवगतसुखदुःखाद्यनुसन्धानसत्त्वाच्च । विस्तृतं चैतदस्माभिः औतशिक्षायाम् इत्यलम् ।

## श्रीवेदेशतीर्थ

अपारमार्थिकमिति ।। येन तद्द्रष्टुरीश्वरस्य भ्रान्तत्वं भवेदिति शेषः । यदि ब्रह्म स्वभावतो जीवाभिन्नं स्यात्तर्हि जीवगतसुखदुःखाद्यनुसन्धातृ स्यात् यथा सम्प्रतिपन्न’ इति व्याप्तिर्दर्शितेति द्रष्टव्यम् । जन्मान्तरीयसुखादेरस्मदादिभिरप्यननुसन्धानाद् व्यभिचार इत्यत आह- वर्तमानेति ।। तथा च वर्तमानत्वमापाद्यप्रविष्टसुखादिविशेषणमिति न व्यभिचार इति भावः । औपाधिक-भेदस्यापीति ।। तद्वत्प्रकृत इति शेषः ।

उपाधीनां भेद इति प्रतीतिवारणायाऽह - उपाधिकृत इति ।। उपलक्षणमिति ।। सुखादेरिति शेषः । इति यावदिति ।। अन्यथा मूलस्य व्यभिचारप्रदर्शनपरत्वासम्भवादिति भावः । ननु न परेणानुसन्धानव्यापकत्वेन भेदाभाव उक्तः । येनेदं व्यभिचारप्रदर्शनपरं मूलं सङ्गतं स्यादित्याशङ्का-परिहाराय पराभिप्रायं विशदयन् तत्र मूलं सङ्गमयति- इदमुक्तं भवतीत्यादिना ।। वैषम्यमात्र- (प्रदर्शन)मिति ।। दृष्टान्तदार्ष्टान्तिकयोरिति शेषः । किन्नामेति ।। ततश्चोक्ततर्के उपाधिभेदा-भावसहितं स्वरूपैक्यं व्यापकत्वाभिमतानुसन्धानव्यापकत्वाद् व्याप्यत्वाभिमतस्वरूपैक्या-व्यापकत्वादुपाधिरिति सोपाधिकस्तर्क इति भावः।

तस्यानुपयुक्तत्वादिति ।। वैषम्यमात्रस्य साधनबाधनाक्षमत्वादिति भावः । औपाधिक-भेदाभावस्येति ।। तद्घटितोक्तोपाधेरित्यर्थः । व्यापकत्वासिद्धेरिति ।। तथा च व्यापकत्वाभि-मताव्यापकत्वान्नोपाधित्वमिति भावः । हस्तपादाद्युदाहरणात् प्रकृतेऽननुसन्धानलक्षणो नेत्यत्र भारतवचनादिति हेतुरसङ्गतोऽतस्तत्साध्यं पूरयन् व्याचष्टे- भारतवचनादिति ।। अननुसन्धानलक्षण इति ।। प्रकृत इति शेषः ।

## द्वैतद्युमणि

'न चोपाधी'त्युत्तरमूलस्य पूर्वमूलेन सह सङ्गत्यप्रतीतेः सत्योपाधिकृतसत्यभेदवादि-भास्करमतनिरासकतया तन्मूलं सङ्गमयितुं पूर्वमूलोक्तदूषणपरिहारपूर्वकं मतान्तरमुत्थापयाति- अपर इति ।। सिद्ध्यतीति ।। मायावादिमते भेदनिवृत्तिर्नाम तद्बाध एव । तथा चेश्वरज्ञानविषयबाधे ईश्वरस्य भ्रान्तत्वापत्त्या तस्य स्वाभाविकत्वप्राप्त्या मुक्तभेदः सिद्ध्यति । मन्मते त्वस्वाभाविक-स्यापि भेदस्योपाधिजन्यतया तन्नाशेन नश्यमानतया घटादितुल्यतयैव सिद्ध्यतीत्यर्थः । वर्तमान-सुखादीति ।। अत्र सुखादौ वर्तमानत्वोत्कीर्तनं अननुसन्धानस्य सर्वानुभवविरोधदृढीकरणाय स्वरूपकीर्तनमात्रम् । न त्वतीतसुखादौ व्यभिचारवारणायापाद्यकोटिप्रविष्टम् । तदघटितस्यैव व्यभिचाराभावप्रदर्शनपूर्वकमापाद्यताया उपाधिखण्डनटीकायां स्पष्टत्वात् । क्वचिद् दृष्टमिति ।। न चांशेऽर्जुने इन्द्रेण सहैकीभूत इन्द्रगतसुखाद्यननुसन्धानं दृष्टमिति वाच्यम् । सर्वात्मना सुखाद्यननुसन्धानस्यानङ्गीकारात् । विदुरधर्मादीनां स्वरूपैक्यात् परस्परसुखाद्यनुसन्धानादि-सत्त्वेऽपि उपदेष्टृत्वश्रोतृत्वादिकं सर्वं लोके तदप्रकाशेनैव । तथा व्यवहारस्यैवेश्वरसङ्कल्पानुसारेण देवधर्मत्वात् । तदुक्तं 'मानुषं च स्वाध्यायप्रवचने च' इति श्रुतौ तद्भाष्योदाहृतायाम्-

'मानुषं मानुषो धर्मो देवा अपि हि मानवे ।

मनुष्यवत् प्रकाशन्ते नैवैश्वर्यप्रकाशिनः ।।'

इति स्मृतौ च । इन्द्रार्जुनयोः खाण्डवार्थे युद्धे प्रवृत्तिः यमस्य स्वरूपभूतधर्मराजव्यामोहनार्थ-प्रवृत्तिश्चेश्वराज्ञाया अप्रतिहतत्वात् । 'भीषाऽस्माद्वायुः पवते । भीषोदेति सूर्यः । भीषास्मादिन्द्र-श्चाग्निश्च । मृत्युर्धावति पञ्चमः ।' इत्यादिश्रुत्यादिभिर्देवानामतिपरतन्त्रत्वाद् भगवदाज्ञया मनुष्यलोके स्वांशभूतानां तेषां स्वयशःसिद्ध्यर्थं च तत्प्रवृत्तिसम्भवात् । धर्मराजादेः सुषुप्त्यादिवत् तन्नियामके-श्वरेणैव तदंशसम्बन्ध्यन्तःकरणवृत्त्याद्यजननाद्

व्यामोहनम् । विदुराद्यंशसन्निधौ तज्जननात् तदव्यामोहनमित्यादिकं युक्तम् । कदाचिदंशिगतात्यल्पसुखाद्यनुसन्धानाभावोंऽशस्येत्ययं विशेषः ईशाचिन्त्यशक्तिनिमित्तक एव । 'विशेषस्तु कश्चिदीश्वरकृतो भवेद्' इत्युक्तत्वात् ।

न च भास्करमतेऽप्यनयैव रीत्या वक्ष्यमाणसुखाद्यनुसन्धानापादनपरिहारः सम्भवतीति तन्मतदूषणं न सम्भवतीति वाच्यम् । उक्तार्थस्य दृढतरप्रमाणसिद्धत्वे युक्त्यगोचरत्वे चाचिन्त्यशक्त्या तदङ्गीक्रियते ।

'यदि युक्त्या विरुद्ध्येत तदीशकृतमेव हि ।'

इति भाष्योदाहृतस्मृतेः । अपवादविशेषात् क्वचित् तथात्वेऽपि सर्वत्र तथाङ्गीकारे लोकव्यवहारमात्रोच्छेदापत्तेः । इत्थं चेश्वरस्य सर्वज्ञस्य जीवैक्ये तदीयसुखाद्यनुसन्धानस्य तत्समवेतत्वेन तत्प्रत्यक्षमवर्जनीयम् । अन्यथा तस्याज्ञत्वप्रसङ्गः ।

## श्रीराघवेन्द्रतीर्थ

अपर आहेति ।। सत्योपाधिकृतसत्यभेदवादी ब्रवीतीत्यर्थः । अत इति ।। उपाधि-कृतत्वात् पारमार्थिकत्वं पारमार्थिकत्वादीश्वरेण संसारिभेदादेरनुभूयमानत्वं युज्यत इत्यर्थः । तन्नाशाद् भेदनाशादित्यर्थः। इत्याहेत्यन्वयः । तर्कस्य व्याप्त्यभावादिकमाशङ्कते- ननु (वयं) जीवानिति ।। आत्मांशानामिति ।। जीवांशानामन्योन्यमैक्ये विद्यमानेऽपि हस्तपादाद्युपाधिकृतभेदसद्भावहेतुना हस्तावच्छिन्नजीवांशे जायमानसुखादेः पादावच्छिन्नांशेऽ१ननुभवात्तथा पादावच्छिन्नांशे जायमान-सुखादेर्हस्तावच्छिन्नांशेऽननुसन्धानाच्चैतन्यैक्येऽनुसन्धानं स्यादित्यस्य न व्याप्तिरैक्यमात्रमनुसन्धाने न प्रयोजकमिति वाऽभिप्रायः । अत एवेति ।। औपाधिकभेदसत्त्वादेवेत्यर्थः ।

प्रकृतोपयोगितया वाक्यशेषस्यार्थमाह- एकस्यैवांशिन इत्यादि ।। सर्वेति ।। हस्ताद्यवच्छिन्न-सर्वांशगतसुखाद्यनुसन्धानमित्यर्थः । मूले दृष्टान्तमात्रोक्तेरुपयोगाय दार्ष्टान्तिकमपि संयोज्यमिति भावेनाऽह- इदमुक्तमिति ।। नोपाधीति ।। उपाधिभेदान्नानुभव इति वक्तुरित्यर्थः । वैषम्यमात्रेति ।। सत्यप्यैक्येऽनुसन्धानं नेत्यत्र स्थलप्रदर्शनमात्रमित्यर्थः । न चैतदिति ।। औपाधिकभेदाभाव-विशिष्टस्वरूपैक्यमनुसन्धाने प्रयोजकमीश्वरस्य जीवगतसुखाद्यनुसन्धानापादनस्थल इत्यर्थः । अनुपयुक्तत्वादिति ।। मदुक्तापादनेऽङ्गवैकल्यादेरनुक्तेरिति भावः ।

किञ्चिद्विशेषणेन व्यापकतां शङ्कते- स्यादेवमिति ।। विश्लिष्टेति ।। क्वचित्संश्लेषहीना ये उपाधयस्तत्कृतेत्यर्थः । हस्तपादाद्युपाधयस्तु शरीरे संश्लिष्टाः । ब्रह्मांशोपाधिभूतशरीराणि तु न संश्लिष्टानीति भावः। न व्यभिचार इत्युक्तं व्यनक्ति-औपाधिकभेदेति ।। हस्तपादाद्युपाधीत्यर्थः । एकस्मिन् शरीर इत्येतदुभयत्रान्वेति । उपाधीनामिति ।। शरीराणामित्यर्थः । कबन्धाः च्छिन्नशिरस्कदेहाः उद्यतायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः अरीन् पश्यन्तः युध्यरीन् पातयन्त्यायुधैरिति वचनार्थो व्यक्त इति नोक्तः ।तदभावात्

अन्योन्यसुखाद्यनुसन्धानाभावादित्यर्थः । अनुसन्धानाभावे हेत्वन्तरमाह- औपाधिकेति ।। अत एवेति ।। औपाधिकभेदसद्भावादेवेत्यर्थः । उपलक्षणमिति ।। सुखादेरुप-लक्षणमित्यर्थः । न उपाधिभेदादिति ।। ईश्वरेण सकलजीवगतं सुखादि नानुभूयते । कुतः ? उपाधिभेदादित्यर्थः । वैषम्येति ।। देवदत्तेन स्वगतं सुखादिकमनुभूयते उपाधिभेदाभावात् । ईश्वरेण तु सर्वजीवगतं सुखादिकं नानुभूयते उपाधिभेदादिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यर्थः । उपाधीनामिति ।। देवदत्तयज्ञदत्तोपाधीनामित्यर्थः । उद्यतायुधेति मूलं, उद्यतानि आयुधानि येषु ते उद्यतायुधाः उद्यतायुधा दोर्दण्डा येषान्ते उद्यतायुधदोर्दण्डाः, एतादृशाः , कबन्धा अपि स्वस्य शिरांसि स्वशिरांसि, पतितानि च तानि स्वशिरांसि च पतितस्वशिरांसि । शिरस्सु स्थितानि अक्षीणि तैः अरीन् युधि पश्यन्तः तानेवारीन् पातयन्तीत्यर्थः । विशेषशब्दार्थमाह- अननुसन्धानलक्षण इति ।। कस्मान्न विशेष इत्यतो हस्तपादाद्युदाहरणादिति शेषः पूरितः ।

## गुरुराजीया

अपारमार्थिकमिति ।। ततश्च द्रष्टुरीश्वरस्य न भ्रान्तत्वप्रसङ्ग इति भावः । तर्कस्य प्रशिथिलमूलत्वादाभासत्वमाशङ्क्य परिहरति- न हीति ।। अनेन 'यो येन स्वाभाविकाभेदवान् चेतनः स तद्गतवर्तमानसुखाद्यनुसन्धाता यथा सम्मतः' इति व्याप्तिः सूचिता भवति । स्वाभाविकैक्येऽपि जन्मान्तरीयसुखादेरेतज्जन्मनि अस्मदादिभिरननुसन्धानात्तत्र व्यभिचार-परिहाराय वर्तमानेति विशेषणम् । तथा चास्मदादीनां जन्मान्तरीयसुखाद्यननुसन्धातृत्वेऽपि वर्तमानतदननुसन्धातृत्वाभावान्न व्यभिचार इति भावः ।

ननु हस्तपादाद्यवच्छिन्नात्मांशानां सत्यपि स्वाभाविकैक्ये औपाधिकभेदस्य विद्यमानत्वादननु-सन्धानेऽपि प्रकृते तदभावादनुसन्धानं स्यादेवेत्यतो जीवानां जीवब्रह्मणोर्वा औपाधिकभेदस्य सत्त्वादननुसन्धानं युक्तमित्याह- औपाधिकभेदस्येति ।। अत्रापीति शेषः । अत एवेति ।। औपाधिकभेदस्य सत्त्वादेवेत्यर्थः । उक्तशङ्काया मूलारूढत्वलाभाय उपाधिभेदपदम् उपाधिकृत-भेदार्थतया व्याख्याति-उपाधिकृत इति ।। मूलव्यभिचारप्रदर्शनपरत्वलाभायाऽह-एकस्यैवेत्यादि ।।

ननु परेणानुसन्धानव्यापकत्वेन भेदाभावस्यानुक्तत्वान्न तत्र व्यभिचारोपदर्शकत्वं मूलस्येत्यतो व्यापकत्वाभिप्राय एव एतदुक्तेर्नानुपपत्तिरिति भावेन सम्भावितविकल्पप्रदर्शनपूर्वकम् आद्यं प्रदूष्य द्वितीयपक्षनिरासकत्वेन मूलं योजयितुं विकल्पद्वयप्रसञ्जकप्रदर्शनपूर्वकं विकल्पयितुं वृत्तमनुवदति- इदमुक्तं भवतीत्यादिना ।। वैषम्येति ।। दृष्टान्तदार्ष्टान्तिकयोरिति शेषः । किं नामेति ।। तथा चोक्ततर्के उपाधिभेदाभावसहितं स्वरूपैक्यं व्यापकत्वाभिमतानुसन्धानव्यापकत्वाद्व्याप्यत्वाभि-मतस्वरूपैक्याव्यापकत्वादुपाधिरिति सोपाधिकस्तर्क इत्येतद् विकल्पाभिप्रायः । तस्यानुपयुक्तत्वा-दिति ।। यथाकथञ्चिद्विशेषस्य सर्वत्रोपदर्शयितुं शक्यत्वेनातिप्रसक्ततया साधनबाधनाक्षमत्वादिति भावः । औपाधिकभेदाभावस्येति ।। तद्घटितोक्तोपाधेरित्यर्थः । व्यापकत्वासिद्धेरिति ।। तथा च व्यापकत्वाभिमताव्यापकत्वान्नोपाधित्वमिति भावः ।

## गोविन्दीया

नेति ।। ईश्वरेण मुक्तस्य भेदः न सिद्ध्यतीत्यर्थः । अत इति ।। उपाधिकृतत्वेन भेदस्य पारमार्थिकत्वादीश्वरेणानुभूयमानत्वं च युज्यत इत्यर्थः । तन्नाशादिति ।। भेदनाशादित्यर्थः । नाऽद्य इति ।। स्वरूपैक्ये विद्यमानेऽपि हस्तपादाद्यवच्छिन्नात्मांशानां सुखाद्यनुसन्धानाभावात् । औपाधिकभेदस्य विद्यमानत्वाच्चाऽद्यः पक्षो न सङ्घटत इत्यर्थः । अत एवेति ।। औपाधिकभेदस्य विद्यमानत्वादेवेत्यर्थः । उपलक्षणमिति ।। दुःखाभावः सुखाभावश्चेत्यर्थः । नोपाधिभेदादिति ।। उपाधिभेदात् सकलजीवगतसुखादिकमीश्वरेण नानुभूयत इत्यर्थः । किं वैषम्येति ।। दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यमात्रदर्शनमननुसन्धाने कारणं किमित्यर्थः । उतेति ।। अनुसन्धानेऽभेदमात्रं न प्रयोजकम्, न कारणं किन्नामौपाधिकभेदाभावरूपधर्मे सत्येवेत्यर्थः । औपाधिकभेदाभाव-रूपधर्मस्यैवोपाधित्वाद् अभेदमात्रस्यानुसन्धानेन सम्बन्ध उपाधिकृत इति भावः । न चेति ।। प्रकृतसकलजीवगतसुखाद्यनुसन्धाने उपाधित्वेनाभिमतधर्मस्यैवाभावात् तत्सहकृताभेदमात्रं प्रयोजकं नास्तीत्यनुसन्धानं प्रति व्यापकत्वेन व्यापकत्वाभिमतौपाधिकभेदाभावरूपोपाधेर्निवृत्त्या व्याप्यत्वेनाभिमतानुसन्धाननिवर्तनं वेत्यर्थः । औपाधिकेति ।। औपाधिकभेदाभावरूपधर्मस्या-नुसन्धानं प्रति व्यापकत्वासिद्धेर्नौपाधिकत्वमित्यर्थः । साधनानुमाने साध्यव्यापकत्वे सति साधना-व्यापकोपाधिः तर्के चाऽपाद्यव्यापकत्वे सत्यापादकाव्यापकोपाधिः । अत्र त्वभेदमात्रेणापादक-मनुसन्धानमापाद्यम् । तथा च यत्रानुसन्धानं तत्रौपाधिकभेदाभाव इति व्याप्तेरभावाद् उपाधे-रनुसन्धानं प्रति व्यापकत्वासिद्धेरिति भावः । विशेष इति ।। हस्तपादाद्युदाहरणे संश्लेषादुपाधीना-मनुसन्धानं वर्तते । अत्र तूपाधीनां विश्लेषादननुसन्धानरूपविशेषोऽस्तीति न वक्तव्यमस्मिन्नुदाहरणे भारतवचनात् विश्लिष्टोपाधिकृतभेदे सत्यप्यनुसन्धानप्रतीत्या तदभावस्य व्यापकत्वाभावादित्यर्थः ।

## जनार्दनभट्टीया

अपर इति ।। भट्टभास्कर इत्यर्थः । उपाधिकृतमेवेति ।। 'पारमार्थिकम्' इति शेषः । अतीतसुखादिव्यावृत्त्यर्थं वर्तमानेत्युक्तम् । तदभावादिति ।। सुखाद्यनुसन्धानाभावादित्यर्थः । न हि हस्तावच्छेदेन सुखं विद्यमानं पादावच्छेदेनानुभूयत इति भावः । अत एवेति ।। औपाधिकस्य अविद्यमानत्वादेवेत्यर्थः । उपलक्षणमिति ।। सुखादेरिति शेषः ।

नन्वनौपाधिकभेदेन दुःखाद्यनुसन्धानाभावे अंशिनः परेणाभिहिते 'हस्ते'ति मूलवाक्येन भोक्तुरेकत्वानुभवाभिधानम् असङ्गतम् इत्यत आह – भोक्तुरेकत्वेत्यादिना ।। मूले 'भोक्तुरेकत्वानुभवात्' इत्यस्य हेतोः साध्यानुक्त्या अंशांशिनोः यत्किञ्चिद्विषये वैषम्यमात्रप्रदर्शनमात्रप्रतीतौ सत्यां तां वारयन् एकत्वानुभव इति हेतोः दुःखाद्यनुसन्धानादौ औपाधिकभेदाभावस्य प्रयोजकाभावः साध्य इति वक्तुं मूलस्य अभिप्रेतार्थं विकल्पमुखेन परिशेषयति– इदमुक्तमित्यादिना ।। सकल-जीवगतदुःखादिकमिति ।।१ औपाधिकभेदाभावे सतीति शेषः । अभेद इत्यनुषज्यते । तस्येति ।। वैषम्यमात्रस्येत्यर्थः । सुखाद्यनुसन्धानविषये वैषम्यस्यैव प्रस्तुतत्वादिति भावः । अभेदमेवेति ।। विशिष्टोपाधिकृतभेदाभावे

सतीत्यविशेषितमिति एवकारार्थः । अत एव तथा एवकारव्यावर्त्यमाह – किन्त्विति ।। उपाधीनामिति ।। देवदत्ताद्यंशिनिष्ठानाम् उपाधीनां परस्परं विभागाद् इति भावः । 'न विश्लेषाद् विशेषः' इति मूले विश्लेषादित्यस्य अननुसन्धाने साक्षात् हेतुत्वं प्रतीयते । तच्च प्रकृता-सङ्गतम् । तथा सति अस्य मूलस्य 'विश्लिष्टोपाधिकृतभेदाभावे सति अभेदानुसन्धाने प्रयोजकः । अतो न व्यभिचारः' इति पूर्वप्राप्तचोद्यनिरासकत्वापत्तेरित्यतः शेषपूरणेन योजयति– भारत-वचनादित्यादिना ।। तदभावस्येति ।। विश्लिष्टोपाधिकृतभेदाभावस्येत्यर्थः । व्यापकत्वाभावादिति शेष इति ।। अनुसन्धानव्यापकत्वाभावादिति शेष इत्यर्थः । रुधिरस्रावादिकृतवैषम्यस्य सत्त्वात् कथं 'न विश्लेषाद् विशेषः' इति मूलमित्याशङ्क्य मूले व्याख्येयं पदमुपादत्ते – विशेष इति ।। विशेषपदस्य अननुसन्धानलक्षणविशेषपरतया व्याख्याने मूले ज्ञापकमाह – हस्तपादादीति ।।

## अतोऽनौपाधिकत्वादेव..

**मुक्तेश्वरयोः स्वाभाविकभेदोपसंहारपूर्वकं मुक्तत्वानुमानोपसंहारः**

### श्रीमज्जयतीर्थटीका

तदेवं जीवेश्वरभेदस्यौपाधिकत्वेऽपि स्वाभाविकाभेदेनेश्वरस्य जीवगतदुःखाद्यनुसन्धान-प्रसङ्गस्यावर्जनीयत्वात् तदङ्गीकारस्य च प्रमाणविरुद्धत्वात् स्वाभाविक एव जीवेश्वरभेदो न त्वौपाधिक इति स्थितम् । ततश्च किं प्रकृते । तत्राऽह-

## मूल

***अतोऽनौपाधिकत्वादेव भेदस्य न मुक्तस्येश्वरैक्यम् ।***

अत इति ।। जीवगतसुखदुःखाद्यनुसन्धानाभावादीश्वरस्य ।

न ह्यनौपाधिकं कदाचिदन्यथा भवति । स्वभावहानौ स्वरूपहानिप्रसङ्गात् । एतेनेश्वरेण भिन्नाभिन्नो मुक्त इत्यपास्तम् । अभेदेनानुसन्धानानिवारणादिति ।।

### श्रीविजयीन्द्रभिक्षु

भास्करमतदूषणमुपसंहृत्य, परमप्रकृतानुपसंहारे न्यूनतेत्याशङ्क्य स्वयमाचार्याभिप्रेत-तदुपसंहारं दर्शयति- तदेवमिति ।। प्रमाणविरुद्धत्वादिति ।। 'निरनिष्टो निरवद्यः, अदुःखमसुखं समम्' इत्यादिप्रमाणविरुद्धत्वादित्यर्थः । नन्वीश्वरस्य संसारिगतसुखदुःखाद्यनुसन्धानप्रसङ्ग-रूपबाधकभावात् जीवेश्वरभेदस्यानौपाधिकत्वसमर्थनेऽपि मुक्तेश्वरयोर्नियम्यनियामकभावप्रयोजक-भेदासमर्थनात् प्रकृतानुपयोग इति पृच्छति- ततश्चेति ।। प्रश्नोत्तरत्वेनावतारयति- तत्रेति ।। तथाचोक्तबाधकबलेन संसारीश्वरयोर्भेदस्यानौपाधिकत्वे सिद्धे ईश्वरस्वभावस्य तस्य यावद्वस्तु-भावितया मुक्तावपि सत्त्वेन

नियम्यनियामकभावोपपत्तेः न प्रकृतानुपयोग इति भावः । अतोऽ-नौपाधिकत्वादित्यनयोः व्याख्यानत्वप्रतीतिं निराकरोति- अत इतीति ।। मुक्तो नेश्वराभिन्नः तत्प्रतियोगिकानौपाधिकभेदवत्त्वात् । न च तद्भेदस्यानौपाधिकत्वमसिद्धम् । ईश्वरस्य जीवगत-सुखदुःखाद्यनुसन्धानाभावेन तदनौपाधिकत्वसिद्धेरवर्जनीयत्वादित्यर्थः ।

नन्वनौपाधिकमपि कदाचिन्निवर्ततामित्याशङ्क्याऽह- न हीति ।। अनौपाधिकं हि स्वाभाविक-मुच्यते । ततश्चानौपाधिकस्यान्यथात्वे स्वभावस्यैवान्यथाभाव उक्तः स्यात् । न च सोऽभ्युप-गमार्हः । स्वरूपहानिप्रसङ्गादित्यर्थः । ननु भेदाभेदवादोऽपि निराकर्तव्यः । विरोधित्वात् । सत्यम् । शुद्धाभेदनिराकरणेनैव निरस्तत्वादाचार्येण न पृथङ्निराकृत इत्याह- एतेनेति ।।

## श्रीराघवेन्द्रतीर्थ

तदङ्गीकारस्येति ।। अनुसन्धानाङ्गीकारस्य ‘निरनिष्टो निरवद्यः’ ‘शोकं मोहं जरां मृत्युमत्येति’ इत्यादिप्रमाणविरुद्धत्वादित्यर्थः । अनौपाधिकत्वादित्युक्तहेतोरप्रयोजकत्वं निराह- न ह्यनौपाधिकमिति ।। भेदाभेदमतं निराह- एतेनेति ।। एतच्छब्दार्थमेवाऽह- अभेदेनेति ।। इष्टापत्तिं परिहरति- तदङ्गीकारस्य चेति ।। न हीति ।। औपाधिकत्त्वे हि तन्निवृत्तौ निवृत्तिर्वक्तव्या भेदस्त्वनौपाधिकः । अतो नान्यथा भवति निवृत्तौ न हि भवतीत्यर्थः । स्वाभाविकस्यापि निवृत्तौ बाधकमाह– स्वभावहानाविति ।।

## गोविन्दीया

तदङ्गीकारस्येति ।। ईश्वरस्य सुखाद्यनुसन्धानाङ्गीकारस्येत्यर्थः । अत इति ।। जीवगत-सुखाद्यनुसन्धानाभावादीश्वरस्य संसारावस्थायां भेदस्यानौपाधिकत्वादेव स्वभावस्यानपायेन मुक्त्यवस्थायां भेदस्य सत्त्वान्मुक्तस्येश्वरैक्यं नास्तीत्यर्थः । अभेदेनेति ।। सुखाद्यनुसन्धाना-निवारणादीश्वरेऽनुसन्धानं प्रमाणविरुद्धमित्यर्थः ।

## जनार्दनभट्टीया

स्वभावहानाविति ।। ‘अनौपाधिकस्य हानौ अङ्गीक्रियमाणायाम्’ इति शेषः ।

# ‘इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ..

**आगमेनापि मुक्तेश्वरभेदसमर्थनम्**

## श्रीमज्जयतीर्थटीका

एवं प्रत्यक्षानुमानाभ्यां मुक्तेश्वरभेदं प्रसाध्याऽगमेनापि साधयति-

## मूल

*‘इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।*

*सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।’१*

अत्र साधर्म्यमागता इति भेदोक्तिः । न ह्यभेदे समानधर्मत्वमस्ति । न चैते न मुक्ता इति वाच्यम् । सर्गप्रलयाभावलिङ्गात् ।

**मूल**

*‘यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।*

*तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।।’२*

पश्यतीति पश्यो जीवः । अत्रापि साम्यमुपैतीति भेद उच्यते । संसारेऽपि साम्यसद्भावात् परममिति विशेषणम् । अभिव्यक्तमिति यावत् । अत्र ‘पुण्यपापे विधूय’ ‘निरञ्जनः’ इति मुक्तलिङ्गम् ।

**मूल**

*इ(त्यादि)ति मुक्तभेदवचनेभ्यश्च ।*

मुक्तेश्वरभेदः सिद्ध्यतीति शेषः ।

## श्रीविजयीन्द्रभिक्षु

एवमिति ।। मूले प्रथमं स्मृत्युदाहरणं श्रुत्युपबृंहणत्वेन तदर्थनिर्णायकतामभिप्रेत्य । ननूदाहृतस्मृत्यादिकं न भेदपरम् । तत्र तस्याप्रतीतेरित्याशङ्क्य व्याचष्टे- अत्रेति ।। भेदनियतधर्म-प्रतिपादकत्वाद्भेदपरत्वमिति भावः । सर्गेति ।। न चैतज्जीवन्मुक्तलिङ्गतयाऽप्युपपन्नमिति वाच्यम् । जीवन्मुक्तौ प्रमाणाभावादिति भावः । ननु परमसाम्यमत्यन्ताभेद एवान्यस्यानिरूपणादित्यत आह-अभिव्यक्तमितीति ।। नन्वेतावता मुक्तेश्वरभेदपरत्वं कथं प्रतीयत इत्यत आह- अत्रेति ।। मुक्तभेदवचनेभ्यश्चेति ।। मुक्तस्वरूपप्रतिपादकवचनेभ्यश्चेत्यर्थः ।

## श्रीवेदेशतीर्थ

साधर्म्यमिति मूलम् ।। दुःखाभावपरानन्दत्वादिना साधर्म्यमित्यर्थः । एवमुत्तरत्रापि । सर्गप्रलयेति ।। अनेनैतत्प्रदर्शनार्थमेव द्वितीयार्धोदाहरणमिति सूचितम् । पुण्यपापे विधूय इति मूले पुण्यमनिष्टमिति ज्ञेयम् । ननु परमं साम्यं नामाभेद एवान्यस्यानिर्वचनादित्यत आह- अभि-व्यक्तमिति ।।

## श्रीराघवेन्द्रतीर्थ

प्रत्यक्षेति ।। ईश्वरप्रत्यक्षमुक्तत्वाद्यनुमानाभ्यामित्यर्थः । इदं ज्ञानमिति ।। चतुर्दशेऽध्याये गीतायामुच्यमानबन्धत्यागोपायभगवज्ज्ञानमित्यर्थः । इत्यादिभेदवचनेभ्यश्चेत्यग्रेऽभिधानादत्र भेद-प्रत्यायकं दर्शयति- अत्रेति ।। उत्तरार्धोक्तेरुपयोगमाह- न चैत इति ।। पश्यतीति पश्यो जीव इति ।। 'दृशिर्= प्रेक्षणे' इत्यतः पचाद्यचि कृते, छान्दसे पश्यादेशे रूपमिति भावः१ । विधूतपुण्यपापत्वादेव निरञ्जन इति भावेनोक्तम्- पुण्यपापे विधूय निरञ्जन इतीति ।।

संसारेऽपीति । ज्ञानानन्दादिसाम्यस्य जीवस्वरूपत्वादित्यर्थः ।

## गुरुराजीया

सर्गेऽपीत्युत्तरवाक्योदाहरणस्य प्रकृतानुपयुक्ततया वैयर्थ्यमाशङ्क्य तद्व्यावर्त्यशङ्कोप-दर्शनेन तदिति भावेन तामुत्थापयति- न चैत इति ।। ननु परमं साम्यं नामाभिन्नत्वमेव । तद्व्यति-रेकेण तदनिर्वचनादतस्तदन्यथा निर्वक्ति- अभिव्यक्तमिति ।। ज्ञापकश्चायमर्थो न कारक इति भावेनानुरूपं शेषमाह- भेदः सिद्ध्यतीति शेष इति ।।

## एवं प्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयवत् ..

**अभेदपरवत्प्रतीयमानागमानां गत्यन्तरकल्पनम्**

## श्रीमज्जयतीर्थटीका

ननु यथा मुक्तेश्वरभेदे वाक्यानि सन्ति । तथा तदभेदेऽपि 'परेऽव्यये सर्व एकीभवन्ति' 'परं ब्रह्म वेद ब्रह्मैव भवति' इत्यादीनि वाक्यानि सन्ति । तत्कथं निर्णय इत्यत आह-

## मूल

*एवं प्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयवत्*

*प्रतीयमानान्यपि वाक्यानि सादृश्याद्यर्थान्येव योजनीयानि ।*

आदिशब्देन स्थानैक्यमत्यैक्ये गृह्येते । सत्यम् । मुक्तेश्वरभेद इव तदभेदेऽपि सन्ति वाक्या-नीति । तथाऽपि तान्यर्थान्तरे योज्यानि । कुतः । भेदवाक्यानामुक्तरीत्या प्रत्यक्षाद्यनुसारित्वेन प्रबलतया तद्विरोधात् । बलवद्विरोधे दुर्बलस्यार्थान्तरयोजनाया न्याय्यत्वादिति । न केवलमिदं न्यायप्राप्तं किन्तु पुराणसिद्धं चेत्याह-

**मूल**

*‘विरुद्धवत्प्रतीयन्ते आगमा यत्र वै मिथः ।*

*तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यत ।।’ इति ब्राह्मवचनाच्च ।*

पारमार्थिकविरोधे त्याज्यत्वमेव स्यात् । न तु व्याख्येयत्वमित्यतो विरुद्धवदित्युक्तम् । प्रागप्यभेदविषयवदिति । यदि तर्हीत्यर्थे यत्र तत्रेति निपातौ । दृष्टं प्रत्यक्षम् । ये आगमाः प्रत्यक्षानुकूलाः तदनुसारेणेतरेषामर्थो द्रष्टव्य इति यावत् । वचनाच्च भेदागमानुसारेणाभेदागमाः सादृश्याद्यर्थे योज्या इति गम्यत इति शेषः ।

## श्रीविजयीन्द्रभिक्षु

ननु तथाऽपि न मुक्तेश्वरभेदः सिद्ध्यति । तद्भेदप्रतिपादकवाक्यानां तदभेदप्रतिपादक-वाक्यैः प्रतिबद्धत्वादिति शङ्कते-नन्विति ।। शङ्कोत्तरत्वेनावतारयति-अत आहेति ।। स्थानेति ।। ‘सायं गोष्ठे गाव एकीभवन्ति, सर्वे राजान एकीभूताः’ इत्यादौ स्थानैक्यमत्यैक्यतात्पर्येण गोषु राजसु चैक्यव्यवहारदर्शनादिति भावः । अभेदश्रुतिविरोधात् भेदश्रुतीनामेवार्थान्तरविषयत्वं किं न स्यादित्याशङ्क्य व्याचष्टे- सत्यमिति ।। यथा मुक्तेश्वरभेदप्रतिपादकत्वेन प्रतीयमानानि वाक्यानि सन्ति तथा तदभेदप्रतिपादकत्वेन प्रतीयमानान्यपि वाक्यानि सन्तीति सत्यमित्यर्थः । प्रबलत-येति ।। तथा च न वैपरीत्यशङ्कावकाश इति भावः । दुर्बलस्येति ।। प्रमाणवाक्यस्येति शेषः । पारमार्थिकविरोध इति ।। वस्तुतो विरोधसत्त्वे विरुद्धं यद्दुर्बलं तस्य त्याज्यत्वं प्रमाणत्वेनानङ्गी-कार्यत्वं स्यादित्यर्थः । प्रागपीति ।। एवं प्रत्यक्षानुमानागमविरुद्धत्वादिति वाक्येऽभेदविषय-वदित्युक्तमित्यर्थः ।

ननु वाक्यानां परस्परविरोधे येषां प्रत्यक्षानुकूल्यमस्ति तदनुसारेणैव तदानुकूल्यरहितानां वाक्यानामर्थो निर्णीयत इत्युक्तार्थे पुराणवाक्यं प्रमाणतयोक्तम् । तत्रायमर्थो न प्रतीयत इत्यतो व्याचष्टे- य इति ।। ब्राह्मवचनाच्चेत्यस्य साध्याकाङ्क्षां पूरयति- वचनाच्चेति ।।

## श्रीवेदेशतीर्थ

स्थानैक्येत्यादि ।। ‘सायं गोष्ठे सर्वे गाव एकीभवन्ति, सर्वे राजान एकीभवन्ति’ इत्यादौ स्थानैक्यं मत्यैक्यं चाऽदाय गोषु राजसु चैक्यव्यवहारदर्शनादित्यर्थः । पारमार्थिकविरोध इति ।। वस्तुतो विरोधसत्त्वे विरुद्धं यद्दुर्बलं तस्य त्याज्यत्वम् । प्रमाणत्वेनानङ्गीकार्यत्वमेव स्यादित्यर्थः ।

ननु प्रत्यक्षानुसारेणाऽगमस्यान्यार्थकल्पना कार्येति स्वोक्तार्थे सम्मतित्वेनेदं पुराणवचनमुदा-हृतम् । तत्र च दृष्टानुसारेणेत्यनेन दृष्टिविषयानुसारेणेत्युच्यते । तत्प्रकृतानुपयुक्तमित्यत आह- दृष्टं प्रत्यक्षमिति ।। भावे क्तप्रत्यय इति भावः ।

ननु मूले यद्यागमा मिथो विरुद्धवत्प्रतीयन्ते तर्हि तेषां विरुद्धार्थकोभयवाक्यानामपि प्रत्यक्षानु-सारेणार्थो वर्णनीय इति भाति । न चैतद्युक्तम् । एकस्यैवान्यार्थकल्पनया विरोधपरिहारे उभयोरन्यार्थकल्पनाया

असङ्गतत्वादित्यतोऽभिप्रायमाह- ये आगमा इति ।। ब्राह्मवचनाच्चेत्यस्य साध्याकाङ्क्षां पूरयति- वचनाच्चेति ।।

## श्रीराघवेन्द्रतीर्थ

प्रत्यक्षेति ।। ईश्वरप्रत्यक्षेत्यर्थः । स्थानेति ।। एकस्थानगतत्वैकार्थविषयकमतिमत्त्वरूप-स्थानैक्यमत्यैक्ये इत्यर्थः । व्याचष्टे- सत्यमित्यादिना ।। वाक्यानीतीत्यनेनान्वयः । मूले प्रत्यक्षानुमानागमविरुद्धत्वादित्युक्तावप्यग्रे 'विरुद्धवत्प्रतीयन्ते आगमाः' इत्यागमानामेव मिथो विरोधोक्तेस्तदनुसारायात्राप्यागमविरुद्धत्वमेवान्यार्थयोजने प्रधानहेतुः । प्रत्यक्षानुमानयोरुक्ति-रैक्यागमविरोधिभेदागमसहायार्थेति भावेन हेत्वंशं तात्पर्यतो व्याचष्टे- भेदवाक्यानामिति ।। 'तान्यहं वेद सर्वाणि' इत्यादिनोक्तरीत्येत्यर्थः । प्रागपीति ।। पूर्ववाक्येऽप्यभेदविषयवदित्युक्त-मित्यर्थः । वचनाच्चेत्यनुवादेन शेषमाह- वचनाच्च भेदेत्यादि ।। स्थानैक्येति ।। अह्नीतस्ततस्स्थिताः गावः सायं गोष्ठे एकीभवन्तीत्यत्र यथा स्थानैक्यनिमित्त ऐक्यव्यपदेशः एकस्थाने स्थिता भवन्तीति यावत् । एवं संसारे भूरादिषु स्थिताः मुक्तौ भगवता सह क्षीराब्ध्यादिरूपैकस्मिन् स्थाने स्थिता भवन्तीत्यर्थः । मत्यैक्येति ।। प्राग्विरुद्धा ब्राह्मणा इदानीमेकीभूता इत्यत्र यथा एकविषयकमतित्वेनैक्यव्यपदेश एवं संसारे भगवद्विरुद्धमतयो मुक्तौ भगवन्मत्यनुकूलमतिमन्तो जाता इत्येवं मत्यैक्यनिमित्त ऐक्यव्यपदेश इत्यर्थः । त्याज्यत्वमेव अप्रामाण्यमेव । दृष्टानुसारेण प्रत्यक्षदृष्टपदार्थानुसारेणेत्यर्थस्यासङ्गतत्वाद्भावे क्तप्रत्यय इत्यभिप्रेत्य व्याचष्टे ।। दृष्टं प्रत्यक्षमिति ।

## गुरुराजीया

पारमार्थिकविरोध इति ।। वस्तुतो विरुद्धत्वे विरुद्धस्य प्रमाणत्वेनानङ्गीकर्तव्यतया अन्यार्थत्वेनावर्णनीयत्वादित्यर्थः । ज्ञापकश्चायमर्थो न कारक इति भावेनानुरूपं शेषं पूरयति- भेदागमानुसारेणेत्यादिना ।।

## गोविन्दीया

मुक्तभेदवचनेभ्य इति मुक्तस्येश्वरेण भेदप्रतिपादकवाक्येभ्य इत्यर्थः ।

इदमिति ।। अर्थान्तरमित्यर्थः । पारमार्थिकेति ।। प्रत्यक्षानुकूलागमेनेतरागमानां पारमार्थिकविरोधे सत्यप्रामाण्यात् त्याज्यत्वमेव न तु व्याख्येयत्वमित्यर्थः । सादृश्याद्यर्थे इति ।। सादृश्यस्थानैक्य-मत्यैक्यरूपार्थ इत्यर्थः ।

# भेदाद्यनुभवस्य भ्रान्तित्वाङ्गीकारे ..

**भेदाद्यनुभवस्य भ्रान्तित्वनिरासः**

## श्रीमज्जयतीर्थटीका

ननु विमतो भेदभेदिवैलक्षण्यादिप्रत्ययो भ्रमः । भेदादिप्रत्ययत्वात् । अब्रह्मज्ञानत्वाच्च । चन्द्रभेदादिप्रत्ययवदित्यादियुक्त्या प्रत्यक्षादिजन्यस्य भेदाद्यनुभवस्य भ्रान्तित्वेन कथं तद्विरोधा-दभेदविषयवाक्यानामन्यार्थत्वमुच्यते ? यद्यपीश्वरस्याऽवरणमज्ञानं नास्ति तथापि विक्षेपसद्भावात् तदीयं भेदादिप्रत्यक्षं भ्रम एव । आगमस्यापि भेदानुवादित्वात् ततो जायमानं भेदादिसद्भावज्ञानं भ्रान्तिरुपपद्यत एवेति । तत्राऽह-

## मूल

*भेदाद्यनुभवस्य भ्रान्तित्वाङ्गीकारे त्वपलापयुक्तेर्नितरां*

*भ्रान्तित्वाद्भेदाद्यनुभवस्याभ्रान्तित्वमेव भवति*

यदि भेदाद्यनुभवत्वादिति हेतुना विप्रतिपन्नभेदाद्यनुभवस्य भ्रान्तित्वमङ्गीक्रियते । तदा भेदाद्यनुभवो भ्रान्तिरिति युक्तिजानुभवस्य नितरां भ्रान्तित्वं स्यात्तस्यापि भेदाद्यनुभवत्वात् । अन्यथा भेदानुभवत्वादिति हेतोस्तेनैवानैकान्त्यप्रसङ्गात् । न हि भेदानुभवो भ्रम इत्ययं न भेदानुभव इति युक्तं विकल्परूपत्वात् । न ह्यसङ्कीर्णस्वरूपज्ञानत्वातिरिक्तं भेदानुभवस्य शृङ्गमस्ति । अस्त्वयमपि युक्तिजानुभवो भ्रमः किं नश्छिन्नं निर्विकल्पकं ब्रह्मैव तत्वमित्यङ्गीकारादिति चेन्न । तथा सति विप्रतिपन्नभेदाद्यनुभवस्याभ्रान्तित्वप्राप्तेः । तदेषोभयतः पाशा रज्जुः । युक्तिजानुभव-स्याभ्रान्तित्वेऽनैकान्त्येन भ्रान्तित्वे बाधितत्वेन विप्रतिपन्नस्य भ्रान्तित्वसाधनासामर्थ्यात् ।

ननु भ्रान्तित्वे कथं तारतम्यं येन नितरामित्युक्तम् । सत्यम् । तथाऽपि स्वरूपसम्मत्या निश्चितं तत्र भ्रान्तित्वमिति सूच्यते अनयोक्त्येत्यदोषः । ननु युक्तिजानुभवस्य भ्रान्तित्वेऽपि कुतो विप्रतिपन्नभेदाद्यनुभवस्याभ्रान्तित्वमित्यत आह-

### मूल

*परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् ।*

विरुद्धयोरिति निर्धारणे सप्तमी । त्र्यादिष्वेकनिषेधे निश्चितेऽन्यतरैकविधिप्रतिपत्तिर्नास्तीति द्विवचनम् । नान्तरीयकत्वात् व्याप्तत्वात् । विप्रतिपन्नभेदाद्यनुभवयाथार्थ्यं तदपलापयुक्त्यनुभव-याथार्थ्यं च खलु परस्परविरुद्धे तत्र युक्त्यनुभवयाथार्थ्यप्रतिषेधे भेदाद्यनुभवयाथार्थ्यं बलात् सिद्ध्यति । परस्परविरुद्धयोर्मध्येऽन्यतरनिषेधस्यान्यतरविधिव्याप्ततया सर्वत्र दर्शनादिति ।

ननु कथमत्र प्रयोक्तव्यम् ? भेदाद्यनुभवो यथार्थः । युक्त्यनुभवस्यायथार्थत्वादिति चेन्न । व्याप्त्यभावात् । तदपलापेति विशेषणेऽपि युक्तिग्रहणवैयर्थ्यात् । तदपनयनेऽपि वैयधिकरण्या-निस्तारात् । मैवम् । भेदाद्यनुभवो यथार्थः तद्विरुद्धप्रत्ययस्यायथार्थत्वादिति प्रयोगात् ।

न च व्यधिकरणत्वं दोषः । तद्धि पक्षधर्मताविघटनाद्व्याप्तिविघटनाद्वाऽतिप्रसङ्गाद्वा दोषः स्यात् । नाऽद्यः । पक्षधर्मताया अनावश्यकत्वात् । स्वयमसिद्धं कथं साधयतीति चेत् न ब्रूमोऽसिद्धम् । किन्तु पक्ष एव । तत्रासत्कथं तत्र साधयेदिति चेत् अथ तत्र सत्कथं तत्रापरं साधयेत्? दर्शनादिति चेत्समम् । दृश्यते हि चक्रभ्रमदर्शनात् कुलालासत्त्यनुमानम् । तत्र तावान् प्रदेशः पक्ष इति चेत् किमेवं लौकिकी प्रतीतिरुत पक्षधर्मतावश्यम्भावादित्थं कल्प्यते? नाऽद्यः । अप्रसिद्धेः। न द्वितीयः । परस्पराश्रयप्रसङ्गात् ।

किञ्च रसाद्रूपानुमाने यादृशी पक्षधर्मता न तादृशी धूमादग्न्यनुमाने । तत्र यथा यथादर्शनं व्यवस्था तथा क्वचित् पक्षधर्मता क्वचिन्नेति व्यवस्था किं नाऽश्रियते ? न द्वितीयः । चक्रभ्रमादौ वैयधिकरण्येऽपि व्याप्तिदर्शनात् ।

किञ्च धूमादग्न्यनुमाने यदि समानाधिकरणयोर्व्याप्तिस्तदा धूमदर्शनान्नियमेन तदर्वाग्भागेऽ-ग्न्यर्थिनः प्रवृत्तिर्न स्यात् । अथ तत्रापि य ऊर्ध्वभागे धूमवान् सोऽर्वाग्भागेऽग्निमानिति व्याप्तिरिति चेन्न । स्वतो व्यधिकरणयोर्वाचोभङ्ग्यैव सामानाधिकरण्येऽनुमानव्यवहारस्य काल्पनिकत्व-प्रसङ्गात् । समानदेशकालयोर्व्याप्तिदर्शनेऽपि भिन्नकालयोरपि यथा व्याप्तिदर्शनबलाद्ग्राह्या तथा भिन्नाधिकरणयोरपीति को दोषः ? तृतीयस्तु दर्शनादर्शननिरसनीय इति सङ्ग्रहः ।

ननु कतकरजोवद्वेणुसङ्घर्षणजाग्निवच्च भेदाद्यनुभवमाभासीकृत्य युक्तिः स्वयमाभासी-भविष्यतीति चेन्न । वैषम्यात् । न हि कतकरजःप्रभृतीनां सत्त्ववद्युक्तेः प्रमात्वं किञ्चित्काल-मस्तीति ।

## श्रीविजयीन्द्रभिक्षु

नन्वभेदागमस्य प्रबलप्रमाणान्तरविरोधे सत्यर्थान्तरपरत्वकल्पनं कार्यम् । न च भेदग्राहि-प्रत्यक्षादिकं प्रमाणम् । भेदादिप्रत्ययत्वेन हेतुना तदप्रामाण्यस्यैव सिद्धेरिति शङ्कते- नन्विति ।। ननु यदि भेदादिप्रत्ययो भ्रमः स्यात्तदेश्वरज्ञानमपि भ्रमः स्यात् । न चेष्टापत्तिः । तस्य भ्रमहेतुभूता-ज्ञानाभावादिति शङ्कते- यद्यपीति ।। ईश्वरज्ञानमपि भ्रम एवेति परिहरति- तथाऽपीति ।। भेदो भेदिभ्यां भिन्नो न वा? आद्ये अनवस्था । द्वितीये धर्मधर्मिभावानुपपत्तिरित्यादियुक्तिसिद्धं भेदाद्यनिर्वचनीयत्वं न स्यादित्येवंरूपविपक्षे बाधकसद्भावादित्यर्थः ।

ननु द्वा सुपर्णेत्यागमबलाद्भेदसिद्धिः । न च तज्ज्ञानं भ्रमः । निर्दोषवेदोत्पन्नत्वेन तदसम्भ-वादित्यत आह- आगमस्यापीति ।। निर्दोषश्रुतिरपि स्वतात्पर्यविषयीभूतार्थ एव मानम् । तात्पर्यं चोपक्रमादिभिरेवावसेयम् । न च द्वा सुपर्णेत्यागमानां तत्र तात्पर्यं सम्भवति । प्रत्यक्षसिद्ध-भेदानुवादित्वेनापूर्वताविरहादिति भावः । भेदाद्यनुभवस्य भ्रमत्वेन तन्निरासकयुक्तिजन्यज्ञानं भ्रम इत्युक्तमयुक्तम् । व्यधिकरणत्वादित्यशङ्क्योपपादयति-

तस्यापीति ।। तथा च भेदनिरासक-युक्तिजन्यज्ञानस्यापि भेदविषयत्वाद् भ्रमत्वं दुर्वारमित्यर्थः । विकल्परूपत्वादिति ।। असङ्कीर्ण-वस्तुस्वरूपविषयज्ञानत्वादित्यर्थः । अस्त्वसङ्कीर्णवस्तुस्वरूपविषयकज्ञानत्वं तस्य । तथाऽपि भेदज्ञानत्वं कुत इत्यत आह- न हीति ।। तथा सतीति ।। भेदज्ञानस्य भ्रमत्वं हि बाधकज्ञानस्य प्रमात्व एव स्यात् । तस्यापि भ्रमत्वे बाधकाभावाद् भेदानुभवस्याभ्रान्तित्वमिति भावः ।

उभयतः पाशा रज्जुत्वमेवोपपादयति- युक्तीति ।। भेदनिरासकयुक्तिजन्यानुभवस्याभ्रमत्वे भेदादिप्रत्ययस्य तत्रैव व्यभिचारः । भ्रमत्वे तु भेदानुभवस्याभ्रमत्वं विना तदयोगाद् भेदानुभवो भ्रम इति साधनस्य बाधितत्वेन विप्रतिपन्नभेदाद्यनुभवस्य भ्रान्तित्वसाधने सामर्थ्याभावादित्यर्थः । परस्परविरुद्धयोरिति मूलार्थः- विरुद्धयोरिति ।। तेन 'परस्परविरुद्धयोरेकनिषेधस्य नापरविधिना व्याप्तत्वम् । घटादेर्गोत्वनिषेधेऽश्वत्वादेरदर्शनात्' इत्याशङ्का निरस्ता । परस्परविरुद्धयोरि-त्यत्राऽधारसप्तम्यङ्गीकारे परस्परविरुद्धयोरधिकरणयोरेकनिषेधोऽपरविधिव्याप्त इत्यर्थः स्यात् । स चायुक्तः । गोत्वादौ घटत्वद्रव्यत्वयोरन्यतरनिषेधेऽप्यन्यतरविधेरदर्शनादित्यत आह- निर्धारणे सप्तमीति ।।

परस्परविरुद्धानामन्यतमस्येत्यनुक्त्वा परस्परविरुद्धयोरित्येवोक्तौ कारणमाह- त्र्यादिष्विति ।। परस्परविरुद्धे इति ।। प्रतीत्योर्विरोधस्य विषयविरोधं विनाऽयोगात् तद्विषययोः परस्परविरहरूपत्वेन भेदाद्यनुभवयुक्तिजन्यज्ञानयोर्यथार्थत्वे अपि परस्परविरुद्धे इत्यर्थः । व्याप्त्यभावादिति ।। शुक्तौ रजतानुभवस्य भ्रान्तित्वेऽपि घटभेदाद्यनुभवस्याभ्रमत्वदर्शनादिति भावः । तदपलापेतीति ।। तदपलापयुक्तिजन्यज्ञानत्वादिति हेतुकरणेऽपीत्यर्थः । तद्धीति ।। यत्र व्याप्तिसत्वेऽपि पक्षे साधनस्यासत्वं तत्र पक्षधर्मताविघटनद्वारा वैयधिकरण्यस्य दोषत्वम् । यथा पर्वतोऽग्निमान् महानसस्य धूमवत्त्वादिति । यत्र हेतुसाध्ययोः सामानाधिकरण्यमेव नास्ति तत्र व्याप्तिविघटकत्वेन तथा । सामानाधिकरण्यविशेषस्यैव व्याप्तित्वात् । अन्यत्र विद्यमानस्यापि हेतोरन्यत्र साध्यसाधकत्वे धूमवतीव धूमरहितेऽपि वह्निसिद्धिप्रसङ्ग इत्यतिप्रसञ्जकतया दोषः स्यादित्यर्थः ।

असिद्धमिति कोऽर्थः ? किमप्रसिद्धमिति किं वा पक्षेऽविद्यमानमिति? नाऽद्य इत्याह- न ब्रूम इति ।। द्वितीयं शङ्कते- तत्रेति ।। धूमादिहेतोः स्वाधिकरण एव साध्यसाधकत्वदर्शनादिति भावः । परमुखेनैव स्वाभिप्रेतं वाचयितुं गूढाभिसन्धिरुत्तरयति- अथेति ।। दृश्यते हीति ।। 'आसन्नकुलालोऽयं देशः चक्रस्य भ्रमणवत्त्वात्' इति साध्यसाधनयोः वैयधिकरण्येनाप्यनुमान-प्रवृत्तिर्दृश्यत इत्यर्थः । तत्र तावानिति ।। तथा च स्थूलदेशस्यैव पक्षत्वात्तत्र हेतुसाध्ययोः सामानाधिकरण्यमस्त्येवेति न वैयधिकरण्यमिति शङ्कावकाश इति भावः ।

लौकिकीति ।। सर्वानुभवसिद्धेत्यर्थः । परस्परेति ।। पक्षधर्मताया अनुमानाङ्गत्वे तावत्प्रदेशस्य पक्षतासिद्धिः तत्सिद्धौ वाऽव्यभिचारात्पक्षधर्मताया अनुमानाङ्गत्वसिद्धिरिति परस्पराश्रयत्व-प्रसङ्गादित्यर्थः । तथा च यथादर्शनमेव साध्यसाधनभावव्यवस्थाऽङ्गीकार्येति क्वचित्पक्षधर्मताऽ-भावेऽपि साधकत्वमविरुद्धमित्याह- किञ्चेति ।। व्याप्तिदर्शनादिति ।। सामानाधिकरण्यविशेषो न व्याप्तिः । अविनाभाव एवेति भावः । यथा च

साध्यसाधनयोः सामानाधिकरण्याभावेऽप्यविनाभावः तथोपपादितमस्माभिः प्रमाणपद्धतिटीकायां प्रमाणलक्षणटीकाभावप्रकाशिकायां च ।

किं च यदि सामानाधिकरण्यविशेष एव व्याप्तिः स्यात्तदा विच्छिन्नमूलेनापि धूमेन वह्न्यनुमानं न स्यात् । न चेष्टापत्तिः । ऊर्ध्वभागे धूमं दृष्टवतो वह्न्यर्थिनस्ततोऽर्वाग्भागे प्रवृत्त्यभाव-प्रसङ्गादित्याह- किं चेति ।। तत्रापीति ।। उपरि विद्यमानधूमवत्त्वतदधोविद्यमानाग्निमत्त्वरूप-साध्यसाधनयोः सामानाधिकरण्यसत्वान्नोक्तदोष इति भावः । स्वतो व्यधिकरणयोरिति ।। उक्तरीत्या व्यधिकरणयोरपि ऊर्ध्वभागे धूमवान् अधोभागे वह्निमानिति एकविभक्त्यन्तशब्द-प्रयोगविषयत्वेनैव सामानाधिकरण्यमस्तीत्यङ्गीकृत्यानुमानव्यवहारकरणे तद्व्यवहारस्य परिभाषा-मात्रत्वापत्तेरित्यर्थः । तृतीयस्त्विति ।। समुचितदेशवृत्तित्वस्यैवातिप्रसङ्गभञ्जकत्वात् समुचितत्वस्य च फलबलकल्प्यत्वान्नातिप्रसङ्ग इति भावः ।

ननु यथा स्वयं नश्यतोऽपि कतकरजसः वेणुसङ्घर्षणजातानलनाशकत्वं एवं स्वयमाभासी-भवतोऽपि भेदापलापयुक्तिजन्यज्ञानस्य भेदानुभवाभासीकरणसामर्थ्यं भविष्यतीति शङ्कते- नन्विति ।। कतकरजःप्रभृतीनां किञ्चित्काले सत्वाद् युक्तं तस्येतरनाशकत्वम् । इह तु आभासी-करणसामर्थ्यस्य प्रमात्वस्य कदाऽप्यभावेन वैषम्यसत्वान्न युक्तमिति परिहरति- नेति ।।

## श्रीवेदेशतीर्थ

नन्वभेदागमस्य प्रबलप्रमाणविरोधे ह्यर्थान्तरकल्पनं कार्यम् । न च भेदग्राहिप्रत्यक्षादिकं प्रमाणम् । भेदादिप्रत्ययत्वेन हेतुना तदप्रामाण्यस्यैव सिद्धेरिति शङ्कते- नन्विति ।।

ननूक्तमत्र यदि भेदप्रत्यक्षमप्रमाणं तर्हि तद्द्रष्टुरीश्वरस्य भ्रान्तत्वं स्यादिति । न चेष्टापत्तिः । अस्मदादिवत् तस्याज्ञानाच्छादनाभावादित्याशङ्क्य परिहरति- यद्यपीति ।। विक्षेपेति ।। अतदाकार-प्रतिभासस्यैव विक्षेपशब्दार्थत्वादिति भावः । अनुवादित्वादिति ।। प्रत्यक्षसिद्धभेदानुवादित्वादि-त्यर्थः । तथा च प्रत्यक्षस्य भ्रमत्वे तत्सिद्धार्थानुवादकवाक्यजनितज्ञानमपि भ्रम एवेति भावः । भ्रान्तित्त्वं स्यादिति मूले अध्याहृतमिति ज्ञेयम् । अन्यथा भ्रान्तित्वादित्यनुवादासम्भवात् । कुत इत्यतः परन्यायेनैव तदुपपादयति - तस्यापीति ।। अन्यथेति ।। युक्तिजानुभवस्य भ्रान्तित्व इत्यर्थः ।

ननु तत्र हेतोरेवाभावान्न व्यभिचार इत्यत आह- न हीति ।। विकल्परूपत्वादिति ।। इतरभेदवैलक्षण्यादिविशिष्टस्वरूपलक्षणासङ्कीर्णवस्तुविषयकत्वादित्यर्थः ।

नन्वस्त्वसङ्कीर्णस्वरूपविषयकत्वं तस्य तथापि भेदानुभवत्वं कुत इत्यत आह- न हीति ।। इतरभेदवैलक्षण्यादिविशिष्टवस्तुन एवासङ्कीर्णत्वादिति भावः । इदानीं भ्रान्तित्वादित्यादिमूलांशं व्याख्यातुमाह-अस्त्विति ।। निर्विकल्पकमिति ।। निर्भेदमित्यर्थः । उभयत इति ।। उभयतो

बन्धकरज्जुन्याय इत्यर्थः । उभयतो बन्धनमेवोपपादयति ।। युक्तिजानुभवस्येति ।। अनैकान्त्ये-नेति ।। उक्तरीत्या तत्रापि भेदानुभवत्वहेतोः सत्वादित्यर्थः । बाधितत्वेनेति युक्तिजानुभवस्य भ्रमत्वं विप्रतिपन्नानुभवस्याभ्रमत्वं विना नोपपद्यतेऽतोऽभ्रमभूते विप्रतिपन्नानुभवे भ्रमत्वसाधनं बाधितमिति भावः । निर्धारण इति ।। तेनाधिकरणसप्तमीत्वेन प्रकृतासङ्गतिरिति चोद्यानवकाश इति भावः । त्र्यादिष्विति ।। गोत्वाश्वत्वमहिषीत्वादिष्वित्यर्थः ।

ननु द्विवचनप्रयोगेऽपि गोत्वाश्वत्वयोः पुनर्व्यभिचार एव । न हि गोत्वनिषेधे निश्चितेऽ-श्वत्वविधिर्नियमेन प्रतीयत इति चेन्मैवम् । भावानवबोधात् । द्विवचनमहिम्ना ययोर्द्वयोरेव परस्पर-विरोधस्तयोर्मध्य इत्यर्थलाभात् । द्वयोः परस्परविरोधश्च परस्परविरहरूपयोरेव दृष्टः । न परस्पर-विरहव्याप्ययोः । तत्र त्र्यादीनामपि परस्परविरहव्याप्यत्वसम्भवात् । एवं च परस्परविरुद्धयोरिति द्विवचनाप्रयोगे सामान्यतो विरोधमात्रप्रतीत्या स्यादुक्तो व्यभिचारः । द्विवचनप्रयोगे तु तन्महिम्ना परस्परविरहरूपयोरित्यर्थलाभान्न गोत्वादिषु परस्परविरहव्याप्येषु व्यभिचार इति भावः ।

परस्परविरुद्धे इति ।। यद्यपि नेमे याथार्थ्ये परस्परविरहरूपे तथाऽपि विप्रतिपन्नानुभवयाथार्थ्यस्य भेदसत्तागर्भत्वेन युक्तिजानुभवयाथार्थ्यस्य भेदाभावगर्भभ्रमत्ववद्विशेष्यकत्वादिरूपत्वेन परस्पर-विरहात्मकपदार्थघटितमूर्तिके इति तथोच्यते । ज्ञानयोस्तद्धर्मयोर्वा विषयविरोधमनपेक्ष्य स्वतो विरोधाभावादिति भावः । व्याप्त्यभावादिति ।। यत्किञ्चिद्युक्तिजानुभवस्य भ्रमत्वेऽपि घटपटभेदा-द्यनुभवस्य भ्रमत्वादर्शनादिति भावः । तद्विरुद्धप्रत्ययस्येति ।। तदभावघटितभ्रमत्वावगाहि-प्रत्ययस्येत्यर्थः । अतिप्रसङ्गादिति ।। शब्दोऽनित्यः घटस्य कृतकत्वादित्यादेर्गमकत्वप्रसङ्ग-रूपातिप्रसङ्गादित्यर्थः । चक्रभ्रमदर्शनादिति ।। चक्रभ्रमणं चक्रसमवेतं कुलालासत्तिश्च देश-विशेषनिष्ठेत्यनयोर्वैयधिकरण्येऽप्यनुमानं दृश्यत इत्यर्थः । तावान् प्रदेश इति ।। तथा चैतावान् प्रदेशः कुलालासत्तिमान् भ्रमविशिष्टचक्रवत्त्वादित्येवात्र प्रयोगोऽभिमतोऽतो न वैयधिकरण्यमिति भावः ।

परस्पराश्रयप्रसङ्गादिति ।। पक्षधर्मताया अनुमानाङ्गत्वे सिद्धेऽव्यभिचाराय तावत्प्रदेशस्य पक्षत्वमाश्रित्योक्तप्रयोगानुसरणम् । तत्सिद्धौ चाव्यभिचारात् पक्षधर्मताया अनुमानाङ्गत्व-सिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः । व्याप्तिदर्शनादिति ।। अव्यभिचरितसामानाधिकरण्यं न व्याप्तिः । किन्तु यद्देशकालसम्बद्धस्य यस्य यद्देशकालसम्बद्धेन येन विनाऽनुपपत्तिस्तस्य तेन सा व्याप्तिः । इयञ्च साध्यसाधनयोर्वैयधिकरण्येऽप्यस्तीति भावः ।

ननु वैयधिकरण्ये कथं व्याप्तिर्ग्राह्येति चेत् ? काऽत्र कथन्ता ? यत्रेदं तत्रेदमितिवद्यदेदं तदेदमितिवच्च यदीदं तर्हीदमित्यपि व्याप्तिग्रहसम्भवात् । अनुभूयते हि यद्यधोदेशे नदीपूरस्तर्ह्यूर्ध्वदेशे वृष्टिरिति । अतो न काऽप्यनुपपत्तिरिति । काल्पनिकत्वप्रसङ्गादिति ।। लोकमर्यादातिक्रमे परिभाषामात्रत्वप्रसङ्गादित्यर्थः । तथा च पूर्वोक्तपरस्पराश्रयत्वप्रसङ्ग इति भावः । समानदेश-कालयोरिति ।। रूपरसयोरित्यर्थः । भिन्नकालयोरिति ।। कार्यकारणयोरित्यर्थः । दर्शनादर्श-नेति ।। यत्र

व्याप्तिसमुचितदेशसिद्ध्यादिनानुमितिरूपं फलं दृश्यते । तत्र वैयधिकरण्येऽपि गमकत्व-मस्तीत्युच्यते यत्र तु व्याप्त्याद्यभावेनानुमितिर्न दृश्यते । तत्र सामानाधिकरण्येऽपि न गमकत्वम् । अतोऽतिप्रसङ्गभञ्जकं व्याप्त्याद्यधीनानुमितिरूपफलदर्शनमेव । अन्यथा समानाधिकरण-योर्गमकत्वेऽप्येतादृशातिप्रसङ्गाभिधाने का गतिरिति भावः । किञ्चित्कालमिति ।। किञ्चित्कालं प्रमात्वाङ्गीकारे चोक्तरीत्या व्यभिचार इति भावः ।

## द्वैतद्युमणि

भेदादिप्रत्ययत्वादिति ।। भेदभेदकधर्मादिप्रकारप्रत्ययत्वादित्यर्थः । न चैवमननुगमः । किञ्चिद्धर्मावच्छिन्ननिरूपितप्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वस्य विवक्षितत्वात् । निष्प्रकारक-ब्रह्ममाने जगज्ज्ञानप्रतिबन्धकतावच्छेदकविषयताश्रये व्यभिचारवारणाय प्रकारतात्वेन निवेशः ।

अब्रह्मेति ।। नञ् ब्रह्मपदेनैव समस्तम् । अतः सन् घट इत्यादिप्रकारकज्ञानेषु नासिद्धिः । उक्तज्ञानेषु ब्रह्मांशघटादीनां सत्तासंसर्गादीनां भानात् । व्यासज्यवृत्तिधर्मावच्छिन्नभेदस्य स्वस्मिन्ननङ्गीकारान्न ब्रह्मणोऽपि ब्रह्मान्यत्वेन, अनवच्छिन्नतदवगाहिज्ञाने व्यभिचारः । विक्षेप-सद्भावादिति ।। अतदाभासशक्तेरेव विक्षेपपदार्थत्वादिति भावः । नन्वागमजन्यभेदादिज्ञानस्य भ्रमत्वे आगमस्याप्रामाण्यापत्तिरित्यत आह-आगमस्येति ।। परमतात्पर्यविषयीभूतबोधस्य भ्रमत्व एव वाक्याप्रमाण्यम् । प्रकृते चानुवादकवाक्यानां निषेधकवाक्यैकवाक्यतापन्नतया प्रमात्मक-बोधजनकत्वमेव । अवान्तरवाक्यजन्यबोधस्य भ्रमत्वं न तस्याप्रामाण्यपादकम् । अन्यथाऽति-प्रसङ्गादिति भावः । भ्रान्तिरुपपद्यत इति ।। भ्रान्तिरपि नाप्रामाण्यापादिका भवतीत्यर्थः ।

कथं 'युक्तिजानुभवे प्रकृतहेतुर्नास्ति' इत्येतदयुक्तमित्यत आह- विकल्परूपत्वादिति ।। विकल्पः किञ्चिद् व्यवच्छेदको धर्मः । स निरूप्यते विषयीक्रियते इति व्युत्पत्त्या किञ्चिद् व्यवच्छेदकधर्मप्रकारकज्ञानत्वादित्यर्थः । तावता भेदादिप्रत्ययत्वं कथं तत्रेत्यत आह- न हीति ।। असङ्कीर्णरूपस्वज्ञानत्वातिरिक्तं स्वेन विषयीक्रियमाणधर्मविशिष्टस्य तद्धर्मशून्याद् व्यावृत्तिग्रह-सम्पादकप्रकारकज्ञानत्वादतिरिक्तं पक्षीभूतभेदानुभवे विद्यमानं युक्तिजानुभवावर्तमानं शृङ्गं पशोः पशुविशेषाद् व्यावृत्तशृ‍ृङ्गसदृशं किञ्चिद्धेतुभूतमस्तीत्यर्थः । प्रमेयत्वादिप्रकारकज्ञानमप्यप्रमेयविलक्षण-मिदमिति ज्ञान सम्पादकं भवतीति सप्रकारकज्ञानसामान्यमसङ्कीर्णस्वरूपविषयकं भवति । न तु स्वरूपमात्रविषयकं ज्ञानमित्याशयेन वा व्यतिरेकधर्मसामान्यप्रकारकज्ञानस्योक्तासङ्कीर्णवस्तु-ज्ञानरूपत्वेन बाहुलिकत्वेन सप्रकारकपरिचायकतया वा तथोक्तिसम्भवः । पूर्वोक्तरीत्याऽऽदि-पदार्थाननुगमादिपरिहाराय पूर्वोक्तरीत्यैव हेतोः परिष्करणीयत्वात् तस्य युक्तिजानुभवेऽ-प्यक्षतत्वमिति भावः ।

वाचोभङ्ग्येति ।। यथायथमुदाहरणेन यथाकथञ्चिदेकाधिकरणसम्बन्धबोधन इत्यर्थः । यत्किञ्चिदेकस्थूलाधिकरणसम्बन्धित्वमात्रे हेतुसाध्ययोः सामानाधिकरण्यमस्तीत्यभ्युपगम इति यावत् । काल्पनिकत्वप्रसङ्गादिति ।। हेतुसाध्ययोर्वैयधिकरण्यादिदं नानुमानमिति व्यवहारस्य निर्बीजत्वापत्तेरित्यर्थः । फलवृत्तिरसस्य पटवृत्तिरूपस्यापि य आकाशः महाकालो वा रसवत्फलवान् सः

स्वसम्बद्धफलवृत्तिरसकः, रूपवत्पटवान् सः स्वसम्बद्धपटवृत्तिरूपको वेति उदाहारणप्रयोग-सम्भवेनैकाधिकरणग्रहसम्भवात्, प्रकृतनदीपूरादेरपि भूतलादिरूपैकधर्मिणमादाय यथायथं सामानाधिकरण्यस्य वक्तुं शक्यत्वाच्च सामानाधिकरण्यवैयधिकरण्यकथाया एवोच्छेदापत्तेः । व्याप्तिज्ञानवेलायां यत्र हेतुदर्शनं तद्भाग एव साध्यदर्शनं तु धूमस्थलेऽपि नास्तीति भावः ।

## श्रीराघवेन्द्रतीर्थ

अभेदवाक्यानाम् अन्यार्थकल्पनम्१ अयुक्तमिति शङ्कते - ननु विमत इति ।। भ्रमत्वाभ्रमत्वाभ्यां विमतिविषयो भेदप्रत्ययो भेदिनो भेदवतो घटाद्यर्थस्य प्रत्ययः ईशितृत्वेशित-व्यत्वादिरूपवैलक्षण्यप्रत्ययः । साधर्म्यं साम्यादिप्रत्ययश्च भ्रम इत्यर्थः ।

ननूक्तमीश्वरप्रत्यक्षं न भ्रान्तिरिति । तत्राऽह-यद्यपीति ।। विक्षेपेति ।। जगद्विषयज्ञानमित्यर्थः । विकल्पेति ।। सविकल्पकज्ञानत्वादित्यर्थः । तावता कथं भेदप्रत्ययत्वमित्यत आह-न हीति ।। 'भेदादिप्रत्ययो भ्रमः भेदादिप्रत्ययत्वात्' इत्यादौ प्रतिज्ञाहेतुदृष्टान्तादीनामन्योन्यासङ्कीर्णतया तत्तत्स्वरूपविषयज्ञानत्वमेवान्योन्यभेदग्राहित्वं विना न युक्तमिति तदेव तदित्यर्थः । तदेषोभयत इति ।। भेदादि-प्रत्ययस्य भ्रमत्वोपपादकयुक्तिकथनमित्यर्थः । तदेतदिति वक्तव्ये विधेयापेक्षया स्त्रीलिङ्गोक्तिः। पाशो ग्रन्थिविशेषः । उभयतः पार्श्वद्वये पाशो यस्याः सा उभयतःपाशेत्यर्थः । तद्व्यनक्ति- युक्तिजानुभव-स्येति ।। अनैकान्त्येनेति ।। तत्र भेदानुभवत्वरूपहेतुसत्त्वेऽपि भ्रमत्व-रूपसाध्याभावादिति भावः ।

विप्रतिपन्नस्येति ।। भेदभेदिवैलक्षण्यादिप्रत्ययस्येत्यर्थः । द्वयोरित्युक्तिकृत्यमाह- त्र्यादि-ष्विति ।। तदपलापेति ।। तद्याथार्थ्यापलापायोक्तभेदाद्यनुभवत्वयुक्तिजानुभवस्येत्यर्थः। बलादिति ।। व्याप्तिबलादित्यर्थः । सर्वत्र दर्शनादिति ।। घटतदभावादौ दर्शनादित्यर्थः ।

नन्वस्त्वेवं घटतदभावयोरन्योन्यविरहरूपत्वादन्यतरनिषेधेऽन्यतरविधिरिह तु कथम्? न हि द्वयोर्याथार्थ्यमन्योन्यविरहरूपमिति चेन्न । युक्तिजानुभवयाथार्थ्यस्य भेदाद्यनुभवयाथार्थ्याभाव-स्वरूपत्वादिति भावः । युक्त्यनुभवस्येति ।। युक्तिजन्यानुभवस्येत्यर्थः । तदपलापेति ।। तद्याथार्थ्याभावसाधनयुक्तिजानुभवत्वादित्युक्तावित्यर्थः । तदपनयन इति ।। युक्तिपदत्याग इत्यर्थः । तद्विरुद्धेति ।। याथार्थ्याभावप्रत्ययस्येत्यर्थः । पक्षधर्मावच्छिन्नव्याप्त्यभिप्रायेणायं प्रयोगः। अन्यथाऽनुभवभिन्ने घटादावनैकान्त्यापत्तेः । अतिप्रसङ्गाद्वेति ।। शब्दोऽनित्यः घटस्य कृतकत्वाद् इत्यादेरपि साधुत्वापातरूपादित्यर्थः । पक्ष एवेति ।। असिद्ध इत्यनुषङ्गः । दर्शना-दिति ।। धूमाग्न्यादाविति भावः । तावानिति ।। भ्राम्यच्चक्रासन्नकुलालोपेतप्रदेश इत्यर्थः । विमतः प्रदेश आसन्नकुलालवान् भ्राम्यच्चक्रोपेतत्वादित्युक्तौ न वैयधिकरण्यमिति भावः ।

परस्परेति ।। पक्षधर्मताया अनुमानाङ्गत्वे सिद्धे हीत्थं कल्पनम् एतत्सिद्धौ च तत्सिद्धिरित्यर्थः। यादृशी पक्षधर्मतेति ।। समवायेन स्थितिरूपा । न तादृशीति ।। संयोगेन स्थितिरूपत्वात् तस्या इति भावः।

व्यवस्थेति ।। क्वचित् समवेतत्वरूपा क्वचिच्च संयुक्तत्वरूपेत्येवं यथा दर्शनमनतिक्रम्य यथा व्यवस्था तथेत्यर्थः । व्याप्तिदर्शनादिति ।। यदि चक्रभ्रमः तर्हि कुलालासत्तिरित्येवंरूपव्याप्ति-दर्शनादित्यर्थः । धूमादिस्थलेऽपि साध्यसाधनवत्प्रदेशविशेषगतैव व्याप्तिरतो न वैयधिकरण्य-मित्याह- अथ तत्रापीति ।। स्वतो व्यधिकरणयोरिति ।। भिन्नदेशस्थयोरित्यर्थः । वाचोभङ्ग्यैव वचनवृत्त्यैवेत्यर्थः । काल्पनिकत्वेति ।। परिभाषामात्रत्वप्रसङ्गादित्यर्थः । समानदेशकालयो-रिति ।। रूपरसयोरित्यर्थः । भिन्नकालयोरिति ।। धूमाग्न्योरित्यर्थः । तृतीयस्त्विति ।। अतिप्रसङ्गस्तु दर्शने सत्यङ्गीकरणमदर्शने तु नेति निरसनीय इत्यर्थः । संग्रह इति ।। विस्तरस्तु सुधायाम् इति भावः । कतकरजोवदिति ।। कतकेति बीजविशेषः । मृत्तिकाकलुषितजले कतकबीजरजःस्थापने सति जलगतमृत्तिकामशेषामधः स्थापयित्वा स्वयमप्यधः पतति तथेत्यर्थः । युक्तिरिति ।। भ्रमत्वसाधकभेदाद्यनुभवत्वयुक्तिरित्यर्थः । इतिशब्दो बहुजीववादे मुक्तत्वहेतोर्विपक्षे बाधकोक्ति-समाप्तौ । भेदभेदिवैलक्षण्यादिप्रत्यय इति ।। भेदप्रत्ययः भेदिनोः प्रत्ययः वैलक्षण्यप्रत्ययो नाम पदार्थानां विरुद्धलक्षणयोगित्वप्रत्ययः विरुद्धधर्माधिकरणत्वप्रत्यय इत्यर्थः । भेदादीति ।। भेद-प्रत्ययत्वाद् वैलक्षण्यप्रत्ययत्वाच्चेत्यर्थः । चन्द्रेति ।। चन्द्रभेदप्रत्ययवत् चन्द्रद्वयरूपभेदिप्रत्यय-वत्तयोर्वैलक्षण्यप्रत्ययवच्चेत्यर्थः । युक्त्येति ।। तद्विरोधेनेत्यर्थः । ननु ईश्वरप्रत्यक्षजन्यभेदानुभवस्य कथं युक्तिविरोधेन भ्रान्तित्वं वक्तुं शक्यते । तत्कारणीभूताज्ञानरूपावरणाभावादित्याशङ्क्याऽह- यद्यपीति ।। विक्षेपेति ।। अतदाकारप्रतिभासरूपविक्षेपसद्भावादित्यर्थः । भेदादिप्रत्यक्षम् भेदाद्यनु-भवः । अनुवादित्वादिति ।। ईश्वरप्रत्यक्षसिद्धमिथ्याभूतभेदानुवादित्वादित्यर्थः । तत इति ।। अनुवादित्वेन स्वार्थे तात्पर्यशून्यादागमादित्यर्थः । भ्रान्तिरुपपद्यते भ्रान्तिरित्युपपद्यत इत्यर्थः । अन्यथेति ।। युक्तिजानुभवस्य भ्रान्तित्वानङ्गीकार इत्यर्थः । तेनैवेति ।। युक्तिजानुभव एव व्यभिचारः स्यादित्यर्थः । हेतोरेवाभावान्न व्यभिचार इति चेत्तत्राऽह- न हीति ।। इत्ययमिति ।। इत्यनुभव इत्यर्थः । विकल्परूपत्वादिति ।। विशिष्टज्ञानरूपत्वात् । इतरभेदेतरवैलक्षण्यविशिष्टस्वरूप-लक्षणासङ्कीर्णवस्तुविषयकत्वादित्यर्थः । प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते तथा च भेदादिविषयकोऽनुभवो भ्रम इत्येवं युक्तिजन्यानुभवस्यापि इतरसमस्तप्रतियोगिकभेदविशिष्ट-भेदाद्यनुभवभ्रमरूपवस्तुविषयकत्वेनास्यापि भेदानुभवत्वादिति भावः । ननु युक्तिजानुभवस्य सर्व-विलक्षणवस्तुस्वरूपविषयकत्वेऽपि भेदानुभवत्वं कुत इत्यत आह-न हीति ।। असङ्कीर्णेति ।। स्वेतरसमस्तभिन्नं यत्स्वरूपं तद्विषयकज्ञानत्वमेव भेदानुभवत्वम् इदमेव तस्य लक्षणम् एतदतिरिक्तं शृङ्गं तज्ज्ञापकं लक्षणान्तरं नास्तीत्यर्थः । तथा च भेदानुभवो भ्रम इति युक्तिजानुभवस्याप्यसङ्कीर्ण-भेदानुभवभ्रमरूपवस्तुस्वरूपविषयकज्ञानत्वेन भेदानुभवलक्षणाक्रान्तत्वेन भेदानुभवत्वात् तस्य च त्वया भ्रान्तित्वानङ्गीकारादनैकान्त्यप्रसङ्गो दुर्वार इति भावः ।

साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्कते- अस्त्विति ।। बाधितत्वेनेति ।। एतद्युक्ति-जानुभवस्य भ्रान्तित्वे भेदाद्यनुभवस्याभ्रान्तित्वप्राप्त्या भ्रान्तिरूपसाध्याभावनिश्चयादित्यर्थः । विप्रतिपन्नस्य ईश्वरीयभेदाद्यनुभवस्य । स्वपरेति ।। भेदाद्यनुभवो भ्रम इति युक्तिजानुभव-भ्रमत्वमस्मत्सम्मतमेव । तस्यापि भेदानुभवत्वादित्यादिनोक्तरीत्या परसंमत्याऽपि तत्र युक्तिजानुभवे भ्रान्तित्वं निश्चितमिति । अनयोक्त्या

सुतरामित्युक्त्या सूच्यत इत्यर्थः । व्याप्त्यभावादिति ।। यत्र युक्तिजानुभवस्य भ्रान्तित्वं तत्र भेदानुभवस्य यथार्थत्वमित्यत्र दृष्टान्ताभावेन व्याप्त्यभावादि-त्यर्थः । यद्वा ब्रह्म क्षणिकं सत्त्वादिति युक्तिजानुभवस्य स्थायित्वप्रत्ययविरोधेनायथार्थत्वेऽपि घटे घटभेदावगाह्यनुभवस्य यथार्थत्वाभावेन व्यभिचाराद्व्याप्त्यभाव इत्यर्थः ।

तदपलापेति ।। भेदाद्यनुभवो यथार्थः तदपलापयुक्त्यनुभवस्यायथार्थत्वात् यत्र यदपलापयुक्त्यनु-भवस्यायथार्थत्वं तत्र तदनुभवस्य यथार्थत्वं यथा घटापलापयुक्त्यनुभवस्यायथार्थत्वे घटानुभवस्य यथार्थत्वं दृष्टम् । अतो व्यभिचाराभावाद्दृष्टान्तसद्भावाच्च न व्याप्त्यभाव इत्यर्थः । युक्तीति ।। तदपलापानुभवस्यायथार्थत्वादित्येव हेतुरस्तु व्यभिचाराभावाद् अतो युक्तिग्रहणं व्यर्थमित्यर्थः । तदपनयेति ।। युक्तिपदपरित्यागेऽपीत्यर्थः । वैयधिकरण्येति ।। भेदाद्यनुभवो यथार्थस्तदप-लापानुभवस्यायथार्थत्वादित्यत्रायथार्थत्वस्यापलापानुभवनिष्ठत्वेन पक्षीभूतभेदाद्यनुभवनिष्ठत्वा-भावात् शब्दोऽनित्यो घटस्य कृतकत्वादितिवद्व्यधिकरणमित्यर्थः । युक्तिपदपरित्यागेनैव हेतुमाह- तद्विरुद्धेति ।। तदपलापेत्यर्थः । तथाच व्याप्त्यभावादित्युक्तदोषो नेति भावः ।

तर्हि वैयधिकरण्यस्यानिस्तारादित्युक्तदोषः स्यादित्याशङ्क्य परिहरति– न चेति ।। अति-प्रसङ्गाद्वेति ।। शब्दोऽनित्यो घटस्य कृतत्वादित्यादेरपि गमकत्वं स्यादित्यतिप्रसङ्गाद्वेत्यर्थः । पक्षेति ।। समुचितदेशसिद्धेरेवानुमानाङ्गत्वेनाङ्गीकारादिति भावः । असिद्धमिति ।। पक्ष इति शेषः। साधयति साध्यमिति शेषः । असिद्धमिति ।। सर्वथा कुत्राप्यसिद्धमिति न ब्रूम इत्यर्थः । पक्ष एवासिद्धमिति ब्रूम इति वर्तते । 'तत्र' पक्षे । 'असत्' साधनम् । दर्शनादिति ।। धूमानुमानादाविति शेषः । चक्रेति ।। यदा कुलालो दण्डेन चक्रं भ्रामयित्वा स्वयं गृहान्तर्गतस्तदाऽन्यः कश्चित् चक्रभ्रमणं दृष्ट्वाऽनुमिमीते । गृहान्तर्गतः प्रदेशविशेषः कुलालासत्तिमान् चक्रस्य भ्रमणादिति । तत्र भ्रमणस्य चक्रसमवेतत्वात् कुलालासत्तेश्च देशविशेषनिष्ठत्वेन वैयधिकरण्येऽप्यनुमानं दृश्यतेऽतो न वैयधिकरण्यं दोष इत्यर्थः । तावानिति ।। न गृहान्तर्गतप्रदेशविशेष एव पक्षः, किन्तु यस्मिन् प्रदेशे चक्रभ्रमणं सोऽपि पक्ष इत्यर्थः । तथा च बाह्यान्तःस्थस्सर्वोऽपि प्रदेशः तावान् प्रदेशः कुलालासत्तिमान् भ्रमविशिष्टचक्रवत्त्वादित्येव समानाधिकरणतया प्रयोगस्याभिमतत्वेन न वैयधिकरण्यमिति भावः ।

लौकिकीति ।। एतादृशस्थले समानाधिकरणतया प्रयोगकरणं लौकिकप्रतीतिसिद्धमिति यावदित्यर्थः । परस्पराश्रयप्रसङ्गादिति ।। पक्षधर्मतायाः अनुमानाङ्गत्वे सिद्धे चक्रभ्रमात् कुलालासत्त्यनुमानस्थले पक्षधर्मताया अभावेन व्यभिचारे चोदिते तावत्प्रदेशस्य पक्षत्वमाश्रि-त्योक्तरीत्या प्रयोगानुसरणम् । तत्सिद्धौ च व्यभिचाराभावात्पक्षधर्मताया अनुमानाङ्गत्वसिद्धि-रित्यन्योन्याश्रय इत्यर्थः । रसादिति ।। अयं रूपी रसवत्त्वादित्यनुमान इत्यर्थः । यादृशीति ।। समवायसम्बन्धघटितेत्यर्थः । न तादृशीति ।। तत्र पक्षधर्मतायाः संयोगघटितत्वादिति भावः । व्याप्तिदर्शनादिति ।। कथमत्र व्याप्तिरिति चेत् । इत्थम् । यत्रेदं तत्रेदमितिवत् यदेदं तदेदमितिवद् यदीदं तर्हीदमित्यपि व्याप्तिग्रहसम्भवात् । अनुभूयते हि यद्यधोदेशे नदीपूरस्तर्ह्यूर्ध्वदेशे वृष्टिरिति अतो न काऽप्यनुपपत्तिरिति भावः ।

किञ्च व्यधिकरणयोर्व्याप्तिर्धूमानुमान एव प्रसिद्धेत्याह- किञ्चेति ।। धूमदर्शनादिति ।। ऊर्ध्वभाग इति शेषः । तदर्वाग्भागे धूमदेशादधोभागे । न स्यादिति ।। यस्मिन् देशे धूमोऽस्ति तद्भाग एव प्रवृत्तिः स्यात् न तदर्वाग्भाग इत्यर्थः । स्वत इति ।। भिन्नाधिकरणनिष्ठयोर्धूमाग्न्योरित्यर्थः । काल्पनिकत्वेति ।। लोकमर्यादातिक्रमेण काल्पनिकत्वप्रसङ्गात्पारिभाषिकत्वप्रसङ्गात् स्वकपोल-कल्पितत्वप्रसङ्गादित्यर्थः । समानेति ।। रूपरसयोरित्यर्थः । भिन्नकालयोरिति ।। यत्र कार्यात्कारण-मनुमीयते तत्र भिन्नकालयोर्व्याप्तिरित्यर्थः । तयोः पूर्वापरीभावघटितत्वेन समानकालीनत्वाभावा-दिति ज्ञातव्यम् । अतिप्रसङ्गाद्वेति तृतीयं निराकरोति- तृतीय इति ।। दर्शनादर्शनेति ।। व्याप्तिसमुचितदेशसिद्धिभ्याम् अनुमितिरूपं फलं यत्र दृश्यते ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूरादित्यादौ तत्र वैयधिकरण्येऽपि साध्यगमकत्वमस्तीत्युच्यते । यत्र तु व्याप्तिसमुचित-देशसिद्ध्यभावेनानुमितिरूपफलं न दृश्यते शब्दोऽनित्यो घटस्य कृतकत्वादित्यादौ तत्र वैयधि-करण्येऽपि न गमकत्वमित्यर्थः । कतकरजोवदिति ।। 'कतकरजः चिल्लबीजम्' इत्यपभ्रष्टभाषा । यथा रजःकलुषिते जले कतकरजो स्थाप्यते चेत्तर्हि तत् जलकालुष्यं विनाश्य, पश्चात्स्वयमपि नश्यति तद्वदित्यर्थः । वेणुसङ्घर्षजेति ।। यथा वेणुसङ्घर्षजो वह्निर्वनं दग्ध्वा पश्चात्स्वयमपि शान्तो भवति तद्वदित्यर्थः । आभासीकृत्येति ।। तथा चापलापयुक्तेः सत्त्वस्यैवाभावात् कस्याः भ्रान्तित्वं भवद्भिश्चाऽपाद्यते कुत्र वा व्यभिचारो दीयत इति भावः ।

सत्त्ववदिति । जले वने च स्थापितयोः कतकरजोवन्ह्योः किञ्चित्कालसत्त्ववदित्यर्थः । तयोः किञ्चित्कालं सत्त्वाभावे जलकालुष्यविनाशकत्वस्य वनदाहकत्वस्य चासम्भवादित्यर्थः । युक्तेः अपलापयुक्तिजानुभवस्य प्रमात्वमिति ।। तत्प्रयुक्तं सत्त्वमित्यर्थः । प्रामाण्यस्यार्थसत्ताघटितत्वा-दिति ज्ञातव्यम् । तथा च मुक्तिजानुभवस्यापि प्रमात्वमङ्गीकृत्य किञ्चित्कालं सत्त्वाङ्गीकारे च भेदानुभवत्वहेतोरुक्तरीत्या तत्र व्यभिचारः स्यात् । अतो युक्तिजानुभवस्य सत्त्वाभावाद्भेदाद्यनुभव-माभासीकृत्येत्युक्तमसदिति भावः ।।

## गुरुराजीया

अभेदागमापेक्षया भेदागमस्य प्रत्यक्षाद्यनुसारितया प्राबल्येन तद्विरोधादभेदागमस्य भेदागमानुसारेण व्याख्येयत्वमुक्तम् । तदसत् । युक्त्या भेदानुभवस्य भ्रमत्वसिद्ध्या तदनुसारेण भेदागमस्य१ प्राबल्यासिद्धेरिति शङ्कते- नन्विति ।। विक्षेपेति ।। अतदाकारप्रतिभासरूप-विक्षेपसद्भावादित्यर्थः । अनुवादित्वादिति ।। प्रत्यक्षप्राप्तभेदानुवादित्वादित्यर्थः । तथा च भ्रमरूपप्रत्यक्षप्राप्तभेदानुवादिवाक्यजनितभेदज्ञानमपि भ्रम एवेति भावः । भेदाद्यनुभवत्वादित्युप-लक्षणम् । अब्रह्मज्ञानत्वादित्यपि द्रष्टव्यम् । भेदाद्यनुभवत्वादिति हेतोरित्युत्तरग्रन्थानुसारात् । तेनैवेति ।। युक्तिजानुभवेनैवेत्यर्थः । तत्र भेदानुभवत्वे अब्रह्मज्ञानत्वे च सत्यपि भ्रान्तित्वा-भावादिति भावः ।

ननु तत्र हेतोरेव अगमनान्न व्यभिचार इत्यतः अस्पष्टत्वादाद्यहेतोरेव वृत्तिमुपपादयति- नहीति ।। विकल्परूपत्वादिति ।। सविकल्पकज्ञानत्वादित्यर्थः । तावताऽपि कथं तस्य भेदानुभवत्वमित्यतः असङ्कीर्णज्ञानस्वरूपत्वात्२ तत्सिद्धिरिति भावेनाऽह- न हीति ।। निर्विकल्पकमिति ।। निर्धर्मिक-मित्यर्थः ।

उभयतः पाशत्वमेवोपपादयति- युक्तिजानुभवस्येति ।। अनैकान्त्येनेति ।। तथा च युक्तेरनैकान्त्येनाऽभासत्वात् तज्जन्यप्रत्ययस्य भ्रमत्वेन अन्यथा विज्ञातस्य सम्यग्विज्ञानत्वाभावेन बाधलक्षणानाक्रान्तत्वान्न बाधकत्वम् । अबाधकत्वेनेति ।। अन्यथा विज्ञातस्य सम्यग्विज्ञानस्यैव बाधत्वेन भ्रान्तित्वे सम्यग्विज्ञानत्वाभावेन बाधलक्षणानाक्रान्ततया अबाधत्वम् । यद्यपि च पक्षद्वयेऽपि सम्यग्ज्ञानत्वाभावप्रयुक्तमेव युक्तिजानुभवस्याबाधत्वमिति तथैव वक्तुमुचितम् । तथाऽप्येकत्र पक्षे पराङ्गीकारेणैव तत् । पक्षान्तरे तु अनुभवजनकयुक्तेरनैकान्त्यनिमित्तं तदिति भावेनैकत्र अनैकान्त्येनेति अपरत्र अबाधकत्वेनेति विचित्रः प्रयोगः ।

अधिकरणसप्तमीत्यस्य प्रकृतासङ्गतत्वादाह- निर्धारण इति ।। त्र्यादिष्वेकेति ।। पुरोवर्तिनः पुरुषत्वे असति, स्थाणुत्वमेव भवतीति नियमो नास्ति । वल्मीकत्वस्यापि सम्भवादित्यर्थः । द्विवचनमिति ।। द्वयोर्विरुद्धयोरित्युक्तमित्यर्थः । न च द्वयोरित्येतावताऽपि उक्तशङ्कापरिहारसिद्धेः विरुद्धयोरित्यधिकमिति वाच्यम् । द्वयोरिति विशेषणस्यासमर्थतापरिहाराय विरुद्धग्रहणस्य सार्थकत्वात् । अत एवोक्तं सुधायां द्वयोरिति विशेषणस्यासमर्थतापरिहाराय विरुद्धग्रहणमिति । अयमर्थः । द्वावेव यौ विरुद्धधर्मावित्यनुपपन्नम् । धर्माणां बहुत्वेन धर्मयोर्द्वित्वावधारणस्य बाधितत्वात् । विरुद्धौ द्वावेवेत्यत्र नानुपपत्तिः । नित्यत्वानित्यत्वयोः द्वयोरेव विरुद्धतया तद्विरोधिनस्तृतीयधर्मस्याभावादिति । परस्परविरुद्धे इति ।। यद्यपि नेमे याथार्थ्ये परस्परविरुद्धरूपे१ तथाऽपि विप्रतिपन्नानुभवयाथार्थ्यस्य भेदसत्त्वगर्भत्वेन युक्तिजानुभवयाथार्थ्यस्य भेदाभावगर्भ-भ्रमत्ववद्विशेष्यकत्वादिरूपत्वेन परस्परविरहात्मकपदार्थघटितमूर्तिकत्वेनेयं तथोक्तिः । ज्ञानयोस्तद्धर्मयोर्वा विषयविरोधमनपेक्ष्य स्वतो विरोधाभावादिति भावः ।

कथं प्रयोक्तव्यमिति ।। न कथमपि प्रयोगः सम्भवतीति भावः । तत् कथमित्यतः उक्तकथन्तामेव प्रथयितुं सम्भावितप्रयोगप्रकारमाशङ्कते- भेदाद्यनुभव इति ।। विप्रतिपन्नभेदाद्यनुभव इत्यर्थः । व्याप्त्यभावादिति ।। यत्र युक्तिजानुभवस्य भ्रमत्वं तत्र भेदानुभवस्य यथार्थत्वमिति विशेषव्याप्तौ दृष्टान्ताभावेन व्याप्त्यभावादित्यर्थः । ननु तदपलापयुक्त्यनुभवस्यायथार्थताया एव हेतुत्वात्, यदपलापयुक्त्यनुभवस्यायथार्थत्वं तदनुभवस्य यथार्थत्वमिति सामान्यव्याप्तेरविकलत्वान्न व्याप्त्यभाव इति भावेन हेत्वन्तरमाशङ्कते- तदपलापेति ।। वैयर्थ्यादिति ।। व्याप्त्युपयोगितयैव हेतुविशेषणस्योपादानेन विशेषणवैयर्थ्ये 'विशिष्टस्य विशेषणे वैयर्थ्यमेकासिद्धौ च' इत्युक्तन्यायेन व्याप्त्यभावाद्व्याप्त्यसिद्धिरिति भावः ।

युक्तिपदपरित्यागेनैव तद्विरुद्धानुभवायाथार्थ्यस्यैव हेतुत्वाङ्गीकारात् यत्र यद्विरुद्धानुभवस्या-यथार्थत्वं तत्र तदनुभवस्य यथार्थत्वमिति व्याप्तेरविकलत्वान्न व्याप्त्यसिद्धिर्न वा वैयर्थ्यमित्यत आह- तदपनयनेऽपीति ।। वैयधिकरण्यादिति ।। तद्विरुद्धानुभवायथार्थत्वस्य विरुद्धानुभवमात्रनिष्ठत्वात् १भेदानुभवमात्रनिष्ठयथार्थत्वेन व्यधिकरणत्वादित्यर्थः । व्यधिकरणत्वस्य दूषणत्वस्यैवाभावा-न्नानुपपत्तिरिति भावेन तृतीयं प्रयोगप्रकारमुपादाय गूढाभिसन्धिः समाधत्ते - तद्विरुद्धप्रत्यय-स्येति ।। तदभावघटितभ्रमत्वावगाहिप्रत्ययस्येत्यर्थः । आशयमविद्वान् शङ्कते- न चेति ।। सिद्धान्ती स्वाशयमुद्घाटयति- तद्धीति ।। अतिप्रसङ्गादिति ।। 'आत्मा नित्यः कालस्य कार्ष्ण्यात्' इत्ययमपि हेतुः स्यादित्यतिप्रसङ्गादित्यर्थः

। यादृशी पक्षधर्मतेति ।। समवायेन पक्षनिष्ठत्वलक्षणेत्यर्थः । न तादृशीति ।। संयोगवृत्त्या धूमस्य पक्षे वृत्तावपि समवायवृत्त्या पक्षे तदवृत्तेरिति भावः । व्यव-स्थेति ।। रसाद्रूपानुमाने समवायवृत्त्यैव पक्षनिष्ठता । धूमानुमाने संयोगवृत्त्यैव सेत्येवं व्यवस्थे-त्यर्थः । चक्रभ्रमादाविति ।। देशविशेषादिनिष्ठकुलालासत्त्या सह चक्रनिष्ठभ्रमणस्य वैयधिकरण्येऽ-पीत्यर्थः । आदिपदेन ऊर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरवत्त्वादित्यादेः परिग्रहः । व्याप्तिदर्शना-दिति ।। यद्देशकालविशिष्टस्य यस्य यद्देशकालविशिष्टेन येन विना अनुपपत्तिस्तस्य तेन सा व्याप्तिरिति अनुपपत्तिरूपत्वाद्व्याप्तेः समानाधिकरणयोः साध्यसाधनयोरिव व्यधिकरणयोरपि तयोः सत्त्वादिति भावः ।

ननु चक्रधर्मेण तद्धर्मस्य कुलालासत्तेरेव साधनान्न साध्यसाधनयोर्वैयधिकरण्यम् । एवं नोत्तरदेशोऽत्र पक्षः । किं नाम नदी । तद्धर्मेणैव पूरेण तद्धर्मस्यैव वृष्टिमदुत्तरदेशसम्बन्धस्य साध्यत्वमिति न साध्यसाधनयोर्वैयधिकरण्यमिति शङ्कायाम्२, अस्योदाहरणस्य सामानाधिकरण्य-सम्भवेनानादरणीयत्वेऽपि

'रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यतः ।'

इति आदिशब्दसङ्गृहीते प्रयोगान्तरे रोहिण्या वा कृत्तिकाया वा समानाधिकरणधर्मद्वयस्य सम्पादयितुमशक्यत्वेन सत्यपि वैयधिकरण्ये व्याप्तिदर्शनादिति पूर्वोक्तदोषानुद्धार एवेति सत्यपि दोषे तमुपेक्ष्य दोषान्तरमेवाऽह- किं चेति ।। न स्यादिति ।। तत्रापि ऊर्ध्वदेश एव प्रवृत्तिप्रसङ्गेनेति शेषः । अथेति ।। तथा चार्वाग्भागे प्रवृत्तिर्युक्तेति भावः ।

ननु समानदेशकालयो रसरूपयोः व्याप्तिदर्शनात् कथं भिन्नदेशयोः कृत्तिकोदयरोहिण्युदया-सत्त्योर्व्याप्तिः स्यादिति १चेत्, तथा सति तद्वदेव तत एव कार्यकारणभावापन्नतया भिन्नकाल-योर्धूमवह्न्योरपि व्याप्त्यभावप्रसङ्गः । यदि च दर्शनबलेन रसरूपयोः समानदेशकालयोर्व्याप्ति-नियमेऽपि भिन्नकालयोर्धूमवह्न्योर्दर्शनबलादेव व्याप्तिरिति न तदभावप्रसङ्ग इति मन्यसे तर्हि दर्शनबलेन रसरूपयोः समानदेशकालयोः व्याप्तिनियमेऽपि भिन्नदेशयोः कृत्तिकोदयरोहिण्युदया-सत्त्योर्दर्शनबलादेव व्याप्तिरङ्गीकर्तव्यैव पक्षपाते कारणाभावादित्याशयेनाऽह- समानदेशकालयो-रित्यादिना ।। दर्शनादर्शनेति ।। काकस्य कार्ष्ण्यं व्याप्त्यभावादेव नित्यत्वासाधकम् । न पुनर्व्यधि-करणत्वात् । अतो नातिप्रसङ्गः । कुत एतत्? व्याप्त्याद्यङ्गसाकल्ये व्यधिकरणत्वमात्रेणासाधकत्वस्य क्वाप्यनुपलम्भात् । घटस्य कृतकत्वाच्छब्दोऽनित्य इत्यादौ दृष्टमिति चेत् घटस्येत्येतत् हेतुविशेषणं न वा? आद्ये वैयर्थ्यान्न व्याप्तिः । 'विशेषणे वैयर्थ्यमेकासिद्धौ च' इत्युक्तत्वात् । द्वितीये कथमसाधकत्वम्? अनित्यत्वव्याप्तमपि कृतकत्वं घटवृत्ति न शब्दनित्यत्वं२ साधयतीति चेन्न । व्याप्त्यभावस्यान्यत्र व्यवस्थापितत्वेन तदतिप्रसङ्गाभावादिति३ भावः ।

कतकरजोवदिति ।। वर्षाकाले पङ्काविलस्य जलस्य विमलीकरणार्थं कतकरूपद्रव्यविशेषचूर्णं निक्षिप्यते । तद्यथा प्रागवस्थितं जलमालिन्यम् अपहृत्य स्वप्रयुक्तमपि कालुष्यं स्वयमपहरति । यथा वा वेणुसङ्घर्षजो

वह्निर्वनं भस्मीकृत्य स्वयमपि भस्मसाद्भवति तथेत्यर्थः । किञ्चित्काल-मिति ।। युक्तिजानुभवस्य किञ्चित्कालं प्रमात्वाङ्गीकारे अभ्रान्तित्वेन भेदानुभवत्वादेस्तत्र व्यभिचारप्रसङ्गादिति भावः ।

## गोविन्दीया

भेदेति ।। आदिपेदन भेदसम्बन्धो वैलक्षण्यसम्बन्धश्च गृह्यत इत्यर्थः । तद्विरोधादिति ।। भेदग्राहिप्रत्यक्षानुकूलागमविरोधादित्यर्थः । विक्षेपसद्भावादिति ।। ईश्वरस्याऽवरणरूपज्ञानाभावेऽपि विक्षेपस्यातदाकाररूपभ्रमज्ञानस्य सद्भावादित्यर्थः । भेदानुवादित्वादिति ।। प्रत्यक्षसिद्धभेदानु-वादित्वादित्यर्थः । नितरामिति ।। प्रत्यक्षजन्यभेदाद्यनुभवस्य भ्रान्तित्वं पररीत्या सिद्धम् । युक्तिजन्यभेदाद्यनुभवस्य भ्रान्तित्वमुभयवादिसिद्धमिति नितरामिति पदेन सूचयतीत्यर्थः । अन्यथेति ।। युक्तिजन्यभेदानुभवस्याभ्रान्तित्वे तेनैव तत्रैव भेदाद्यनुभवत्वादिहेतोः सत्त्वाद् भ्रान्तित्वाभावादनैकान्त्यप्रसङ्गादित्यर्थः । हेतुसद्भावमेवोपपादयति- न हीति ।। विकल्प-रूपत्वादिति ।। सविकल्परूपत्वादित्यर्थः । न ह्यसङ्कीर्णेति ।। अयं भेद इत्यनुभवस्यासङ्कीर्ण-स्वरूपज्ञानत्वं भेदवैलक्षण्यादिविशिष्टस्वरूपज्ञानत्वं यथाऽस्ति तथा भेदानुभवो भ्रम इति युक्तिजानुभवस्यापि तादृशज्ञानत्वं न तु तद्व्यतिरिक्तं शृङ्गमस्तीत्यर्थः । तथा च युक्तिजानुभवस्यापि भेदाद्यनुभवत्वाद् भ्रान्तित्वमेवेति भावः । निर्विकल्पकं ब्रह्मैव तत्त्वम्, अन्यन्मिथ्येत्यङ्गीकाराद् युक्तिजानुभवस्य भ्रान्तित्वे किं नश्छिन्नमित्यर्थः । तथा सतीति ।। युक्तिजानुभवस्य भ्रान्तित्वे इत्यर्थः । उभयत इति ।। युक्तिजानुभवस्य भ्रान्तित्वा-भ्रान्तित्वाभ्यामित्यर्थः । भ्रान्तित्वे इति ।। युक्तिजानुभवस्य भ्रान्तित्वे बाधितत्वेन तदनुभव-जनकस्य भेदाद्यनुभवत्वहेतोर्दुष्टत्वम् । तथा च तस्यैव हेतोर्विप्रतिपन्नप्रत्यक्षजानुभवभ्रान्तित्व-साधनासामर्थ्यादित्यर्थः । सत्यमिति ।। तारतम्यं नास्तीत्यंशोऽङ्गीकारः । येन नितरामित्युक्त-मित्याक्षेपांशस्त्वनङ्गीकार इत्यर्थः । तथाऽपीति ।। भ्रान्तित्वे तारतम्याभावोऽपीत्यर्थः । तत्रेति ।। युक्तिजानुभवे इत्यर्थः । व्याप्त्यभावादिति ।। यत्किञ्चिद्युक्त्यनुभवयथार्थत्वस्य भेदानुभवयथार्थत्वेन व्याप्त्यभावादित्यर्थः । तदपनयन इति ।। युक्तिपदापनयनेऽपि वैयधिकरण्यानिस्ताराद् हेतुसाध्ययोः सामानाधिकरण्याभावादित्यर्थः । न चेति ।। अयथार्थत्वं तद्विरुद्धप्रत्यये वर्तते यथार्थत्वं भेदाद्यनुभवे वर्ततेऽतो व्यधिकरणत्वेन दोष इति न च वाच्यमित्यर्थः । तद्धीति ।। व्यधिकरणत्वं पक्षधर्मता-विघटनद्वारा व्याप्तिविघटनद्वारा वा । यदि वैयधिकरण्यं न दोषः, शब्दो नित्यः घटस्य कृतकत्वादि-त्यत्रापि वैयधिकरण्यं दोषो न स्यादित्यतिप्रसङ्गजननद्वारा वा दोषः स्यादित्यर्थः। न ब्रूम इति ।। विरुद्धप्रत्ययस्यायथार्थत्वं स्वतोऽसिद्धं न ब्रूमः । किन्तु पक्ष एवासिद्धं ब्रूम इत्यर्थः । तत्रेति ।। पक्षे इत्यर्थः । सममिति ।। दर्शनादेव पक्षेऽसदपि साध्यं साधयेदित्यर्थः । दृश्यते हीति ।। अयं प्रदेशः कुलालासत्तिमान् भ्रमवच्चक्रवत्त्वादित्यत्र व्यधिकरणयोरपि साध्यसाधकत्वं दृष्टमित्यर्थः । किमिति ।। एवमनुमानप्रवृत्तिः लौकिकी लोकानुसारिणी । किमुत पक्षधर्मतावश्यम्भावादित्थं कल्प्यत इत्यर्थः । परस्पराश्रयप्रसङ्गादिति ।। पक्षधर्मताया अनुमानाङ्गत्वे सिद्धेऽव्यभिचाराय तावत्प्रदेशस्य पक्षत्वाश्रयणसिद्धिः, तत्सिद्धौ च तत्सिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः । तत्रेति ।। अनुमानद्वये दर्शनमतिक्रम्य पक्षधर्मताव्यवस्था यथा वर्तते तथा क्वचित् पक्षधर्मता क्वचिन्नेति व्यवस्था किं नाऽश्रियत इत्यर्थः । वाचोभङ्ग्येति ।। वाचोयुक्त्येत्यर्थः । समानेति ।। समानदेशकालयो

रसरूपयोरित्यर्थः । भिन्नकालयोरिति ।। कार्यकारणयोरित्यर्थः । तृतीय-स्त्विति ।। अतिप्रसङ्गस्तु व्याप्तिदर्शनादर्शनाभ्यां निरसनीय इत्यर्थः । नन्विति ।। यथा वेणुसङ्घर्षणेऽग्निः वेणुं विनाश्य स्वयं विनश्यति यथा वा कतकरजः तद्वद्युक्तिः भेदाद्यनुभव-माभासीकृत्य स्वयमाभासीभविष्यतीति चेदित्यर्थः ।

## नारोपन्तीया

विकल्परूपत्वादिति । असाधारणधर्मप्रकारकविशिष्टज्ञानत्वादित्यर्थः । ननु तथाऽपि कथमयं भेदानुभवः स्यात् । न ह्ययं भेदानुभवो भिन्न इत्येवमाकारो ह्यनुभवः । किन्तु भेदानुभव-विशेष्यकः भ्रमत्वप्रकारक एव वेत्यत आह- न हीति ।। परेणापि इतरव्यावृत्तस्वरूपविषयकज्ञानमात्रं घटोऽयमित्याद्याकारकं भेदानुभव इति स्वीकृतम् । अन्यथा घटः पटाद्भिन्न इत्येवमादिरनुभव एव भेदानुभवः स्यात् । न तु घटोऽयं पटोऽयमित्यादिरूपः । ततश्च तद्बुद्धेरभ्रमत्वापत्त्या तद्विषयस्य घटादेरमिथ्यात्वं स्यादिति भावः ।

तथा भिन्नाधिकरणयोरपीति । ननु यदि भिन्नाधिकरणयोर्व्याप्तिरङ्गीक्रियते तर्हि व्याप्तिलक्षणस्य तत्राव्याप्तिः प्रसज्येत । पद्धतौ प्रमाणलक्षणादौ च 'अविनाभावो व्याप्तिः' इत्यभिहितम् । तत्र साधनस्य साध्येन विनाभावः साध्याभाववदवृत्तित्वमिति यावत् इत्येवार्थः स्वीकर्तव्यः । प्रकारान्तरासम्भवात् । तथोर्ध्वदेशवृष्टिरूपसाध्याभाववत्यधोदेशे वर्तमानस्य पूरस्य कथं तद्व्याप्तत्वं स्यादिति चेत् । मैवम् । भावानवबोधात् । अयं हि लक्षणवाक्यार्थः - यद्देशकालावस्थितस्य यस्य यद्देशकालावस्थितं यं विना अभावोऽघटनम् प्रमाणविरोध इति यावत् । तथा च यद्देशकालयोः साध्यत्वाभिमतस्य सत्तामनङ्गीकृत्य, यद्देशकालयोः साधनत्वाभिमतस्य सत्तायामङ्गीक्रियमाणायां प्रमाणविरोध आपतति, तयोर्व्याप्तिरित्युक्तं भवति । लक्ष्यस्याप्यननुगमाल्लक्षणाननुगमो न दोष इति परस्यापि सम्मतमेव । भवति हि - ऊर्ध्वदेशे वृष्टिं विना अधोदेशे पूराङ्गीकारे, अधोभागे वह्निं विना ऊर्ध्वभागे धूमाङ्गीकारे, तत्प्रदेशावच्छिन्नरूपं विना तत्प्रदेश एव रसाङ्गीकारे च प्रमाणविरोध इति सर्वेषां व्याप्तिः । एवं केवलान्वयिन्यपि द्रष्टव्यम् ।

ननु यद्यपि सिद्धान्ते अनुगतधर्मानङ्गीकारात् केवलान्वयित्वाभिमतस्य प्रमेयत्वादेरभावः सिध्येत् । तथा च कथमसौ व्याप्तिस्वरूपोपयोगी स्यात् । किन्तु सामान्याभावो वा, यावद्विशेषाभावो वा ऐकाधिकरण्यावच्छिन्न इति वक्तव्यम् । अन्यथा वह्निविशेषाभाववद्वृत्तित्वाद्धूमादेरपि वह्निव्याप्यत्वं न स्यादिति चेत् । सत्यम् । अत एवाङ्गीकार इत्युक्तत्वात् । अङ्गीकारो हि ज्ञानम् । तच्चासतोऽपि सम्भवतीति प्रागेवोपपादितम् आकर एव । अवश्यं चैतदेवम् । अन्यथा तर्कस्य प्रमाणत्वपक्षे वा, प्रमाणानुग्राहकत्वपक्षे वा, आपाद्यापादकयोर्व्याप्तिरङ्गीकार्या । तत्र हि यदि घटः घटं प्रति कारणं स्यात् तर्ह्यात्माश्रयत्वादिकं स्यादित्यादिकमापाद्यते । क्वचिदन्योन्याश्रयोऽनवस्था गौरवमित्यादि । न च तत्र सामानाधिकरण्यव्याप्तिर्वक्तुं शक्यते । आत्माश्रयत्वादेरप्रसिद्ध्या सामानाधिकरण्यस्यैवा-योगात् । मन्मते आत्माश्रयत्वं नाम यावत्स्वस्य पूर्ववृत्तित्वं, स्वप्रागभावावच्छिन्नकालवृत्तित्वम् । तदनङ्गीकारे स्वकारणत्वाङ्गीकारे प्रमाणविरोध आपततीति सुस्थः प्रबन्धः । ननु तर्हि नियमो व्याप्तिरित्यग्रिमग्रन्थेषु दृश्यते । तत्र का गतिरित्याशङ्कायामुक्तं पद्धतौ -

‘साहचर्यनियम इति यावत्’ इति । यो हि साहचर्यनियमो व्याप्तित्वेनोच्यते सोऽपीति यावत् । एतदेवाभिप्रेत्य तस्याप्यत्रैव पर्यवसानमिति न कश्चित् क्षुद्रोपद्रव इति दिक् ।

कतकरजोवदिति ।। वर्षाकाले पङ्काविलस्य जलस्य विमलीकरणार्थं द्रव्यविशेषस्य कतकाख्यस्य चूर्णं जले प्रक्षिप्यते । तद्यथा प्रागवस्थितं जलमालिन्यम् अपहृत्य, स्वप्रयुक्तमपि कालुष्यं स्वयमप-हरति । यथा वा वेणुसङ्घर्षजो वह्निरपि वनं भस्मीकृत्य स्वयमपि भस्मसाद्भवति तथेत्यर्थः ।

## जनार्दनभट्टीया

ननु भेदप्रत्यक्षस्य भ्रमत्वेऽपि आगमेन भेदसिद्धिरस्तु इत्यत आह – आगमस्यापीति ।। भेदागमस्यापीत्यर्थः । विकल्परूपत्वादिति ।। भेदनिरूप्यत्वादित्यर्थः । ‘योऽनुभवो येन निरूप्यते स तदीयः’ इति व्याप्तेरिति भावः । ननु भेदस्य ‘भेदानुभवो भ्रमः’ इति अनुभवनिरूपकभेदानुभव-निरूपकत्वेन साक्षात् तन्निरूपकत्वाभावात्, कथं ‘भेदानुभवो भ्रमः’ इत्यस्य भेदानुभवत्वमित्यत आह – न हीति ।। असङ्कीर्णम् = स्वनिष्ठासाधारणधर्मेण विषयीक्रियमाणं यत्स्वरूपमित्यर्थः । तथा च ‘योऽनुभवो येन विषयेण = स्वनिष्ठासाधारणप्रकारेण निरूप्यते, सः= अनुभवः तत्प्रकारविशिष्टस्य तस्य अनुभवः’ इति व्याप्तिरभिमता । एवञ्च ‘भेदानुभवो भ्रमः’ इत्यनुभवोऽपि भेदेनाविषयेन भेदत्वेन प्रकारेण निरूप्यते इति भेदानुभव एव । साक्षात् निरूप्यत्वमप्रयोजकमिति भावः । अयमिति ।। भेदादिप्रत्यक्षो भ्रमः भेदादिप्रत्ययत्वाद् इत्यादियुक्तिजानुभव इत्यर्थः । निर्विकल्पकमिति ।। निर्विशेषमित्यर्थः । ब्रह्मैव तत्वमिति ।। अयमङ्गीकार एव । भेदमिथ्यात्वाङ्गीकारत्वाद् अस्यार्थ इत्यभिमानः । अभिमानमात्रमेवेदम् । न हि निर्विशेषं ब्रह्मैव तत्वमिति ज्ञानमेव भेदमिथ्यात्वज्ञानम् । ब्रह्मप्रतियोगिकतादात्म्यादिसर्वनिषेधविषयत्वात् । भेदो मिथ्येति ज्ञानस्य च तादात्म्यप्रतियोगिकाभावमात्रनिषेधविषयत्वादिना भिन्नविषयत्वादित्याह – तथा सतीति ।। भ्रान्तित्वानुभवस्य भ्रमत्व इत्यर्थः । अनयोक्त्येति ।। नितरामित्युक्तेत्यर्थः । युक्तिजानुभवस्येति ।। ‘भेदानुभवो भ्रमः’ इत्यनुभवस्येत्यर्थः । विप्रतिपन्नभेदाद्यनुभवस्येति ।। ‘यदा पश्यः पश्यते रुग्मवर्णम्’ इत्याद्यागमजन्यस्येत्यर्थः । परस्परेति ।। परशब्दद्विर्वचनस्य प्रयोजनमाह – त्र्यादिष्विति ।।

घटपटकुड्यादिषु एकस्य घटत्वस्य निषेधे इतरैकपटत्वविधिप्रतीतिः नास्ति । घटत्वपटत्वाभावेऽपि कुड्यत्वस्य कोट्यन्तरसम्भवादित्यर्थः । तथा च परस्परविरहव्यापकयोः अन्यतरनिषेधे अन्यतरस्य सत्त्वनियमोऽत्राभिमत इति भावः । परस्परविरुद्धेति ।। परस्परविरहव्यापके इत्यर्थः । एतेन विरुद्धत्वं यदि सहानवस्थाननियमः, यदि वा परस्परविरहव्यापकत्वम् उभयथाऽपि अन्यतरनिषेधे अन्यतर-सत्वनियमासम्भवः । गोत्व-अश्वत्वयोः तादृशयोः अन्यतरस्य घटादौ निषेधेऽपि अन्यतरसत्वाभावादिति निरस्तम् । तयोः परस्परविरहव्यापकत्वाभावात् । सर्वत्र दर्शनादिति ।। गोत्वाश्वत्वात्यन्ताभावादिस्थले सर्वत्र दर्शनादित्यर्थः । स्वमतावष्टम्भेनेदम् । व्याप्त्यभावादिति ।। सामानाधिकरण्यघटित-व्याप्तेरभावादित्यर्थः । व्याप्तिः साध्यसाधनसामानाधिकरण्यरूपैव न तु हेतोः साध्येन विना अनुपपत्ति-रूपेति शङ्कितुराशयः । अनुपपत्तिरूपव्याप्तिसम्पादनाय हेतौ विशेषणप्रक्षेपमाशङ्क्य निराकरोति– तदपलापेति ।। तदपलापेति

विशेषणे सति यस्य अनुभवस्य याथार्थ्यापलापयुक्तिः अयथार्था, सोऽपलाप्यमानयाथार्थ्याश्रयत्वेन अभिमतो यथार्थ इति व्याप्तिः सम्भवतीति परिहर्तुराशयः ।

ननु युक्तिपदं मया नोपादीयत इति तद्वैयर्थ्यम् इष्टमेवेत्यत आह – तदपनयेति ।। युक्तिपदपरित्यागेऽपीत्यर्थः । साध्येन विना साधनस्य अनुपपत्तिरेव व्याप्तिः । सामानाधिकरण्यं तु अवर्जनीयसन्निधिः, न तु व्याप्तिशरीरप्रविष्टम् । अनुपपत्तिश्च प्रकृतेऽपि अस्तीत्याशयेन वैयधिकरण्येनैव अनुमानं प्रयुङ्क्ते – मैवमित्यादिना ।। स्वयमसिद्धमिति ।। पक्षे अविद्यमानत्वमेव असिद्धत्वम् इति शङ्कितुरभिमानः१ । न ब्रूमोऽसिद्धमिति२ ।। वयम् असिद्धं साधयतीति न ब्रूम इति पूर्वेणान्वयः । पक्ष एवासिद्धम् अविद्यमानं पक्षादन्यत्र समुचितदेशे विद्यमानमपि साधनं साध्यं साधयतीति ब्रूम इति योजना ।

इदमुक्तं भवति– अनुपपत्तिरेव व्याप्तिः । न तु सामान्याधिकरण्यगर्भा । व्यधिकरणयोरपि व्याप्तेः उपपादयिष्यमाणत्वात् । प्रायशः पक्षधर्मतायाः सत्वेऽपि तस्याः समुचितदेशवृत्तितारूपेणैव उप-योगः । समुचितदेशवृत्तितायाः अनुमानाङ्गत्वं तु अस्माकमिष्टमेवेति पक्षधर्मतायाः अनावश्यकतां प्रतिबन्दीमुखेन द्रढयति – अत्रेत्यादिना ।। तावानिति ।। चक्रभ्रमकुलालासत्त्युभयाधिकरणप्रदेश इत्यर्थः । व्याप्तिदर्शनादिति ।। साधनस्य साध्येन विना अनुपपत्तिरूपव्याप्तिप्रदर्शनादित्यर्थः ।

ननु व्यधिकरणयोरपि व्याप्त्यभ्युपगमे तादृशयोः शीतस्पर्शतेजस्त्वयोरपि व्याप्त्यापत्त्या अन्यतरेण अन्यतरानुमानप्रसङ्गाद् व्यधिकरणत्वम् अनुमानदोष इति तृतीयपक्षं निराह – तृतीयस्त्विति ।। यस्य व्यधिकरणस्य समानाधिकरणस्य वा येन विना अनुपपत्तिदर्शनं तस्य तेन व्याप्तिः । यस्य तु येन विना अनुपपत्त्यदर्शनं न तस्य तेन व्याप्तिरिति ३दर्शनादर्शनाभ्याम् इति प्रसङ्गो दर्शनीय इत्यर्थः । अपलापयुक्त्यनुभवयाथार्थ्यस्य अपलपनीयानुभवयाथार्थ्येन विनाऽनुपपत्तिरेव नास्ति । येन तयोः व्याप्तिः स्यादिति शङ्कते – नन्विति ।।

## एकजीववादपक्षे ..

**एकजीववादनिरासेन तत्र मुक्तत्वानुमानस्य विपक्षे बाधकाभावशङ्कानिरासः**

### श्रीमज्जयतीर्थटीका

यदुक्तं मुक्तामुक्तयोरित्यादि तदनुपपन्नं ब्रह्मैव ह्यविद्यावशाज्जीवभावमापन्नं सर्वक्षेत्रेषु संसरति न तु प्रतिक्षेत्रं क्षेत्रज्ञभेदोऽस्ति । तदेवोत्पन्नायां विद्यायां यदा मुच्यते न तदा किञ्चिदव-शिष्यते । शुकवामदेवादिमुक्तिवादास्त्वर्थवादा एव । अतो येषां तत्त्वतः कल्पनया वा बहवो जीवा ईश्वरश्चैकः तत्र यस्याविद्या निवृत्ता स मुच्यते अन्ये संसरन्तीति मतम् । तेषामेवोक्तोऽ-तिप्रसङ्गः सङ्गच्छते । न त्वेकजीववादिनाम् । तेषां मुक्त्यवस्थायां संसारिणोऽभावात् संसाराव-स्थायां मुक्तस्याभावात् । तथा चैकजीववादिनं प्रति विपक्षे बाधकाभावादप्रयोजको मुक्तत्व-हेतुरित्यत आह-

## मूल

*एकजीववादपक्षे तन्निष्ठानां मृत्यनन्तरमपि*

*विश्वस्यानिवृत्तत्वाद्भेदनिष्ठ एवैकजीव इत्यापतति ।*

ये तु सर्वक्षेत्रेष्वेक एव जीवस्तदज्ञानवशादेव विश्वप्रतिभासो ज्ञानात्तन्मोक्षे सति न किञ्चिदवशिष्यत इति मन्यन्ते तत्पक्षे तावत्स एको जीवः साम्प्रतं भेदनिष्ठ एव वर्तत इत्यङ्गीकार्यं प्राप्नोति । कुतः? यद्यद्वैतनिष्ठोऽसौ स्यात्तदा तथात्वेन परप्रसिद्धः कश्चित् पुरुषः स्यात् । न चासौ तथा । तथात्वे तन्मृत्यनन्तरं विश्वनिवृत्तिः स्यात् । न चैवम् । अतोऽसौ नैको जीवोऽद्वैतनिष्ठः किं नाम भेदनिष्ठ इति स्वीकर्तव्यम् ? ततः किमित्यत आह-

**मूल**

*तस्य च तत्रैवाग्रहान्न कदाचिद्भेदनिवृत्तिरित्यनिवृत्तिरेव भवति ।*

इतिशब्दो हेतौ । अनिवृत्तिः संसारस्येति शेषः । यदि चैको जीवः साम्प्रतं भेदनिष्ठः स्यात् तदा तस्य कालान्तरेऽपि तत्संस्कारेण भेद एवाऽग्रहो वर्धेत न त्वद्वैतसाक्षात्कारः कदाचित् । तथा च निवर्तकाभावान्न कदाचिदपि भेदनिवृत्तिः स्यात् । ततश्च दुःखादिसंसारस्यानिवृत्तिरेव स्यात् । भेदे सति दुःखादिसद्भावनियमाङ्गीकारात् । प्रागनिवृत्ता एव कामक्रोधादयो निवर्तमाना दृष्टाः । तथा भेदप्रत्ययोऽपि निवर्तत इति चेन्न । अनुमानपक्षे प्रागुक्तदोषदूषितत्वात् । सम्भावनापक्षे प्रमाणस्य वक्तव्यत्वात् । मोक्षश्रुतिः प्रमाणमिति चेन्न । शुकवामदेवादिमुक्तिवादवदर्थवादत्वस्यापि सम्भवात् ।

## श्रीविजयीन्द्रभिक्षु

ननु तथाऽपि मुक्तत्वहेतुरप्रयोजकः । विपक्षे बाधकाभावात् । न च मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो वा मुक्तत्वं स्यादिति बाधकमुक्तमिति वाच्यम् । तस्य बहुजीववादे प्रसारसम्भवेऽपि एकजीववादे मुक्तामुक्तव्यवस्थित्यभावेनासम्भवादित्येकजीववादी शङ्कते- यदुक्तमिति ।।

ननु शुको मुक्तो वामदेवो मुक्त इति श्रुत्यादौ शुकादीनां मुक्तत्वप्रतीतेस्तस्य चैकजीववादेऽ-सम्भवाद्बहुजीववाद एवाङ्गीकार्य इत्यत आह- शुकेति ।। 'अनेन जीवेनाऽत्मनाऽनुप्रविश्य' इति अद्वितीयब्रह्मण एव जीवभावेनानुप्रवेशश्रवणात्तद्विरोधेन शुकादिमुक्तिवादानां स्वार्थपरत्वं त्यक्तव्यमिति भावः । तत्त्वत इति ।। तत्त्वत इति भास्करमते । कल्पनया वेति मायावादिमते । शङ्कोत्तरत्वेनावतारयति । अत आहेति ।। तन्निष्ठानां मृत्यनन्तरं विश्वस्यानिवृत्तत्वादित्युक्तम् । 'औतनिष्ठानां तत्वज्ञानित्वावश्यम्भावेन अज्ञानतत्कार्यनिवृत्त्यवश्यम्भावेन तन्निवृत्त्यनन्तरं प्रपञ्चस्यानिवृत्त्ययोगात्' इति तद्व्याचष्टे- ये तु सर्वक्षेत्रेष्विति ।। भेदनिष्ठ एवेति ।। अप्रामाण्य-शङ्काशून्यभेदनिश्चयतदाहितानादिसंस्कारवानित्यर्थः । तथात्वे इति ।।

पुरुषविशेषस्याद्वैतनिष्ठत्वेन परप्रसिद्धत्व इत्यर्थः । निवृत्तिः स्यादिति ।। कल्पनाहेतुभूताज्ञानशरीरेन्द्रियादेरभावादिति भावः । अनिवृत्तिरित्यस्य न कदाचिद्भेदनिवृत्तिरित्यनेन पौनरुक्त्यादानर्थक्यमाशङ्क्य योग्यसाध्य-मध्याहरति- संसारस्येतीति ।।

नन्विदानीं भेदनिष्ठस्यापि कालान्तरेऽद्वैतसाक्षात्कारसम्भवात्ततः संसारनिवृत्तिः किं न स्यादित्याशङ्क्य व्याचष्टे- यदि चेति ।। तत्संस्कारेणेति ।। अप्रामाण्यशङ्काशून्यभेदनिश्चयाहित-तद्वासनापरम्परयेत्यर्थः । आग्रहः अप्रामाण्यशङ्काशून्यनिश्चयप्रयुक्तोऽधिको वर्धेत । सर्वदा स्वसमानजातीयसंवलित एव तिष्ठेत् । न त्विति ।। विरोधिनिश्चयसद्भावादिति भावः । न कदाचिद्भेदनिवृत्तिरिति मूलांशं व्याचष्टे- तथा चेति ।। दुःखादिसंसारस्येति ।। दुःखादिरूप-संसारस्येत्यर्थः । ननु भेदसत्त्वेऽपि दुःखं मास्तु । तस्य तदहेतुत्वादित्यत आह- भेदे सतीति ।। तथा च भेदाध्यासहेतुत्वेनाज्ञानादेः सत्वस्याऽवश्यकत्वे तत्प्रयुक्तदुःखाद्यनिवृत्तिप्रसङ्गो दुर्वार इति भावः । नन्विदानीमनिवृत्तोऽपि भेदः कल्पान्तरे निवर्तिष्यते । न हि प्रागनिवृत्तस्य निवृत्तिर्नेति नियमोऽस्ति कामादौ व्यभिचारादित्याशङ्कते- प्रागिति ।। अनेन भेद उत्तरकाले निवर्तते प्रागनिवृत्तत्वात् कोपादिवदित्यनुमानं विवक्षितं सम्भावनामात्रं वा । नाऽद्य इत्याह- अनुमानपक्षे प्रागुक्तेति ।। जीवेश्वरस्वरूपस्य तद्भेदस्येश्वरप्रत्यक्षविषयत्वेन पारमार्थिकत्वेन तन्निवृत्तेरसम्भवात् तन्निवृत्तिसाधने बाध इति प्रागुक्तदोषदुष्टत्वादित्यर्थः । वक्तव्यत्वादिति ।। सम्भावनामात्रस्या-साधकत्वादिति भावः । अर्थवादत्वस्यापीति ।। न च मोक्षश्रुतिमात्रस्यार्थवादत्वं नोपपद्यते । विध्यन्तराभावादिति वाच्यम् । स्वार्थपरत्वत्यागमात्रेऽर्थवादत्वोक्तेरिति भावः ।

## श्रीवेदेशतीर्थ

सर्वक्षेत्रेषु संसरतीति ।। अनेनाशरीरैकजीववादिमतमनूद्यते । न त्वेकशरीरैकजीववादिमतं, तन्मते एकस्यैव शरीरस्य सजीवत्वेनेतरेषां निर्जीवत्वेन सर्वक्षेत्रेष्वित्यस्यासम्भवात् ।

ननु तद्विहायेदं कस्मादनूदितमिति चेत् । तत्र तन्निष्ठानामिति वक्ष्यमाणदूषणायोगात् । न ह्येकशरीरैकजीववादिमते जीवस्य शरीरोपाधिकं वाऽनेकत्वमस्ति । येन तन्निष्ठानामिति बहुवचन-मुपपन्नं स्यात् । उक्तरीत्यैकजीववादिमतद्वैविध्यं च तद्ग्रन्थे न्यायामृतादौ च स्पष्टमिति न काचिदत्रा-नुपपत्तिरिति ध्येयम् । तत्त्वत इति भास्करमते । कल्पनया वेति मायावादिमते । यैरीश्वरोऽङ्गीक्रियते तेषामेवोक्तरीत्या तदीयभेदप्रत्यक्षविरोधः । मया तु ईश्वरस्यापि स्वाप्नवज्जीवाज्ञानपरिकल्पित-त्वाङ्गीकारान्न मम तदीयप्रत्यक्षविरोध इत्यभिप्रेत्येश्वरश्चैक इत्युक्तम् । एकजीववादिपक्ष इत्यनया सामान्योक्त्यैकशरीरैकजीववादिमतप्राप्तौ तत्र चोक्तरीत्या तन्निष्ठानामित्यस्यासम्भवादाह- येषामिति ।।

भेदनिष्ठ एवेत्यादिमूलं योजयति- साम्प्रतमिति ।। तदुपपादकत्वेन तन्निष्ठानामित्यादिमूलांशं व्याख्यातुमाह- यद्यद्वैतेत्यादिना ।। परप्रसिद्ध इति ।। औतज्ञानित्वेन परप्रसिद्धगौडपादादि-कतिपयदेहावच्छिन्नः स्यात् । न तु द्वैतज्ञानित्वेन प्रसिद्धदेहावच्छिन्नः । तथात्वेऽद्वैतनिष्ठत्वानुप-पत्तेः । तद्देहावच्छिन्नस्य मोक्षोऽन्यदेहावच्छिन्नस्य बन्ध इति बन्धमोक्षसाङ्कर्यप्रसङ्गाच्च । एवं च सर्वक्षेत्रेष्वेक एव जीव इति गतमिति

भावः । कश्चित् कतिपयदेहावच्छिन्नः । न चात्रेष्टापत्तिरित्याह- न चेति ।। तन्मृत्यनन्तरमिति ।। तेषां जीवन्मुक्तत्वाङ्गीकारेण तच्छरीरपातानन्तरमेव मोक्षाभ्युप-गमादिति भावः ।

विश्वभ्रमानुवृत्तिदर्शनान्नात्रेष्टापत्तिरित्याह- न चैवमिति ।। एवमपेक्षितं पूरयित्वा विश्वस्या-निवृत्तत्वाद्भेदनिष्ठ एवेत्यनेन सम्बन्धं दर्शयन्नवधारणव्यावर्त्यं दर्शयति- अत इति ।। विश्वस्या-निवृत्तत्वादित्यर्थः । वर्धेतेति ।।

'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन् ।'

इति वचनादिति भावः । भेदे सतीति ।। भेदाध्यासहेतुत्वेनाज्ञानादेः सत्त्वस्याऽवश्यकत्वे तत्प्रयुक्तदुःखादिप्रसङ्गो दुर्वार इति भावः । अनुमानपक्ष इति ।। विमतो भेदप्रत्ययः, कालान्तरे निवृत्तो भविष्यति, अन्तःकरणवृत्तित्वात् क्रोधादिवदित्यनुमानपक्ष इत्यर्थः । प्रागुक्तेति ।। तदपलापयुक्तेर्नितरां भ्रान्तित्वादिति प्रागुक्तेत्यर्थः । अत्र निवृत्तिशब्देन परस्य बाध एव विवक्षितो न नाशमात्रम् । तथात्वे प्रत्ययनाशेऽपि भेदस्य सत्यतयाऽप्युपपत्तेः । तथा च भेदप्रत्ययो बाध्य इत्यनुमितेरप्यन्तःकरणवृत्तित्वेन बाध्यत्वे भेदप्रत्ययस्य बाध्यत्वासिद्धिः । अबाध्यत्वे तत्रैव व्यभिचारेण हेतोरसामर्थ्ये पुनर्भेदप्रत्यये बाध्यत्वासिद्धिरेवेति प्रागुक्तदोषो द्रष्टव्यः ।

वक्तव्यत्वादिति ।। सम्भावनामात्रस्यासाधकत्वादिति भावः । मोक्षश्रुतिरिति ।। 'तरति शोकमात्मवित्' इत्यद्वैतज्ञानान्मोक्षस्तावच्छ्रूयते । एवं चैतच्छ्रुतिप्रामाण्याददद्वैतज्ञानं भविष्यति । तेन च भेदप्रत्ययनिवृत्तिरपि भविष्यतीति कल्प्यते । अन्यथैतच्छ्रुतिप्रामाण्याभावापत्तेरिति भावः ।

## द्वैतद्युमणि

एकजीववादमवष्टभ्य मुक्तत्वानुमाने विपक्षे बाधकतर्काभावमाशङ्कते- यदुक्तमित्या-दिना ।। ब्रह्मैवेति ।। एवकारेण बहुजीववादिमत इव अविद्याबिम्बभूतात् सर्वैश्वर्यादिमच्चेतन-रूपादीश्वरादनादितोऽभिन्नोऽविद्याप्रतिबिम्बभूतो जीव इत्यस्य व्यवच्छेदः । व्याघ्रकुलसंवर्धित-राजपुत्रदृष्टान्ते ब्रह्मणः स्वाज्ञानात् संसारः, ज्ञाने सति मोक्ष इति परभाष्यकारेण बृहदारण्यकभाष्ये निगदितत्वात् । सर्वक्षेत्रेषु सुरनरतिर्यगादिदेहेषु संसरति । तत्तद्देहगान्तःकरणोपाध्यवच्छिन्नं सत् तत्तदन्तःकरणावच्छिन्नसुखाद्यनुभवितृ भवति । न त्विति ।। ननु सर्वक्षेत्रेष्वेकस्य सत्त्वे एकस्मिन् सुप्ते सर्वेषां ज्ञानाभावापातेन कस्यापि जागरानुपपत्तिः । एकस्मिन् सुखिनि दुःखिनि वा सति सर्वेऽपि तदनुसन्धानवन्तः स्युरिति चेन्न । तत्तन्मनोवच्छिन्नानां मनोरूपोपाधिभिन्नत्वाभ्युपगमेनौपाधिक-भेदाभावसहितस्वरूपैक्यरूपप्रयोजकाभावेनानुसन्धानाप्रसक्तेः । तन्मनसो लीनत्वेन तत्र सुप्तिसत्त्वेऽप्यन्यमनसामलीनत्वेनान्येषां जागराद्यनुपपत्तेरभावात् ।

## एकजीववादपक्षे..

**बहुजीववादादेकजीववादस्य विशेषसमर्थनम्**

*एकजीववादपक्षे*

## श्रीमज्जयतीर्थटीका

ननु तर्हि तत्तत्सुखदुःखादीनां तत्प्रयोजककर्मणां च प्रतिनियतत्वे बहुजीववादादस्य को विशेष इति चेदुच्यते । अविद्यैव जीवोपाधिर्न त्वन्तःकरणम् । एवं ये बहुजीववादिनस्तेषामन्तःकरणानामेव प्रतिजीवं भिन्नत्वाज्जीवत्वम् । तत्र प्रत्यविद्याजन्मानि जगन्त्यपि प्रतिजीवं भिन्नानीति चेद् ईश्वर-मायोपादानमम्बरादिकं सर्वजीवसाधारणम् । दुःखादिमात्रं स्वस्वाविद्योपादानकमित्यन्ये । ईश्वरा-श्रिता माया । नानापुरुषसम्बन्ध्यविद्योपादानकमम्बरादि । एकस्य मुक्तौ तदविद्याघटितोपादानक-जगतो नाशेन जगदन्तरमेवोत्पद्यते । एकतन्तुनाशेन पटनाशे सत्युर्वरिततन्तुभिः पटान्तरवदित्यादि-प्रकाराः सिद्धान्तकोशादिग्रन्थेषु दर्शिताः । यदा त्वेकैवाविद्या तदुपाधिकजीव एक एव । तत्र ब्रह्मजीवयोः बिम्बप्रतिबिम्बभावाभ्युपगमेन बिम्बब्रह्मणि सर्वज्ञत्वसर्वेश्वरत्वादिकमुपादायैका व्यवस्था । तत्रापि वक्ष्यमाणरीतिरूह्या ।।

अविद्यैकैव । तदुपहितचेतनो जीवः । न तु बिम्बप्रतिबिम्बभावादिस्वीकारेण जीवेश्वरादि-व्यवस्थेत्यपरः कल्पः । स चैकं शरीरमधितिष्ठति । अन्ये सर्वेऽपि निर्जीवा एव । स्वप्नदृष्टशरीर-वत् । ईश्वरोऽपि जगत्कर्तृत्वादिना तत्कल्पित एव । तदनुवादिन्यो जीवकर्तृत्वनिषेधेनेश्वर-कर्तृत्वावेदकश्रुतय इत्येकः पक्षः । अस्य पक्षस्यात्यन्तमनुभवविरुद्धत्वादेकाविद्यापरिणामानि नानामनांसि । गृहाकाशस्यैव घटाद्यवच्छिन्नत्ववत् । अविद्योपहितस्यैव तत्तन्मनोऽवच्छिन्नतया तत्तच्छरीरमात्राभिमानितया जीवाभासत्वम् । न तदधिष्ठेयानि तानि शरीराणि निर्जीवानि । ते च जीवाभासाः मनोरूपागन्तुकोपाधिभेदात् परस्परमत्यन्तभिन्नाः परस्परसुखदुःखानुसन्धानरहिताः मनःपरिणामभूतसुखादिकं स्वयमेवानुभवन्ति । परन्तु स्वोपाधिभूताविद्यापरिणतनानामनो-वच्छिन्नस्तदधिष्ठितसर्वशरीराभिमानी सर्वसुखाद्यनुसन्धाता समष्टिरूप एको जीवः हिरण्यगर्भः स्वीक्रियते । बहुजीववादे तु नैवमित्ययमेव विशेषः । एकस्य महागृहावच्छिन्नाकाशस्य तदन्तर्गत-घटशरावाद्यवच्छिन्नत्ववत् तस्योक्तसमष्टिरूपत्वं सङ्गच्छते । तस्यैव जगत्कल्पकत्वम् । तस्मिन् कल्पान्ते सुप्ते जगतो विलयः । तस्मिन् संस्कारात्मना स्थितप्रारब्धकर्मादिवशादुत्थिते पुनर्जग-दुत्पत्तिः । जीवकर्तृत्वनिषेधकश्रुतीनामविद्योपहितकर्तृत्वनिषेधपरत्वाभावेन विरोधाभावात् ।

## श्रीराघवेन्द्रतीर्थ

एकजीवमतमनुवदति- यदुक्तमित्यादिना ।। सर्वक्षेत्रेषु सर्वदेहेषु । क्षेत्रज्ञभेदो जीवभेदः । तदेवेति ।। संसरद्ब्रह्मैवेत्यर्थः । अर्थवादा एवेति ।। मुक्तसाधनप्रशंसापरा एव न त्वर्थपरा इत्यर्थः । उक्तोऽतिप्रसङ्ग इति ।। मुक्तस्य संसारः संसारिणो वा मुक्तत्वं स्यादिति प्रसङ्ग इत्यर्थः। साम्प्रत-मिति ।। इदानीं भेदनिष्ठ एव भेदनिश्चयवानेवेत्यर्थः । तथात्वेनेति ।। औतनिश्चयवत्त्वेनेत्यर्थः । तस्येति पदपरामृष्टं दर्शयन् व्याचष्टे- यदि चैको जीव इति ।। शङ्कते- प्रागनिवृत्ता-विति ।। अनुमानपक्ष इति ।। भेदप्रत्ययो निवर्तते प्रागनिवृत्तत्वात्

। क्रोधादिवदित्यनुमानपक्षे एतदनुमानं न निवर्तते चेत्तत्रैव हेतोरनैकान्त्यम् । निवर्तते चेद्भेदप्रत्ययस्य न निवृत्तिसिद्धिरिति वा प्रागुक्तेश्वरप्रत्यक्षादिसिद्धत्वेन निवृत्तेरयुक्ततया बाधादिदोषदूषितत्वादिति वाऽर्थः । सर्वक्षेत्रेष्विति ।। सर्वशरीरेष्वित्यर्थः । 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते'१ इति वचनात् । संसरतीति । एक एव जीवस्तस्यैवानेकशरीराणीत्येवम् अनेकशरीरैकजीववादिमतमनू-द्यते । न त्वेकशरीरैकजीववादिमतम् । एतन्मते एकस्यैव शरीरस्य जीववत्त्वेनेतरेषां निर्जीवत्वेन सर्वक्षेत्रेष्वित्यस्यासम्भवात् । ननु एतन्मतं विहायानेकशरीरैकजीववादिमतमनूद्यत इत्यत्र किं ज्ञापकमिति चेद् उच्यते । उत्तरत्र तन्निष्ठानामिति दूषणमुच्यते । इदं च दूषणं एकशरीरैकजीववादिमते न सम्भवति । एकस्य जीवस्य शरीरौपाधिकानेकत्वस्याप्यभावेन तन्निष्ठानामिति बहुवचना-योगादिति द्रष्टव्यम् । एवमेकजीववादिमतद्वैविध्यं न्यायामृते स्पष्टम् । क्षेत्रज्ञभेदः जीवभेदः । तदेव ब्रह्मैव । ननु तर्हि शुको मुक्तो वामदेवश्च मुक्त इत्यादिवचनानां का गतिः ? इत्यत आह- शुकेति ।। भास्करमतानुसारेण तत्त्वत इत्युक्तम् । मायावादिरीत्या कल्पनया वेत्युक्तम् । ईश्वरश्चैकस्तिष्ठतीति शेषः । तथा च तेषामेवेश्वरप्रत्यक्षविरोधः स्यात् न मम । कुतः ? मन्मते ईश्वर-स्यापि स्वप्नवद् एकजीवाज्ञानकल्पितत्वाङ्गीकारादिति भावः । उक्तातिप्रसङ्ग इति ।। मुक्तामुक्त-योर्भेदाभाव इत्यादिनोक्त इत्यर्थः । साम्प्रतमिति ।। इदानीमित्यर्थः । अत्र तन्निष्ठानामिति बहुवचनं शरीरापेक्षम् । जीवस्वरूपे औपचारिकम् । तथा च तन्निष्ठस्येत्येवार्थो द्रष्टव्यः । अत एवोत्तरवाक्ये तस्य चेत्येकवचनेन तन्निष्ठस्य परामर्शादित्यभिप्रेत्य व्याचष्टे । यद्यद्वैतनिष्ठ इति ।। तथात्वेन औत-निष्ठत्वेन परप्रसिद्धः शङ्करगौडपादादिः । न त्वद्वैतेति ।। तस्य औतभावनाया अभावादिति भावः। निवर्तकाभावादिति ।। निवर्तकस्याद्वैतसाक्षात्कारस्याभावादित्यर्थः । अनिवृत्तिरेव स्यादिति संसार एव स्यादित्यर्थः । भेदे सति संसारप्राप्तिः कुतः ? इत्यत आह- भेदे सतीति ।। भेदभ्रमहेतुत्वेनाज्ञान-स्याऽवश्यकत्वेन तत्प्रयुक्तदुःखादिप्रसङ्गोऽपि दुर्वार इत्यर्थः । निवर्तमान इति ।। मुक्तिकाले ज्ञानेनेति शेषः । तथेति ।। प्रागनिवृत्तोऽपि निवर्तिष्यत इत्यर्थः । अनुमानपक्ष इति ।। विमतो भेदप्रत्ययः कालान्तरे ज्ञानेन निवृत्तो भविष्यति, अन्तःकरणवृत्तित्वात् कामक्रोधादिवदित्यनुमानपक्ष इत्यर्थः। 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुत्या काम-क्रोधज्ञानादीनामन्तःकरणवृत्तित्वस्य प्रसिद्धत्वादिति ज्ञातव्यम् । प्रागुक्तेति ।। अपलापयुक्तेर्नितरां भ्रान्तित्वादित्युक्तदूषणन्यायेन भेदप्रत्ययस्य निवर्त्यत्वाङ्गीकारे त्वपलापयुक्तेर्नितरां निवर्त्यत्वाद् भेदप्रत्ययस्यानिवर्त्यत्वमेव भवतीति दूषितत्वादित्यर्थः ।

तथाहि । भेदप्रत्ययविषयकनिवृत्तिप्रत्ययस्य निवृत्तिरूपो बाधोऽङ्गीक्रियते न वा । आद्ये भेदप्रत्ययस्यानिवर्त्यत्वमेव स्यात् । द्वितीये भेदप्रत्ययविषयकनिवृत्तिप्रत्यये अन्तःकरणवृत्तित्व-सद्भावेऽपि निवृत्त्यभावेन तत्रैव व्यभिचारः स्यादिति । प्रमाणस्येति ।। निश्चायकप्रमाणस्येत्यर्थः । सम्भावनामात्रस्य प्रमेयासाधकत्वादिति भावः । ननु 'तरति शोकमात्मवित्' इति ज्ञानान्मोक्षः श्रूयते तत्प्रामाण्यान्यथानुपपत्त्याऽद्वैतज्ञानं, तेन च भेदप्रत्ययनिवृत्तिश्च भविष्यतीत्याशङ्कते– मोक्षेति ।। औतज्ञानं तेन च भेदप्रत्ययनिवृत्तिरित्यत्र मोक्षश्रुतिः प्रमाणमित्यर्थः । सम्भवा-दिति ।। तथा च न स्वार्थे प्रामाण्यमिति भावः ।

सर्वक्षेत्रेषु संसरतीति ।। यद्यपि एकजीववादिनः एकशरीरैकजीववादः सिद्धान्तः । 'यच्चेदमुच्यते एकमेव शरीरं सजीवम् । अन्यानि स्वप्नशरीरवन्निर्जीवानि' इत्यादिपरकीयस्वकीय-तन्मतानुवादरूपन्यायामृतादिग्रन्थानुसारेण तथाऽवगमात् । तथा च सर्वक्षेत्रेषु संसरतीत्यनुवादोऽ-नुपपन्न इवाऽभाति । तथाऽपि एकशरीरैकजीववादस्येव अनेकशरीरैकजीववादस्यापि तत्सिद्धान्त-त्वात् तदभिप्रायेण सर्वक्षेत्रेषु संसरतीत्ययं टीकाकारीयोऽनुवादो युक्त एव । 'ननु चोक्तदोषा एकशरीरैकजीववादे । न त्वनेकशरीरैकजीववादे तस्य सर्वत्र सत्त्वात्' इति परकीयग्रन्थतदनुवाद-रूपन्यायामृतादिग्रन्थानुगुण्येनानेकशरीरैकजीववादस्यापि तत्सिद्धान्ततायाः सिद्धत्वात् । न च सिद्धान्तद्वये सति आद्यपरित्यागेन द्वितीयसिद्धान्तानुवादः टीकाकाराणां निर्निबन्धन इति वाच्यम् । 'एकजीववादे तन्निष्ठानां मृत्यनन्तरं' इति तन्मतस्यैव मूलकृता दूषितत्वेन तन्निबन्धनतया टीकाकारीयानुवादस्य निर्निबन्धनत्वाभावात् । न च सति पक्षद्वये आद्यपरित्यागेन द्वितीयमात्र-पक्षनिरासो मूलकृतोऽप्ययुक्तः निर्निबन्धनत्वादिति वाच्यम् । स्पष्टदूषणतया शिष्यैरेव तदूह्यता-मिति भावेन आद्यपरित्यागेनास्पष्टदूषणद्वितीयपक्षमात्रनिरासस्योपपन्नत्वात् । द्वितीयपक्षनिरास इव प्रथमपक्षनिरासे बहुवक्तव्याभावाच्च । अत एव न्यायामृतेऽल्पेन प्रबन्धेनाऽद्यं निरस्य बहुना प्रबन्धेन द्वितीयनिरासो विहित इति द्रष्टव्यम् ।

तत्वत इति ।। भास्करमतमनुरुद्ध्योक्तम्, कल्पनया वेति तु मायावादिमतमनुसृत्येति द्रष्ट-व्यम् । यैरीश्वरोऽङ्गीक्रियते तेषामेव तदीयसंसारिभेदग्राहकप्रत्यक्षविरोधः प्रसज्यते । मया तु ईश्वरस्यापि १स्वप्नवज्जीवाज्ञानकल्पितत्वाङ्गीकारान्न तदीयभेदग्राहकप्रत्यक्षविरोधप्रसक्तिरिति भावेनोक्तम्- ईश्वरश्चैक इति ।। एकजीववादिपक्ष इति सामान्योक्त्या एकशरीरैकजीववादस्यापि प्राप्तौ तत्र च तन्निष्ठानामिति वक्ष्यमाणदूषणाप्रसक्तेस्तत्परित्यागेनानेकशरीरैकजीववादपरतया तद्व्याख्याति- ये त्विति ।। भेदनिष्ठ एवेत्यादिमूलम् अपेक्षितपूरणेन योजयति- साम्प्रतमिति ।। तदुपपादकतया तन्निष्ठानामित्यादिमूलांशं योजयितुमाह- यद्यद्वैतेत्यादिना ।। तथात्वेन परप्रसिद्ध इति ।। औतनिष्ठत्वेन परप्रसिद्धः गौडपादाद्यन्यतमः स्यादित्यर्थः । न तु द्वैतज्ञानित्वेन प्रसिद्धयत्किञ्चिदन्यतमः । तथा सति औतनिष्ठत्वानुपपत्तेः । तद्वैतनिष्ठस्य मोक्षः औतनिष्ठस्य बन्ध इति बन्धमोक्षयोः सांकर्यप्रसङ्गाच्च । तथा चैको जीव इति गतमिति भावः । अत्रेष्टापत्तिं परिहरति- न चेति ।। तथात्वे गौडपादाद्यन्यतमत्वे । कल्पकनिवृत्तौ कल्प्यनिवृत्तेरावश्यकत्वादिति भावः । अत्रापीष्टापत्तिं परिहरति- न चैवमिति ।। विश्वभ्रमानुवृत्तिदर्शनान्नेष्टापत्तिरिति भावः ।

एवमपेक्षितं पूरयित्वा विश्वस्यानिवृत्तत्वादित्यस्य भेदनिष्ठ एवेत्यनेन सम्बन्धं दर्शयन्नवधारण-व्यावर्त्यं दर्शयति- अत इति ।। विश्वस्यानिवृत्तत्वादित्यर्थः । वर्धेतेति ।।

'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन् ।'१

इति वचनादिति भावः । भेदे सतीति । भेदाध्यासस्याज्ञानकार्यतया असति अज्ञाने तदनुपपत्त्या तदुपपादकत्वेनाज्ञानस्यावश्यमङ्गीकर्तव्यत्वेन तत्प्रयुक्तदुःखादिप्रसङ्गो दुर्निवार इति भावः । अनुमानपक्ष इति ।। विमतो भेदप्रत्ययः कालान्तरे निवृत्तो भविष्यति । अन्तःकरणवृत्तित्वात् क्रोधादिवदित्यनुमानपक्षे इत्यर्थः । प्रागुक्तेति ।। अपलापयुक्तेर्नितरां भ्रान्तित्वादिति प्रागुक्ते-त्यर्थः । अत्र निवृत्तिशब्देन बाध एव न तु नाशः । भेदसत्त्वेऽपि तस्योपपन्नत्वात् । तथा च भेदप्रत्ययो बाध्य इति युक्तिजानुभवस्यापि अन्तःकरणवृत्तित्वेन बाध्यत्वे भेदप्रत्ययस्य बाधका-भावेन बाध्यत्वासिद्धिः । अबाध्यत्वे च तत्रैव सत्यपि अन्तःकरणवृत्तित्वे बाध्यत्वाभावाद्व्यभिचारः स्यादिति भावः । वक्तव्यत्वादिति ।। सम्भावनाया उत्कटैककोटिकसंशयरूपत्वेनाप्रमाणत्वादिति भावः ।

## गोविन्दीया

यदुक्तमिति ।। मुक्तामुक्तयोरित्यादि मुक्तस्य संसारित्वं संसारिणो मुक्तत्वं चेति यदुक्तम्, तदनुपपन्नमित्यर्थः । सर्वक्षेत्रेष्विति ।। सर्वशरीरेष्वित्यर्थः । क्षेत्रज्ञभेद इति ।। जीवभेद इत्यर्थः । तदेवेति ।। जीवभावमापन्नं ब्रह्मैवेत्यर्थः । अर्थवादा इति रुच्यर्था एवेत्यर्थः । एकस्यैव जीवस्य मुक्तिवादस्तु परमार्थ एवेति भावः । तत्त्वत इति ।। भास्करादिमते तत्त्वतो बहवो जीवाः, कल्पनीयाः बहवो जीवा मायावादिमत इत्यर्थः । एकेति ।। एकजीववादिपक्षे २तन्निष्ठानामैक्य-निष्ठस्यैक्यज्ञननिष्ठं नेति यावत् । बहुवचनं शरीरापेक्षया । मृत्यनन्तरं भेदज्ञानाभावाद् तत्कल्पितस्य विश्वस्य निवृत्तिर्वक्तव्या तदानीमपि विश्वस्यानिवृत्तत्वादसावेकोऽपि जीवः 'भेदनिष्ठः' एव भेदज्ञान्येवेत्यापततीत्यर्थः । तदेति ।। तदा स एवाद्वैतज्ञानित्वेन परप्रसिद्धः कश्चित्पुरुषः स्यात् । न चासौ तथा । परप्रसिद्धत्वेनाद्वैतज्ञानीत्यर्थः । तथात्वेति ।। तस्य जीवस्याद्वैतज्ञानित्वे इत्यर्थः । न चैवम् । एवं विश्वनिवृत्तिर्न च भवतीत्यर्थः । तत इति ।। एकस्यापि जीवस्य भेदनिष्ठत्वेन प्रकृते किमित्यर्थः । तत्संस्कारेणेति ।। भेदसंस्कारेणेत्यर्थः । तदिति ।। तस्मादित्यर्थः । निवर्तकाभावा-दिति ।। औतसाक्षात्काररूपनिवर्तकाभावादित्यर्थः । अनुमानपक्ष इति ।। भेदप्रत्ययो निवर्तते बाध्यते, अन्तःकरणवृत्तित्वात् कामक्रोधादिवदित्यनुमानपक्षे प्रागुक्तदोषदूषितत्वात्, भेदाद्यनु-भवः, भ्रमः, भेदादिप्रत्ययत्वादित्यनुमाने यो दोष उक्तस्तेनैव दोषेणास्यापि दुष्टत्वात् । तथा हि-भेदादिप्रत्ययो बाध्यत इत्यनुमितेरन्तःकरणवृत्तित्वेनाबाध्यत्वे तत्रैव व्यभिचारः । बाध्यत्वे बाध्यानुमितिजनकान्तःकरणवृत्तित्वरूपहेतोर्दुष्टत्वात् तेन चासमर्थेन हेतुना प्रत्यक्षजन्यभेदप्रत्ययस्य बाध्यत्वसाधनायोगात् । अबाध्यत्वमेव सिद्ध्यतीति दोषदुष्टत्वादित्यर्थः । सम्भावनापक्ष इति ।। सम्भावनायाः साधकत्वाभावेन भेदादिप्रत्ययबाध्यत्वे प्रमाणस्य वक्तव्यत्वादित्यर्थः । मोक्षश्रुति-रिति ।। 'तरति शोकमात्मवित्' इति मोक्षश्रुतिः प्रमाणम् । भेदज्ञाननिवृत्तेरेव मोक्षत्वादिति चेदित्यर्थः । अर्थवादस्यापीति ।। शुकवामदेवादिमुक्तिवादवाक्यस्येव प्रकृतश्रुतिवाक्यस्याप्यर्थ-वादत्वसम्भवान्न तत्र प्रमाणमित्यर्थः ।

## जनार्दनभट्टीया

तदनुपपन्नमिति ।। एकजीववादिनो ममेष्टापत्तिरिति भावः । इष्टापत्तिमेव उपपादयति – ब्रह्मैवेत्यादिना ।। प्रतिक्षेत्रमिति ।। प्रतिशरीरमित्यर्थः । क्षेत्रज्ञभेद इति ।। जीवभेद इत्यर्थः । उक्तोऽतिप्रसङ्ग इति ।। मुक्तस्य संसारः, संसारिणो वा मुक्तत्वं स्यादिति अतिप्रसङ्ग इत्यर्थः । 'एकजीव' इत्यादि मूले ऐक्यस्य वादिविशेषणघटकतयोपसर्जनत्वेन तच्छब्दपरामर्शविषयाप्रतीतेः तच्छब्दार्थकथनपूर्वकम् आपाद्यापादकयोः निमित्तनैमित्तिकाभावस्य अस्फुटत्वात् तदाविष्करणपूर्वकं च मूलं तर्कपरतया योजयति – यदीत्यादिना ।। परप्रसिद्धः कश्चिदिति ।। विवरणकारमण्डनादिरूप इत्यर्थः । 'तस्य च' इत्यादिमूले पूर्ववाक्यवदेव तर्के उपपाद्योपपादकभावाप्रतीतेः तत्परतया योजयति – यदि चेत्या-दिना ।। भेदे सतीति ।। भेदप्रत्यये सतीत्यर्थः । अनुमानपक्ष इति ।। विमतो भेदप्रत्ययो निवर्तते अन्तःकरणवृत्तित्वात् । कामक्रोधवद् इत्यनुमानपक्ष इत्यर्थः । प्रागुक्तेति ।। भेदप्रत्ययनिवृत्त्यङ्गीकारे भेदनिष्ठपुरुषस्य मृतौ विश्वनिवृत्त्यापत्तिलक्षणदोषदूषितत्वाद् इत्यर्थः । सम्भावनेति ।। अप्रामाणिकस्य सम्भावनां प्रत्यविषयत्वात् सम्भावनापक्षे प्रमाणं वाच्यम् । न हि 'गजो मम कर्णं प्रविश्य गर्जति' इत्येतत् सम्भावनार्हमिति भावः । मोक्षश्रुतिरिति ।। 'परमं साम्यम् उपैति' इति श्रुतौ परमसाम्यशब्देन भेदसमानकालीनैक्यप्रतीतेरिति ऐक्यवादिनो हृदयम् ।

## न चैकजीवाज्ञानपरिकल्पिताः ..

**एकजीववादे साधकाभावस्य, मुक्तत्वानुमाने विपक्षे बाधकस्य च समर्थनम्**

### श्रीमज्जयतीर्थटीका

एवमनिष्टप्रसङ्गेनैकजीववादं निराकृत्य प्रमाणाभावेनापि निराचष्टे-

## मूल

***न चैकजीवाज्ञानपरिकल्पिताः समस्ता इत्यत्र किञ्चिन्मानम् ।***

यद्यपि जीवाः स्वरूपेणाकल्पितास्तथापि जीवादिभावेन कल्पितत्वाङ्गीकारात् समस्तपदेन जीवा अपि गृह्यन्ते । तदेवमेकजीववादस्यातिप्रसङ्गेन प्रमाणाभावेन च दुष्टत्वे बहुजीववादे चाङ्गीकर्तव्ये तत्र चोक्तं बाधकमिति नाप्रयोजको हेतुरित्युक्तं भवति । अथवा मा भूदेक-जीववादिनं प्रत्युक्तं बाधकं बाधकान्तरं तु भविष्यति । यदि मुक्तो भिन्नो न स्यात् । यद्येक एव जीवस्तन्मुक्तौ कस्याप्यनवशेषः स्यादिति यावत् । तर्हि सम्प्रति मुक्तो नास्तीति स्यात् । तथा चोक्तविधयोत्तरत्रापि मुक्तो न स्यादिति ।

नन्वेतन्मुक्तामुक्तयोरित्यस्यानन्तरं भवितव्यम् । सत्यम् । तथापि प्रत्यक्षाद्युपन्यासस्य सङ्गतिसौकर्यान्मध्ये निवेशः । बहुजीववादैकजीववादविभागाद्वेति ।

### श्रीविजयीन्द्रभिक्षु

एकजीववादे बाधकमुक्त्वा साधकाभावेनापि स न सिद्ध्यतीत्याह- एवमिति ।। समस्ता अज्ञानकल्पिता इति न पराङ्गीकारः । जीवानामकल्पितत्वात् । तथा च समस्ता इति मूलोक्तिरयुक्तेत्याशङ्क्य परिहरति- यद्यपीति ।। नन्वेतावताऽपि कथमेकजीववादेऽप्रयोजकत्व-शङ्कानिरास इत्याशङ्कामुपसंहारव्याजेन निरस्यति- तदेवमिति ।। यदि कश्चिदेकजीववाद एव विपक्षे बाधकं वक्तव्यमिति ब्रूयात्तं प्रति एकजीववादिपक्षे तन्निष्ठानामिति तस्य च तत्रैवाऽग्रहान्न कदाचिद्भेदनिवृत्तिरिति च वाक्यद्वयेनाभिप्रेतं बाधकान्तरमाह- अथवेति ।। कस्याप्यवशेषः स्यादित्यस्यानन्तरम् अस्त्यवशेष इति पूरणीयम् । उक्तविधयेति ।। भेदवासनादार्ढ्येनोत्तरत्रापि भेद एवाऽग्रहः स्यादित्युक्तविधयेत्यर्थः । नन्वेकजीववादादिनिराकरणपरमेतत् मुक्तामुक्तयोर्भेदाभाव इति वाक्यानन्तरमेव कर्तव्यम् । सङ्गतिसद्भावादिति शङ्कते- नन्वेतदिति ।। यदि कश्चिदुभयत्रापि सङ्गतिसौकर्यमविशिष्टमिति ब्रूयात्तं प्रत्याह- बहुजीवेति ।।

## श्रीवेदेशतीर्थ

स्वरूपेणाकल्पिता इति ।। चैतन्यमात्रस्याकल्पितत्वादित्यर्थः । एकस्यैव जीवस्य शरीराणि बहूनीति बहुवचनमौपचारिकम् । एवमुत्तरत्रापि । जीवादिभावेनेत्यत्राऽदिपदेन कर्तृत्व-भोक्तृत्वादिपरिग्रहः ।

नन्वेतावताऽप्येकजीववादे कथमप्रयोजकत्वशङ्कानिरास इत्याशङ्कामुपसंहारव्याजेन निरस्यति- तदेवमिति ।। यदि कश्चिदेकजीववादिमत एव विपक्षे बाधकं वक्तव्यमिति ब्रूयात्तर्हि तं प्रत्येक-जीववादिपक्षे तन्निष्ठानामिति तस्य च तत्रैवाऽग्रहादिति च वाक्यद्वयेनाभिप्रेतबाधकान्तरमाह- अथवेति ।। इति यावदिति ।। अनेनैकजीववादिपक्ष इत्येतदुक्ततात्पर्यम् । सम्प्रतीति ।। विश्व-भ्रमानुवृत्तिदर्शनादिति भावः । अनेन विश्वस्यानिवृत्तत्वाद्भेदनिष्ठ एवेत्याद्युक्तार्थम् । उक्तविध-येति ।। भेदवासनादार्ढ्येनोत्तरत्रापि भेद एवाग्रहः स्यादित्युक्तविधयेत्यर्थः । अनेन च तस्य च तत्रैवेति द्वितीयवाक्यस्य तात्पर्यमुक्तमिति ज्ञातव्यम् । प्रत्यक्षाद्युपन्यासस्येत्यत्राऽदिपदेनागमोप-न्यासपरिग्रहः ।

सङ्गतिसौकार्यादिति ।। प्रसङ्गसङ्गतिसौकार्यादित्यर्थः । अनुकूलतर्कोपपादकेन इत्यादि-नेश्वरेणापि भेदस्यैवानुभूयमानत्वाच्चेत्यनेन वाक्येन भेदविषयकेश्वरानुभवे प्रमाणेनोपपादिते स्मृतस्येश्वरीयभेदप्रत्यक्षस्योपेक्षानर्हत्वात्तत एवेति वाक्येन प्रत्यक्षमुपन्यस्तम् । प्रत्यक्षरूप-साधकोपन्यासेनाऽगमरूपसाधकान्तरस्यापि स्मृतावुपेक्षानर्हत्वादिदं ज्ञानमित्यादिना तदुक्तिरिति भावः । विभागाद्वेति ।। प्रत्यक्षाद्युपन्यासस्य मध्ये प्रवेश इति सम्बन्धः । अन्यथाऽयं विभागो मन्दैर्न ज्ञायेतेति भावः ।

## श्रीराघवेन्द्रतीर्थ

उक्तं बाधकमिति ।। बद्धमुक्तव्यवस्थानुपपत्तिरूपं बाधकमित्यर्थः । १ननु एकजीवपक्षस्य दुष्टत्वोक्तावपि तं प्रति मुक्तत्वहेतोरप्रयोजकताशङ्का परिहृतैव विपक्षे तं प्रति बाधकानुक्तिरित्युक्त एकजीवपक्षे इत्यादिवाक्यद्वयं प्रति बाधकोक्तिपरतया तात्पर्यतो व्याचष्टे- अथवेति ।। बाधकान्तरमित्युक्तं व्यनक्ति- यदि मुक्त इति ।।

१मुक्तामुक्तयोर्भेदाभाव इति प्रागुक्तमूलवाक्यांशस्य फलितार्थानुवादोऽयम् । तस्यापि निष्कृष्टार्थमाह- यद्येक एव जीव इत्यादि ।। उक्तविधयेति ।। २भेदवासनादार्ढ्येनोत्तरत्रापि भेद एवाग्रहानुवृत्त्याऽद्वैतसाक्षात्कारस्य कदाप्यभावेन निवर्तका-भावात् संसारनिवृत्तिरूपमुक्तिमात्र स्यादिति बाधकान्तरोक्तिपरतया मूलयोजनोक्ता भवति । एकजीववादपक्ष इत्यादिनोक्तमेकजीवनिराकरणं ३मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो वा मुक्तत्वं स्यादिति वाक्यानन्तरमेव सङ्गतम् । विपक्षे बाधकोक्त्या मुक्तत्वहेतोरप्रयोजकत्व-निरासपरत्वादिति शङ्कां निराह- नन्वेतदिति ।।

प्रत्यक्षादीति ।। 'इत्यादिनेश्वरेणापि भेदस्यैवानुभूयमानत्वाच्च' इति 'तत एवाभ्रान्तत्वान्न मुक्तस्यापि भेदनिवृत्तिरिति' 'इदं ज्ञानमुपाश्रित्य' इत्यादिवाक्यैर्मुक्तभेदे क्रमात्प्रत्यक्षानुमाना-गमानामुपन्यासस्य बहुजीवैकजीववादनिरासयोर्मध्ये प्रवेशः 'किञ्चेश्वरवचनेनैतस्य संसारिभेद एवानुभूयते' इत्यादिना प्राक् तत्रोक्तसङ्गतिसौकर्यादिति योजना । विभागाद्वेति ।। प्रागुक्तस्य बहुजीववादनिराससङ्गतत्वादत्रोक्तस्यैकजीववादनिराससङ्गतत्वादित्यर्थः । ननु समस्तशब्देन वियदादिप्रपञ्च एव न ग्राह्यः, किन्तु जीवा अपि गृह्यन्त इत्युच्यते तदयुक्तं, एकजीववादिमते जीवानां बहुत्वाभावात् । न च वाच्यं स एको जीवः एते सर्वे चेतना भवंत्विति बहून् चेतनान् कल्पयतीति वाच्यम् । चैतन्यस्याकल्पितत्वेन चैतन्यस्वरूपेण जीव-कल्पकत्वायोगादित्याशङ्क्य समाधत्ते- यद्यपीत्यादिना ।। जीवादिभावेनेति ।। आदिपदेन कर्तृत्वभोक्तृत्वग्रहणम् । शरीरविशिष्टत्वमेव जीवत्वम् । तथा च कर्तृत्वादिविशिष्टत्वेन अनेक-शरीरविशिष्टत्वेन च कल्पिताः (इत्यस्य) कोऽर्थः, स्वस्यैकस्य जीवस्य यत्कर्तृत्वादि यानि चानेकानि शरीराणि तानि कल्पितानीति यावत् । तथा च समस्ता जीवा इत्यस्य स्वेन कल्पित-स्वकीयानेक-शरीराणीत्यर्थस्तथा च तदपेक्षमेव बहुवचनं, न जीवस्वरूपापेक्षं तथा चौपचारिकं बहुवचनमित्युक्तंभवतीति ज्ञातव्यम् । अतिप्रसङ्गेनेति ।। तन्निष्ठानां मृत्यनन्तरमित्यनेनेत्यर्थः । उक्तं बाधकमिति ।। मुक्तामुक्तयोर्भेदाभाव इत्यादिनोक्तं बाधकमित्यर्थः । यदि कश्चिदेकजीववादिमत एव विपक्षे बाधकं वक्तव्यमिति ब्रूयात्तर्हि तं प्रति एकजीववादिपक्षे तस्य चेति वाक्यद्वयाभिप्रेतं बाधकान्तर-माह- अथवेति ।। उक्तं मुक्तामुक्तयो◌ेरित्यादिनोक्तम् । सम्प्रति इदानीम् । उक्तविधयेति ।। भेदवासनादार्ढ्येनोत्तरत्रापि भेद एवाग्रहः स्यादित्युक्तविधयेत्यर्थः । एतदिति ।। एकजीववादिपक्ष इत्यादिना कृतमेकजीववादिनिराकरणमित्यर्थः । अनन्तरमिति ।। तथा च आदौ बहुजीववादे मुक्तामुक्तयोरिति विपक्षबाधकमुक्त्वाऽनन्तरमीश्वरीयप्रत्यक्षागमविरोधमभिधाय अन्ते एकजीववादि-निराकरणं व्यवधानेन कस्मात्कृतमित्यर्थः । प्रत्यक्षादीत्यादिपदेनागमग्रहणम् । सङ्गतिसौकर्या-दिति ।। प्रसङ्गसङ्गतिसौकर्यादित्यर्थः । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । प्रवेश इत्यत्र प्रत्यक्षाद्युपन्यास-स्येति वर्तते । तथा हि- मुक्तामुक्तयोर्भेदाभाव इत्यादिनाऽनुकूलतर्कमभिधाय, यद्यज्ञानकृत इत्यादिना तत्समर्थ्य, ईश्वरेणापि भेदस्यैवानुभूयमानत्वाच्च तत एवेत्यादिना ग्रन्थेन भेदेऽनुमानान्तरेण साधिते सति स्मृतस्येश्वरीयप्रत्यक्षस्योपेक्षानर्हत्वात् तत एवेति वाक्येन भेद ईश्वरीयं प्रत्यक्षमुपन्यस्तम् । तस्य वाक्यस्याथवेत्यादिना ईश्वरप्रत्यक्षकथनपरतया व्याख्यातत्वात् । प्रत्यक्षरूपसाधकोप-न्यासेनागमरूपसाधकस्मृतौ तस्याप्युपेक्षानर्हत्वादिदं ज्ञानमित्यादिना तस्याप्युपन्यास इत्येवं

प्रसङ्गसङ्गतिसौकर्यात्प्रत्यक्षाद्युपन्यासस्य मध्ये प्रवेश इत्यर्थः । प्रत्यक्षाद्युपन्यासस्य मध्ये प्रवेशे प्रयोजनान्तरमाह - बहुजीववादेति ।। विभागाद् विभागज्ञापनार्थत्वाद् वा मध्ये प्रवेश इति सम्बन्धः । तथा हि । यदि मुक्तामुक्तयोरित्येतदनन्तरमेव एकजीवपक्ष इत्यादिग्रन्थोऽभिधीयेत तदैतद्वाक्योक्तं दूषणमपि बहुजीववादिनामेवेति विज्ञायेत । विज्ञायत को दोष इति चेत् । न । तन्निष्ठानां मृत्यनन्तरमित्युक्तदूषणस्य बहुजीववादेऽत्यन्तासम्बद्धत्वात् । तथा च शिष्याणां मनःखेदः स्यात् । अतो मायावादिमते बहुजीववादमतैकजीववादिमतविभागोऽस्तीति ज्ञापनाय मुक्तामुक्तयोरित्यादिना बहुजीववादमतं निराकृत्य मध्ये प्रत्यक्षादिकमुपन्यस्य पश्चादेकजीववाद-मतमेकजीववादपक्ष इत्यादिना निराकृतम् इत्यर्थः ।

## गुरुराजीया

स्वरूपेणेति ।। चित्त्वरूपेणेत्यर्थः । जीवादिभावेनेति ।। जीवत्वादिनेत्यर्थः । आदिपदेन कर्तृत्वभोक्तृत्वादिपरिग्रहः । ननु तावताऽपि नाप्रयोजकताशङ्कापरिहारः विपक्षे बाधकानुक्तेरित्या-शङ्कामुपसंहारव्याजेन परिहरति- तदेवमिति ।। उक्तमिति ।। मुक्तामुक्तयोर्भेदाभाव इत्यादिनेति शेषः । इदन्तु अङ्गीकृत्योक्तम् । वस्तुतस्तु एकजीववादिमतेऽपि तन्निष्ठानामिति तस्य च तत्रैवाऽग्रहादिति वाक्यद्वयोक्तस्यैव बाधकस्य सम्भवान्नाप्रयोजकत्वमित्यभिप्रेत्य पक्षान्तरमाह- अथवेति ।। सम्प्रतीति ।। विश्वभ्रमस्येदानीमपि सत्त्वादिति भावः । उक्तविधयेति ।। भेदवासना-दार्ढ्येनोत्तरत्रापि भेद एवाऽग्रहः स्यादित्युक्तविधयेत्यर्थः ।

प्रत्यक्षादीत्यादिपदेन आगमपरिग्रहः । भवितव्यमिति ।। बाधकद्वयस्य पौर्वापर्येणोक्तेः सङ्गततया व्यवधानेनोक्तावसङ्गतत्वापातादिति भावः । सङ्गतिसौकर्यादिति ।। प्रसङ्गसङ्गति-सौकर्यादित्यर्थः । अनुकूलतर्कोपपादकेन ‘ईश्वरेणापि भेदस्यैवानुभूयमानत्वाच्च’ इत्यनेन वाक्येन भेदविषयकेश्वरानुभवे प्रमाणेन प्रतिपादिते स्मृतस्य ईश्वरीयभेदप्रत्यक्षस्योपेक्षानर्हत्वात्तत एवेति वाक्येन प्रत्यक्षमुपन्यस्तम् । प्रत्यक्षरूपबाधकोपन्यासेनागमरूपसाधकान्तरस्यापि स्मृततया उपेक्षानर्हत्वादिदं ज्ञानमित्यादिना तदुक्तिरिति भावः । विभागाद्वेति ।। प्रत्यक्षाद्युपन्यासस्य मध्ये प्रवेश इति सम्बन्धः । अन्यथा अयं विभागो मन्दैर्न विज्ञायेतेति भावः ।

## गोविन्दीया

यद्यपीति ।। जीवाः चैतन्यस्वरूपेण न कल्पितास्तथापि जीवभावेन कर्तृत्वभोक्तृत्व-भावेन च कल्पितत्वाङ्गीकारात् समस्तपदेन जीवा अपि गृह्यन्त इत्यर्थः । तत्रेति ।। बहुजीववादे संसारिणो मुक्तत्वम्, मुक्तस्य संसारित्वं चेति बाधकमुक्तमिति हेतोर्मुक्तत्वहेतुर्न प्रयोजक इति सिद्धं भवतीत्यर्थः । तन्मुक्ताविति ।। एकस्यापि तस्य जीवस्य मुक्तौ सत्यां ब्रह्मभावापन्नत्वेन कस्याप्यनवशेषः स्यादित्यर्थः । नन्विति ।। एतद् एकजीववादनिराकरणवाक्यं मुक्तामुक्तयोरित्य-स्यानन्तरं भवितव्यमित्यर्थः । तथापीति ।। अनन्तरवक्तव्यत्वेऽपि अनुकूलतर्कोपपादकत्वेनेश्वरेणा-नुभूयमानत्वादित्युक्तम्, स्मृतस्योपेक्षणानर्हत्वेन तस्य च

प्रत्यक्षाद्युपन्यासस्य सङ्गतिसौकर्यान्मध्ये बहुजीववादैकजीववादयोर्निराकरणग्रन्थयोर्मध्ये प्रवेश इत्यर्थः । बहुजीवेति ।। उभयविधजीव-वादयोर्विभागप्रदर्शनार्थं मध्ये प्रवेश इति वार्थः ।

## नारोपन्तीया

नन्वेतन्मुक्तामुक्तयोरिति ।। 'मुक्तामुक्तयोर्भेदाभावे संसारिणो वा मुक्तत्वं स्यात्, मुक्तस्य वा संसारित्वं स्यात्' इति पूर्वोक्तग्रन्थानन्तरमेतत् 'न चैकजीवाज्ञानपरिकल्पिताः समस्ता इत्यत्र किञ्चिन्मानम्' इति मूलं वक्तुमुचितम् । अनेकजीवाङ्गीकारपक्षे प्राप्तस्य दूषणस्य अनुपदमेवैक-जीवपक्षमङ्गीकृत्य परिहारसामञ्जस्यात् । तथा च मध्ये-

'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ।'१

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।'१

इत्यादीनि ईश्वरीयभेदप्रत्यक्षोपन्यासग्रन्थे सन्दर्भशुद्धिर्नास्तीति पूर्वपक्षाशयः । अनेकजीवाङ्गी-कारपक्षेऽपीश्वरप्रत्यक्षादिविरोधो दातव्य एव । पूर्वपक्ष्युक्तरीत्या तस्य चेद् एतन्मूलानन्तरसमावेशः तर्हि स ईश्वरप्रत्यक्षविरोधोऽसङ्गत एव स्यात् । एतदित्येतन्मूलस्यैकजीववादाश्रयणेन प्रवृत्तत्वादिति पुनः सिंहावलोकनन्यायेन, मुक्तामुक्तयोरिति प्रथमं मूलं परामृश्य, तत्र तान्यहमित्यादीनीति योज्यानीति कुसृष्टिकल्पना समायाति । अतो यथान्यासमेव साधु । तथापि सङ्गतिसौकर्यं निष्प्रत्यूहमिति यावत् ।

## जनार्दनभट्टीया

'न चैकजीव' इत्युत्तरवाक्ये एकजीववादस्य निराकरिष्यमाणत्वात् पूर्ववाक्येऽपि तस्यैव निरस्तत्वात् पौनरुक्त्यम् आशङ्क्य तन्निराकुर्वन्नेव 'न चैके'त्यादिमूलमवतारयति – एवमित्या-दिना ।। प्रमाणाभावेनापीति ।। तथा च प्रमाणाभावस्य पूर्ववाक्येऽनुक्तत्वात् न गतार्थतेति भावः ।

ननु प्रकृतत्वात् जीवानाम्२ एकजीवाज्ञानकल्पितत्वाभावे अभिधातव्ये समस्तानां तत्कथम् असङ्गतम्? इत्यत आह – समस्तपदेनेति ।। तत्र चेति ।। बहुजीववादे इत्यर्थः । उक्तमिति ।। 'मुक्तामुक्तयोः भेदाभावः' इत्यादिनोक्तमित्यर्थः । हेतुरिति ।। मुक्तत्वहेतुरित्यर्थः । सङ्गतिसौकर्या-दिति ।। भेदे विप्रतिपन्नं प्रति अनुमानं प्रमाणमुपन्यस्य तत्र अप्रयोजकत्वशङ्कायां 'मुक्तामुक्तयोः' इत्यादिना तदुद्धारानन्तरं वैभवेन प्रत्यक्षाद्युपन्यासस्य सङ्गतत्वादिति भावः ।

# अतो मुक्तेभ्योऽप्यन्य एव ..

**मुक्तेश्वरभेदतल्लब्धविष्णुगुणपरिपूर्णत्वयोरुपसंहारः**

## श्रीमज्जयतीर्थटीका

एवमुपपादितं मुक्तेश्वरभेदमुपसंहरन् यदर्थं तदुपपादनं तदप्याह-

## मूल

*अतो मुक्तेभ्योऽप्यन्य एव समस्तगुणपरिपूर्णो भगवान् विष्णुरिति सिद्धम् ।*

विमतो भिन्नः, न मुक्तस्यापि भेदनिवृत्तिः, न मुक्तस्येश्वरैक्यमित्येकवचनं जातिपरमिति सूचयितुं मुक्तेभ्य इत्युक्तम् । एवकारेण भेदाभेदनिवृत्तिः । समस्तगुणा मुक्तनियन्तृत्वादयः ।

## श्रीविजयीन्द्रभिक्षु

विपक्षे बाधकतर्कप्रतिपादकतयोत्तरग्रन्थो व्यर्थः । यदि चोपसंहारार्थस्तथाऽपि समस्त-गुणपरिपूर्ण इत्यादि व्यर्थम् । इत्याशङ्क्याऽवतारयति- एवमिति ।। यदर्थमिति ।। यद्यप्यत्यन्तभेदः समर्थितः । तेन नियम्यनियामकभावमात्रसिद्धावपि नेश्वरस्य गुणपरिपूर्णत्वसिद्धिः । तथाऽपि चेतनाचेतनात्मकसकलजगन्नियामकत्वस्यापरिमितशक्तिमत्त्वसर्वज्ञत्वादिकं विनाऽनुपपत्तेः नियामकत्वसिद्धौ गुणपरिपूर्णत्वमपि सिद्ध्यतीति भावः । ननु भगवताऽऽचार्येण विमतो भिन्नो इत्यादिवाक्ये एकवचनं प्रयुज्यास्मिन् वाक्ये बहुवचनं प्रयुक्तम् । तत्कुत इत्यत आह- विमतो भिन्न इत्यादि ।।

## श्रीवेदेशतीर्थ

यदर्थमिति ।। यच्छब्देन मुक्तनियन्तृत्वमुच्यते । ननु विमतो भिन्न इत्यादिवाक्ये एकवचनं प्रयुज्यास्मिन् वाक्ये बहुवचनं प्रयुक्तं तत्कुत इत्यत आह- विमत इत्यादि ।। मुक्तनियन्तृत्वादय इत्यादिपदेनाखिलसच्छक्त्यादिपरिग्रहः ।

## श्रीराघवेन्द्रतीर्थ

तदुपपादनमिति ।। मुक्तेश्वरभेदोपपादनमित्यर्थः । अत इत्यस्योक्तदिशाऽभेदोपपादक-प्रमाणाभावादित्यर्थः । यद्यपि नियम्यनियामकभावसिद्ध्यर्थमेव भेदस्योपपादनं प्रागुक्तम् । तथापि नियामकत्वं सार्वज्ञादिगुणपूर्णस्य भवतीति समस्तगुणेत्याद्युक्तमिति भावः । अत एव वक्ष्यति- मुक्तनियन्तृत्वादय इति ।। प्रागुक्तवाक्येषु प्रक्रान्तैकवचनविरोधमाशङ्क्य निराह – विमतो भिन्न इति ।। इत्येकवचनमिति ।। इति वाक्यत्रयस्यैकवचनं मुक्तत्वजातिपरमित्यर्थः । यदर्थमिति ।। मुक्तनियन्तृत्वोपपादनार्थमित्यर्थः । तदुपपादनं भेदोपपादनम् । विमतो भिन्न इत्यादिवाक्ये एकवचनं प्रयुक्तं तत्कुत इत्यत आह– विमत इत्यादिना । जातिपरमिति ।। समुदायापेक्षमित्यर्थः । सिद्धान्ते अनुगतजातेरभावादिति ज्ञातव्यम्१। नन्वनेन मुक्तनियन्तृत्वं भगवतः कथमुक्तमित्यत आह– मुक्तनियंतृत्वादय इति । आदिपदेन अखिलसच्छक्तित्वादि-परिग्रहः ।

## गोविन्दीया

यदर्थमिति ।। विष्णोः समस्तगुणपरिपूर्णत्वसिद्ध्यर्थमित्यर्थः । इत्येकवचनमिति ।। इति वाक्यत्रयेऽप्येकवचनं जातिपरत्वेनानेकपरमिति सूचयितुं मुक्तेभ्य इति बहुवचनमुक्तमित्यर्थः । एवकारेणेति ।। अन्यो भिन्न एवेत्येवकारेण भेदाभेदनिवृत्तिर्न तु भिन्नाभिन्न इत्यर्थः ।

### जनार्दनभट्टीया

मुक्तनियन्तृत्वादय इति ।। 'नित्याताद्दशचिच्चेत्ये'त्यादिना तेषां साधनायैव भेदस्य समर्थितत्वादिति भावः । न भेदमात्रेणेति ।।

## ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ..

**रामानुजमतनिरसनपूर्वकम् ईश्वरस्य मुक्तनियामकत्वसमर्थनम्**

### श्रीमज्जयतीर्थटीका

अपर आह- अस्तु मुक्तस्येश्वराद्भेदस्तथापि न तन्नियन्तृत्वमीश्वरस्योपपद्यते । नियम्यनियामकभावो हि न भेदमात्रेण सम्भवति । किन्तु हीनोत्तमभावेन च । न चासौ प्रकृतेऽस्ति प्रमाणाभावादित्यत आह-

## मूल

*'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।*

*तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ।।'*

ब्रह्मेशानादिशब्देन मुक्तामुक्ता गृह्यन्ते । सङ्कोचे कारणाभावात् । यत्कैवल्यं सर्वोत्तमत्वम् । यत्स्वभावो यस्य नैसर्गिकम् ।

**मूल**

*परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।*

कर्तृविशेषानुक्तेर्मुक्ता अमुक्ताश्चेति शेषः । साम्यवचनानां गतिरन्यत्रैवोक्ताऽस्तीत्यत्र नावादीदाचार्यः । एवं मुक्तनियन्तृत्वादावपीति ।

### श्रीविजयीन्द्रभिक्षु

इयतैव प्रबन्धेन सिषाधयिषितार्थसिद्धेरुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्य तदवतारणाय मतान्तरमुत्थापयति- अपर आहेति ।। एतन्मतनिरासकत्वेन मूलमवतारयति- अत आहेति ।। ब्रह्मेशानादिपदेनेति ।। आदिपदेनेत्यर्थः

। सङ्कोच इति ।। यद्यपि देवशब्द एव सङ्कोचेनोक्तमात्रग्रहणे कारणम् । पदविशेषस्थजीवानामेव देवशब्दार्थत्वात् । तथाऽप्यत्र न देवशब्दः ईशादिपदविशेष-परः । किन्तु मुक्तियोग्यजीवस्वरूपमात्रपर एव ।

'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः ।'

इत्यादौ देवशब्दस्य तदर्थत्वदर्शनात् । आदिशब्देनामुक्तमात्रपरत्वेन सङ्कोच इति भावः । परो मात्रयेति श्रुतौ मुक्तामुक्तग्रहणे नियामकं वदन् शेषं पूरयति- कर्तृविशेषानुक्तेरिति ।।

ननु 'निरञ्जनः परमं साम्यमुपैति', 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इत्यादिश्रुतौ मुक्तस्य परमात्मसाम्यप्रतिपादनान्न तदपेक्षयेश्वरस्योत्तमत्वसिद्धिरित्यत आह- साम्यवचनाना-मिति ।। उक्तेति ।। 'न त्वत्समश्चाभ्यधिकश्च दृश्यते' 'एतावताऽलं ननु सूचितेन गुणैरसाम्याति-शयेन' इत्यादिश्रुतिस्मृत्यनुसारेण 'पुण्यपापे विधूय' इत्याद्युपपादनानुसारेण च पापविमुक्तत्वादिना सादृश्यमेव तच्छ्रुत्यर्थ इत्युक्तेत्यर्थः । ननु मुक्तनियामकत्वं यथा परमात्मन एवं ब्रह्मादेरपि श्रूयते इति सम्भवतीति कथं परमात्मनः सर्वोत्तमत्वमित्यत आह- एवमिति ।। ब्रह्मादीनां स्वापेक्षयाऽ-वरनियामकत्वेऽपि न सकलनियामकत्वमित्यन्यत्रोक्तमिति भावः ।

## श्रीवेदेशतीर्थ

नन्वस्मिन् प्रमाणे ईश्वरस्य मुक्तोत्तमत्वं कथं प्राप्तमित्यत आह- ब्रह्मेशानेत्यादि ।। आद्ययच्छब्दस्यान्वयाप्रतीतेराह- यत्कैवल्यमिति ।। इयमत्र योजना । हे हरे ब्रह्मेशानादि-भिर्देवैर्यत्कैवल्यं प्राप्तुं नैव शक्यते । तत्कैवल्यं यत् यस्य स्वभावो नैसर्गिकम् । स भवानेव केवलः केवलशब्दवाच्यः । तत्प्रवृत्तिनिमित्तस्य कैवल्यस्य त्वय्येव स्वभावत्वेन सत्त्वादिति । मुक्ता-मुक्तोत्तमत्वरूपप्रकृतार्थलाभाय शेषं पूरयति– कर्तृविशेषेति ।।

ननु यथा मुक्तेश्वरयोर्हीनोत्तमभावे प्रमाणमस्ति तथा साम्येऽपि 'निरञ्जनः परमं साम्यमुपैति''मम साधर्म्यमागताः' इत्यादिप्रमाणमस्ति । अतः सत्प्रतिपक्षतेत्यत आह- साम्यवचनानामिति ।। परानन्ददुःखाभावादिनैव साम्यं न तु सर्वात्मनेत्यन्यत्रोक्तास्तीत्यर्थः ।

ननु परमप्रमेये मुक्तनियन्तृत्वे तथा चिच्चेत्यनियन्तृत्वाखिलसच्छक्तित्वादौ च श्रुत्यादिक-माचार्यैः कुतो नोक्तमित्यत आह- एवमिति ।। अन्यत्र श्रुत्यादिकमुदाहृतमिति शेषः ।

## श्रीराघवेन्द्रतीर्थ

नैसर्गिकमिति ।। सहजमनौपाधिकमिति यावत् । मात्रया मात्रायाः मितेः परोऽसि हे विष्णो तन्वा वृधान वर्धमान ते महित्वं महिमानं नान्वश्नुवन्ति । के इत्यत आह- कर्तृविशेषेति ।।

ननु 'निरञ्जनः परमं साम्यमुपैति''शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' इत्यादिश्रुतिभिः साम्यावगतेः कथं हीनोत्तमभाव इत्यत आह - साम्यवचनाना-मिति ।।

'लिङ्गभेदः परानन्दो दोषाभावः समा मताः ।'

इत्यादिना द्वितीयगीताभाष्ये, १ज्ञानपादीयानुव्याख्याने च 'दुःखाद्यभावसाम्यं च' इत्यादिना गतिरुक्तेत्यर्थः । एवमिति ।। साम्यवचनगतेरन्यत्रोक्तत्वेनात्रानुक्तत्ववन्मुक्तनियन्तृत्वादावपि प्रमाणानामन्यत्र ज्ञानपादीयानुव्याख्यानादावुक्तत्वादत्र नावादीदिति ज्ञेयमित्यर्थः ।अपरो रामानुजः । हीनोत्तमभावेनेति ।। नीचोच्चभावेनेत्यर्थः । असौ हीनोत्तम-भावः । प्रकृत इति ।। मुक्तेश्वरयोरित्यर्थः । नन्वस्मिन् प्रमाणे ईश्वरस्य मुक्तोत्तमत्वं न प्रतिपादितं ब्रह्माद्यमुक्तोत्तमत्वस्यैव प्रतिपादनप्रतीतेरित्यत आह-ब्रह्मेशानादिशब्देनेति । तथा च अयमर्थः । हे हरे ब्रह्मेशानादिभिर्देवैर्यत् कैवल्यं सर्वोत्तमत्वं प्राप्तुं नैव शक्यते । तत्कैवल्यं यत्स्वभावः यस्य तव नैसर्गिकरूपं स्वाभाविकं स्वरूपं स भवान् केवलः 'अस्माकमस्तु केवलः' इति श्रुतौ केवलशब्दवाच्यत्वेन प्रसिद्धः केवलशब्दप्रवृत्तिनिमित्तस्य सर्वोत्तमत्वस्य त्वय्येव सद्भावादिति । अनेन वाक्येन मुक्तेश्वरयोर्हीनोत्तमभावः स्पष्टमवगम्यते । अत्रैव पुनः प्रमाणान्तरमुच्यते मूले– परो मात्रयेति ।। अत्र ते महित्वम् अमुक्ताः नाऽप्नुवन्तीति प्रतीतेर्मुक्तोत्तमत्वरूपप्रकृतार्थालाभाच्छेषं पूरयति- कर्तृविशेषेति ।। तथा च तन्वा १शरीरेण च वृधान वावृधान अभिवृद्धः न तु कीर्ति-मात्रेण । तथा च हे विष्णो त्वं मात्रया मितेः परोऽसि अपरिमितोऽसीत्यर्थः । ते महित्वं महिमानं मुक्ता अमुक्ताश्च केऽपि नाश्नुवन्तीति श्रुत्यर्थः । ननु यथा मुक्तेश्वरयोर्हीनोत्तमभावे प्रमाणमस्ति तथा साम्येऽपि 'निरञ्जनः परमं साम्यमुपैति' इत्यादि प्रमाणमस्ति अतः सत्प्रतिपक्षतेत्यत आह– साम्यवचनानामिति ।। परानन्ददुःखाभावादिनैव साम्यं न तु सर्वात्मनेत्येवं गतिरन्यत्र तत्त्वनिर्णयादौ 'दुःखाभावः परानन्दः' इत्यादिप्रमाणोदाहरणेनोक्तास्तीत्यर्थः । ननु परमप्रमेये मुक्तनियन्तृत्वे तथा चिच्चेत्ययन्तृत्वेऽखिलसच्छक्तित्वे स्वतन्त्रत्वेऽशेषदर्शनशब्दोक्तसर्वज्ञत्वे च श्रुत्यादिकमाचार्यैः कुतो नोदाहृतमित्यत आह- एवमिति ।। अन्यत्र श्रुत्यादिकमुदाहृतमिति शेषः । अतोऽत्र नावादीदिति सम्बन्धः । 'अमृतस्यैष सेतुः', 'मुक्तानां परमा गतिः', 'चेतनाचेतनसर्वसत्तादि च यदिच्छया लभते', 'पराऽस्य शक्तिर्विविधैव श्रूयते', 'स एष हरिः परमः स्वतन्त्रोऽधिगुणः', 'यः सर्वज्ञः सर्ववित्' इत्यादि श्रुत्यादिकं द्रष्टव्यम् ।

## गुरुराजीया

ननु साधकबाधकभावाभावाभ्यामेव वस्तुसिद्धेः भेदे प्रमाणान्यभिधाय भेदाभावसाधक-प्रमाणानां 'सादृश्याद्यर्थान्येव योजनीयानि' इत्यादिना यथा गतिः कथिता, तथा हीनोत्तमभाव-साधकानि ब्रह्मेशानादिभिर्देवैः इत्यादीनि स्मृतिश्रुतिरूपप्रमाणान्यभिधाय, तद्विपरीतसाम्यादि-बोधकानां 'परमं साम्यमुपैति, मम साधर्म्यमागताः' इत्यादिवचनानां गतिरपि आचार्येणावश्य-मभिधातव्या । अन्यथा निर्णयानुपपत्तेः । तथा च साम्यादिवचनानां गतेरनुक्तत्वात् न्यूनत्वमित्यत आह- साम्यवचनानामिति ।।

नन्वेवमस्तु मुक्तेश्वरयोः हीनोत्तमभावः तथाऽपीश्वरस्य मुक्तनियन्तृत्वादौ साधकश्रुत्यादि-प्रमाणानामनुपन्यासे तद्विपरीतार्थबोधकप्रमाणानां गत्यकथने तस्य मुक्तनियन्तृत्वाद्यसिद्ध्यापत्त्या तत्सिद्ध्यर्थं तत्साधकप्रमाणान्यभिधाय तद्विपरीतार्थबोधकानां प्रमाणानां गतेरवश्यं वक्तव्यत्वात् प्रकृते चाऽचार्येण तदनुक्तेः न्यूनत्वमेवेत्यत आह- एवमिति ।। आदिपदेन सर्वत्राखिलसच्छक्ति-रित्यादीनां परिग्रहः । ततश्च यथा साम्यवचनानां गतिरन्यत्रैवोक्तेति न तामत्रावादीदाचार्यः । तथा मुक्तनियन्तृत्वादौ साधकप्रमाणान्यभिधाय तद्विपरीतार्थबोधकानां प्रमाणानां गतिरप्या-चार्येणान्यत्रैवोक्तेति न तामप्यत्रावादीदाचार्य इति पूर्वानुवृत्त्या सम्बन्ध इति भावः ।

यत्तु यथा हीनोत्तमभावे प्रमाणमस्ति तथा साम्येऽपि 'निरञ्जनः परमं साम्यमुपैति', 'मम साधर्म्यमागताः' इत्यादिप्रमाणमस्ति । अतः सत्प्रतिपक्षतेत्याशङ्कानिवर्तकतया साम्यवचनाना-मित्यादिवाक्यप्रवृत्तिमभिधाय, 'परानन्ददुःखाभावादिनैव साम्यं न तु सर्वात्मना' इत्यन्यत्र गतिरुक्ता' इत्यर्थवर्णनम् । तदसत् । उक्तयोजनायां 'साम्यवचनानां गतिरन्यत्रोक्ता' इत्येव वक्तव्यतया 'नात्रावादीदाचार्यः' इत्यंशस्याधिकत्वेन वैयर्थ्यापातात् । एतदनुरोधेन साम्य-वचनानामत्र गत्यकथनप्रयुक्तन्यूनताशङ्कामात्रनिवर्तकत्वावगत्या, शङ्कानिवर्तकतयैवैतद्ग्रन्थाव-तारस्य कर्तव्यतया, त्वदुक्तरीत्यैतद्ग्रन्थावतारस्यायुक्तत्वाच्च ।

यच्च परमप्रमेये मुक्तनियन्तृत्वे तथा चिच्चेत्यनियन्तृत्वाखिलसच्छक्तित्वादौ च साधकं श्रुत्यादिकं आचार्यैः कुतो नोक्तमित्याशङ्कानिवर्तकतया एवमित्यादिग्रन्थमवतार्य 'अन्यत्र श्रुत्यादिकमुदाहृतं' इति शेषपूरणेन वाक्यनैराकाङ्क्षोपपादनम् । तदसत् । मुक्तनियन्तृत्वादौ साधकानुक्त्यैव तद्विपरीतार्थबोधकप्रमाणगत्यनुक्त्याऽपि न्यूनताशङ्काया उत्थापयितुं शक्यत्वेन त्वदुक्तरीत्याऽऽक्षेपस्यापरिपूर्णत्वात् । 'साधकोक्तिपूर्वकं तद्विपरीतार्थबोधकप्रमाणगति-रन्यत्रोक्तेति नात्रोक्ता' इति पूर्वानुवृत्त्यैवैतद्ग्रन्थनिराकाङ्क्षताया वक्तव्यत्वेन शेषपूरणेन तन्निराकाङ्क्षताव्युत्पादनस्याश्लिष्टत्वाच्च ।

अत एव 'मुक्तेश्वरयोः हीनोत्तमभावविरोधिप्रमाणं भगवत्साम्यवचनं वा तस्यैवोत्तमवचनं वेति विकल्प्य आद्यपक्षं दूषयति- साम्यवचनानामिति ।। द्वितीयं दूषयति- एवमिति ।। मुक्त-कर्तृकनियमनादावित्यर्थः । तद्विषयकवचनानां गतिरन्यत्रोक्तेति पूर्वानुवृत्त्याऽन्वयः' इति केषाञ्चित्पक्षोऽपि निरस्तः । नात्रावादीदित्यंशवैयर्थ्यमित्यादिदोषस्यात्राप्यविशिष्टत्वात् । 'मुक्त-कर्तृकनियमनादिविषयवचनानां गतिरन्यत्रैवोक्तेति नात्रोक्ता' इति पूर्वानुवृत्त्यैवान्वयस्य श्लिष्टत्वेन, अन्यत्रोक्तेति पूर्वान्वयस्याश्लिष्टत्वाच्च ।

## गोविन्दीया

भेदमात्रेणेति ।। केवलभेदेनैव नियम्यनियामकभावः सम्भवति, किन्तु हीनोत्तम-भावसहितेनेत्यर्थः । तदिति ।। यत्स्वभावः यत्कैवल्यं सर्वोत्तमत्वं तद्द्वयमित्यर्थः । पर इति ।। ते महित्वं महिमानं नान्वश्नुवन्ति न प्राप्नुवन्तीत्यर्थः । साम्यवचनानामिति ।। आनन्दसुखानुभवेन साम्यं न तु सर्वात्मनेति साम्यवचनानां गतिरन्यत्रैव ग्रन्थान्तरे उक्तमस्तीत्यत्र नावादीदाचार्य इत्यर्थः । एवमिति ।। हीने भ्रमभावे यथा

प्रमाणमस्ति, एवं तथा मुक्तनियन्तृत्वादावपि प्रमाणमस्ति तच्चाप्यन्यथाऽत्रोक्तमित्यत्र न प्रदर्शितमाचार्येणेत्यर्थः ।

### नारोपन्तीया

साम्यवचनानां गतिरिति । 'निरञ्जनः परमं साम्यमुपैति' इत्यादिभिर्दुःखादिनिवृत्ति-मादायैव भगवत्साम्यं बोध्यम् । न पुनस्तत्तुल्यज्ञानानन्दादिकमिति । अत एव श्रुतौ निरञ्जन इति पदं, यत्परमं साम्यमुपैति तन्निरञ्जनत्वेनैव । न तु सर्वगुणैरिति । अन्यथा तद्वैयर्थ्यापत्तेरिति । एवं क्वचित्स्वयोग्यगुणपूर्णताऽपि ग्राह्या । नैतावता साम्यम् । यथा समुद्रोऽपि पूर्णः पल्वलं च पूर्णमित्यु-च्यते । नैतावता द्वयोस्तुल्यता । तथा प्रकृतेऽपि साम्यश्रुतीनामभिप्राय इत्यर्थः ।

### जनार्दनभट्टीया

न भेदमात्रेणेति ।। देवदत्तयज्ञदत्तयोरपि परस्परनियामकत्वापत्तेरिति भावः । न चासा-विति ।। हीनोत्तमाभाव इत्यर्थः । यत्पदकेवलपदयोः व्यवहितत्वाद् विशेषविशेष्यभावाप्रतीतेः तत्प्रदर्शनपूर्वकं कैवल्यपदेन द्वितीयराहित्यप्रतीत्या निर्गुणत्वादिप्रतीतिं वारयितुमाह– यत्कैवल्यमित्यादिना ।। यत्स्वभाव इत्यत्र पदद्वयप्रतीतिं भावशब्दस्य धर्मार्थकप्रतीतिं च वारयितुमाह– यत्स्वभाव इत्यादिना ।।

ननु परमात्मनो मुक्तामुक्तनियामकत्वे 'परमं साम्यमुपैति' इति साम्यवचनानां का गतिः? इत्यत आह – साम्यवचनानामिति ।। अन्यत्रेति ।। उपनिषद्भाष्यादावित्यर्थः । संसारदशायां जीवस्य परमात्मना इतरजीवैश्च चिदानन्दाद्यात्मकत्वेन साम्यसत्त्वेऽपि मुक्तौ दुःखाभावसत्यसङ्कल्पत्वादिनाऽपि साम्यमुपैतीत्यत्र गतिरुक्ता इत्यर्थः । 'लिङ्गभेदो परानन्दो दुःखाभावः समानता१' इति स्मृतेः । अन्यथा मुक्तस्य ईश्वरवद् जगत्स्रष्टृत्वादिकं स्यात् । तच्च 'जगद्व्यापारवर्ज्यम्' इति सूत्रेण मायावादिनोऽपि निषिद्धमिति द्रष्टव्यम् ।

## सत्यचिच्चेत्यपतये मुक्तामुक्तोत्तमाय ते ..

**प्रकरणान्ते प्रतिपादितगुणगणविशिष्टभगवन्नमनम्**

### श्रीमज्जयतीर्थटीका

एवं यद्गुणगणविशिष्टं भगवन्तमनेन प्रकरणेन प्रतिपादितवानाचार्यस्तादृशमेव स्तुवन् प्रकरणान्तेऽपि नमस्करोति-

## मूल

***सत्यचिच्चेत्यपतये मुक्तामुक्तोत्तमाय ते ।***

*नमो नारायणायार्यवृन्दवन्दितपद्द्वय ।।*

*।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं*

*तत्वोद्योतप्रकरणं समाप्तम् ।।*

## श्रीमज्जयतीर्थटीका

चिच्चेत्यपतित्वोपपादनं सत्येति मुक्तामुक्तोत्तमायेति च । आर्येत्यादि तु नारायणस्यैव नमस्कार्यत्वोपपादनार्थम् । इत्यशेषमतिमङ्गलम् ।

## श्रीविजयीन्द्रभिक्षु

प्रकरणान्तेऽपीति ।। 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते' इत्यादिन्यायेनाऽद्यन्तयोः मङ्गलकरणस्य प्रकरणप्रचयहेतुत्वात् शिष्यायुरभिवृद्ध्यादिहेतुत्वाच्चेति भावः । चिच्चेत्येति ।। चिच्चेत्ययोरारोपितत्वे तत्पतित्वमप्यारोपितत्वेनासदेव स्यादिति वास्तवपतित्वसिद्ध्यर्थं सत्येति विशेषणमिति भावः ।

## श्रीवेदेशतीर्थ

प्रकरणान्तेऽपीति ।। 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते' इत्युक्तत्वेनान्तेऽपि मङ्गलकरणस्य ग्रन्थप्रचयहेतुत्वादिति भावः । चिच्चेत्येति ।। चिच्चेत्ययोरसत्त्वे कस्य पतिः स्यादिति भावः । इति च पतित्वोपपादनमिति सम्बन्धः । तदपेक्षयाऽनुत्तमस्य तत्पतित्वासम्भवादिति भावः ।।

## श्रीराघवेन्द्रतीर्थ

विशेषणानां कृत्यमाह- सत्येति ।। इति चेति ।। चिच्चेत्यपतित्वोपपादनमित्यनुषङ्गः । आर्येतीति ।। आर्या ब्रह्मादयो महात्मान इत्यर्थः । प्रकरणान्त इति ।। 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते आयुष्मत्पुरुषकाणि भवन्ति' इत्युक्तत्वेनान्तेऽपि मङ्गलकरणस्य ग्रन्थप्रचयहेतुत्वेनाऽवश्यकत्वादिति भावः । मूले सत्येति ।। आर्या ब्रह्मादयस्तेषां वृन्दाः समूहास्तैर्वन्दितं पदोर्द्वयं यस्यासौ तथोक्तः तस्य सम्बुद्धिः हे आर्यवृन्दवन्दितपद्द्वय । सत्येत्यादिविशेषणद्वयविशिष्टाय नारायणाय ते नम इत्यन्वयः । पतित्वेति ।। चिच्चेत्ययोरसत्त्वे तत्पतित्वायोगात् । न हि वन्ध्यासुतस्य कश्चित्पति-रस्तीति भावः । इति चेति ।। पतित्त्वोपपादकमिति सम्बन्धः मुक्तामुक्तोत्तमत्वोक्त्या चित्पतित्वं प्राप्तम् । चित्पतित्त्वे च चैत्यपतित्वं कैमुत्येन लब्धमिति भावः । नारायणस्यैवेति ।। सतीष्वन्यासु देवतासु अस्यैव नमस्कार्यत्वं कुतः ? इत्याशङ्का परिहाराय नारायणस्य ब्रह्मादिसर्वदेवता-वन्द्यत्वाद्युक्तं तस्यैव नमस्कार्यत्वमित्युपपादनार्थमित्यर्थः ।

## गुरुराजीया

अन्तेऽपीति ।। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते आयुष्मत्-पुरुषकाणि वीरपुरुषकाणि च भवन्तीति, आदाविवान्तेऽपि मङ्गलानुष्ठानस्य कर्तव्यत्वश्रवणादिति भावः । चिच्चेत्ययन्तेति।। पूर्वग्रन्थानुसारेण चिच्चेत्यपतय इत्येव वक्तव्यत्वात्सत्यपदस्याऽनर्थक्य-मित्याशङ्क्य, तयोरसत्त्वे तत्पतित्वायोगेन तदुपपादकत्वात्सत्यपदस्य नाऽनर्थक्यमित्याशयेन तत्प्रयोजनमाह- चिच्चेत्येति ।। इति चेति ।। इति च चिच्चेत्यपतित्वोपपादनार्थमुक्तमित्यर्थः । अयं भावः । न सत्यतामात्रेणेश्वरस्य चिच्चेत्यपतित्वमुपपद्यते । तस्य हीनोत्तमभावसापेक्षत्वेनासति तस्मिन्नयोगादित्यतस्तदुपपादनाय मुक्तामुक्तोत्तमायेत्युक्तम् । एतच्च ब्रह्मेशानादिभिरित्यादि-प्रागुपन्यस्तप्रमाणसिद्धमिति न कश्चित् क्षुद्रोपद्रवः । सङ्कोचे कारणाभावेन तत्र मुक्तानाममुक्तानां च ब्रह्मेशानादिपदैः सङ्गृहीतत्वात् ।

## गोविन्दीया

तादृशमेवेति ।। तद्गुणविशिष्टमेवेत्यर्थः । इत्यशेषमिति ।। इति समस्त-प्रकरणमतिमङ्गलमित्यर्थः ।

## जनार्दनभट्टीया

‘सत्यचिच्चे’त्यादिना आद्यश्लोकोक्तगुणैरेव स्तवने पौनरुक्त्यदोषः । प्रयोजनाभावादित्यत आह – एवमिति ।। तथा च प्रकरणार्थोपसंहाररूपत्वात् अस्य न पौनरुक्त्यं दोषायेति भावः । मूले ‘मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि भवन्ति’ इति शास्त्रात् प्रकरणान्ते भगवन्नामनिबन्धनात्मकत्वाच्च नासङ्गतिरिति भावः । मूले नमःशब्दयोगात् ‘नमः स्वस्तिस्वाहा...’१ इत्यादिना ‘नारायणाय’ इति चतुर्थी । आचार्यस्य अपरोक्षीकृतनारायणत्वात् ‘वन्दितपद्वय’ इति सम्बोधनम् ।

## नमो नारायणायार्यवृन्दवन्दितपद्वय..

**अन्ते निवेशितशिष्यनिबद्धश्लोकार्थविवरणम्**

***नमो नारायणायार्यवृन्दवन्दितपद्वय***

## श्रीमज्जयतीर्थटीका

इतःपरं भगवदाचार्यशिष्यप्रणीताः श्लोकाः । एवमत्र कथां कथयन्ति । पुण्डरीक-वनाभिधानेन मायिना सह भगवत आचार्यस्य कथाप्रसक्तौ सभ्यसभापतिप्राश्निकेषु मिलितेष्वा-चार्यदर्शनमात्रेण भीतः प्रतिवादी तूष्णीं बभूव । तदाऽचार्येण तस्याकर्णयतः सतः मायामत-निकृन्तनोपन्यासोऽयं निर्मितः तच्छ्रवणेनात्यन्तत्रस्तहृदयोऽसौ पलायितवान् । तदाऽऽचार्यशिष्याः प्रतिवादिभयङ्करं भगवन्तमाचार्यं तदभीष्टदेवतां नरहरिं चोपश्लोकयाम्बभूवुः । तेच श्लोकाः अविच्छिन्नप्रवृत्तये शिष्यैरर्थितेन भगवता प्रकरणान्ते निवेशिता इति । अत एव ते जाह्नवीजलानुगतयामुनोदकवत्प्रकरणान्तर्गता एव । अनेककर्तृकत्वान्न तेषामन्योन्यसङ्गतिः ।

आनन्दतीर्थपुंसिंहो मायावादिदितेः सुतान् ।

विदार्य युक्तिनखरैरप्रतीपोऽभिभासते ।। १ ।।

**श्रीमज्जयतीर्थटीका**

'मायावादिदितेः सुतान्' इति 'षष्ठ्या आक्रोशे'१ इत्यलुक् ।

पलायध्वं पलायध्वं त्वरया मायिदानवाः ।

सर्वज्ञहरिरायाति तर्कागमदरारिभृत् ।। २ ।।

श्रीमज्जयतीर्थटीका

पलायध्वं पलायध्वमिति सम्भ्रमे द्विर्वचनम् । सर्वज्ञः पूर्णप्रज्ञाचार्यः ।

द्रवत द्रवताऽशु मायिनः प्रविशध्वमतन्द्रिता गुहाः ।

कमलारमणाम्बराश्रयः समुदेत्यखिलज्ञभास्करः ।। ३ ।।

**श्रीमज्जयतीर्थटीका**

पूर्ववद् द्विर्वचनम् । मायिनश्चोरा मायावादिनश्च । समुदेति यत इति शेषः ।

नृहरिः सकलज्ञनामकः समुपैति हि मायिदानवान् ।

प्रपलायनमत्र तत्क्षमं त्वरया वसतिर्गुहासु च ।। ४ ।।

श्रीमज्जयतीर्थटीका

हिशब्दो हेतौ ।

जयत्यानन्दतीर्थेष्टदेवता नरकेसरी ।

विपाटिताज्ञानतमःकपाटात्युरुहुङ्कृतः ।। ५ ।।

**श्रीमज्जयतीर्थटीका**

जयत्युत्कृष्टो वर्तते । अज्ञानं तम इवाज्ञानतमः प्रकाशप्रतिबन्धकत्वात् । तच्च कपाट-मिवाज्ञानतमःकपाटम् । परमपुरुषाराधनधामप्रवेशप्रतिबन्धकत्वात् विपाटितमज्ञानतमःकपाटं येन तद्विपाटिताज्ञानतमःकपाटं विपाटिताज्ञानतमःकपाटमत्युरुहुङ्कृतं हुङ्कारो यस्यासौ तथोक्तः । अत्राज्ञानं च मायामतमेवाभिमतं ; प्रसङ्गात् ।

जयत्यमितपौरुषः स्वजनतेष्टचिन्तामणिः ।

अजेशमुखवन्दितो गुणगणार्णवः श्रीपतिः ।। ६ ।।

**श्रीमज्जयतीर्थटीका**

जनता जनसमूहः । इष्टसिद्धौ चिन्तामणिरिवेष्टचिन्तामणिः ।

सर्वज्ञसन्मुनीन्द्रोच्चसन्मनःपङ्कजालयः ।

अजितो जयति श्रीशो रमाबाहुलताश्रयः ।। ७ ।।

**श्रीमज्जयतीर्थटीका**

रमाबाहुलतयोराश्रयो रमाबाहुलताश्रयः ।

## श्रीविजयीन्द्रभिक्षु

आचार्यवाचकपदा, आनन्दतीर्थपुंसिंह इत्यादिश्लोकाः शिष्यकृतत्वान्न प्रकरणे निवेशार्हाः । निवेशिता अपि न व्याख्येयाः । प्रकरणानन्तर्गतत्वादित्यत आह- एवमत्रेति ।। मायावादिनां दितिसुतत्वेन निरूपणस्य मायावादित्वस्य दितिसुतान्वयं विनाऽसम्भवाद्यथाश्रुतेऽ-पार्थकत्वमाशङ्क्याऽह- षष्ठ्या इति ।। आक्रोशे गम्यमाने षष्ठ्या अलुक् स्यादिति सूत्रार्थः । द्विर्वचनस्य वैयर्थ्यमाशङ्क्याऽह- पलायध्वमिति ।। आचार्यवाचकपदाभावादाचार्यस्य हरित्वेन निरूपणं कथमित्यत आह- सर्वज्ञ इति ।। अस्मिन् श्लोके मायिनश्चोरत्वेन निरूप्यन्त इति ज्ञापनाय मायिशब्देनोभयग्रहणमित्याह- मायिन इति ।। यथा चोराणां निश्येव सञ्चारो न भास्करोदयानन्तरं तथा मायिनामाचार्योदयात्प्रागेव सञ्चारो न तदुदयानन्तरमिति भावः । सकलज्ञनामक इति ।। पूर्णप्रज्ञनामक इत्यर्थः ।

इति श्रीविजयीन्द्राख्यभिक्षुणा प्रीतये हरेः ।

तत्वोद्योतस्य विवृतौ गूढो भावः प्रकाशितः ।।

।। इति श्रीपरमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थश्रीपादानां शिष्येण विजयीन्द्रभिक्षुणा विरचितस्तत्वोद्योतविवृतेः भावप्रकाशः समाप्तः ।।

## श्रीवेदेशतीर्थ

नन्वानन्दतीर्थपुंसिंह इत्यादिग्रन्थेन कथमाचार्यैः स्वस्तुतिः कृता तस्या गर्हितत्वादित्यत आह- इतःपरमिति ।। ननु तर्हि न प्रकरणान्ते निवेशनीया इत्यत आह- एवमत्रेति ।। नन्वस्तु प्रकरणान्ते निवेशः तथाऽपि न व्याख्येया । अन्यकृतत्वेन प्रकरणानन्तर्गतत्वादित्यत आह- अत एवेति ।। अतो व्याख्यायन्त इति शेषः । तथा यामुनोदकं गङ्गानिविष्टं गङ्गोदकत्वेन व्यवह्रियते उपादीयते च तथैते श्लोका अपि भगवत्पादीयप्रकरणनिविष्टास्तत्प्रकरणत्वेनैव व्यवह्रियन्ते अतोऽ-स्माभिर्व्याख्यायन्त इति भावः ।

ननु विवक्षितस्य मायावादिनां दितिसुतत्वेन निरूपणस्य मायावादिदितिसुतानिति समास-करणेन विनाऽलाभात्कथं मायावादिदितेः सुतानिति पदद्वयमित्यत आह- षष्ठ्या इति ।। 'आक्रोशे गम्यमाने षष्ठ्या अलुक्स्यात्' इति सूत्रार्थः । आचार्यवाचकपदाभावादाचार्यस्य हरित्वेन निरूपणं कथं लभ्यत इत्यत आह- सर्वज्ञ इति ।। अस्मिन् श्लोके मायिनश्चोरत्वेन निरूप्यन्त इति ज्ञापनाय मायिशब्देनोभयग्रहणमित्याह- मायिन इति ।। यथा चोराणां भास्करोदयात्पूर्वमेव सञ्चारो न भास्करोदयानन्तरं तथा मायिनामाचार्योदयात्पूर्वमेव सञ्चारो नाचार्योदयानन्तरमपीति भावः । सकलज्ञनामक इति मूलम् ।। पूर्णप्रज्ञनामक इत्यर्थः। प्रसङ्गादिति ।। दूष्यत्वेन प्रस्तुतत्वादिति भावः। रमाबाहुलताश्रय इत्यत्र बहुव्रीहिभ्रान्तिं वारयति- रमाबाहुलतयोरिति ।।

## श्रीराघवेन्द्रतीर्थ

१माया(वाद)मतनिकृन्तनेति ।। यद्यपि 'कृती-१ छेदने' इत्येव धातुः प्रसिद्धः । तत्र च निकर्तनेति रूपेण भाव्यम् । तथाऽपि 'नखनिकृन्तनेन' इत्यादिप्रयोगदर्शनेन 'कृति छेदने' इत्यपि धातोरङ्गीकार्यत्वात् 'इदितो नुम् धातोः' इति नुमागमे सति निकृन्तनेति साधुरिति बोध्यम् । तथा च गीतगोविन्दे-

'विरहनिकृन्तनकुन्तसमाकृतिकैतकदन्तुरिताः ।' इति ।

असाविति ।। पुण्डरीकवननामा मायावादीत्यर्थः । उपश्लोकयाम्बभूवुरिति ।। श्लोकरूपेण स्तुतिमकुर्वन्नित्यर्थः । निवेशिता इतीतिपदस्य कथां कथयन्तीति पूर्वेणान्वयः । अत इति ।। आचार्येण निवेशितत्वादेवेत्यर्थः । प्रकरणान्तर्गता एवेति ।। तथा चास्ति व्याख्येयत्वमिति भावः। मायावादिपदस्य दितिसुतपदेनान्वययोग्यतया यथाश्रुतेऽनन्वयात् समस्तमेवेदं पदं न भिन्नमिति भावेनाऽह - षष्ठ्या इति ।। आक्रोशो निन्दा । आक्रोशे गम्यमाने षष्ठ्या अलुग् भवतीति सूत्रार्थः । चोरस्य कुलमित्यादाविवेति भावः । दितिसुतवन्निन्दिता मायावादिना इत्यर्थः । अस्मिन् श्लोके मायिनश्चोरत्वेन रूप्यन्त इति भावेनाऽह- मायिनश्चोरा इति ।। यथा चोराणां सञ्चारो निश्येव न भास्करोदये । तथा मायावादिनामाचार्योदयात्प्रागेव न तदुदयानन्तरमिति भावः ।

सकलज्ञेति ।। पूर्णप्रज्ञनामकः । हिशब्दो हेताविति ।। हि यस्मान्मायिदानवानुपैति तस्मादि-त्यर्थः । भावे निष्ठेति भावेनाऽह- हुङ्कृतं हुङ्कार इति ।। मायिमतनिरासप्रसङ्गादित्यर्थः । 'ग्रामजन-बन्धु(सहाये)भ्यस्तल्'१ इति समूहार्थे तल्प्रत्यय इति भावेनाऽह- जनता जनसमूह इति ।। कर्मधारयभ्रान्तिं निराह- इष्टसिद्धौ चिन्तामणिरिवेति ।। बहुव्रीहिभ्रान्तिं वारयति- रमाबाहुल-तयोराश्रयो रमाबाहुलताश्रय इति ।।ननु आनन्दतीर्थपुंसिंहेत्यादिग्रन्थेनाऽचार्यैः कथं स्वस्तुतिः क्रियते ? तस्याः गर्हितत्वा-दित्यत आह– इतः परमिति ।। ननु तर्हि न प्रकरणान्ते निवेशनार्हा इत्यत आह- एवमत्रेति ।। निकृन्तनेति ।। कृती च्छेदने । तत्खण्डनरूपोपन्यास इत्यर्थः । उपश्लोकयाम्बभूबुरिति ।। उपश्लोकः स्तुतिः । तथा च स्तुतिमकुर्वन्नित्यर्थः । नन्वस्तु प्रकरणान्ते निवेशस्तथापि न व्याख्येया, अन्यकृतत्वेन प्रकरणानन्तर्गतत्वादित्यत आह– अत एवेति ।। प्रकरणान्ते निवेशनादेवेत्यर्थः । जाह्नवीति ।। यथा यामुनोदकं गङ्गानिविष्टं गङ्गोदकत्वेन व्यवह्रियते एवमन्यकृतमपि श्लोकजातं प्रकरणनिविष्टं प्रकरणत्वेन व्यवह्रियते । अतोऽस्माभिर्व्याख्यायत इति भावः । मूले आनन्द-तीर्थाख्यः पुंसिहः नरसिंहः । युक्तिनखरैः युक्तिलक्षणैर्नखैः । प्रतीपः विरोधी तच्छून्योऽप्रतीपः । ननु मायावादिदितिसुताननिति समासे षष्ठीविभक्तेर्लोपेन भाव्यं अतो दितेः सुताननिति कथं पदद्वयमित्यत आह- षष्ठ्या आक्रोश इति ।। आक्रोशः निन्दा, तस्यां गम्यमानायां षष्ठ्याः अलुक् लोपो न भवतीति सूत्रार्थः । चोरस्य कुलमित्युदाहरणम् । तथा च दितिसुतानां निन्द्यत्वज्ञापनाय षष्ठ्या लोपो न जातः । तथा च सरसि जायत इति सरसिजमितिवदलुक्समासोऽयम् । ततश्चैकमेव पदमिति भावः । सम्भ्रमादिति ।। कुतूहलातिशयवशादित्यर्थः । नन्वत्राचार्यवाचकपदाभावाद् आचार्यस्य कथं हरित्वेन निरूपणं लभ्यत इत्यत आह- सर्वज्ञ इति । तथा च हे दानवाः१ तर्कागमलक्षणशङ्खचक्रधृत् पूर्णप्रज्ञाख्यो हरिरायाति । अतः पलायध्वमित्यर्थः । हरेर्दानवारित्वादिति भावः । पूर्ववदिति ।। सम्भ्रमादित्यर्थः । अस्मिन् श्लोके मायावादिनश्चोरत्वेन निरूप्यन्त इति ज्ञापनाय मायिशब्देनोभयग्रहणमित्याह- मायिन इति ।। आकाशे भास्करोदये तस्कराणां द्रवणादिकं प्रसिद्धम् । भास्करस्य तस्कररिपुत्वात् । एवं हि यस्मात् हे मायावादिरूपाश्चोराः लक्ष्मी-रमणांबराश्रयः अखिलज्ञभास्करः पूर्णप्रज्ञाचार्यरूपः सूर्यः सम्यक् उदेति अहो द्रवत द्रवत । अतन्द्रिताः आलस्यशून्याः सन्तः गुहां प्रविशध्वमित्यर्थः । मायावादिनां चोरत्वं च, 'मा वदो मा विजानीहि त्यजास्मच्छास्त्रचोरताम्' इत्यनुव्याख्याने । यच्च प्रमाणदृष्टानामपि पदार्थानां मिथ्यात्वकल्पनं तच्च प्रमाणविरुद्धत्वादेव प्रकाशतस्करत्वमिति तत्त्वनिर्णये नवकृत्वोऽभ्यासे चोरापहार्यदृष्टान्ते मायावादिनां चोरत्वं निपुणतरमुपपादितमस्तीति ज्ञातव्यम् । हिशब्द इति ।। हि यस्मात् सकलज्ञनामको नृहरिर्नरसिंहो मायिदानवान् प्रति समुपैति हि तस्मात् । अत्र नृसिंहागमने प्रकर्षेण पलायनं त्वरया शीघ्रं गुहासु वसतिः निलीनभावेन वासश्चेति द्वयं यत्क्षमं तस्य नृसिंहस्य क्षान्तिकरं कोपोपशमकरमित्यर्थः । नृसिंहागमनसमये भवद्भिः पुरतः स्थितं चेत्कोपेन वधिष्यति तं दृष्ट्वा भवद्भिः पलायनादिकं कृतं चेत्तर्हि तस्य कोपशान्तिर्भविष्यतीति भावः । तमस्साम्यमुपपादयति- प्रकाशेति ।। तमश्शब्दवाच्यप्रसिद्धान्धकारः आलोकादिप्रकाशप्रति-बन्धकः । अज्ञानाख्यं तमस्तु प्रकाशशब्दवाच्यज्ञानप्रतिबन्धकमित्यर्थः । तच्च तदिति । अज्ञानतमश्च तत्कपाटं चेत्यर्थः । तस्य कथं कपाटत्वमित्यतः कपाटमिवेत्युक्तम् । तत्साम्यमुपपादयति– परमपुरुषेति ।। धाम गृहम् । प्रसिद्धकपाटं धामप्रवेशप्रतिबन्धकं प्रसिद्धम्, अज्ञानतमआख्यं कपाटं च परमपुरुषाराधनरूपधामप्रवेशप्रतिबन्धकमित्यर्थः

। हुङ्कारोऽत्युत्कृष्ट-हुङ्कारः । यदीयोत्कृष्टहुङ्कारेणाज्ञानतमःकपाटं विपाटितं भवतीति यावत् । अत्राज्ञानं चेति ।। सम्यग्ज्ञानविरोधि चेत्यर्थः । प्रसङ्गादिति ।। दूष्यत्वेन प्रस्तुतत्वादित्यर्थः । यस्मिन् मायावादिमते प्रवृत्ते सति परमपुरुषाराधनं न सम्पद्यत इति भावः । यथोक्तं मध्वविजये-

'विश्वं मिथ्या विभुरगुणवानात्मनां नास्ति भेदो

दैत्या इत्थं व्यदधत गिरां दिक्षु भूयः प्रसिद्धिम् ।

आनन्दाद्यैर्गुरुगुणगणैः पूरितो वासुदेवो

मन्दं मन्दं मनसि च सतां हन्त नूनं तिरोभूत् ।।'१

'विज्ञानभानुमति कालबलेन लीने दुर्भाष्यसन्तमससन्तिततो जनेऽन्धे ।।' इति ।

जनता जनसमूह इति । २ग्रामजनबन्धुसहायेभ्यस्तल् । एभ्यः शब्देभ्यः समूहार्थे तल्प्रत्ययः स्यादिति सूत्रार्थः । तथा चानेन सूत्रेण जनशब्दात् समूहार्थे तल्प्रत्ययविधानादिति भावः । मध्यमपदलोपी समास इत्यभिप्रेत्य व्याचष्टे- इष्टसिद्धाविति ।। मूले सर्वज्ञाः ये सन्तो मुनयो वसिष्ठाद्यास्तेषामिन्द्रः श्रेष्ठो भगवानाचार्यः । अथवा सर्वज्ञः पूर्णप्रज्ञश्चासौ सन्मुनीन्द्रश्च विशेषणस्य परनिपातः । सर्वज्ञाश्च ते सन्मुनीन्द्राश्चेति वा । अथवा सर्वज्ञश्चासौ सन्मुनीन्द्रोच्चसन्मनःपङ्क-जालयश्चेति श्रीशविशेषणम् । बहुलग्रहणाद्विशेषणयोरेव समास इत्यपि केचित् । मनस उच्चत्वं च उत्कृष्टत्वं बह्वर्थविषयकत्वमिति यावत् । बह्वर्थविषयकज्ञानस्यान्तःकरणोपादानकत्वादिति ज्ञातव्यम् । सत्त्वं रागादिदोषाकलुषितत्वम् । एतादृशं मनोलक्षणं यत्पङ्कजं तदेवाऽलयः स्थानं यस्यासौ तथोक्तः । अजितः अपराजितः । रमाबाहुलतैवाश्रयो यस्येति बहुव्रीहिभ्रान्तिं वारयति- रमाबाह्विति ।। तथा च रमायाः बाहू रमाबाहू रमाबाहू लते इव कोमलत्वसाम्यात् । तयोराश्रय इत्यर्थः । बाहुभ्यां रमयाऽऽलिङ्गित इति यावत् ।

## गुरुराजीया

नन्वव्याख्यातस्योत्तरग्रन्थस्यापि सत्त्वात्कथमशेषमतिमङ्गलमिति ग्रन्थसमाप्तिसूचन-मित्यतस्तेषाम् आचार्यशिष्यप्रणीतत्वेन तत्कृतत्वाभावात्, ३तद्ग्रन्थसमाप्त्यभिप्रायेण युक्तं तत्सूचन-मित्यभिप्रेत्याऽह- इतःपरमिति ।। शिष्यप्रणीतत्वे तेषां प्रकरणान्ते निवेशो न स्यादित्य-तस्तमुपपादयति- एवमत्रेति ।। मायिनेति ।। व्रीह्यादित्वादिनिरिति भावः । निकृन्तनेति ।। यद्यपि निकर्तनेति वक्तव्यम् । अनिदित्वेन 'इदितो नुम् धातोः' इति नुमोऽप्राप्तेः । तथाऽपि धातोरिति इष्टसिद्ध्यर्थं योगविभागाश्रयणस्य आकरे स्थितत्वान्नुमि सति तदुपपत्तिरित्यन्यत्र विस्तरः । अविच्छिन्नेति ।। अन्ते आचार्येणानिवेशे विच्छेदध्रौव्यान्नाविच्छेदेन प्रवृत्तिरिति भावः । तथात्वे पाठनव्याख्यानादिरूपप्रवृत्त्युपपत्तिरित्यतस्तां दृष्टान्तोपदर्शनेनोपपादयति- अत इत्यादिना ।।

सङ्गतिरिति ।। अतस्तदनुक्तिर्न दोषायेति भावः । ननु दितेः सुताः दितिसुताः, मायावादिनश्च ते दितिसुताश्चेति षष्ठीतत्पुरुषगर्भविशेषणसमासे 'सुपो धातुप्रातिपदिकयोः' इति सुब्लोपे च सति मायावादिदितिसुतानिति भवितव्यम् । तत्कथं दितेः सुतानिति षष्ठीश्रवणमित्यतस्तदलोपे निमित्त-कथनेन तच्छ्रवणमुपपादयति- मायावादिदितेःसुतानिति ।। ननु पलायध्वमित्येकोक्त्यैव विवक्षिताभिधानसिद्धेर्द्विरुक्तिरधिकेत्यतः, सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगः कार्य इति न्यायाद्युक्ता द्विरुक्तिरिति भावेनाऽह- सम्भ्रमे द्विर्वचनमिति ।। नन्वत्राऽचार्यवाचकपदाश्रवणात् कथमियं तत्स्तुतिरित्यतः सर्वज्ञपदमेव तथेति भावेन तत्परतया व्याचष्टे- सर्वज्ञः पूर्णप्रज्ञाचार्य इति ।।

पूर्ववदिति ।। 'पलायध्वं पलायध्वम्' इतिवत् 'द्रवत द्रवत' इति सम्भ्रमे द्विर्वचनमित्यर्थः । मायिशब्दस्य मायावादिमात्रपरत्वभ्रमनिरासाय चोरपरत्वमपि द्रष्टव्यमित्याह- मायिनश्चोरा इति ।। यथा चोराणां भास्करोदयात्पूर्वमेव सञ्चारो, न तदुदयानन्तरमपि तथा मायावादिनामप्याचार्योदयात् प्रागेव सञ्चारो युक्तः । न तदुदयानन्तरमपीति भावेन योजयति- समुदेति यत इति शेष इति ।। सकलज्ञ इति ।। सर्वज्ञ इतिवद्व्याख्येयम् ।

ननु जयेः, राजा शत्रून् जयतीत्यादौ कर्मापेक्षत्वदर्शनाद् अत्र कर्मानुक्तिर्दोष इत्यतोऽभि-भवार्थकस्य सकर्मकत्वेऽपि उत्कर्षप्राप्त्यर्थकस्य जयेरकर्मतया-

'जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ।

उत्कर्षप्राप्तिराद्योऽर्थः द्वितीयेऽर्थे सकर्मकः ।। '

इति वचनानुसारेण सकर्मकत्वनियमाभावात् कर्मानुक्तिर्न दोषायेति भावेनोत्कर्षार्थतया व्याचष्टे- जयत्युत्कृष्टो वर्तत इति ।। इवार्थमुपदर्शयति- प्रकाशेति ।। इवार्थकथनम्- परमपुरुषेति ।। प्रसङ्गादिति ।। दूष्यत्वेनेति शेषः ।

समूह इति ।। 'ग्रामजनबन्धु(सहाये)भ्यस्तल्' इति तल्प्रत्यय इति भावः । गुणगणार्णव इति ।। गुणैरर्णव इत्यर्थः । गुणगणैरिति प्रकृत्यादिभ्य उपसंख्यानात्तृतीया । तृतीयेति योगविभागाद्बहुलग्रहणाद्वा तृतीयासमास इति भावः । रमाबाहुलतयोराश्रय इति ।। बहुव्रीह्यर्थस्य बाधितत्वाद् वर्तिपदार्थप्रधानत्वेन समासप्राधान्याच्चेति भावः ।

## गोविन्दीया

अवच्छिन्नेति ।। विच्छित्त्यभावेन प्रवृत्तय इत्यर्थः । तेषामिति ।। श्लोकानामित्यर्थः । दितेः सुतानितीति ।। 'दितेःसुतान्' इत्यत्र दितिप्रातिपदिकात् स्थितायाः षष्ठीविभक्तेः 'षष्ठ्या आक्रोशः' इति सूत्रेणालुगित्यर्थः । तर्केति ।। तर्कागमावेव दरारी तौ । कमलेति ।। कमलारमण एवाम्बरमाकाशः स एवाश्रयो यस्येत्यर्थः । प्रकाशेति ।। ज्ञानप्रतिबन्धकत्वादित्यर्थः । परमेति ।।

परमपुरुषाराधनाख्यधामप्रवेशप्रतिबन्धकत्वादित्यर्थः । सर्वज्ञेति ।। सर्वज्ञश्चासौ सन्मुनीन्द्रश्च, तस्योच्चसन्मन एव पङ्कजं तदेवाऽलयं यस्य स इत्यर्थः । रमेति ।। रमाबाह्वाख्यलतयोराश्रयतीत्याश्रय इत्यर्थः ।

## नमो नारायणायार्यवृन्दवन्दितपद्द्वय..

### श्रीमज्जयतीर्थटीका

श्रीमदानन्दतीर्थार्यहृदयाम्भोजमन्दिरः ।

कमलाश्लेषरसिकः प्रीयतां नः परः पुमान् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वोद्योतविवरणं

जयतीर्थभिक्षुविरचितं सम्पूणम् ।।

### श्रीवेदेशतीर्थ

एवं समापितप्रकरणव्याख्यानो भगवांष्टीकाकारः स्वग्रन्थप्रचयायान्तेऽपि भगवत्प्रीति-प्रार्थनरूपं मङ्गलं कृत्वा शिष्यशिक्षायै ग्रन्थे निबध्नाति- श्रीमदानन्दतीर्थेति ।। श्रीमदानन्दतीर्थेत्यादि-विशेषणेन कमलाश्लेषरसिक इत्यनेन च कमलानन्दतीर्थयोरपि प्रीतिराशासितेति ज्ञातव्यम् ।

वेदभेदसुशाखेतं बोधादिफलसंयुतम् ।

भजतामिष्टदं व्याससुरद्रुममहं भजे ।।

मात्सर्यादथवाऽतिकौशलधिया यद्वाऽखिलार्थज्ञता-

मानान्नेदमकारि किन्तु सुधियां तुष्ट्यै स्वधीशुद्धये ।

यद्वा मन्दधियाममन्दमतिवाक्टीकार्थविज्ञप्तये

यत्नोऽयं हरितुष्टिकार्यपि भवेद्वेदेशभिक्षोर्मम ।।

गुरुरघूत्तमयोगिसुशिक्षितो जयमुनेरभिसन्धिरयं मया ।

प्रकटितोऽलवबोधहृदम्बुजस्थितरमापतितृप्तिमभीप्सता ।।

।। इति श्रीमद्वेदेशभिक्षुविरचितं तत्त्वोद्योतपञ्चिकाव्याख्यानं सम्पूर्णम् ।।

## द्वैतद्युमणि

निखिलनिगमगीतानन्तकल्याणधर्मा-

तुलमणिगणभूषो निर्भिदानन्तमूर्तिः

अघटितघटनायां शक्तशक्तिर्विशेषात्

अखिलसुजनपालः प्रीयतां वेदनाथः ।। १ ।।

स्वप्रेरणामात्रत एतदुक्तं मया सुबद्धमथवाप्यबद्धम् ।

तत्सर्वमस्मान्न च मेऽपराधस्ततः प्रसीदेन्मयि मोदतीर्थः ।। २ ।।

परोत्प्रेक्षितदोषाणामसहिष्णुतया मया ।

यदुक्तं तन्मात्रतः स्यात् प्रीतो जयमुनीश्वरः ।। ३ ।।

यन्मन्त्राक्षतमाहात्म्याद् ग्रन्थोऽयं पूर्णतां गतः ।

तान् वन्दे सत्यसङ्कल्पानन्वर्थाभिधया युतान् ।। ४ ।।

औतवादप्रतिभासमार्जितैर्यशोभिरामोदितसन्मनस्ततिः ।

श्रीवासुदेवार्यगुरूत्तमः पिता विद्याप्रदाताऽस्तु मयि प्रसन्नः ।। ५ ।।

अनया ग्रन्थकृत्या यत्पुण्यं स्यात् तदशेषतः ।

गुरुहृत्पद्मवासाय प्राणेशायार्पयाम्यहम् ।। ६ ।।

औतचन्द्रिकाछन्नतमोहृत्पाटने पटुः ।

सन्मनःपङ्कजोल्लासी जेजीयाद्वैतभास्करः ।। ७ ।।

तुङ्गातीरस्थसद्व्याघ्रपुरीस्थेन विनिर्मितः ।

श्रीनाथनाम्ना पूर्णोऽयं द्वैतद्युमणिसञ्ज्ञितः ।। ८ ।।

।। इति श्री हुलगीश्रीनाथाचार्यकृतं तत्वोद्योतटीकायाव्याख्यानं सम्पूर्णम् ।।

## श्रीराघवेन्द्रतीर्थ

ग्रन्थान्ते मङ्गलमाचरति- श्रीमदिति ।। कमलाश्लेषरसिकत्वोपपादनं परः पुमानिति ।।

तत्त्वोद्योतस्य टीकाया भावदीपो यथामति ।

राघवेन्द्रेण यतिना कृतो विष्णुप्रसत्तये ।।

।। इति श्रीमत्सुधीन्द्रगुरुपादशिष्येण सर्वतन्त्रस्वतन्त्रेण राघवेन्द्रयतिना विरचितस्तत्त्वोद्योतटीकाभावदीपः सम्पूर्णः ।।एवं समापितप्रकरणव्याख्यानो भगवांष्टीकाकारः स्वग्रन्थप्रचयायान्तेऽपि भगवत्प्रार्थन-रूपं मङ्गलं कृत्वा शिक्षायै ग्रन्थान्ते निबध्नाति- कमलेति ।। 'रसो' रागः 'सक्तिः' प्रीतिरिरिति यावत् । तथा च कमलायाः महालक्ष्म्याः 'कमला श्रीर्हरिप्रिया' इत्यभिधानात् । आश्लेषः आलिङ्गनं तत्र रसिकः प्रीतिविशेषयुक्त इत्यर्थः । 'परः पुमान्' उत्तमपुरुषः इत्यर्थः । श्रीमदानन्दीर्थेत्यादि-विशेषणेन कमलाश्लेषरसिक इत्यनेन च कमलानन्दतीर्थयोरपि प्रीतिराशासितेति ज्ञातव्यम् ।

वेदेशतीर्थैष्टिप्पण्यामव्याख्यातानि यानि च ।

व्याख्यातान्यपि दुःस्थानि वाक्यानि विवृतान्यलम् ।

श्रीनिवासेन बालानां बोधायैव हि केवलम् ।

अतोऽस्य व्यर्थता नैव शङ्कनीया सुबुद्धिभिः ।। २ ।।

।। इति श्रीश्रीनिवासतीर्थविरचिततत्वोद्योतटिप्पणी समाप्ता ।।

## गुरुराजीया

समापितग्रन्थव्याख्यानष्टीकाकारः गुर्वन्तर्गतभगवत्प्रीतिमाशास्ते- श्रीमदिति ।। कमलेत्यनेन भगवत्या अपि प्रीतिः प्रार्थिता भवतीत्यशेषमतिमङ्गलम् ।

यद्विद्याधीशगुरोश्शुश्रूषाऽन्या न रोचते तस्मात् ।

अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ।।

इति श्रीमत्सकलविद्वच्चक्रचूडामणीनां पदवाक्यप्रमाणविदामग्रेसराणां श्रीमद्विद्याधीशपादानां शिष्येण केशवेन कृतं तत्वोद्योतविषमपदवाक्यार्थविवरणं समाप्तम् ।

।। इति श्रीपाण्डुरङ्गिकेशवाचार्यविरचिततत्वोद्योतटिप्पणी गुरुराजीया समाप्ता ।।

## गोविन्दीया

कमलेति ।। कमलाश्लेषे रसिक इत्यर्थः । सदयेति ।। दयासहितेत्यर्थः । कमलामहिले-नेति ।। लक्ष्मीपतिनेत्यर्थः ।

श्रीकान्तविष्णवे तुभ्यं मुक्तामुक्तेश्वराय च ।

नमः कृष्णाय शान्ताय वन्दिताङ्घ्रिद्वयाय च ।। १ ।।

राघवेन्द्रार्यशिष्येण गोविन्दाख्यद्विजन्मना ।

तत्त्वोद्योतस्य वाक्यार्था दर्शिता मन्दद्दष्टये ।। २ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वोद्योतविवरणस्य जयतीर्थार्यविरचितस्य वाक्यार्थविवरणं राघवेन्द्रतीर्थशिष्यगोविन्दविरचितं समाप्तम् ।।

## नारोपन्तीया

एवं कृतस्य ग्रन्थविवरणस्य भगवत्तत्त्वज्ञापनद्वारा मोक्षसाधनीभूतमहाप्रसादसाधनत्वं, तस्य गुरुप्रीतिद्वारकत्वं दर्शयन्, भगवत्प्रार्थनरूपं ग्रन्थान्तेऽपि मङ्गलमाचरति– श्रीमदानन्देति ।।

इत्यानन्दयतीन्द्रवर्यभगवत्पादद्युनाथोच्चर-

त्तत्त्वोद्योतसुपञ्चिकां जयमुनिर्यो निर्ममे निर्ममः ।

यत्तत्रेह यथामति व्यरचयन्नारायणष्टिप्पणं

तत्कारुण्यबलेन तेन भगवाल्लक्ष्मीपतिः प्रीयताम् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वोद्योतविवरणस्य जयतीर्थविरचितस्य

टिप्पणं नारोपन्तविरचितम् सम्पूर्णम् ।।

## जनार्दनभट्टीया

ननूत्तरत्र ‘आनन्दतीर्थपुंसिंहः ...’ इत्यादिश्लोकाः आत्मस्तुतिरूपा अपि

‘इति सर्वज्ञमुनिना मायावादतमोऽखिलम् । निरस्तं ....’

इत्यादाविव प्रयोजनवशात् आचार्यैरेव किं प्रणीताः । नेत्याह – इतःपर इति ।। प्रणीता इति ।। न तु आचार्यप्रणीता इति भावः । ननु आचार्यरचितग्रन्थान्तरसमाप्तौ आचार्यस्तुतिपरश्लोकं नप्रणीतवताम् आचार्यशिष्याणाम् अत्र तादृशश्लोकप्रणयने को विशेषहेतुः? इत्यत आख्यायिकाविशेषहेतुं दर्शयति– एवमत्रेत्यादिना ।। ननु आचार्यस्तुत्यर्थं श्लोकप्रणयनेऽपि तेषां प्रकरणान्ते निवेशः कुतः? इत्यत आह – ते चेति ।। नन्वाचार्यप्रणीतानां प्रकरणबहिर्भूतानाम् एषां कथं व्याख्येयत्वम्? इत्यत आह– अत इत्यादिना ।। अथापि परस्य सङ्गतिरहितानाम् अनेकेषां कथं व्याख्येयता इत्यत आह – अनेकेति ।। ननु ‘मायावादिदितेःसुतान्’ इति यदि समस्तं पदं तदा दितेरिति भिक्तिः न श्रूयेत । यदि व्यस्तं पदं तदा मायावादीत्यस्य अनन्वयापत्तिरित्यत आह – मायावादीति ।। आक्रोशे द्योते षष्ठ्या लोपो न भवतीति सूत्रार्थः । ‘सर्वज्ञहरिः’ इत्यत्र हरिशब्दस्य प्रसिद्धनारायणपरत्वे आचार्यवाचकपदाभावेन अस्य श्लोकस्य आचार्यस्तुतिपरता न स्यादित्यत आह – सर्वज्ञ इति ।। प्रपलायनमत्रेति ।। श्लोके ‘क्षमम्’ इत्यस्य ‘उचितम्’ इत्यर्थः । ‘जयत्यानन्दतीर्थ’ इति श्लोके जयतीति भावार्थकत्वे सकर्मकत्वेन कर्म श्रूयेत इत्यत आह – जयतीति ।। प्रसङ्गादिति ।। सम्यग्ज्ञानप्रतिबन्धकत्वेन मायावादिमतस्य प्रस्तावादित्यर्थः । ‘जनते’त्यत्र ताल्प्रत्ययस्य भावार्थकत्वभ्रान्तिं वारयति – जनेति ।। ‘रमाबाहुलताश्रयः’ इत्यत्र – रमाबाहुलते आश्रयो यस्य असौ’ इति बहुव्रीहिभ्रान्तिं वारयति – रमेत्यादिना ।। एवं समापिततत्वोद्योतव्याख्यानो भगवान् जयतीर्थमुनिः अन्तेऽपि परमपुरुषं नमति– श्रीमदित्यादिना ।।

**ग्रन्थान्ते मङ्गलाचरणम्**

पद्मापद्मोद्भवादीदं जगद्यस्य वशे सदा ।

तस्मै नमो रमेशाय पूर्णबोधाय विष्णवे ।।

भैष्मीसत्याकुचद्वन्द्वकाश्मीराङ्कितवक्षसे१ ।

कल्याणगुणपूर्णाय कस्मैचिद्विष्णवे नमः ।।

तत्वोद्योतदयादुत्थतट्टीकाशिशिरद्युतेः ।

उत्थः प्रभामण्डलोऽयं भूयात् सत्पद्मसौख्यदः ।।

मनागेवाखिलैः मानैः वन्द्यं विधिशिवादिभिः ।

यद्रूपं देवकीसूनुं तं वन्दे पुरुषोत्तमम् ।।

।। इति श्रीमज्जयतीर्थमुनिविरचितटीकायाः टिप्पणं श्रीनिवासोपाध्यायानां शिष्येण जनार्दनवरनामिना विरचितं समाप्तम् ।।

